

# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

जन्म १९०९ वैक्रमाब्दे
कार्तिकशुक्लैकादश्यां, सूर्यपूरे.

निर्याणम् १९६२ वैक्रमाब्दे
पौषकृष्णतृतीयायाम्, मुम्बय्याम्.

## The Late Sheth Devchand Lalbhai Javeri.

**Born 1853 A. D. Surat,** **Died 13th January 1906 A D Bombay.**

9-24.-Copies 5000.

Shreshthi—Devchand Lalbhai Jain Pustakoddhar Series. No. 73.

# NAVAPADA PRAKARANA.

BY

SHRI DEVAGUPTA SURI,

COMMENTED UPON

BY

UPADHYAYA SHRI YASHODEVA.

A. D. 1927.

Price Rupees Four only.

श्रीगणधरेन्द्रो विजयतेतराम् ।

# नवपदबृहद्वृत्तेरुपोद्घातः ।

ग्रन्थोऽयं श्रीमद्भिर्देवगुप्तसूरिभिः ' जारिसओ जइभेओ ' इत्यादिकां श्रावकव्रतविषयिणीं नवपदार्थप्रतिपादिकां आवश्यकचूर्णिगता पूर्वगतगाथामाश्रित्य मूलप्रकरणतया प्रणीतः, तच्च मूलप्रकरणं स्वयमेव सूरिभिर्वृत्त्या विभूषितं, सा वृत्तिश्चैतयैव संस्थया मुद्रितपूर्वा, तत्रैव चास्य सवृत्तिकस्य प्रयोजनादिकं यथायथमुद्भावितं तत तत एवावधार्यं तत्। किंचावलम्ब्यैव तां वृत्तिं श्रीदेवगुप्तसूरीणां पादोपजीविनः श्रीमन्तो यशोदेवोपाध्यायाः धनदेवेतिप्रागभिधाना सविस्तरामेनां वृत्तिं विस्तृतकथायुतां चक्रुः, एतदैतिह्यं १–६१–६८–२२७–२४८–३३९ संख्यांकपृष्ठेषु तत्तल्लेखविलोकनेन स्पष्टं भविष्यति, प्रस्तुतां च वृत्तिमुपाध्यायपदमाश्रिताश्चक्रुः, परं विशेषोऽत्रैतावान् यदुत नैते उपाध्यायपदव्या श्रीमद्भिर्देवगुप्तसूरिभिर्विभूषिताः किंतु श्रीमद्देवगुप्तसूरिगुरुभिः सिद्धसूरिभिः, तदपि चोपाध्यायपदं सूरिपदेऽभिषेक्तुमनोभिरेव सिद्धसूरिभिर्दत्तं परं ते परलोकमलंचक्रुरन्तरैवेति स्थिता एते यशोदेवा उपाध्यायपदे एव, सर्वमेतत् स्वयमेव पट्टावल्यां प्रस्तुतग्रन्थप्रान्त्यभागे स्पष्टमेव जगदुः। किंच—वृत्तिरेषा श्रीमद्भिः स्वगुरुभ्रातृभिः सिद्धसूरिभिः प्रेरणात् विहितेत्यपि स्पष्टं तत्रैव, गच्छे हि तत्र अन्तरान्तरा देवगुप्तककसूरिसिद्धसूरिजिनचन्द्र इत्येताश्चतस्रोऽभिधा भवन्ति ततो न गुरुनामगुरुभ्रातृनाम्नोः समानत्वे शङ्कोद्भाव्या। एषा च वृत्तिः पञ्च षष्ट्याधिकेषु समानामेकादशसु शतेष्वतीतेषु वैक्रमीयेषु विहिता इति उक्तं प्रस्तुतग्रन्थ एव ३३९ पत्रे, प्रस्तुतप्रकरणविवेचकैः कृता अभूवन्नेवानेके ग्रन्थाः, यतो नवपदविवृतिवदेव श्रीमद्भिर्नवतत्त्वाख्यं प्रकरणं श्रीमद्भिर्देवसूरिभिर्विहितं शासनधुराधौरेयैः खरात्मजप्रतिष्ठाप्रासादप्रतिष्ठाप्राणसमैः श्रीमद्भिरभयदेवसूरिवर्यैर्भाष्यैणालङ्कृतं विवृतं, अनयोर्विवरणयोः प्रागेतदेव विवरणं कृतं, यत एतत्प्रकरणवृत्तेः समयः पञ्चषष्ट्याधिकैकादशशतकरूप', नवतत्त्वविवरणस्य तु ' विक्रमनृपतेरेकादशशतसंख्योष्वितेषु वर्षेषु । अधिकेषु चतुःसप्ततिसमाभिरिदमागमत् सिद्धिम्॥ ९ ॥ ' इति तत्प्रशस्तिगतलेखस्य निरूपणेन स्पष्टः चतुःसप्तत्यधिके-

कादशशतकरूपः संवत्सरः, ततश्च स्पष्टैवाद्या कृतिरस्य विवरणस्य, किंच—नवतत्त्वव्याख्यायां स्पष्टमेवोक्तवन्तः श्रीमन्तो बन्धविचारे मिथ्यात्वस्याभिनिवेशिकभेदव्याख्यानं कुर्वन्तः पञ्चपञ्चाशत्तमे पत्रे एकाधिकैकशततमगाथावृत्तौ यदुत ' एतत्कथाविस्तरस्तु अस्मत्प्रपञ्चितनवपदवृत्तेरेवावगन्तव्यः ' तथाच स्पष्टमेवाद्यं विवरणमेतत् । किंच—यथा विवरणद्वयमेतत् विहितं तथैव ज्ञायते श्रीमद्भिरेव श्रीचन्द्रप्रभचरित्रं विहितं, यतः जेसलमेरीयपुस्तकसूचायां ३२ पृष्ठे

**सिरिदेवगुत्तसूरी तस्सवि सीसो अहेसि सच्चरणो । तस्स विणेएण इमं आइमधणदेवनामेणं ॥ १ ॥ उज्झायपए पत्तंमि जायजसएवनामधेज्जेणं । सिरिचंदप्पहचरियं मए कयं मन्दमइणावि ॥ २ ॥**

विहितं च चरित्रमेतत् प्रकरणयोरेतयोरनन्तरं, यतस्तत्रैव

**एक्कारसवाससएसु अइगएसु य विक्कमनिवाओ । अड़सत्तरीए अहिएसु कण्हतेरसीएँ पोसस्स ॥ १ ॥**

तथाच ११६५.११७४.११७८ तमवर्षेषु क्रमेणैतेषां रचना, यद्यपि यशोदेवाभिधाना विपश्चित्प्रवरा तस्यामेव शताब्द्यां तस्यामेव च विंशतिकायां अनेके, एके पञ्चाशकेर्यापथिकीचैत्यवन्दनवन्दनचूर्णिप्रत्याख्यानविवरणकाराः श्रीयशोदेवाः, अन्ये प्रमाणान्तरभावप्रणेतारो देवभद्रगुरुभ्रातरो यशोदेवाः, अपरे श्रीमुनिचन्द्रशिष्यमानदेवाचार्यशिष्या यशोदेवाः, परे तु पाक्षिकसूत्रवृत्त्यादिविधातारो यशोदेवा इत्येवमनेके जाताः परं तेभ्यो भिन्ना एवैते, यत एते उपकेशगच्छीयाः उपाध्यायपदस्थाः पूर्वधनदेवाभिधावन्तो नान्ये तथेति । अत्रोपयोगिनो विषयाः कथं क्वोक्ता इति ज्ञापनाय दृष्टान्तानां चानुक्रमादिज्ञापनाय निम्नोल्लिखितोऽनुक्रम एवावलोकनीयः ।

श्लोकद्वयेन श्रीवीरनमस्कारः, तृतीयेन श्लोकेन सरस्वतीसान्निध्येच्छा तुर्येण गुरुनमस्कारः, देवगुप्तसूरिकृतनवपदप्रकरणविशदीकरणप्रतिज्ञा, सत्यामपि पूज्यकृतायां वृत्तौ अस्या विस्तरादिना साफल्यं, क्षमा प्रार्थना, ततो नमिऊणेति प्रथमगाथाया व्याख्यायामभिधेयादिनिर्देशः मिथ्यात्वसम्य-

मिथ्यात्वादिषु वक्ष्यमाणानि यादृशादीनि नव द्वाराणि उद्दिष्टानि, पश्चात् मिथ्या-
त्वव्रतसंलेखनानामनुक्रमसिद्धिश्चोक्ता, जारिसओ इत्यादिद्वितीयगाथायां
त्वादिषु प्रतिस्थानं गाथानवकं व्याख्यातं यावत् संलेखनाया भावनाद्वारे सप्तत्रिंशदधिकशततमा गाथा व्याख्याता, अन्त्यगाथायां चोपसंहारो ग्रन्थस्य, एवं
तावत् सामान्येन ग्रन्थशरीरं। विशेषतस्तु मिथ्यात्वस्य स्वरूपे देवगुरुधर्मेतरस्वरूपं, भेदे आभिग्राहिकादयो भेदाः, उत्पत्तौ जमालेश्चरित्रे क्रियमाणकृतत्वादिचर्चा,
गोष्ठामाहिलवृत्ते आर्यरक्षितानां विद्याध्ययन राजसन्मानं मातृसंतोषाय दीक्षाध्ययनादि भद्रगुप्तानां निर्यामना कुटुम्बस्य प्रव्राजनं पितुः स्थैर्यं घृतपुष्प-
मित्रादिवर्णनं अनुयोगपार्थक्यं शक्रकृता निगोदपृच्छा मथुरायां गोष्ठामाहिलकृतो नास्तिकपराजयः तत्र तस्य चतुर्मासी दुर्बलिकापुष्पस्थापना गोष्ठामाहि-
लस्य कर्मबन्धे प्रत्याख्याने च निह्नवत्वं, दोषे त्रिविक्रमकथानके यागीयहिंसादोषाः, गुणे अतीचारे भंगे भावनायां च ज्ञातानि, सम्यक्त्वस्य तूत्पत्तिद्वारे तत्प्राप्ति-
स्वरूपं विस्तरेण, चिलातिपुत्रदृष्टान्ते वैदिकवादः, प्रभावनायां विष्णुकुमारस्य वृत्तान्ते नमुचिपक्षखण्डने साधुवृत्तेरुत्तमत्वस्थापना ।

व्रतेषु प्रथमव्रते स्वरूपे २६३ भेदाः, द्वितीये व्रते ये यथा जायते इति तृतीये द्वारे द्वादशव्रतभङ्गाः, व्रते तुर्ये स्वरूपद्वारे चतुर्विंशतिधा कामः
अतिचारद्वारे स्वस्त्रीसंतोषवतः परस्त्रीपरिहारवतश्चातीचारविभागः, पञ्चमाणुव्रते च अतीचाराणां पञ्चकत्वमुपलक्षणविधया तेनान्यत्रापि चतुःषडाद्यतिचार-
संभवो न विरुद्ध इति निर्णयः, भोगोपभोगमाने यथा जायते इतिद्वारे पञ्चदश कर्मादानानि, अनर्थदण्डविरतौ आर्त्तादीनां स्वरूपं, सामायिके कुत्र कथं कदा
कार्यं तदिति विचारः, आगमिकमतखंडनाय श्रावकाणामावश्यकविधानस्यावश्यकता साधिता, सामायिके नयविचारः, पौषधातिचारेषु १०२४ स्थण्डिलभेदाः,
संलेखनायां निर्यामकभेदाः, भेदे सप्तदश भेदा मरणानां, यथोत्पत्तिद्वारे द्वादशवार्षिकी संलेखना इत्येवं विशिष्टपदार्थविचारामृतसिन्धुसंयुता वृत्तिरेषा महतीति

दृष्टान्तेषु तावत्—मिथ्यात्वस्य उत्पत्तौ जमालेः $\frac{११}{१}$ गोविन्दवाचकस्य $\frac{१२}{१}$ सुराष्ट्रश्राद्धस्य $\frac{१३}{१}$ गोष्ठामाहिलस्य $\frac{२५}{२}$ दोषे त्रिविक्रमस्य $\frac{२७}{२}$ गुणे
इन्द्रनागस्य $\frac{३०}{२}$ यतनायां अम्मडशिष्याणां $\frac{३४}{१}$ अतिचारे शिवर्षेः $\frac{४०}{१}$ भावनायां च तामलेः $\frac{४४}{२}$ पत्रं पृष्ठं च यावत् दृष्टान्तः

सम्यक्त्वस्य तु—उत्पत्तौ चिलातीपुत्रस्य ५३/२ दोषे नन्दमणिकारस्य ५५/१ गुणे धनसार्थवाहस्य ५९/१ शङ्कायां मयूराण्डकसार्थवाहपुत्रस्य ६२/१ कांक्षायामाम्रभोजिनृपस्य ६३/१ विचिकित्सायां विद्यादायिवणिजः विद्वज्जुगुप्सायां दुर्गन्धायाः ६५/२ परपाषण्डप्रशंसायां शकडालस्य ६८/१ उपबृंहणायां श्रेणिकस्य ( संयतमुनेरुपबृंहा ) ७०/२ स्थिरीकरणे आर्याषाढस्य ७३/२ वात्सल्ये वज्रस्वामिनः ७८/१ प्रभावनायां विष्णुकुमारस्य ८८/१ भावनायां कार्तिकस्य ९०/२

स्थूलप्राणातिपातविरतौ तु—दोषद्वारे पतिमारिकायाः ९४/१ राजगृहिद्रमकस्य ९५/१ गुणे सूपगृहीतश्रावकस्य ९५/२ दामन्नकस्य १००/२ क्षेमस्य १०१/१ स्थूलमृषावादविरतौ दोषे वसुराजस्य ११३/१ तृतीयव्रते दोषद्वारे मण्डिकवृत्तं १२७/१ विजयकथा १२८/२ गुणद्वारे नागदत्तकथानकं १३७/२ तुरीयव्रते दोषद्वारे वयस्यात्रिकज्ञातं १४५/२ कुबेरदत्ताख्यानकं १४७/२ वणिक्सुतोदाहरणयुग्मं च १४८/२ गुणे सुभद्रायाः १५३/१ शीतायाः १६६/२ पञ्चमे चाणुव्रते यथा जायते इति द्वारे देवशर्मणोः १७६/१ दोषद्वारे चारुदत्तस्य १८३/१ गुणद्वारे जिनदासस्य १८४/१

दिग्मानस्य दोषद्वारे कोणिकस्य १९०/२ गुणद्वारे चण्डकौशिकस्य १९२/२ भोगोपभोगमानस्य स्वरूपे मद्यपस्य ऋषेः वसुमित्राया १९६/२ अनिवृत्तिस्वरूपे दोषे सेटुवकस्य सुबन्धोः २०८/१ नित्यमण्डितायाः २०८/२ गुणद्वारे जम्बूस्वामिनः २२३/१ अनर्थदण्डाविरतौ २२६/२ कपिलस्य ( कोरण्टकस्य ) हिंस्रप्रदाने परस्परघातिनां चौराणां अग्निदाने स्कन्दकाचार्यस्य आर्ते घटबोद्दस्य लांपट्ये वेल्लहलस्य दोषे यादवकुमाराणां २३६/१ गुणे अंगरक्षकश्राद्धस्य २३७/२ सामायिके दोषे कण्डरीकस्य २५०/१ गुणे सागरचंद्रस्य २५३/१ सुदर्शनस्य देशावकाशिके स्वरूपे वैद्यस्य जांगुलिकस्य २६४/२ गुणे कामदेवस्य २६८/२ पौषधोपवासे गुणद्वारे शंखस्य २७८/१ आनन्दस्य २८२/१ अतिथिसंविभागे उत्पत्तौ कुरंगकस्य २८९/१ जीर्णश्रेष्ठिनः २९०/१ दोषे नागश्रियः २९५/१ गुणद्वारे कृतपुण्यकस्य ३०२/१ शालिभद्रस्य ३०७/२ भावनाद्वारे श्रेयांसस्य ३१६/१ संलेखनायां दोषे संभूतेः ३२९/१ पण्डरार्यायाः ३३०/२ गुणद्वारे महाशतकस्य ३३१/१ भावनाद्वारे स्कन्दकस्य ३३७/२ पत्रं पृष्ठं च यावत् दृष्टान्तः

अत्रैवमवधेयं धीधनैः यदुत सत्यप्येषां सिद्धान्तादिपारावारपारगामित्वेऽपि छद्मस्थानामनाभोगस्यासंभवो न जात्विति समालोच्य प्रस्तुतं वृत्तिपुस्तकं श्रीमद्भिः ग्रन्थकृद्भिः सिद्धान्तार्णवपारंगमैश्चक्रेश्वरसूरिभिः। संशोधितं, यथा चात्र शोधकाः श्रीचक्रेश्वरसूरयः तथैव नवतत्वभाष्यवृत्तिपुस्तकेऽपि युगप्रधानाः श्रीदेवाचार्याः श्रीमदुद्योतनसूरिश्रीसिद्धसूरिभिः सहिताः शोधका इति तत्तत्पुस्तकप्रशस्तौ स्पष्टमेव, तथा च जैनानामादिपरम्परैवैषा यदुत प्रकरणादिकर्त्तृभिः निर्माय किमपि विपश्चिद्वृन्दैः शोधनीयं, तत एव चाप्तागमानां वृत्तिषु स्थाने स्थाने शोधनोल्लेखः, तथा च विदुषः प्रति शोधनायाभ्यर्थनाकृतेः आदित एव शोधनीयं बुधैः पुस्तकमिति सर्वश्रेयस्करः पन्थाः, ये तु तथा विदुषां पार्श्वे शोधनं न विधापयंति वितन्वते चाञ्जलिं वाचकानां शोधनाय ते तु कया पद्धत्या स्वेष्टमीप्संति तत् त एव जानन्ति।

किंच—अत्र वृत्तौ २४२–२६० तमपत्रयोः सामायिकविधाने सुदर्शनकथानके च श्रीवसुदेवसूरय उल्लिखिताः, ज्ञायते चातस्तेषामप्यनेकग्रन्थकर्त्तृकता, परं न क्वापि उपलभ्यन्ते ग्रन्थास्तेषां विद्यमानभांडागारेषु, केवलं तैर्वसुदेवसूरिभिर्विहितं क्षान्तिकुलकमेकमुपलभ्यते, तच्च मुद्रितं अष्टाविंशतिप्रकरणमये 'पयरणसंदोह' नामकेग्रन्थे, अन्यच्च—वसुदेवसूरीणां कः सत्ताकाल इति प्रश्ने यद्यपि यथावन्नोपलभ्यते ऐतिह्यं, परं हस्तिकुण्डिकागच्छीयश्रीशान्तिभद्रसूरिगुरवः रामवसुनन्दमितेषु विक्रमीयाब्देषु सत्तावन्त इति श्रीहस्तिकुण्डिकापुरीयरातामहावीरजिनालयप्रशस्तितोऽवगम्यते, प्रशस्तिरियमधुना अजमेरुसत्कसंग्रहस्थानेऽस्ति, यतस्तत्र प्रशस्तौ—

विदग्धनृपतिना ९९३ वर्षे श्रीवासुदेवाचार्याय दत्तं तच्चैत्यं ९९६ वर्षे मम्मटेन समर्थितं चेत्युक्तं, तथा पुनरपि तच्छिष्यान् शान्तिभद्रानाश्रित्य

**प्रोद्यत्पद्माकरस्य प्रकटितविकटाशेषभावस्य सूरेः, सूर्यस्येवामृतांशुं स्फुरितशुभरुचिं वासुदेवाभिधस्य।**

**अध्यासीनं पदव्यां यममलविलसज्ज्ञानमालोक्य लोको, लोकालोकावलोकं सकलमचकलत् केवलं संभवीति ॥ ३० ॥—**

शान्त्याचार्यैस्त्रिपञ्चाशे, सहस्रे शरदामियम् ॥ माघशुक्लत्रयोदश्यां, सुप्रतिष्ठैः प्रतिष्ठिता ॥ ३७ ॥

तथाच त्रिपञ्चाशदधिकसहस्राब्देषु सत्तामतां श्रीशान्तिभद्राचार्याणां भावात् तद्गुरूणां दशमशताब्द्यां सत्ता नासंभविनी, श्रीमन्तो लावण्यसमयास्तु प्रभावकतया ख्यातं बलभद्रमुनिं वासुदेवाचार्यमेवादिशन्ति, विशेषार्थिना तत्कृतो बलभद्ररासकोऽवलोक्यः, अस्माभिस्तु तदा बौद्धानामत्रासम्भवात् खेङ्गाररराजसमये आमराजस्य श्रीमतां बप्पभट्टेश्च तत्रोज्जयन्ते आगमनं तेषामेव जयावाप्तिश्चेतिद्वयमभ्युपगच्छता तन्नावगतं यथावदिति नोल्लिखितमत्र । अन्यच्च वृत्तिरेषा प्रसिद्धतमा विदुषां विशेषतः खरात्मजानां, यतस्ते समालम्ब्यैनां सामायिकोच्चारादनु ईर्याप्रतिक्रमणं विशेषेण स्थापयन्ति, वस्तुतस्तु भ्रम एव तेषामत्र, दृश्यतां तावत् प्रस्तुतग्रन्थस्य एतद्विषयकः पाठः

"आवश्यकचूर्ण्याद्युक्तसामाचारी त्वियम्—सामायिकं श्रावकेण कथं कार्यं ?, तत्रोच्यते—श्रावको द्विविधः—अनृद्धिप्राप्त ऋद्धिप्राप्तश्च, तत्राद्यश्चैत्यगृहे साधुसमीपे पौषधशालायां गृहे वा यत्र वा विश्राम्यति पृच्छति ( तिष्ठति ) च निर्व्यापारस्तत्र करोति, चतुर्षु तु स्थानेषु नियमेन करोति—चैत्यगृहे साधुमूले पौषधशालायां गृहे वाऽऽवश्यकं कुर्वाण इति, एतेषु च यदि चैत्यगृहे साधुमूले वा करोति तत्र यदि केनापि सह विवादो नास्ति यदि भयं कुतोऽपि न विद्यते यदि कस्यापि किञ्चिन्न धारयति, मा तत आकर्षापकर्षौ भूतां, यदिवाऽधमर्णमवलोक्य न गृह्णीयात् मा भाङ्क्षीदितिबुद्ध्या, यदिवा गच्छन्न कमपि व्यापारं व्यापारयेत् तदा गृह एव सामायिकं गृहीत्वा चैत्यगृहं साधुमूलं वा यथा साधुः पञ्चसमितिसमितस्त्रिगुप्तिगुप्तस्तथा याति, आगतश्च त्रिविधेन साधून्नमस्कृत्य तत्साक्षिकं सामायिकं पुनः करोति—' करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहू पज्जुवासामी ' त्यादि सूत्रमुच्चार्य, तत ईर्यापथिकीं प्रतिक्रामत्यागमनं चालोचयति, तत आचार्यादीन् यथारत्नाधिकतयाऽभिवन्द्य सर्वसाधून् उपयुक्तोपविष्टः पठति पुस्तकवाचनादि वा करोति, चैत्यगृहे तु यदि साधवो न सन्ति तदेर्यापथिकीप्रतिक्रमणपूर्वमागमनालोचनां विधाय चैत्यवन्दनां करोति

ततः पठनादि विधत्ते, साधुसद्भावे तु पूर्व एव विधिः, एवं पौषधशालायामपि, केवलं यथा गृहे आवश्यकं कुर्वाणो गृह्णाति तथैव गमनविरहितं" ॥
अत्र तावत् मतं खरात्मजानां यदुत सामायिकविधौ प्राक् सामायिकोच्चारात् न कार्येर्या, पश्चादत्र सोद्दिष्टेति, परं नेत्रे निमील्य चिन्तनीयं तैर्यदुत
' सामायिकं करोति—त्यादि सूत्रं समुच्चार्य ' इत्यत्र क्त्वाप्रत्ययान्तेन संबद्धं प्रागेवान्वितं, पश्चात् ' तत ईर्यापथिकीं प्रतिक्रामत्यागमनं चालोचयति
तत आचार्यादीन् यथारत्नाधिकतयाऽभिवन्द्य सर्वसाधून् इत्यादि ' इत्यादिवाक्येन यो विधिः स्वतन्त्रतया निर्दिष्टः स कथं सामायिकेन संबध्यते ?, अन्यथा
साधूनां विरहे न भवत्येव सामायिकमित्यनिष्टमापनीपद्यमानं केन वार्येत ?, किंच ' चैत्यगृहे तु यदि साधवो न सन्ति तदेर्यापथिकीप्रतिक्रमणपूर्वमाग-
मनालोचनां विधाय चैत्यवंदनां करोति ततः पठनादि विधत्ते' इत्यत्र किं न दृश्यते खरैस्तैः विनैव पुनः सामायिकोच्चारं कर्तव्यतयोक्तमीर्यादि, समालोचने
च पौर्वापर्यस्य व्यक्तमेतत् भविष्यति यदुत नैषा सामायिकप्रतिबद्धेर्या, किंतु आगमनालोचनादिप्रतिबद्धेति ।

अपरंच मतं खरात्मजानां यदुत अपर्वसु पौषधकरणमविधिः, तत्र आगमोक्तान्यष्टम्यादीनि पर्वाणि प्रसिद्धान्येव परमष्टाहिकाजन्मादिकल्याणकादीनां
ग्रहणार्थं तैराश्रीयते एषा परं वृत्तिः, तदप्यविचारितमेव रमणीयं, यतः प्रथमं तावत् दृश्यतां पूर्वापरसंबन्धयुतः स पाठः—

" चशब्दो न केवलमाहारादीनां चतुर्णां निवर्त्तने पौषधोपवासः, किन्तु तदन्यतमनिवर्त्तनेऽपीत्यनुक्तसमुच्चयार्थः, कर्त्तव्यः विधेयः स नियमात्—
नियमेन अष्टम्यादिपर्वसु—अष्टमीचतुर्दश्यादिषूत्सवतिथिषु, यदुक्तं "पोसहउववासो उण अट्ठमीचउद्दसीसु जम्मदिणे । नाणे निव्वाणे चाउमास अट्ठाहिपज्जु-
सणे ॥ १ ॥ अट्ठाहित्ति अष्टाहिकाः चैत्राश्वयुङ्मासानध्यायदिनेषु अष्टमीप्रभृतयो याः क्रियन्ते तासु कल्याणकादिनाष्टाहिकासु वा, एतेषु च दिनेषु सुश्रा-
वकस्य जिनपूजातपोऽनुष्ठानविशेषोद्यमो भणित एव, यदाह धर्मदासगणिः—संवच्छरचाउम्मासिएसु अट्ठाहियासु य तिहीसु । सव्वायरेण लग्गइ जिणवर-
पूयातवगुणेसु ॥ १ ॥ " अत्र प्रथमं तावत् आहारशरीरसत्कारब्रह्माव्यापाराणामन्यतमस्मात् निवर्त्तनं पौषधतयाऽभिमतं, नियमकर्तव्यता चास्याष्टम्यादिषु प्रोक्ता,

एतावन्मात्रेण यदि निषेधोऽपर्वसु तर्हि अपर्वणि उपवासब्रह्मचर्यादिकरणमपि तेषामविधिपथपतितं स्यात्, किंच—टीकाकृदुत्त्या श्रीधर्मदासगणिवाक्येन च खरात्मजपक्षे अपर्वणि जिनपूजादिविशेषोद्यमोऽपि निषेधपदवीमेव यायात्, तन्नासौ रुचिरः पन्थाः खराणामिति यथास्थमालोच्यैव वर्तितव्यं धीधनैः ।

प्रमाणं चास्याः 'अनुष्टुभां सहस्राणि नव पञ्च शतानि चे'ति प्रान्त्यवाक्येन स्पष्टमेव । मोक्षमार्गाश्रयणसाधितश्रेयस्काः साधवो यथावद्विज्ञायैतत्प्रकरणोक्तं मिथ्यात्वादिसंलेखनान्तं पदार्थपञ्चदशकं संयमेऽक्षमेभ्योऽपि श्रावकेभ्य उपदिशन्तु, श्राद्धाश्चैतत् श्रुत्वा वाचयित्वा वाऽवधार्य च यथावदनुतिष्ठन्तु साधु साधुधर्माभिषक्तचित्ता इत्यर्थयन्ते आनन्दसागराः

वेदाष्टनन्दाब्जमितेष्वतीतेष्वब्देषु भूपोत्तमविक्रमार्कात् । शुचौ नवम्यां बहुले गुरौ चानन्दोऽमुमारब्यद् भविबुद्धिवृद्धयै ॥ १ ॥ काश्मीरजेशालयमूर्ध्नि नम्रान्, विजित्य विघ्नौघविधानदक्षान् । सत्पंचमीशुक्रदिने विशाखे, दण्डक्रियां शुद्धमना विधाय ॥ २ ॥ श्रीमेदपाटेशनिदेशपुष्टः स्थितः पुरे श्रीउदयातपुराख्ये । मोक्षाध्वलीनान् श्रुतवाक्यपीनान्, श्राद्धान् समाश्रित्य हितं दधानः ॥ ३ ॥ व्यधत्त वृत्तौ रुचिरं पदानां, प्रबन्धमुग्रं तु परं नवानाम् । विचक्षणाः सत्तिपरा भवन्तु, प्रसन्नता सर्वगुणावहा यत् ॥ ४ ॥ त्रिभिर्विशेषकं उदयपुर संवत् १९८४ (गुजराती सं. १९८३) आषाढकृष्णनवम्याम् आनन्दसागराः

अत्र २३९–२८७ पत्रयोः दक्षिणस्यां द्वारिकायाः पाण्डमथुरायाश्च मध्ये कौशाम्बीकवनमुल्लिखितं दृश्यते, तच्चेदार्यक्षेत्रस्य सीमविधायकतया दक्षिणस्यामभ्युपगम्येत न स्यादेवार्यानार्यविषयविषयको विवादो यः प्रागुत्थितः, स्यादेव चैवं सति कलिङ्गकोंकणकपर्यन्तानां श्रीसंप्रतिकालादपि प्रागेवार्यविषयता, परतश्चावस्थितानां हुडुकमहाराष्ट्रान्ध्रद्रविडादीनां च प्रागनार्याणामपि श्रीसंप्रतिनृपकारिताऽऽर्यता, श्रीनिशीथचूर्ण्यादिष्वप्येतेषामेवार्यताकरणमाख्यायीति शं सर्वेषामस्तु ।

| | विषयः | गाथाः | माहात्म्यं | यतिभेदं | उत्पत्तिः | दोषाः | गुणाः | यतना | अतिचाराः | भंगाः | भावना |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | मिथ्यात्वं | ३–११ | | | जमालिः<br>गोविन्दाचार्याः<br>सौराष्ट्रश्राद्धः<br>गोष्ठामाहिलः | त्रिविक्रमः | इन्द्रनागः | अम्मडशिष्याः | शिवराजर्षिः | | तामलिः |
| २ | सम्यक्त्वं | १२–२० | | | चिलातिः | नन्दमणिकारः | धनसार्थवाहः | | मयूराण्ड<br>आम्रभोजी<br>विद्यावणिक्<br>दुर्गन्धा<br>शकडालः<br>श्रेणिकः<br>आर्याषाढः<br>वज्रस्वामी<br>विष्णुकुमारः | | कार्तिकः |

| | | | | | |
|---|---|---|---|---|---|
| ३ | प्राणातिपातः | २१–२९ | | पतिमारिका | दारकः |
| | | | | द्रमकः | दामनकः |
| | | | | | क्षेमः |
| ४ | मृषावादः | ३०–३८ | | वसुः | |
| ५ | अदत्तं | ३९–४७ | | मण्डिकः | नागदत्तः |
| | | | | विजयः | |
| ६ | मैथुनं | ४८–५६ | | वयस्याः | सुभद्रा |
| | | | | कुबेरदत्ता | सीता |
| | | | | वणिक्सुता | |
| ७ | परिग्रहः | ५७–६५ | देवशर्मा | चारुदत्तः | जिनदात्तः |
| ८ | दिग्मानं | ६६–७४ | | कोणिकः | चंडकौशिकः |
| ९ | भोगोपभोग० | ७५–८३ | मद्यपः | सेडुवकः | जम्बूः |
| | | | वसुमित्रा | सुबन्धुः | |
| | | | | मंडिता | |
| १० | अनर्थदंडः | ८४–९२ | कोरंटकः | यादवाः | श्राद्धः |
| | | | चौराः | | |
| | | | स्कन्दकः | | |
| | | | घटबोद्धः | | |
| | | | वेलहलः | | |

॥ ५ ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| ११ | सामायिकं | ९३–१०१ | | कंडरीकः | सागरचंद्रः<br>सुदर्शनः | |
| १२ | देशावका. | १०२–११० | जांगुलिकः<br>वैद्यः | | कामदेवः | |
| १३ | पोषधः | ११२–११९ | | | शंखः<br>आनन्दः | श्रेयांसः |
| १४ | अतिथिसं | १२०–१२८ | कुरंगः<br>जीर्णश्रेष्ठी | नागश्रीः | कृतपुण्यः<br>शालिभद्रः | |
| १५ | संलेखना | १२९–१३७ | | संभूतिः<br>पंडुरार्या | महाशतकः | स्कन्दकः |

# मूलगाथानामकारादिः क्रमः


| गाथापादः | अंकः | पत्रं | पृ. |
|---|---|---|---|
| अइयरणं जह जायं ... | ९ | ३४ | २ |
| अट्ठारसहा बंभं ... | ४८ | १४० | २ |
| ,, ,, ... | ५६ | १६९ | १ |
| अणभूयं उब्भावइ ... | ३० | १०४ | २ |
| अणिउत्ता उण पुरिसा ... | ६० | १७६ | १ |
| अत्थं अणत्थविसयं ... | ५९ | १७१ | १ |
| अब्भक्खाणाईणि ... | ३७ | ११५ | २ |
| अभिगाहियमणाभि० ... | ४ | ६ | १ |
| अलियं च जंपमाणा ... | ३३ | ११० | २ |
| असणं पाणं तह वत्थ० | १२१ | २८६ | १ |
| आणयाणि पेसणेऽविय ... | १०८ | २६९ | १ |
| आहार देह सक्कारा ... | ११२ | २७१ | १ |
| इत्थी पुरिसेण समं ... | ५५ | १६९ | १ |

| गाथापादः | अंक | पत्रं | पृ. |
|---|---|---|---|
| इरियासमियाए परि० ... | ७४ | १९४ | २ |
| इहपरलोगासंस० ... | १३५ | ३३४ | २ |
| उग्गं तवंति तवं ... | ११९ | २८४ | २ |
| उचियकलं जाणिज्जसु ... | ४४ | १३८ | १ |
| उड्ढं अहे य तिरियं .... | ७२ | १९३ | १ |
| उवभोगपरीभोगे ... | ७५ | १९५ | १ |
| उवसग्गपरीसह० ... | ११८ | २८४ | १ |
| एक्कं पंडियमरणं ... | १३३ | ३३० | २ |
| एगमुहुत्तं दिवसं ... | १०७ | २६८ | २ |
| एगविहंतिविहेणं .. | १०४ | २६५ | २ |
| एगविहदुविहतिविहं .... | १३ | ४६ | १ |
| एत्थं संका कंखा ... | १८ | ६० | १ |
| ओरालियं च दिव्वं ... | ४९ | १४२ | १ |

| गाथापादः | अंक | पत्रं | पृ. |
|---|---|---|---|
| कण्णागोभमालिय ... | ३१ | १०५ | २ |
| कज्जं अहिगिच्च गिही ... | ८९ | २३७ | २ |
| कम्मखओवसमेण ... | ९५ | २४२ | १ |
| कंदप्पं कुक्कुइयं ... | ९० | २३८ | १ |
| कंदप्पाइ उवेच्चा .... | ९१ | २३९ | १ |
| काऊण गंठिभेयं ... | १४ | ४७ | २ |
| खेत्तं व·थुहिरण्णं ... | ५८ | १७० | १ |
| खेत्ताइ हिरण्णाई ... | ६३ | १८४ | २ |
| गिरिनियरे तिण्णि वयं० ... | ५१ | १४३ | २ |
| गुणठाणगंमि तह परि० ... | ४१ | ११७ | २ |
| चत्तकलत्तपुत्तसुहिय० ... | ६५ | १८६ | २ |
| चाउम्मासिगऽवहिणा ... | १०६ | २६७ | १ |
| चिंतंति करेंति सयंति ... | ९२ | २३९ | २ |
| छेढणं आयावण ... | १० | ४० | १ |

| गाथापादः | अंक | पत्रं | पृ. |
|---|---|---|---|
| छण्णंगदंसणे फास० ... | ५३ | १६६ | १ |
| जइ जाणंतो गिण्हइ ... | ६४ | १८६ | १ |
| जत्थ बहूणं घाओ ... | ८० | २२३ | १ |
| जयणा लहुयागरुई ... | ८ | ३१ | १ |
| जह चंडकोसिओ खल० | ७० | १९० | २ |
| जहसत्तीए उ तवं .... | ११६ | २८२ | १ |
| जं जोगं थेवंपिहु ... | १२४ | २९६ | १ |
| जं साहूण न दिण्णं ... | १२५ | २०७ | २ |
| जाणंतस्सवि एवं ... | १०५ | २६६ | १ |
| जारिसओ जइभेओ ... | २ | ४ | १ |
| जिणभवणाइसु संथार ... | १२३ | ३१६ | १ |
| जियरागदोसमोहेहिं ... | १२ | ४५ | १ |
| जे इह परिमाणकडा ... | ६१ | १८३ | १ |
| जे दंतसोहणंपिहु ... | ४७ | १४० | १ |
| जे पुण अणत्थदंडं ... | ८८ | २३६ | २ |
| जे पुण करिंति विरइं ... | ४२ | ११८ | १ |

| गाथापादः | अंक | पत्रं | पृ. |
|---|---|---|---|
| जे पुण वहविरतिजुया ... | २५ | ९५ | १ |
| जे पोसहं तु काउं ... | ११४ | २७३ | १ |
| जे मिउ सच्चं जंपंति ... | ३४ | ११३ | २ |
| जो चिंतेइ अदत्तं ... | ४६ | १३९ | २ |
| तत्तायगोलकप्पो ... | ६६ | १८७ | २ |
| तेणाहडं च तक्कर० ... | ४५ | १३८ | २ |
| तेसि नमामि पयओ ... | ३८ | ११५ | २ |
| थूला सुहुमा जीवा ... | २२ | ९२ | १ |
| दट्ठूण दोसजालं ... | ८६ | २३१ | २ |
| दाणंतरायदोसा ... | १२७ | ३०८ | २ |
| दिसिपरिमाणं न कु० ... | ६९ | १८८ | २ |
| दुगतिगदुगदुगदुगएक्क ... | ३२ | १०६ | १ |
| दुन्नि सया तेयाला ... | २१ | ९० | २ |
| दुप्पणिहाणं काउं ... | १०० | २६२ | २ |
| दुविहतिविहाइ मंसा ... | ७७ | ११९ | २ |
| दुविहंतिविहेण गुण० ... | ७३ | १९४ | १ |

| गाथापादः | अंक | पत्रं | पृ. |
|---|---|---|---|
| ,, ,, ,, ... | ८२ | २२५ | १ |
| ,, ,, विउ ... | ५० | १४२ | २ |
| देवो धम्मो मग्गो ... | ३ | ४ | २ |
| देसावगासियं पुण ... | २६ | ३ | २ |
| धण्णा य पुण्णवंता ... | १२८ | ३०९ | १ |
| धम्मज्झेणावगओ ... | ९८ | २६१ | १ |
| धम्मिंदियसयणड्ढा ... | ८४ | २२६ | १ |
| धीरा य सत्तिमंता ... | ११५ | २७३ | १ |
| नमिऊण वद्धमाणं ... | १ | १ | १ |
| पडिवज्जिऊणऽणसणं ... | १३६ | ३३५ | २ |
| पणमामि अहं निच्चं .... | २९ | १०४ | १ |
| ,, ,, ,, ... | १३७ | ३३६ | १ |
| परदव्वहरणविरया ... | ४३ | १२८ | २ |
| परदारवज्जिणो इह ... | ५४ | १६७ | २ |
| परपुरिसवज्जणाओ ... | ५३ | १४८ | २ |
| परिमियखित्ताओ बहिं ... | ६८ | १८८ | २ |

| गाथापादः | अंक | पत्रं | पृ. |
|---|---|---|---|
| पाणइवाए जयणा ... | २६ | १०१ | १ |
| पाणाइवायनिवत्तणं ... | २४ | ९३ | १ |
| पावोवएस हिंसप्प० ... | ८५ | २२६ | २ |
| पुव्वावरदाहिणेणं ... | ६७ | १८८ | १ |
| पोग्गलपरिणामं चिं० ... | ७९ | २०९ | १ |
| पोसहउववासो उण ... | १११ | २७० | २ |
| फलसंपत्तीवि धुवा ... | ७१ | १९२ | २ |
| वंधवहछविच्छेयं ... | २७ | १०२ | १ |
| वंधाइ उ आउट्टि ... | २८ | १०३ | १ |
| बालमरणेहि जीवो ... | १३२ | ३२० | १ |
| बुद्धिं पुव्वं काऊण ... | ३५ | ११३ | २ |
| भावण तइ तामलिणा ... | ११ | ४१ | १ |
| मइभेया पुव्वोग्गह ... | ५ | ६ | २ |
| मणवइकायाणं ... | ९९ | २६१ | २ |
| मरणं सत्तरसविहं ... | १३० | ३१७ | २ |
| मलमइलजुन्नवत्थो ... | ८३ | २२५ | १ |

| गाथापादः | अंक | पत्रं | पृ |
|---|---|---|---|
| महुमज्जमंसपंचुं० ... | ७६ | १९५ | १ |
| मिच्छत्तकारणाइं ... | २० | ८८ | २ |
| मिच्छत्तपरिणओ खलु ... | ६ | २५ | २ |
| मिच्छत्तस्स गुणोऽयं .. | ७ | २७ | २ |
| मुच्छा परिग्गहो इह .... | ५७ | १६९ | २ |
| रागद्दोसवसट्टा ... | ८७ | २३२ | १ |
| लोइयतित्थे उण ण्हाण० | १७ | ५९ | २ |
| विरतिफलं नाऊणं ... | ११३ | २७२ | २ |
| सच्चित्तं पडिवद्धं ... | ८१ | २२३ | २ |
| सच्चित्ताचित्तोभय० ... | ४० | ११७ | १ |
| सच्चित्ते निक्खिवणं ... | १०६ | ३०८ | १ |
| सम्मत्तपरिब्भट्ठो ... | १५ | ५३ | २ |
| सम्मत्त सुयं तह देस० ... | ९४ | २४१ | १ |
| सम्मत्तस्स गुणोऽयं ... | १६ | ५५ | १ |
| सव्ववयाण निवित्तिं ... | १०९ | २७० | १ |
| सव्वं चिय सावज्जं ... | १०१ | २६३ | १ |

| गाथापादः | अंक | पत्रं | पृ. |
|---|---|---|---|
| सव्वे य सव्वसंगेहिं .... | ११० | २७० | २ |
| सहसा अब्भक्खाणं ... | ३६ | ११४ | १ |
| संथार थंडिलेविय ... | ११७ | २८२ | २ |
| संभरइ वारवारं ... | ६२ | १८४ | २ |
| संमत्तं पत्तंपिहु ... | १९ | ८८ | १ |
| संमत्तंमिवि पत्ते ... | २३ | ९२ | २ |
| संलेहणाइ पुव्वं ... | १३० | ३१९ | १ |
| संवच्छराइगहियं ... | १०३ | २६५ | १ |
| सामाइयं तु पडिव० ... | ६६ | २४४ | २ |
| सामीजीवादत्तं ... | ३९ | ११६ | १ |
| सावज्जजोगवज्जण० ... | ९३ | २४० | २ |
| साहूण वरं दाणं ... | १२३ | २९० | २ |
| साहूणं जं दाणं ... | १२० | २८५ | १ |
| सिवसग्गपरमकारण ... | ९७ | २५० | २ |
| सुद्धपाणगाइ अणुस० ... | १३४ | ३३३ | २ |
| सोऊण अदिण्णेऽविहु ... | १२२ | २८७ | १ |

# साक्षिणामकारादिः क्रमः


| गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. |
|---|---|---|---|---|---|---|---|---|
| अक्कोसहणणमारण ... ... | २२८ | २ | अपच्छिमा मारणंतिया ... ... | ३३५ | १ | आढवइ अंतरं सो ... ... | ४९ | १ |
| अडइ बहुं वहइ भरं ... ... | १७६ | १ | अप्पाहियमायरंतो ... .... | २८९ | १ | आदानगर्वसंग्रह० ... ... | २८५ | २ |
| अज्ञानं संशयश्चैव ... ... | ९१ | १ | अप्पेणवि कालेणं ... ... | २५० | १ | आदावत्यभ्युदया ... ... | १६७ | १ |
| अणाभिग्गहियकुदिट्ठी ... ... | ४७ | २ | अप्पेण बहुमेसेज्जा ... ... | १३८ | २ | आधारो मानसानां ... ... | ३२५ | १ |
| अणभिणिवेसा हु कयाइ ... | ४१ | १ | अर्हतां जन्मनिर्वाण० ... ... | ३१६ | २ | आवीइ ओहिअंतिय ... ... | ३१७ | २ |
| अणवायमसंलोए ... ... | २८३ | १ | अलाभरोगतणफासा ... ... | २२५ | २ | आहाकम्मनिमंतण ... ... | २८४ | २ |
| अणिंदियगुणं जीवं ... ... | २२ | १ | अवधूतां च पूतां च ... ... | ८१ | १ | आहारगुत्ती अविभूसिअप्पा ... | १४१ | १ |
| अणुपुंखमावहंतावि ... ... | १०० | १ | अवश्यं यातारः ... ... | ३०५ | २ | इक्षुक्षेत्रं समुद्रश्च ... ... | २०१ | १ |
| अद्दंसणेण सुंदरि ... ... | ७ | १ | अविसंवादनयोग० ... ... | ११६ | १ | इगुवन्नं खलु भंगा ... ... | ११० | १ |
| अनिरिक्खियापमज्जिय ... | २६२ | १ | अस्ति वक्तव्यता काचित् ... | १० | १ | इंगाले वणसाडी ... ... | २०० | १ |
| अनिर्दिष्टफलं सर्वं ... ... | २ | १ | अंगपच्चंगसंठाण० ... ... | १६७ | २ | इंदियबलऊसासा ... ... | ९१ | २ |
| अनुसमयमरणशरणो ... ... | ४१ | २ | अंतमुहुत्ता उवरिं ... ... | ४९ | १ | उध्धुताः प्रथयन्ति ... ... | ४१ | १ |
| अन्यथैव विधीयन्ते ... ... | ९९ | १ | अंबस्स य निंबस्स य ... ... | ७ | १ | उभयमुहं रासिदुगं ... ... | १०७ | १ |

| गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. |
|---|---|---|---|---|---|---|---|---|
| उववाओ सावयाणं ... ... | ३१ | २ | एग वए नवभंगा ... ... | ११० | १ | कर्तुः स्वयं कारायितुः ... ... | २८९ | १ |
| | २७३ | २ | एगविहं दुविहेणं ... ... | १०६ | २ | कश्चिद्रागी भवति हसितो ... | ८१ | १ |
| उवसमसम्मत्ताओ ... ... | ४७ | १ | एगिंदियसुहुमियरा ... ... | १०४ | १ | काऊणं तक्खणं चिय ... ... | २६२ | २ |
| उवसामगसेढिगयस्स ... ... | ४७ | १ | एगो जइ निज्जवगो ... ... | ३१७ | १ | कामार्थौ लिप्समानस्तु ... ... | ४१ | २ |
| उवसामं उवणीया ... ... | २३ | २ | एतन् मैथुनमष्टांगं ... ... | १४२ | १ | कालियसुयं च इसिभा० ... | २० | २ |
| उव्वत्त दार संथार ... ... | ३१६ | २ | एतावानेव लोकोऽयं ... ... | २२ | १ | काले दिण्णस्स पहे ... ... | ३०८ | २ |
| उव्वेलेऊण बला ... ... | ३३४ | २ | एन्तस्सऽणुगच्छणया ... ... | २८५ | २ | किं ताए पविराए ... ... | ३८ | १ |
| एए चेव उ भावे ... ... | ४७ | १ | एयं ससाल्लमरणं ... ... | ३१८ | १ | कुलबलमइगरुयत्तण० ... ... | १९५ | २ |
| एएसिं तु पयाणं ... ... | ३१६ | २ | एवं खु जंतपीलण ... ... | २०० | १ | केण दिट्ठु परलोओ ... ... | ५ | २ |
| एक एव हि भूतात्मा ... ... | १०४ | २ | कडसामइओ पुव्विं ... ... | २६२ | १ | केषांचिच्चित्तवित्तं ... ... | २९७ | २ |
| एकं तावदनादिसंसृति ... ... | २९९ | १ | कण्डनी पेषणी चुल्ली ... ... | ८१ | २ | कोऽन्यः कृतघ्नोऽस्त्यखि० ... | २३१ | १ |
| एकान्नं नैव भुञ्जीत ... ... | ८१ | १ | कत्ति कडं मे पावं ... ... | २६३ | १ | कोहो य माणो य अणि० ... | २३१ | १ |
| एकैकशोऽपि निघ्नन्ति ... ... | ८० | २ | कम्माइं नूणं घणाचि० ... | १३४ | २ | क्रोधः परितापकरः ... ... | ८७ | १ |
| एक्कगदुगतिगचउरो ... ... | २८३ | १ | कर्णाविषेण च भग्नः ... ... | १० | २ | क्रोधो नाम मनुष्यस्य ... ... | ८७ | १ |
| एग वए छब्भंगा ... ... | १०६ | २ | ,, ,, ... ... | ११२ | २ | संतपियंतउ सुरओ रमंतवि ... | ५ | २ |

| गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. |
|---|---|---|---|---|---|---|---|---|
| खीणे दंसणमोहे ... ... | ४७ | १ | छिज्जउ सीसं अह होउ... ... | ५१ | १ | जो अत्थिकायधम्मं ... ... | ४७ | २ |
| खुहा पिवासा सीउण्हं ... ... | २२५ | २ | जइ जिणमयं पवज्जह ... ... | ३१ | २ | जो जिणदिट्ठे भावे ... ... | ४७ | १ |
| गहिऊण य मुक्काइं ... ... | २६७ | १ | जइ सुकयव्ववसाओ ... ... | ७५ | १ | जो सुत्तमहिज्जंतो ... ... | ४७ | २ |
| गारवपंकनिवुड्डा ... .. | ३१८ | १ | जणयसुयाणं च जए ... ... | ११६ | १ | ज्ञानदर्शनचारित्र० ... ... | ५ | १ |
| गिहमागयस्स साहुस्स ... ... | २८५ | २ | जणवयसंमयठवण ... ... | ११६ | १ | ज्ञानस्य ज्ञानिनां चैव ... ... | ५० | १ |
| गुणसेण अग्गिसम्मो ... ... | २३१ | २ | जयं चरे जयं चिट्ठे ... ... | २३९ | २ | ठाणादिसि पगासणया ... ... | ११६ | २ |
| चउरिंदियजीवाणं ... ... | १९५ | १ | जह जह अप्पो लोहो ... ... | १८३ | २ | ठिइकंडगाण एवं ... ... | ४९ | १ |
| चत्तारि विचित्ताइं ... ... | ३९९ | १ | जं जह भाणियं तं तह ... ... | ४७ | १ | ठियओ व चिट्ठओ वा ... .... | २८५ | २ |
| चरणरजसा प्रशमनं ... ... | ८४ | २ | जंपि वत्थं व पायं वा ... ... | १६९ | १ | तण्हाछेयंमि कए ... ... | ३४४ | १ |
| चंदवडिंसय संखो ... ... | २७२ | १ | जं मोणं तं सम्मं ... ... | ४६ | १ | तत् ज्ञानमेव न भवति ... ... | २४१ | २ |
| चंपाए कामदेवो ... ... | २६७ | १ | जं मोणंति पासह ... ... | २४१ | २ | तत्त्वार्थश्रद्धानं ... ... | ४५ | २ |
| चेइयसाहुअभावे ... ... | २७२ | १ | जावइया वयणपहा ... ... | ६ | २ | तत्थ असंपत्तोऽत्थी ... ... | १४१ | २ |
| चेइहरसाहुगिहमाइ० ... ... | २४२ | २ | जावंति अज्जवयरा ... ... | २० | २ | तत्र याऽपायसद्द्रव्य० ... .. | ८८ | २ |
| चौरश्चौरापको मन्त्री ... ... | १३९ | १ | जिणवरभासियमावेसु ... ... | ६२ | २ | तस्करा डिम्भरूपाणि ... ... | २९७ | १ |
| छउमत्थमरण केवलि ... ... | ३१७ | २ | जिणसासणस्स निंदं ... ... | ५० | १ | तस्स य चरमाहारो ... ... | ३३४ | १ |

| गाथादिपादः | | पत्रं | पृ. |
| --- | --- | --- | --- |
| तं मिच्छत्तं ज़मसइ० | ... ... | ६ | २ |
| तापच्छेदकषैः शुद्धः | ... ... | ५ | १ |
| तिथिपर्वोत्सवाः सर्वे | .... ... | ८५ | २ |
| ,, ,, ,, | ... ... | २८५ | १ |
| तित्थयरवंदणत्थं | ... ... | २०४ | २ |
| तिलाश्वम्पकसंसर्गात् | ... ... | ७ | १ |
| तेहिं सह परिचयो | ... ... | ६१ | १ |
| तो बंधमणिच्छंतो | ... ... | १८७ | २ |
| त्रिकालविद्भिस्त्रिजगच्छ० | ... | ४३ | १ |
| त्रैकाल्यं द्रव्यषट्कम् | ... ... | ४६ | १ |
| दट्ठुवा रायसहा | ... ... | १३३ | १ |
| दव्वाण सव्वभावा | .. ... | ४७ | २ |
| दशाविधयतिधर्मरताः | ... ... | ५ | १ |
| दंसणनाणचारित्तं | ... ... | २८६ | २ |
| दंसणनाणचरित्ते | .... .. | ४७ | २ |

| गाथादिपादः | | पत्रं | पृ. |
| --- | --- | --- | --- |
| दिट्ठीए संपाओ | ... ... | १४१ | १ |
| दुक्खाभावो न सुहं | ... ... | ४४ | १ |
| दुर्गतिप्रसृतान् जन्तून् | ... ... | २९६ | १ |
| दुर्बलानामनाथानाम् | ... ... | ८६ | १ |
| दुविहातिविहाइ छच्च उ | ... ... | १०६ | २ |
| दुविहातिविहेण पढमो | ... ... | १०६ | २ |
| देविंदवंदिएहिं | ... ... | २० | २ |
| द्वेषस्यायतनं धृतेरप० | .... ... | १७६ | २ |
| धम्मिट्ठिगवण्हिग० | ... ... | ६० | १ |
| धम्ममिणं जाणंता | ... ... | २५३ | २ |
| धर्माज्जन्म कुले शरीर० | ... ... | ४१ | २ |
| धर्माद्रत्नोन्मिश्रित० | ... ... | ८५ | १ |
| धर्मावश्यकहानौ वा | ... ... | ३१६ | २ |
| धावेइ रोहणं तरइ | ... .... | १७६ | १ |
| न करेंति जे तवं सज० | ... ... | ३०३ | २ |

| गाथादिपादः | | पत्रं | पृ. |
| --- | --- | --- | --- |
| न चाप्याविषयस्येह | ... ... | २ | १ |
| न मारयामीति कृत० | ... .... | १०३ | २ |
| नवणीय तज्जोणिय० | ... ... | १९६ | १ |
| नवनवसंवेगो खलु | ... ... | १३० | १ |
| नष्टे मृते प्रव्रजिते | ... ... | २९९ | १ |
| न सरइ पमायजुत्तो | ... ... | २६२ | २ |
| न सन्ति येषु देशेषु | .... ... | ७ | २ |
| न सो परिग्गहो वुत्तो | ... ... | १६९ | २ |
| नाइविगिट्ठो य तवो | ... ... | ३१९ | २ |
| नाणमवायधिईओ | ... ... | ४५ | २ |
| नादेयानि न देयानि | ... ... | २२९ | २ |
| नासेई अगीयत्थो | ... .... | ३३४ | १ |
| निच्चं हुंति दरिद्दा | ... ... | १९६ | १ |
| निच्छयओ पुण अप्पेवि | ... | २८६ | २ |
| निरवज्जाहारेण | ... ... | २०० | १ |
| निवसेज्ज तत्थ सड्ढो | ... ... | ७ | १ |

| गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. |
|---|---|---|---|---|---|---|---|---|
| निसग्गुवएसरुई | ४७ | १ | पल्लंकलट्ठसागा | १९६ | १ | बारस छावट्ठीच्चिय | ११० | १ |
| निस्संदेहत्तं पुण | ६१ | २ | पंचण्ह अणुवयाणं | १०७ | १ | बावीससन्तमोहस्स | ४७ | १ |
| नेहाणुरागसब्भाव० | १६ | १ | पंचैतानि पवित्राणि | ८० | २ | भवस्थकेवलिनः | ८८ | २ |
| नैवास्ति राजराजस्य | २७२ | २ | पावयणी धम्मकही | ५० | १ | भूमीपेहणजलछाण | २८२ | २ |
| नो खलु अप्परिवडिए | ६८ | २ | पासत्थोसन्नकुसील | ३१६ | २ | मइभेएण जमाली | ७ | २ |
| पइदिणं भत्तपाणेणं | २८५ | २ | पुराणं मानवो धर्मः | १० | १ | माणिकणगरयणधण | ३०३ | २ |
| पच्छिल्लहायणंमि | ३१९ | २ | पोसह उववासो उण | २७१ | १ | मलमइलपंकमइल | ५० | २ |
| पठितं यन्न विरागाय | १५ | १ | पोसहोववासस्स | २८३ | २ | मंसं पंचिंदियवह | १५५ | २ |
| पठितं श्रुतं च शास्त्रं | १५ | १ | प्रजानां धर्मषड्भागः | ८६ | १ | मा गाः खेदमिदानीं | २५३ | १ |
| पडिबन्धो लहुयत्तं | २४७ | २ | प्रथमे जायते चिंता | १९१ | १ | मानं मुञ्चति गौरवं | ५७ | १ |
| पडिवण्णदंसणस्स य | ६० | १ | प्राणिनां बाधकं चैतत् | १८९ | २ | मायालोभकषाया | ४५ | १ |
| पढमं जईण दाउं | ३०९ | १ | प्रारभ्यते न खलु विघ्न० | ९९ | १ | मा होह सुयगाही | १७४ | २ |
| पढमिको तिण्णि तिया | १०९ | २ | प्रेक्षावतां प्रवृत्त्यर्थं | २ | १ | मिच्छत्तं जमुइण्णं | ४७ | १ |
| पण नव चउरो वीसा य | ११० | १ | फलफलि पत्ते पुप्फे | १९६ | १ | मित्ति मिउमद्दवत्ते | २६३ | १ |
| पत्ती पत्ती पाणिउ | ५ | १ | बन्धेल्लया य मुक्के० | २६१ | १ | मूका जडाश्च विकलाः | ११० | २ |
| परिमियमुवसेवंतो | ११८ | १ | बहुविग्घाइं सेयाइं | २ | १ | मूलमेयमहम्मस्स | १६९ | २ |

| गाथादिपादः | पत्रं | पृ. |
|---|---|---|
| मृगा मृगैः संगमनु० | ५१ | २ |
| मृत्योरभावात् नियमो | १०३ | २ |
| मेहुणवयभंगंमी | १४३ | २ |
| मैथुनानुस्मृतिसंस्कार० | १४२ | १ |
| मोत्तूण पत्तनियरं | २६६ | २ |
| यत् स्वयमदुःखितं | २८५ | २ |
| यत् प्राणिद्यासत्य० | ५ | १ |
| यद्व भावदोषवद्वाक्यं | १०५ | १ |
| यद्यपि निपुणो योगी | ८५ | २ |
| यद्यपि निसेव्यमानाः | १६७ | १ |
| यदि नामास्य कायस्य | ४१ | २ |
| यमुपार्जयन्ति धर्म | ८५ | २ |
| यस्याष्टादश दोषाः | ५ | १ |
| या गम्या सत्सहायानां | ८१ | १ |
| यावत् स्वस्थमिदं कलेवर० | ४१ | २ |
| यूपं छित्त्वा पशून् हत्वा | ८१ | २ |

| गाथादिपादः | पत्रं | पृ. |
|---|---|---|
| योगदुष्प्रणिधानं च | ९१ | १ |
| रणे वने शत्रुजलाग्नि० | १६४ | १ |
| रन्धणकंडणपीसण | १९६ | १ |
| रागद्दोसविउत्तो | १०१ | २ |
| रागाद्वा द्वेषाद्वा | १० | १ |
| रागी देवो दोसी देवो | ५ | २ |
| रागो दोसो मोहो | ४७ | २ |
| रामेण भूः क्षत्रियवर्ग० | २३१ | २ |
| रूवं सिरि सोहग्गं | ९४ | १ |
| लंभेण तस्स लभति हु | ४९ | १ |
| लुकूखत्ता मुहजंतं | ३१९ | २ |
| लोकवत् प्रतिपत्तव्यः | ८५ | २ |
| वडउंबरि काउंबरि | १९६ | १ |
| वने रणे शत्रुजलाग्नि० | ९७ | १ |
| वसहिकहनिसज्जिंदिय | १४० | २ |
| वादांश्च प्रतिवादांश्च | ४९ | २ |

| गाथादिपादः | पत्रं | पृ. |
|---|---|---|
| वाससहस्संपि जई | २५० | १ |
| वासं कोडीसहियं | ३१९ | २ |
| विगहाइएहिं रहिओ | २४४ | १ |
| विच्छिण्णं दूरमोगाढं | २८३ | १ |
| विद्वान्जुरभिगम्यः | ८० | १ |
| विषयी विषयविरक्तं | ८१ | २ |
| विषयी विषयासक्तं | ८१ | २ |
| विषस्य विषयाणां च | ४४ | १ |
| वीतरागा हि सर्वज्ञाः | ४५ | १ |
| व्यापादयति तनूजम् | ३२५ | १ |
| व्रतिनो जङ्गमं तीर्थम् | ८५ | २ |
| षट् शतानि नियुज्यन्ते | १५ | १ |
| शिष्टानामेष समयः | १ | २ |
| शुचि भूमिगतं तोयं | ५० | २ |
| शुभाशुभानि कर्माणि | ४३ | २ |
| श्रवन्ति यस्य पापानि | ३०७ | २ |

| गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. | गाथादिपादः | पत्रं | पृ. |
|---|---|---|---|---|---|---|---|---|
| सकृज्जल्पंति राजानः ... ... | १३३ | २ | संकंतदिव्वपेम्मा ... ... | ७३ | २ | सीहगिरिसुसीसाणं ... ... | ७५ | २ |
| सत्पात्रं महती श्रद्धा ... ... | ३०८ | २ | संकुचति महीमण्डल० ... ... | २४७ | १ | सुखदुःखानां कर्त्ता .... ... | ४३ | २ |
| स यं शौचं तपः शौचं ... ... | ५० | २ | संतंमि वितिगिच्छा ... ... | ६० | २ | सुखास्वादलवो योऽपि ... ... | ८० | २ |
| समतृणमणिमुक्तेभ्यः ... ... | २८६ | २ | संपत्तदंसणाई ... ... | ३०७ | २ | सुन्नहरं जिणवरमंदि० ... ... | २६९ | २ |
| सम्मत्तंपि य तिविहं ... ... | ४६ | २ | संमत्तंमि उ लध्धे ... ... | २५ | २ | सुरतसुखं खलमैत्री ... ... | ८० | २ |
| सम्मादिट्ठी जीवो ... ... | २५ | २ | संयमगुणयुक्तेभ्यः ... ... | २८६ | २ | सुहडोव्व रंगमज्झं ... ... | ३३३ | २ |
| सम्यक्तत्त्वपरिज्ञानात् ... ... | ४ | १ | संवच्छर चाउमासि ... ... | २७१ | १ | सूत्रोक्तस्यैकस्या० ... ... | १० | २ |
| सयमिह मिच्छदिट्ठी ... ... | ४७ | १ | साधूनां दर्शनं श्रेष्ठं ... ... | ५० | २ | सूरे त्यागिनि विदुषि च... ... | ६९ | १ |
| सर्वस्यैव हि शास्त्रस्य ... ... | २ | १ | सामाइयंति काउं ... ... | २६२ | १ | सोऊण सद्दहिऊण य ... ... | २४४ | २ |
| सर्वः पूर्वकृतानां ... ... | २५३ | १ | सामाइयंमि उ कए ... ... | २४२ | १ | सो होइ अभिगमरुई ... ... | ४७ | २ |
| सर्वारम्भानिवृत्तस्तु ... ... | २८६ | १ | सावज्जजोगविरओ ... ... | २७२ | १ | स्त्रीमुद्रा झषकेतनस्य ... ... | ५ | २ |
| सर्वाः संपत्तयस्तस्य ... ... | १८३ | १ | साहम्मियक्च्छलंमि ... ... | ७७ | २ | स्नानं मदद्पर्करं ... ... | ८१ | १ |
| सर्वे क्षयान्ता निचयाः ... ... | ३०५ | २ | साहारणा तु मूला ... ... | १९६ | १ | स्मरणं कीर्त्तनं केलिः ... ... | १४२ | १ |
| सव्वाविय अज्जाओ ... ... | ३१८ | २ | साहूण कप्पणिज्जं ... ... | ३०७ | २ | हसियललिओवगूहिय .... ... | १४१ | १ |
| सहसब्भक्खाणाइ ... ... | ११५ | १ | साहूण दंसणेण ... ... | ७ | २ | हा दुट्ठु कयं हा दुट्ठु... ... | २६३ | १ |
| संकप्पो संरंभो ... ... | ९१ | २ | सीयालं भंगसयं ... ... | ११० | २ | हिंसानृतस्तेयाब्रह्म ... ... | ९१ | २ |

# साक्षीभूतग्रन्थानामकारादिः


आगमः ... ... १६९ २
आचाराङ्गम् ... ... २४१ २
आवश्यकचूर्णिः ... ... २४३ १
" ... ... २७२ १
उत्तराध्ययनबृह० ... ... ७० २
कल्पभाष्यम् ... ... २८६ २
ज्ञातधर्मकथा ... ... ५५ १
" ... ... ... ६१ १
दशवैकालिकम् ... ... ११६ १
" ... ... ... १४१ १
प्रज्ञापना ... ... ... ४७ १
प्रथमपञ्चाशकवृ० ... ... १६८ २
भगवती ... ... ... १०९ २
वृषभाख्यानकम् ... ... ५९ १
वेदे ... ... ... ५० २
व्यवहारभाष्यम् ... ... २८६ २
श्रावकप्रज्ञाप्तिः ... ... ३०७ २
सप्ततिकाबृहच्चूर्णिः ... ... ४८ १


# साक्षीभूतग्रन्थकाराकारादि


गन्धहस्ती ... ... ८८– २
जिनदेवः ... ... ... ११ २
जिनभद्रगणी ... ... ... ४१ १
धर्मदासगणी ... २५–२।२७१–१।२५०–१
२८९–१।३०८–१
" निर्युक्तिकाराः ... ... १०६–२।११०–२
निर्युक्तिकृत् ... ... २८३–२।३३५–२
पूज्यपादाः ( देवगुप्ताः ) ... ६८–२
पूज्याः ( जिनभद्राः )... ... ६४–२
मनुः ... ... ... ८६ १
वसुदेवः ... ... ... २४२ २
वाचकमुख्यः ... ४५–१।९१–२।११६–१
वाचकः ... ... ... ४५ २
वेदानुसारिणः ... ५० २ २
व्यासः ... ४१–२।८०–२।८१–२
शय्यम्भवः ... ... ... १६७ २
हरिभद्रसूरिः ... ... ... १६९ २

॥ अर्हँ ॥

श्रेष्ठिदेवचन्द्र लालभ्रातृ-जैनपुस्तकोद्धार-ग्रन्थाङ्के—

श्रीमद्देवगुप्तसूरिवर्यनिर्मितं

# श्रीमन्नवपदप्रकरणं ।

श्रीमद्यशोदेवोपाध्यायनिर्मितवृत्तियुतम् ॥

नमो जिनाय कल्याणकराय ॥

शुद्धध्यानधनप्राप्त्या, कर्मदारिद्र्यविद्रुतौ । निर्वृतिः साधिता येन, तं नमामि जिनप्रभुम् ॥ १ ॥

जयति जितकर्मशत्रुर्लब्धातुलमाहिमकेवलपताकः । त्रिदशासुरकृतपूजः स तत्त्वनिर्वादको वीरः ॥ २ ॥

यस्याः प्रसादयानेन, लीलया ज्ञेयसागरम् । तरन्ति विबुधाः सा मे, सान्निधत्तां सरस्वती ॥ ३ ॥

मम बुद्धिकुमुदिनीयं यत्सङ्गमशशधरोदये सद्यः । अलभत विकासमसमं तान् भक्त्या निजगुरून्नौमि ॥ ४ ॥

श्रीदेवगुप्तसूरिर्विरचितवान् नवपदप्रकरणं यत् । विवृतिं तस्य विधित्सुर्विज्ञपये सज्जनानेवम् ॥ ५ ॥

वृत्तिर्यद्यपि विद्यतेऽत्र विहिता तैरेव पूज्यैः स्वयं, सङ्क्षेपेण तथापि सा न सुगमा गम्भीरशब्दा यतः ।

विस्पष्टार्थपदप्रबन्धरुचिरा तेनेयमारभ्यते, किञ्चिद्विस्तरशालिनी तनुधियामिच्छानुवृत्त्या मया ॥ ६ ॥

यच्चासमञ्जसं किञ्चिज्जायतेऽत्र प्रमादतः । पुत्रापराधवत्सर्वं, तद्बुधैर्मम सह्यताम् ॥ ७ ॥

इह चादावेव प्रकरणकारोऽभीष्टदेवतास्तवमभिधेयादित्रयं च प्रतिपादयितुकामो गाथामाह—

**नमिऊण वद्धमाणं मिच्छं सम्मं वयाइं संलेहा । नवभेयाइं वोच्छं सड्ढाणमणुग्गहट्ठाए ॥ १ ॥**



न चैतद्वक्तव्यम्-अभीष्टदेवतानमस्कारस्यानर्थकत्वादप्रस्तुतत्वाच्च अभिधेयादीनां चानधिगतशास्त्रस्य प्रत्याययितुमशक्यत्वादयुक्तमादावेव तत्प्रतिपादनमिति, यतः शिष्टानामयमेव समयो यदुत तैरभीष्टे वस्तुनि प्रवर्त्तमानैरवश्यमिष्टदेवतास्तवपूर्वकं प्रवर्त्तितव्यं, यथोक्तम्-"शिष्टानामेष समयस्ते सर्वत्र शुभे किल । प्रवर्त्तन्ते सदेवेष्टदेवता-

स्तवपूर्वकम् ॥ १ ॥" इति, तथा च शिष्टसमाचारपरिपालनमस्य प्रयोजनमतोऽनर्थकत्वादित्यसिद्धो हेतुः, अप्रस्तुतत्वादित्यप्यसिद्धं, श्रेयोभूतस्य शास्त्रस्य संभाव्यमानविघ्नोपशान्तिहेतुतया नमस्कारस्य प्रस्तुतत्वात्, तथा चोक्तम्—"बहुविग्घाइं सेयाइं तेण कयमंगलोवयारेहिं । सत्थे पयट्टियव्वं विज्जाएँ महानिहीएव्व ॥ १ ॥" अभिधेयादीनां चानवगतसकलशास्त्रस्याप्येतद्गणने निरस्तनिरभिधेयत्वाद्याशङ्कस्य प्रवृत्त्यङ्गत्वाद्युक्तमादावुपादानं, तथा चोक्तम्—"प्रेक्षावतां प्रवृत्त्यर्थं, फलादित्रितयं स्फुटम् । मङ्गलं चैव शास्त्रादौ, वाच्यमिष्टार्थसिद्धये ॥१॥" येऽपि शास्त्रे श्रोतृजनप्रवृत्त्यङ्गतया प्रयोजनं मुख्यमिच्छन्ति "अनिर्दिष्टफलं सर्वं, न प्रेक्षापूर्वकारिभिः । शास्त्रमाद्रियते तेन, वाच्यमग्रे प्रयोजनम् ॥१॥ सर्वस्यैव हि शास्त्रस्य, कर्मणो वाऽपि कस्यचित् । यावत्प्रयोजनं नोक्तं, तावत्तत्केन गृह्यताम् ? ॥ २ ॥" इत्युक्तिप्रामाण्यात् तेऽप्यभिधेयादित्रयमेव परमार्थतः प्रवृत्तिकारणमङ्गीकृतवन्तः, तथाहि-शास्त्रमनिर्दिष्टप्रयोजनं प्रेक्षावद्भिर्नाद्रियत इति ब्रुवाणैरभिधेयमपि प्रयोजनाक्षिप्तत्वात् प्रवृत्त्यङ्गतयोपात्तमेव, नहि निरभिधेयस्य प्रयोजनं वक्तुं शक्यं, यदुक्तम्—"न चाप्यविषयस्येह, शक्यं वक्तुं प्रयोजनम् । काकदन्तपरीक्षादेस्तत्प्रयोगाप्रसिद्धितः ॥ १ ॥" इति, सम्बन्धस्त्वभिधेयप्रयोजनान्तर्गत एवेति पृथगनुक्तोऽपि सामर्थ्याद्गम्यते, यदुक्तम्—"शास्त्रं प्रयोजनं चेति, सम्बन्धस्याश्रयावुभौ । तदुक्त्य-

न्तर्गतस्तस्माद्भिन्नो नोक्तः प्रयोजनात् ॥ १ ॥" अतोऽभिधेयादिप्रतिपादनमपि शास्त्रादौ श्रोतृप्रवृत्त्यङ्गत्वादविरुद्धमेवेति। अस्याश्चाद्यपादेनेष्टदेवतानमस्कारः शेषपादत्रयेणाभिधेयप्रयोजने साक्षात् सम्बन्धस्त्वर्थादुक्त इति समुदायार्थो, व्यासार्थस्तूच्यते–'नमिऊण' नत्वा प्रणम्येत्यर्थः 'वद्धमाणं'ति वर्द्धतेऽचिन्त्यमाहात्म्यैः सम्यग्दर्शनज्ञानचारित्रादिभिर्गुणैः स्वयमेव अस्य वा जन्मनि ज्ञातकुलं कोशकोष्ठागारादिसम्पद्विशेषैर्वर्द्धत इति तद्वृद्धिहेतुत्वाद्वर्द्धमानः, इष्टदेवता चायं गुणप्रकर्षरूपत्वात्परमगत्यवाप्तेरिति, तं नत्वा किं ?-'वोच्छ' मिति वक्ष्यमाणक्रियाऽभिसम्बन्धः, एतावता चेष्टदेवतास्तवे प्रतिपादिते प्रेक्षापूर्वकारिणः श्रोतारो निरभिधेयमिदमनभिमताभिधेयं वा तथा निष्प्रयोजनमनभिमतप्रयोजनं वेति मन्यमाना न प्रकरणश्रवणे प्रवर्त्तेरन् अतो–"मिच्छं सम्मं वयाइं संलेहा नवभेयाइं" इत्यभिधेयं 'सद्धाणमणुग्गहट्ठाए' इति प्रयोजनं चोक्तं, तत्र पर्यन्तोपात्तं 'नवभेदानि' इति पदं सर्वपदैरभिसंबध्यते, तेन मिथ्यात्वम्–अर्हत्प्रणीततत्त्वार्थाश्रद्धानहेतुर्नवभेदं, सम्यक्त्वम्–अष्टादशदोषविहितशेषोऽर्हन् मे देवता अष्टादशसहस्रशीलाङ्गधारकाः साधवो गुरवो जिनोद्दिष्टा जीवादय एवतत्त्वानीतिश्रद्धानहेतुरात्मपरिणामः,तच्च नवभेदं, व्रतानीति–पञ्चाणुव्रतानि त्रीणि गुणव्रतानि चत्वारि शिक्षाव्रतानि विरतिरूपाणि प्रत्येकं नवभेदानि,संलेखनां–मारणान्तिकीं शरीरकषायादीनां झोषणां नवप्रकारां, सर्वाण्येतानि मिथ्यात्वादीनि

प्रत्येकं 'नवभेदानि' नवद्वाराणि 'वक्ष्ये' अभिधास्ये, भेदाश्च नव उत्तरगाथायामभिधास्यन्ते, एषां च मिथ्यात्वादीना-
मनेनैव क्रमेण भावात्प्रकरणकारेणैवमुपन्यासो विहितः, तथाहि-सर्व एवायं जीवो नारकतिर्यङ्नरामरगतिविविधवि-
भीषिकारौद्रे शब्दादिपञ्चविधविषयसुखलम्पटप्राणिगणोपदर्शितनानाविधाधिव्याधिजीवमधुमक्षिकाकीर्णतुच्छतमकाम-
सौख्यक्षौद्रे जन्ममरणप्रमुखदुःखश्वापदबिभीषणे संसारारण्ये पूर्वमसुन्दराचरणकारणेन मिथ्यात्वकुटिलसहचरेणैव भ्रा-
म्यते, न च तदा कश्चिदेवं जानाति—यदुतैष एव ममैवंविधभीषणस्थाननिवासजनितानन्तदुःखसम्पातहेतुः, केवलं तमेव
बहु मन्यते, पश्चाच्च कस्यचिज्जीवस्यानाभोगनिर्वर्त्तितगिरिसरिदुपलघोलनाकल्पयथाप्रवृत्तकरणमित्रकथिततद्दोषस्यैव
तादृग्भूतामिवोत्कृष्टस्थितिं सप्ततिसागरोपमकोटीकोटीलक्षणामपहृतवतोऽतिचिरपरिचितोऽयं मे समस्तापहारेण माऽत्यन्त-
विलक्षो भूदितीव संचिन्त्य तस्य किञ्चिद्द्रविणशेषायमाणामेकां सागरोपमकोटीकोटीं किञ्चिदूनां तथैव धृतवतो
निर्वृत्तिनगरीनिवासार्थिनस्तन्मार्गनिवेदकाप्तपुरुषयोगमभिलषतः प्राप्तावसरसमागतापूर्वकरणानिवृत्तिकरणसञ्चरोपद-
र्शितोऽक्षेपतत्प्रापकः सम्यक्त्वसन्मार्गलाभो जायते, तदनन्तरं च पल्योपमपृथक्त्वमात्रे कालेऽतिक्रान्ते स्थूलप्राणाति-
पातादिदेशविरतिः संपद्यते, तथा चागमः—"संमत्तंमि उ लद्धे पलियपुहुत्तेण सावओ होइ । चरणोवसमखयाणं साग-

रसंखंतरा हुंति ॥ १ ॥" त्ति, प्राप्तसम्यक्त्वदेशविरतिश्च मरणान्तसंलेखनामाराधयत्यतो युक्त एवैवमुपन्यासः, 'मिथ्यात्वादीनि वक्ष्य' इत्येतावता च ग्रन्थान्तरोदितार्थानुवादकतया मा भूदनारम्भणीयत्वमस्येत्यभिप्रायवानाह—'नवभेदानी' ति, अयमर्थः—यद्यपि श्रावकप्रज्ञप्त्यादिप्रकरणेष्वपि मिथ्यात्वादयः पञ्चदश पदार्थाः कयाऽपि भङ्ग्या प्रतिपादितास्तथाऽपि नवनवद्वारनिरूपणेन न तत्राभिहिता इति विशेषाभिधानायेदमारभ्यते, एतेन च पादद्वयेन साक्षात्सप्रपञ्चमभिधेयमुक्तं, सम्बन्धस्तु सामर्थ्येन, तथाहि-मिथ्यात्वादीनि नवभेदानि वक्ष्य इति वदता मिथ्यात्वादयोऽस्यग्भिधेया इति दर्शितं, प्रकरणाभिधेययोश्चाभिधानाभिधेयसम्बन्धोऽर्थादुक्त इति । 'श्राद्धानामनुग्रहार्थं'मिति श्रद्धा विद्यते येषां ते श्राद्धाः-श्रावकास्तेषां श्राद्धानामिति, अनुग्रह-उपकारस्तदर्थमनुग्रहार्थं, कथं चासौ तेषां कृतो भवति ?, यदा शारीरमानसाद्यनेकक्लेशावासोषितानां चतुर्गतिनिबन्धनानन्तजननमरणपरिवर्त्तननिर्विण्णानां सकलसन्तापापनोददक्षं निरतिशयसुखस्वभावायापवर्गनगरमार्गप्रदर्शकं जिनवचनमुपदिश्यते, तथा चोक्तम्—"नृणामनन्तमृतिजन्मजरातुराणां, निःशेषदोषविगमाय समुद्यतानाम् । नान्यो यतेस्त्रिभुवनेऽपि जिनोक्तधर्मशास्त्रोपदेशनसमः परमोपकारः ॥ १ ॥" इति, अनेन च गाथाचरमपादेन कर्त्तुरनन्तरं प्रयोजनमुक्तं, परम्पराप्रयोजनं तु मुक्तिलक्षणं, श्रोतुश्चानन्तरं मिथ्यात्वादि-

पदार्थपरिज्ञानं, "सम्यक्तत्त्वपरिज्ञानाद्धेयोपादेयवेदिनः । उपादेयमुपादाय, गच्छन्ति परमां गतिम् ॥ १ ॥" इति वचनात्परम्परया मुक्तिः, प्रयोजनप्रकरणयोः सम्बन्धश्च साध्यसाधनलक्षण इत्यादि सर्वं सामर्थ्यादुक्तमवसेयम् । ननु सम्यक्त्वादीनां निःश्रेयसहेतुत्वाद् युक्तं वचनं, मिथ्यात्वं तु निःश्रेयसपरिपन्थित्वात्किमर्थमुच्यते ?, सत्यं, हानार्थं, न खलु हेयहानमन्तरेणोपादेयमुपादातुं शक्यं, हेयं च मिथ्यात्वं सकलगुणविघातित्वात्, न च हेयमप्यज्ञातं हीयते, इतो नवभिः प्रकारैः सम्यग् ज्ञात्वा सर्वथेदं हेयम्, अस्यार्थस्य ज्ञापनाय कतिपयगुणविघात्यन्यहन्तव्योपलक्षणाय चेदमुदितम्, अथवा भेदद्वारे मिथ्यात्वमनेकधा वक्ष्यते, तत्राभिनिवेशरहितमिदं सम्यक्त्वहेतुरेव अतो यथा विरतिहेतुः सम्यक्त्वं वाच्यं तथा तद्धेतुर्मिथ्यात्वमपीति सम्यक्त्वादिवन्मिथ्यात्वमपि उपादेयमेवेत्यदोष इत्यलं प्रसङ्गेनेति गाथार्थः ॥

साम्प्रतं 'नवभेयाइं वोच्छ' मिति प्रतिज्ञासूत्रप्रतिपादिताः के ते नव भेदाः ? इत्याशङ्कापनोदार्थं नव भेदानाह—

**जारिसओ १ जइभेओ २ जह जायइ ३ जह व एत्थ दोस ४ गुणा ५ ।**
**जयणा ६ जह अइयारा ७ भंगो ८ तह भावणा ९ णेया ॥ २ ॥**

'यादृशः' यत्स्वरूपो मिथ्यात्वादिर्गुण इत्येको भेदः, 'यद्भेदः' ये भेदा यस्यासौ यद्भेदो—यावद्भेद इति द्वितीयो

भेदो, 'यथा जायते' येन प्रकारेणोत्पद्यते इति तृतीयो भेदः, यथा चात्र दोषाश्च गुणाश्च दोषगुणाः, यथा तद्विपक्षा दोषाः संभवन्तीति चतुर्थो भेदः, यथा च तदासेवने गुणाः संभवन्तीति पञ्चमो भेदः, 'यतने'ति गुरुलघ्वालोचनरूपा यतना यथैतेषु कर्त्तव्येति षष्ठो भेदः, यथाऽतिचाराः-तदतिचरणरूपास्तेषु संभवन्तीति सप्तमो भेदः, 'भङ्ग' इति यथा चैतेषां भङ्गो भवति—अभावः सर्वथा संपद्यत इत्यष्टमो भेदः, तथा भावना ज्ञेया, यथैतेषां गुणानां वृद्ध्यर्थं भावना भाव्या इति नवमो भेदः, एते नव भेदाः प्रत्येकं मिथ्यात्वादिषु ज्ञेयाः, भेदा—द्वाराणीति गाथार्थः ॥ २ ॥

व्याख्यातानि नामतो नव द्वाराणि, साम्प्रतं 'यथोद्देशं निर्देश' इति न्यायान्मिथ्यात्वमेवाद्यद्वारेण व्याचिख्यासुराह——

**देवो धम्मो मग्गो साहू तत्ताणि चेव सम्मत्तं । तव्विवरीयं मिच्छत्तदरिसणं देसियं समए ॥ ३ ॥**

देवो धर्मो मार्गः साधवस्तत्त्वानि चैव सम्यक्त्वं, जिनागमाभिहितरूपाणि सर्वाणीति विशेषणपदं चकारेणानुक्तसमुच्चयार्थेन सूचितम्, एवकारोऽवधारणार्थः, स च चकारसूचितविशेषणपदेन संबध्यते, ततोऽयमर्थः—यथाऽवस्थितस्वरूपाण्येव देवादीनि सम्यक्त्वं न विपरीतरूपाणीति, ननु चैतद्विषयो यो रुचिपरिणामः स सम्यक्त्वमुच्यते, कथमेतान्येव सम्यक्त्वमित्युक्तं ?, सत्यं, विषयविषयवतोरभेदोपचारवृत्त्या देवादिविषयो रुचिपरिणामो देवादिशब्दै-

॥ ४ ॥

विवक्षितोऽतो देवादीनि सम्यक्त्वमित्युक्तम्, एषां च स्वरूपमिदं—' यस्याष्टादश दोषाः क्षुधादयः क्षयमुपागताः सर्वे । मुक्तिप्रदः स देवो विज्ञेयः केवलज्ञानी ॥ १ ॥ यत्र प्राणिदया सत्यमदत्तपरिवर्जनम् । ब्रह्मचर्यं च सन्तोषो, धर्मोऽ-सावभिधीयते ॥ २ ॥ ज्ञानदर्शनचारित्रपरिपालनलक्षणः । अक्षेपमोक्षनगरप्रापको मार्ग इष्यते ॥ ३ ॥ दशविधयतिधर्मरताः समविगणितशत्रुमित्रतृणमणयः । जीवादितत्त्वविज्ञास्तीर्थकरैः साधवः कथिताः ॥ ४ ॥ तापच्छेदकषैः शुद्धः, सुवर्णमिव यद्भवेत् । युक्तिसिद्धान्तसिद्धत्वात्तत्तत्त्वमभिधीयते ॥ ५॥' अथवा 'सूचनात्सूत्र'मितिवचनाद्देवधर्ममार्गसाधुतत्त्वेषु देवाद्य-ध्यवसायस्यैव देवादिशब्दैर्विवक्षितत्वाद्देवो धर्मो मार्गः साधुस्तत्त्वानि चैव सम्यक्त्वमित्युक्तं, ननु च मिथ्यादर्शनस्वरू-पमभिधित्सितं तत्किमर्थमप्रस्तुतं सम्यक्त्वस्वरूपमुक्तं?, सत्यं, सम्यक्त्वमिथ्यात्वयोःशीतोष्णस्पर्शयोरिव परस्परविरोधित्वात् सम्यक्त्वस्वरूपे ज्ञाते तद्विरोधिमिथ्यात्वस्वरूपं सुज्ञानं भवतीति ज्ञापनार्थम्, अत एवाह—'तव्विवरीयं मिच्छत्तदरिसणं दे-सियं समये' त्ति तस्मात्—सम्यक्त्वस्वरूपे ज्ञाते देवधर्ममार्गसाधुतत्त्वेषु यथाऽवस्थितरुचिपरिणामरूपाद्विपरीतम्-अन्यथा, यथा रागादियुक्तोऽपि देवो, नास्ति वा देव; तथा चोक्तम्—"पत्ती पत्ती पाणिउ पाणिओ, डूंगरु हूंता कक्करु आणिओ। कक्करु अग्गइ वज्जइ तूरा, देक्खु न माइ विगोया पूरा ॥१॥" इति, प्राणिव्यपरोपणादिनाऽपि धर्मो, नास्ति वा धर्मः, तदुक्तम्—"केण

दिट्ठु परलोओ जेण धम्मिण धणु दिज्जइ,काइं देवदाणविहिं अत्थसंचओ परिकिज्जइ।पियमूढओ जणु सव्वु पहु जो नवि धणु रक्खइ, धम्मट्ठाणकयतणओ साओ अज्जवि नवि चक्खइ॥१॥" इति, मोक्षस्याज्ञानादिकः, नास्ति वा कश्चिदिति, आरम्भपरिग्रहादिप्रवृत्ता मुत्कलचारिणो मुनयो, यदुक्तं–"खंतपियंतवि सुरओ रमंतवि, अलिओ मुहुलु चक्कु पूयंतवि। इमं वयंति सिद्धं सुरलोयह, मत्थइ पाओ दिवि पसु लोयह ॥ १ ॥" त्ति। न सन्ति वा केचन, यत उक्तम्–"स्त्रीमुद्रां झषकेतनस्य महतीं सर्वार्थसम्पत्करीं, ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलाकाङ्क्षिणः। ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः, केचित्पञ्चशिखीकृताश्च जटिनः कापालिकाश्चापरे ॥ १ ॥" इति, वैशेषिकसाङ्ख्यादिप्रणीतान्यपि तत्त्वानि, न वा कानिचित्, इत्यादिरूपं मिथ्यात्वदर्शनं 'देशितं' कथितं, क?–'समये' सिद्धान्ते, अत एव केनचित्सम्यग्दृष्टिना मूढमिथ्यादृष्टिचेष्टितान्यवलोक्य खेदः कृतो, यथा–"रागी देवो दोसी देवो मांसिसुत्तंपि देवो, मज्जे धम्मो मंसे धम्मो जीवाहिंसाएं धम्मो। सत्ता मत्ता कंतासत्ता जे गुरू तेवि पुज्जा, हा हा कट्ठं नट्ठो लोओ अट्टमट्टं कुणंतो ॥ १ ॥" इति गाथार्थः ॥ २ ॥ व्याख्यातं प्रथमद्वारेण स्वरूपकथनरूपेण मिथ्यात्वमिदानीं द्वितीयद्वारेण भेदद्वारं व्याचिख्यासुराह—

आभिग्गहियमणाभिग्गहियं तह अभिनिवेसियं चेव । संसइयमणाभोगं मिच्छत्तं पंचहा होइ ॥ ४॥

आभिग्रहिकमनाभिग्रहिकं तथाऽभिनिवेशिकं चैव सांशयिकमनाभोगं मिथ्यात्वं पञ्चधा भवति। यद्यपि चान्य-
त्राभोगानाभोगभेदेन द्विविधं मिथ्यात्वमुक्तं, शेषभेदानामत्रैवान्तर्भावात्, तत्राभोगमिथ्यात्वं सदेवतानामिति,
तथाऽप्यवान्तरभेदापेक्षया प्रकरणकारेण पञ्चधेत्युक्तं, तत्राभिग्रहिकं येन बोटिकादिकुदर्शनानामन्यतमदभिगृह्णाति,
अभिग्रहः--आग्रहस्तस्माज्जातमाभिग्रहिकं, क्रीतादेराकृतिगणत्वादिकण्, एवमुत्तरत्रापि, तद्विपरीतमनाभिग्रहिकम्,आभी-
रादीनाम्, ईषन्माध्यस्थ्याद्वाऽनभिगृहीतदर्शनविशेषाणां सर्वदर्शनानि शोभनानीत्येवंरूपा या प्रतिपत्तिस्तदनाभिग्रहिक-
म्, 'आभिनिवेशिकम्'अभिनिवेशाद्-असदाग्रहाज्जातं गोष्ठामाहिलादीनामिव, 'संसयियं'सांशयिकं संशयाज्जातं-यदिदमु-
क्तमर्हता तत्त्वं जीवादि तन्न जाने तथा स्यादुतान्यथेत्येवंरूपम्, 'अनाभोगम्' आभोगो विशिष्टज्ञानं स न विद्यते यत्र तदना-
भोगं मिथ्यात्वं एकेन्द्रियादीनामिव,इत्येवं मिथ्यात्वं पञ्चधा भवति,क्वचित्त्वस्या गाथाया इत्थं पाठो दृश्यते—" अभिगहिय-
मणभिगहियं मिच्छत्तं अभिनिवेसियं चेव । संसइयमणाभोगं तिविहं वा अहवऽणेगविहं ॥ ८ ॥" तत्र पादत्रयव्याख्या
पूर्ववदेव, केवलं मिथ्यात्वशब्दो द्वितीयपादादिवर्त्त्यपि सर्वपदेषु संबध्यते—आभिग्रहिकं मिथ्यात्वमित्यादि, 'तिविहं व' त्ति

वाशब्दः पक्षान्तरसूचकः, ' त्रिविधं ' त्रिविधप्रकारं वा सांशयिकाभिग्रहिकानाभिग्रहिकभेदात्, तदुक्तम्—"तं मिच्छत्तं जमसद्दहणं तच्चाण होइ भावाणं । संसइयमभिग्गहियं अणभिग्गहियं च तं तिविहं ॥ १ ॥" 'अहव अणेगविहं' ति अथवेति प्रकारान्तरद्योतकः, अनेका विधा नयमतभेदाद् यस्य तद् अनेकविधम्—अनेकप्रकारम्, अनेकधर्मात्मके वस्तुनीतरधर्मप्रतिक्षेपेणैकधर्माश्रिताध्यवसायस्य मिथ्यात्वरूपत्वात्, तस्य च सङ्ख्यातुमशक्यत्वात्, तदुक्तम्—"जावइया वयणपहा तावइया चेव हुंति नयवाया । जावइया नयवाया तावइया चेव परसमया ॥ १ ॥" इति ॥ इति गाथार्थः ॥ ४ ॥ व्याख्यातं द्वितीयेन भेदद्वारेण, अधुना तृतीयेनाभिधित्सुराह—

मिथ्यात्वस्य भेदाः गा. ४ यथाचोत्पत्तिः गा. ५

**मइभेया पुव्वोग्गह संसग्गीए य आभिनिवेसेण । चउहा खलु मिच्छत्तं साहूणमदंसणेणऽहवा ॥५॥**

जायत इति क्रियाऽध्याहाराच्चतुर्द्धा खलु मिथ्यात्वं जायत इति सम्बन्धः, कैश्चतुर्भिः प्रकारैः? इत्याह-'मतिभेदात्' मतिः—बुद्धिस्तस्या भेदो—विशेषो यथाऽवस्थितसमस्तवस्तुप्रतिपत्तावप्येकत्र कुत्रचिदर्थेऽन्यथा प्रतिपत्तिरूपस्तस्मान्मतिभेदादित्येकः प्रकारः, 'पुव्वोग्गह' त्ति सूत्रत्वाल्लुप्तपञ्चम्येकवचनो निर्देशः, ततः पूर्वव्युद्ग्रहादित्यर्थः, स च पूर्वं कुदर्शनवासनावासितान्तःकरणस्य जीवद्रव्यस्य युक्तिशतैर्भूयो भूयः प्रतिबोध्यमानस्यापि तत्संस्कारानुवृत्त्या

कदाग्रहस्तस्माच्च मिथ्यात्वं जायत इति द्वितीयः कारणप्रकारः, 'संसग्गीय' त्ति मिथ्यादृष्टिभिः सह यः सम्बन्धः स संसर्गोऽत्र विवक्षितस्तस्माच्चेति तृतीयः कारणविकल्पः, अयं च दोषहेतुत्वेन सुप्रतीत एव, यदुक्तम्—
"अंबस्स य निंबस्स य दुण्हंपि समागयाइं मूलाइं। संसग्गीएँ विणट्ठो अंबो निंबत्तणं पत्तो ॥१॥" तथा—"तिलाश्चम्पक-सम्पर्कात्प्राप्नुवन्त्याधिवासनम्। रसोनभक्षस्तद्गन्धः, सर्वे साङ्क्रमिका गुणा ॥२॥" इति, 'अभिनिवेसेणं' ति अभिनिवेशो नामाहम्पुरुषिकयाऽन्यथाभूतस्यापि सतो वस्तुनोऽन्यथा प्ररूपणं तेनेति चतुर्थो हेतुभेदः, 'चउह' त्ति चतुर्भिः प्रकारैः, खलुशब्दो वाक्यालङ्कारे नतु अवधारणार्थस्तेनोक्तं—'साहूण अदंसणेणऽहवा' साधवो-यतयस्तेषामदर्शनम्-अनवलोक-नम्, अथवाशब्दः समुच्चयार्थस्तेन साधूनामदर्शनेन चेत्यर्थः, एतच्चाऽऽबालगोपालाङ्गनाजनप्रसिद्धमेव प्रेमदृष्टान्तेन, यथा प्रेमात्यन्तवृद्धिमुपगतमपि कालवशेन भर्त्रादावभीष्टे देशान्तरादिगते निधनमुपयाति, यथोक्तम्—"अदंसणेण सुन्दरि! सुट्ठुवि नेहाण बन्धुजणियाइं। हत्थयलपाणियाइ व कालेण गलंति पेम्माइं॥" ति, तथा कदाचित्सम्यक्त्वला-भेऽपि सर्वथा साध्वदर्शनेन मिथ्यात्वमुपजायते, अत एव श्रावकाणामेवं सामाचारी भणिता, यथा—"निवसेज्ज तत्थ सड्ढो, साहूणं जत्थ होइ संपाओ। चेइयघराइ जहियं तयण्णसाहम्मिया चेव॥ १ ॥" त्ति, अन्यथा साधुसाधर्मिकचै-

त्याद्यभावे मिथ्यात्वमपि यायात्, तथा चोक्तं—"न सन्ति येषु देशेषु, साधवो धर्मदीपकाः । नामापि तत्र धर्मस्य, ज्ञायते न कुतः क्रिया ? ॥ १ ॥" इति । साधुदर्शने चैवं गुणाः, यथा—"साहूण दंसणेणं, नासइ पावं असंकिया भावा । फासुयदाणे निज्जर अणुग्गहो नाणमाईणं ॥ १ ॥" अतोऽन्वयव्यतिरेकाभ्यां साध्वदर्शनेन मिथ्यात्वं सुप्रसिद्धमेव, मतिभेदादिकारणेभ्यश्च मिथ्यात्वोत्पत्तौ जमालिप्रभृतयो दृष्टान्ताः, तथा चोक्तम्—"मइभेएण जमाली पुव्वुग्गहियंमि हवइ गोविंदो । संसग्गि सागभिक्खू गोट्ठामाहिलो अभिनिवेसे ॥ १ ॥" त्ति, एते च यद्यपि सूत्रकारेण सूत्रगाथायां नोपात्तास्तथाऽपि प्रपञ्चितज्ञविनेयानुग्रहाय वृत्तौ मया दर्श्यन्ते, तत्र मतिभेदे जमालिकथानकं तावत्कथ्यते—

इहैव जम्बूद्वीपे भरतवर्षालङ्कारभूतं धनधान्यहिरण्यादिसम्पदुपेतं क्षत्रियकुण्डग्रामाभिधानं नगरं, तत्र च तदा भगवतो महावीरस्वामिनो ज्येष्ठभगिन्याः प्रियदर्शनाभिधानायास्तनयो नयविनयसम्पन्नः सत्त्वेषु दयापरः परमनिजरूपोपहसितकामो जमालिनामा क्षत्रियकुमारः प्रतिवसति स्म, तस्य च वर्द्धमानस्वामिदुहिता स्वशरीररूपसौन्दर्यविजितामरसुन्दरीका प्राणेभ्योऽपि प्रियतरा सुदर्शनाऽभिधाना पत्नी बभूव, तया सह जीवलोकसारं पञ्चप्रकारं विषयसुखमनुभवतो व्यतिक्रान्तः कियानपि कालः, अन्यदा निजभवनवातायनस्थितस्त्रिकचतुष्कचत्वरादिप्रदे-

शेषु गृहीतोदारवेषालङ्कारं सारतरविचित्रपरिवारं नानाविधयानवाहनाधिरूढं ब्राह्मणकुण्डग्रामनगराद्बहिर्बहुशालकचैत्ये विमुक्तराज्यपुरपरिजनबन्धुवर्गोऽङ्गीकृतसमस्तसावद्यविनिवृत्तिरूपापवर्गमार्गो विषोढगाढपरीषहोपसर्गोऽतिक्रम्य सार्द्धषण्मासाधिकद्वादशवर्षमात्रं छद्मस्थपर्यायं विधाय घातिकर्मक्षयं समुत्पाद्याखिललोकालोकप्रकाशनप्रत्यलं केवलं विहरन् ग्रामारामनगराकरविहारमण्डितां वसुमतीं श्रमणो भगवान् महावीरोऽद्य समवसृतस्तद्दर्शनवन्दनाद्यर्थमेत यात यास्यथ गता यास्याम इत्याद्यनेकप्रकारं परस्परमालापं कुर्वाणं सकलमेव तन्नगरनिवासिलोकमालोक्य समुत्पन्नकुतूहलः समासन्नवर्त्तिनमाहूय कञ्चुकिनं पप्रच्छ—अहो कोऽयमत्राद्योत्सवप्रकारो यत्र समस्त एव सान्तःपुरपरिजनो जन एष प्रयाति ?, तेन च लोकवाक्यात्पूर्वमेवावगतवृत्तान्तेनोक्तं—यथा ब्राह्मणकुण्डग्रामनगराद्बहिर्बहुशालकचैत्ये तवैव मातुलः श्वशुरश्च श्रमणो भगवान् महावीरः समवसृतस्तद्वन्दनाद्यर्थमेष लोक एवमुत्सुको व्रजति, एतदाकर्ण्य हर्षप्रकर्षोद्भिन्नरोमाञ्चो निजसेवकं पार्श्ववर्तिनमवादीद्—यथा गच्छ शीघ्रं यानशालायां चतुर्घण्टं रथं साश्वं प्रगुणीकृत्यात्रोपतिष्ठ येनाहमपि भगवद्वन्दनाय गच्छामि, स यथाऽऽज्ञापयति कुमार इत्यभिधाय त्वरितपदैर्भवनान्निश्चक्राम, कुमारस्तु ततः स्थानादुत्थाय मज्जनगृहं जगाम, तत्र स्नात्वा विहितकर्पूरकस्तूरिकामिश्रश्रीचन्दनविलेपनो गृहीतसारालङ्कारो यावदास्ते

तावदत्रान्तरे पूर्वप्रेषितः सेवकः सज्जीकृतचतुर्घण्टरथो व्यजिज्ञपत्, यथा कुमार ! सम्पादितत्वदादेशोऽहमेष तिष्ठामि, कुमारस्तद्वचनमाकर्ण्य त्वरिततरचरणन्यासं गृहान्निष्क्रम्य तमेव रथमारुह्योपरि धार्यमाणप्रवरातपत्रो धनुष्काण्डखड्गफलकादिनानाविधायुधसहायैः पुरतः पृष्ठतो धावद्भिः पदातिनिवहैरनुगम्यमानः क्षात्रियकुण्डग्राममध्ये बहुशालकचैत्याभिमुखः कियन्तमपि भूभागमुल्लङ्घ्याग्रतो नातिदूरवर्त्तिसमवसरणमवलोक्य नियन्त्रिततुरगो रथादवतीर्य परित्यक्तपुष्पताम्बूलायुधोपानदादिपदार्थसार्थ एकसाटकमुत्तरासङ्गं विधाय ललाटतटघटितकरकुड्मलः समवसरणभुवमुपसृत्य भक्तिभरनिर्भरान्तःकरणो भगवन्तं त्रिः प्रदक्षिणीकृत्य नमस्कृत्य च यथोचितस्थानोपविष्टोऽमृतवृष्टिमिव समस्तशरीरानन्ददायिनीं भगवद्देशनामाकर्ण्य संसारभयोत्त्रस्तचेता विधिना स्वामिनोऽजिज्ञपत्, यथा-भगवन् ! पितृभ्यां गृहिण्या चानुज्ञातो युष्मदन्तिके ग्रहीतुमिच्छामि प्रव्रज्यां, भगवता तु देवानुप्रिय ! मा प्रतिबन्धं विधत्स्वेत्युक्तः पुनस्त्रिः प्रदक्षिणीकृत्य नमस्कृत्य च भगवन्तं समवसरणान्निष्क्रम्य तमेव रथमारुह्य तथैव स्वनगरमध्येन निजगृहं गत्वा पितरावपृच्छत्, ताभ्यां च कथंकथञ्चिदनुमतो गृहिणीसकाशं समागात्, तया च प्रतिपन्नदीक्षाऽभिलाषया सहैव स्नातविलिप्तगृहीतालङ्कारो जिनभवनेषु विरचितमहापूजो दीनानाथकृपणादिलोकेभ्यो यथेच्छं दानं ददत् पुरुषसह-

स्रवाह्यां शिबिकामारुह्य महाविभूत्या भगवन्तमुपतस्थौ, भगवता च जमालिकुमारः पञ्चशतराजपुत्रपरिवारो दीक्षितः, तत्पत्नी च सुदर्शना सहस्रपरिवारा प्रव्राजिता, द्वयोरपि सामायिकाद्येकादशाङ्गपर्यन्ता श्रुतसम्पत्सम्पन्ना, कालेन गीतार्थतायां जातायां जमालिराचार्यो विहितः, स च कदाचिद्भगवन्तं महावीरमभिवन्द्यैवमवोचत्-यथाऽहमभिलषामि भगवदनुज्ञया पञ्चभिरनगारशतैः परिवृतो ग्रामनगरादिषु विहर्त्तुं, ततो भगवानेतद्वचनमाकर्ण्य भाविदोषावलोकनेन तूष्णीं व्यवस्थितः, पुनर्भणिते च यावन्न किञ्चिदुत्तरमलभत ततो भगवन्तमभिवन्द्य बहुशालकचैत्यान्निर्गत्य पञ्च-शतसाधुपरिवारो ग्रामानुग्रामं विहर्त्तुमारेभे, अन्यदा श्रावस्त्या नगर्या बहिस्तिन्दुकोद्यानवर्त्तिनि कोष्ठकचैत्ये समागतः, तत्र च तस्य प्रान्ताहारादिभिर्गाढतरो रोग उदपादि, ततः श्रमणानाहूय भणितवान्—यथा दाघज्वरेण विह्वलीकृतं मे शरीरं न शक्नोमि क्षणमप्युपविष्टः स्थातुमतो यदि यूयं मद्योग्यं शय्यासंस्तारकं कुरुथ तदा शयित्वा पीडायापनां करोमि, तैश्चेच्छामः कर्त्तुमेवमित्यभिधाय संस्तरीतुमारब्धं, स च गाढवेदनया दोदूयमानतनुः पुनरवादीद्—यथा भोः श्रमणाः! संस्तीर्णं न वा? इति, ते ऊचुः—संस्तीर्णं, ततोऽसौ यावदीक्षाञ्चक्रे तावदसंस्तीर्णमेव संस्तारकं विलोक्य बाढं कषायितचित्तोऽपि तदा साबाधत्वान्न किञ्चिदुक्तवान्, केवलं संस्तीर्णे

परिपूर्णसंस्तारके शयित्वा पीडाविगमं विधाय क्षणान्तरे स्वस्थशरीरस्तपोधनानाहूय पप्रच्छ—किं भो ! भवद्भिरर्द्धसंस्तीर्णोऽपि संस्तारकः संस्तीर्ण इति भणितः, तैरवाचि—"कज्जमाणे कडे चलमाणे चलिए उईरिज्जमाणे उईरिए निज्जरिज्जमाणे निज्जिण्णे" इत्यादिभगवद्वचनप्रामाण्यात्, एतदाकर्ण्य जमालिर्भवितव्यतावशेन तत्क्षणोपजातमिथ्यात्वकर्मोदयो भगवान् तत्र भ्रान्त इत्यवदत्, यतो न खलु संस्तीर्यमाणसंस्तीर्णयोरेककालत्वं, क्रियाकालनिष्ठाकालयोरत्यन्तभेदात्, अतो भगवद्वचनं मिथ्येति प्रतिजानीमः, प्रयोगश्चात्र—क्रियमाणं कृतमित्याद्यर्थप्रतिपादकं भगवद्वचनं मिथ्या, प्रत्यक्षविरुद्धार्थाभिधायित्वाद्, अश्रावणः शब्द इति प्रतिज्ञावचनवत्, न चायमसिद्धो हेतुः, अर्द्धसंस्तीर्णसंस्तारकस्यासंस्तीर्णत्वदर्शनेनान्यत्रापि क्रियमाणत्वादिधर्मेण प्रत्यक्षसिद्धेन कृतत्वादिधर्मस्य दूरतोऽपनीतत्वात्, नाप्यनैकान्तिकः सपक्ष एव भावात्, नापि विरुद्धो विपक्षात् सत्यलक्षणात्सर्वथा व्यावृत्तेः, अतः स्थितमेतत्-क्रियमाणं कृतमित्यादि भगवद्वचनं मिथ्येति, एवमुक्ताश्च ते साधवः केचिदेवमेवेति प्रतिपन्नाः, अपरे त्ववगतभगवद्वचनयथावस्थितार्थाः सम्यग्बोधवन्त एवमभिदधुर्यथा—जमालिसूरे ! नैतद् युक्तमुक्तं भवता, न खलु भगवानसमीक्ष्य किञ्चिद्वक्ति, समुत्पन्नकेवलत्वेन भगवतः सततोपयोगत्वात्, न च वयं भगवद्वचनं श्रुतमात्रग्राहितयाऽङ्गीकृतवन्तः किन्तु युक्त्या विचार्य,

न हि भगवद्वचनं "पुराणं मानवो धर्मः, साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि, न हन्तव्यानि युक्तिभिः
॥ १ ॥" इत्यादितुल्यं, जात्यसुवर्णवत्तापादिशुद्धत्वात्, अन्यथा-अस्ति वक्तव्यता काचित्तेनेदं न विचार्यते । जात्यं तु
काञ्चनं भूत्वा, तापादिभ्यो बिभेति किम् ? ॥१॥" इत्याद्युपालम्भभाजनं स्यात्, यच्चोक्तं 'संस्तीर्यमाणसंस्तीर्णयोनैकका-
लत्वमित्यादि' तदपि बालप्रलपितप्रायं, क्रियाकालनिष्ठाकालयोः कथञ्चिदेकत्वाभ्युपगमात्, तथाहि-क्रियमाणक्षणे कृत-
त्वमप्यस्ति, अन्यथा क्रियमाणाद्यक्षण इवान्त्यक्षणेऽपि कृतत्वस्याविद्यमानत्वात्कृतोऽयमिति प्रत्ययो नोत्पद्येत, अस्ति
च प्रत्ययस्तथाऽनुभूयमानत्वाद्, योऽपि भगवद्वचनं मिथ्येत्याद्यनुमानप्रयोगोऽभिहितस्तत्रापि प्रतिज्ञापदयोर्विरोधः,तथाहि-
भगवद्वचनं चेन्न मिथ्या मिथ्या चेन्न भगवद्वचनं, समग्रैश्वर्ययुक्तो हि न मिथ्या वक्तीति प्रतीतमेतत्, तत्कारणाभावाच्च, मि-
थ्याभणने हि रागादयः कारणं,ते च तस्य न सन्ति,यदुक्तम्-"रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम्।यस्य तु नैते दो-
षास्तस्यानृतकारणं किं स्यात् ? ॥१॥" इति, अत एवासिद्धोऽपि हेतुः प्रत्यक्षविरुद्धार्थाभिधायित्वेन भगवद्वचनस्य कदाऽप्य-
प्रतीतेः, विरुद्धाव्यभिचारी चायं हेतुः, तथाहि—एतदपि शक्यते वक्तुं-क्रियमाणं कृतमित्यादि भगवद्वचनं सत्यं, सद्भू-
तार्थप्रतिपादकत्वात्, सक जनप्रतीतपृथ्वीकाठिन्ये कठिना पृथ्वीत्यादिवाक्यवत्, यच्चोक्तं 'न चायमसिद्धो हेतु-

रित्यादि ' तदप्यसंबद्धम् , अर्द्धसंस्तीर्णेऽपि संस्तारके संस्तीर्णत्वस्य दर्शनात, तथाहि—यद् यदा यत्राकाशदेशे वस्त्र-मास्तीर्यते तत्तदा तत्रास्तीर्णमेव, अतो यदुक्तमन्यत्रापि क्रियमाणत्वादिधर्मेणेत्यादि तदपि दूरापास्तमेकयोगक्षेम-त्वाद्, विशिष्टसमयापेक्षीणि च भगवद्वचनान्यतः सर्वत्रादोष इति मुञ्च कदाग्रहमभ्युपगच्छ क्रियमाणं कृतमित्यादि । एवमुक्तोऽपि यावन्न प्रतिबुध्यते तावत्तैश्चिन्तितं—क्लिष्टकर्मोदयतो मिथ्यात्वं गत एषः, तथा चोक्तम्—" सूत्रोक्तस्यै-कस्याप्यरोचनादक्षरस्य भवति नरः । मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाभिहितम् ॥ १ ॥ " इति, तदधुना न योग्य एवैष सेवाया इत्यवधार्य विमुच्य तदन्तिक चम्पानगर्यां पूर्णभद्रचैत्यसमवसृतं महावीरस्वामिनमाशिश्रियुः। इतश्च सुदर्शना बहुसाध्वीपरिवारा जमालिवन्दनानिमित्तं तत्रैवागता ढङ्ककुम्भकारगृहेऽवग्रहमुपयाच्य स्थिता, सा च प्रति-दिवसं कृतमेव कृतं न क्रियमाणमित्यादिदेशनां जमालेः श्रुत्वा तरलितहृदया यथा जमालिर्भाषते तथैवाभ्युपगतवती, अथवा भवत्येव चैतत, यदुक्तम्-"कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ? । क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन॥१॥"इति, ततो ढङ्कगृहे समागतेत्थमेव तदग्रतः प्रतिपादितवती, तेनापि जमालिवृत्तान्ताभिज्ञेनोक्तम्—आर्ये ! नाहमेवंविधं विशेषान्तरं ज्ञातुं समर्थो यथा भगवान् सत्यो जमालिर्वा इत्यभिधाय तूष्णीं स्थितस्तावद् यावदन्यदा स्वाध्याय-

पौरुषीं कुर्वत्या एवापाकमस्तकस्थानि भाण्डान्यवतारयता झगित्येव ज्वलदङ्गारक एकस्तथा प्रक्षिप्तो यथा तत्सङ्घाटिकैकदेशो लग्नः, तया च दृष्ट्वा भणितम्–यथा भो भो श्रमणोपासक ! किं मदीया सङ्घाटी त्वयैनमङ्गारं प्रक्षिप्य दग्धा ?, तेनोक्तम्–किमित्यार्ये ! व्यलीकमभिदधासि ?, न हि दह्यमानं दग्धमुच्यते त्वन्मते, सङ्घाटी च त्वदीया दह्यमानैवेदानीं वर्त्तते, इत्याद्युक्ता सा प्रतिबुद्धाऽवदत्–यथा साधु कृतं श्रावक ! इच्छामि सम्यगनुशिष्टिमहम्, एवं च दत्तमिथ्यादुष्कृता भगवदाज्ञाविलोपिनमात्मानं निन्दन्ती गता जमालिपार्श्वे, स्वाभिप्रायं च सयुक्तिकं बहुश उक्तवती, तथाऽपि न प्रतिपन्नवानसौ, ततः सा परिशेषसाधवश्च स्वामिसकाशमेव गताः, इतरोऽप्येकाकी तस्माद्दुष्प्ररूपणादनालोचिताप्रतिक्रान्तो बहूनि वर्षाणि श्रामण्यपर्यायं परिपाल्यार्द्धमासिकसंलेखनयाऽऽत्मानं संलिख्य त्रिंशद्भक्तान्यनशनेनावच्छिद्य कालमासे कालं कृत्वा लान्तककल्पे त्रयोदशसागरोपमस्थितिकः किल्बिषिको देवः समुत्पन्नः । मतिभेदकमिथ्यात्वे जमालिचरितं निवेदितं किञ्चित् । विस्तरतो विज्ञेयं प्रज्ञप्तेर्नवमशतकात्तु ॥ १ ॥

उक्तं जमालिचरितं, श्रुतदेवीप्रसादतः ।
पूर्वव्युद्ग्रहमिथ्यात्वे, गोविन्दस्याधुनोच्यते ॥ १ ॥

भरुयच्छपुरे पवरे अवगयनीसेससुगयमयसारो । आसि वरवायलद्धीसमन्निओ भिक्खुगोविंदो ॥ २ ॥ सो य–अप्पं बहु मन्नंतो, पयडंतो निययवायसामत्थं । रत्थामुहेसु हिंडइ भुवणंपि तणं व मण्णंतो ॥ ३ ॥ सो अन्नया कयाई नियसामत्थस्स पयडणनिमित्तं । पडहयदवावणेणं घोसावइ तियचउक्केसुं ॥ ४ ॥ जो अत्थि इह समत्थो, कोई स कुणउ मए समं वायं । नरवइसहाएँ सब्भाइलोयपच्चक्खमक्खविओ ॥ ५ ॥ चिइवंदणकज्जेणं समागएहिं इमं च घोसणयं । सुणियं सियवायवियक्खणेहिं जिणदेवसूरीहिं ॥ ६ ॥ पडिसेहिओ पडहओ तओ य दुण्हंपि राउले वाओ । जाओ जिओ य सूरीहिं एस नरनाहपच्चक्खं ॥ ७ ॥ तो चिंतिउं पयत्तो विलक्खभावो जहा न एएसिं । सिद्धंते अणवगए, एए जिप्पंति कइयावि ॥ ८ ॥ परतित्थियस्स य इमे मह न कहिस्संति निययगं पुत्थं ( गुज्झं ) । एएसिं चेव अहं ता दिक्खं संपवज्जामि ॥ ९ ॥ इय चिंतिऊण गंतूणुवस्सए भणइ सूरिणो एवं । अन्नाणविलसियं मह खमेह तह कुणह अणुकंपं ॥ १० ॥ देह मह पवरदिक्खं एस विलग्गोऽम्हि तुम्ह पामूलं । सिक्खवह ससिद्धंतं पमाणनयहेउपज्जंतं ॥ ११ ॥ ते तस्स दव्वविणओ· वसंतयं पासिऊण हिट्ठमणा । छउमत्थपरिक्खाए परिक्खिउं दिंति पव्वज्जं ॥ १२ ॥ दव्वाणुट्ठाणपरो सामा-

पूर्वव्युद्ग्राहे गाविन्द वाचकोदाहरणं ७

॥ ११ ॥

इयमाइयं पढइ सुत्तं । पुव्वोग्गहमिच्छत्तं तहावि भावेण नो चयइ ॥ १३ ॥ एवं च तस्स केच्चिरादिणेसु जह जह मणंमि परिणमियं । अमयं व सुयं तह तह विसं व मिच्छत्त वोसरियं ॥ १४ ॥ भणियं च—"जह जह सुअमवगाहइ अइसयरसपसरसंजुयमउव्वं । तह तह पल्हाइ मुणी नवनवसंवेगसद्धाए ॥ १५ ॥" मिच्छाभावंमि गए पच्छा गंतूण गुरुसयासंमि । पभणइ कयंजलिउडो नाह! मए एत्तियादिणाइं ॥ १६ ॥ विहलच्चिय पव्वज्जा मिच्छाभिणिवेसओ कया इण्हिं । सुयभावणाएँ सम्मं परिणाममुवागया अज्ज ॥ १७ ॥ कम्मगिरिदलणवज्जं ता अज्ज पयच्छ भावपव्वज्जं । काऊण मह पसायं सामिय ! निन्नासियाविसायं ॥ १८ ॥ भणइ तओ तस्स गुरू तं धण्णो एत्तिएहिवि दिणेहिं । तित्थयराणा भावे परिणया जस्स हिययंमि ॥ १९ ॥ एवं उववूहेउं उच्चारावइ महव्वए पुणवि । पडियागयसंवेगो पडिवज्जइ सम्ममेसोऽवि ॥ २० ॥ विस्सोत्तियाविरहिओ वायंतो तह कमेण पुव्वगयं । **गोविंदवायगो** सो जाओ विक्खायवरकित्ती ॥ २१ ॥ पुव्वुग्गहमिच्छत्ते कहियं गोविंदवायगऽक्खाणं । संसग्गियंमि एत्तो वोच्छं सोरट्ठसड्ढस्स ॥ २२ ॥

सौराष्ट्रविषये कश्चिज्जीवाजीवादितत्त्ववित् । बभूव श्रावकः श्रेष्ठो जिनधर्मपरायणः ॥१॥ दुर्भिक्षोपद्रुते देशे, सोऽन्यदा भिक्षुभिः समम् । चचाल स्वल्पपाथेयः, पुरीमुज्जयिनीं प्रति ॥२॥ ततस्तथागतास्तस्मै, धर्मं सुगतदेशितम् । आदिश-

न्ति स्म मोक्षाय, स ऊचे तानिदं वचः ॥ ३ ॥ न बुद्धभाषितो धर्मो, भिक्षवो ! मोक्षसाधकः । अनाप्तेन प्रणीतत्वाद्, यथाऽलीकनरोदितः ॥ ४ ॥ अनाप्तत्वं च बुद्धस्य, क्षणिकैकान्तदेशनात्। एकान्तक्षणिको भावो, यतःप्रत्यक्षबाधितः ॥५॥ किञ्च—“एकान्तक्षणिकत्वे भावानामवगमोऽपि नो घटते। विस्मरणशासनाद्याः कुतः पुनस्त्रिभुवनख्याताः ? ॥ ६ ॥” इत्यादियुक्तिभिश्चक्रे, स तथा तान्निरुत्तरान् । न पुनर्द्धर्म्मविषयं, विचारं चक्रिरे यथा ॥ ७ ॥ अन्यदाऽर्द्धपथे तस्य, पाथेयं परिनिष्ठितम् । निरीक्ष्य भिक्षुभिः प्रोक्तं, यथाऽस्मत्संबलं वह ॥ ८ ॥ वयमेव प्रदास्यामो, भोजनं भवतः पथि । इत्युक्तः प्रतिपेदेऽसौ, तद्वचो निर्विचारकम् ॥ ९ ॥ प्राप्तोऽन्येद्युरुज्जयनीमसौ तैर्भिक्षुभिः समम्। तत्र चाहारदोषेण, जाता तस्य विसूचिका ॥ १० ॥ तया च स मृतः शीघ्रं, नमस्कारपरायणः । छादितं तच्छरीरं च, भिक्षुभिर्निजवाससा॥११॥देवेषु स च संजातश्चिन्तयामास तत्क्षणम् । सुरेत्त्वं यदुत्पन्नोऽहं, तत्फलं कस्य कर्मणः?॥१२॥एवं चिन्तयता दृष्टं, निजमेव शरीरकम्।उत्पन्नावधिना तेन, भिक्षुचीवरवेष्टितम् ॥ १३ ॥ तच्चथाऽऽलोक्य भूयोऽपि, परिभावितवानिदम् । भिक्षुसेवाप्रसादोऽयं, देवत्वं यदहं गतः ॥१४॥ एवं विभाव्य भिक्षुभ्यः, प्रच्छन्नतनुरेव सः। आहारं दातुमारब्धो, दिव्यहस्तेन भक्तितः॥ १५ ॥ जाता प्रभावना तेषां, श्रावकाश्चेतरैस्तदा। हस्यन्ते नो यथाऽमीषां, दर्शने देवसांनिधिः ॥१६॥ युगप्रधानसू-

रीणां, वार्ता तैश्च निवेदिता। तैरालोक्य ततः प्रोक्तं, यथाऽयं पूर्वजन्मनि ॥१७॥ श्रावको जिनधर्मज्ञः, आसीद्देवस्ततोऽजनि।
भिक्षुसंसर्गदोषेण, मिथ्यात्वमधुना गतः ॥ १८ ॥ तदेतं ब्रूत भो ! गत्वा, नमस्कारपुरस्सरम् । भो ! भो ! बुद्ध्य-
स्व २, मोहं गुह्यक ! मा गमः ॥ १९ ॥ आचार्यादेशतः पश्चाच्छ्रावकैर्विहिते तथा । मोहमुत्सृज्य जातोऽसौ, ततः सम्य-
क्त्वभावितः ॥ २० ॥ संसर्गदोषतोऽप्येवं, मिथ्यात्वं जायते यतः । कुतीर्थिकैः समं सङ्गो, न कार्योऽतः सुबुद्धिभिः
॥ २१ ॥ शासनदेव्यनुभावात् सौराष्ट्रश्रावकस्य चरितमिदम् । कथितं गोष्ठामाहिलकथानकं साम्प्रतं ब्रूमः ॥ २२ ॥

तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे २ दाहिणभरहद्धमज्झिमखंडे अत्थि अवंती नाम जणवओ, जो य वइसेसियदंसणाहिप्पाउव्व दव्वसमवायसत्ताहिट्ठिओ गुणविसेससोहिओ य, ण उण दूसियपहाणपुरिसवाउत्ति, अविय- जो पढमं पढमजिणेणऽवंतिनामस्स निययतणयस्स। दिण्णो गओ पसिद्धिं पच्छा तस्सेव नामेण ॥१॥ तत्थ नंदणवणव्व विबुहजणवल्लहं दसपुराहिट्ठाणं, जं च ठाणट्ठाणदीसंताणंतसुंदररंभाभिरामं अपरिमियतिलोत्तममणुव्वसियमेक्करं- भातिलोत्तमोवसोहियस्स सयउव्वसियस्स कुणइ परिभवं सुरवइपुरस्स, तत्थ य अणवरयनमंताणंतसामं- तमउलिमालापरिगालितसुरहिपरिमलुप्पीलकुसुमसमूहसमच्चियचलणकमलो कमलायरो व्व लच्छिनिवासो वासवो

व्व दलियदप्पिट्ठदुट्ठवइरिबलो लोणी(वलाण)उ व्व सव्वाणुरत्तहियओ **हयसत्तू** नाम नरवई, तस्स य सयलंतेउरपहाणा अउव्वचंदमुत्ति व्व गयकलंका वक्कत्तमुक्करत्तिदिवप्पसरंतविमललावण्णजोण्हाभरा अणवरयवियासियानियबंधुकइरवा **धारिणी** नाम महादेवी, इओ य तस्सेव रन्नो समग्गरज्जकज्जधुराधरणधवलो धवलगुणगणविढत्तकित्तिसंभारभरियभुवणंतरालो विरिंचो व्व कमलालओ वेयागमसंपन्नो य चउविहबुद्धिविहवविणिज्जियसुरगुरू आसि **सोमएवाहिहाणो** मंती, तस्स य सरस्सइव्व परिमुणियासेससत्थवित्थरा जिणसासणंमि अट्ठिमिंजपेम्माणुरायरत्ता **रुद्दसोमा** नाम भारिया, तीए य सद्धिं तस्स विसयसुहमणुहवंतस्स समइक्कंतो कोइ कालो, अण्णया जामिणीए चरिमजामे सुहपसुत्ता पडिपुण्णकलाकलावोवसोहियं ससहरं वयणेणोयरं पाविसंतं पासिऊण पाहाइयमंगलतूररवेण सुहविउद्धा कयावस्सया जहाविहिं साहेइ सुमिणयं दइयस्स, तेण य समाइट्ठं जहा ते नियकुलनहयलामलमियंको नरामरिंदपणयपायजुयलो असेसविज्जाठाणपारगो पहाणपुत्तो भविस्सइ, तव्वयणायण्णणुप्पण्णपरमाणंदनिब्भरा य जावऽच्छइ ताव तीए चेव रयणीए सा आवण्णसत्ता संपन्ना, सुहंसुहेण पवड्ढमाणगब्भा संपाडियसयलदोहला उचियसमए पसत्थसमत्थलक्खणालंकियसरीरं सुरकुमारसरिसरूवं पसूया दारयं, वद्धाविओ

पियंकरियाभिहाणाए चेडीए समं नरिंदेण सोमदेवो, कयं महावद्धावणयं, समइक्कंतेसु कइवयदिणेसु कयं पिऊहिं से नामं रक्खिउत्ति, वड्ढिओ देहोवचएणं, अण्णया तस्सेव अणुओ जाओ फग्गुरक्खिओ, रक्खिएण य पिउसयासंमि जावइया सुयसंपया तावइयं घेत्तूण 'विज्जासु असंतुट्ठेण पुरिसेण होयव्वं' तिमन्नमाणेण विण्णत्तो पिया—जहा—तुज्झाएसेण पाडलिपुत्तं गंतूण सेसगंथे अहिज्जामि जइ विसज्जेहिसि, पिउणाऽवि जुत्तमिमंति भणमाणेणाणुण्णाओ, नरिंदनागरयसयणवग्गमणुजाणाविऊण गओ पाडलिपुत्तं, तत्थ तहाविहोवज्झायसमीवे थोवकालेणं चिय अहीयाणि चोद्दसवि विज्जाठाणाणि, ताणि पुण इमाणि—"वेया चउरो अंगाणि छच्च तह नायवित्थरो चेव । मीमांसा य पुराणं चोद्दसमं धम्मसत्थं च ॥ १ ॥ रिउसामजजुअथव्वण वेया चत्तारि तेसिमंगाणि । सिक्खा कप्पो जोइस निरुत्तवायरणनिग्घंटा ॥ २ ॥" जाओ समत्थगंथत्थपारओ, अण्णया य पिउनरिंदसमाएसेण बहुविहपूयासक्कारपुरस्सरं मोयाविऊण उवज्झाएहिंतो अत्ताणयं आगओ दसपुरं, पुव्वमेव विण्णायवइरेण राइणा कराविय ऊसियपडायं नगरं, सयं च एरावणविब्भमं समारुहिऊण करिवरं चाउरंगबलसमेओ मंतिसामंतपमुहनागरयाणुगम्ममाणो समं सोमदेवेण गओ तयभिमुहं, कयसम्माणो य पिउनरिंदनागरयाईहिं महाविच्छड्डेणं हत्थिखंधारूढो उवरि धारिज्जमा-

णधवलायवत्तो अग्गओ वज्जंतेहिं बहलमंगलाउज्जेहिं आउरिज्जंतेहिं जमलसंखेहिं पगीइज्जंतेहिं मंगलगीएहिं नगरस्स मज्झंमज्झेणं पविसिउमाढत्तो, तओ–"अच्चिज्जंतो नयणुप्पलेहिं अनालियगुणेहि थुव्वंतो। नाणाविहलोएहिं, संपत्तो रायभवणंमि ॥ १ ॥ खणमेत्तं तत्थऽच्छिय णियपिउगेहंमि आगओ एत्थ। नमिऊण जणणिजणए उवविट्ठो पट्टसालाए ॥ २ ॥ तत्थ ट्ठियस्स सो कोऽवि नत्थि पुरिसो व महिलिया नयरे। जो तस्स दंसणत्थं न आगओ गहिय कोसल्लो॥३॥ एत्थंतरंमि पणट्ठहरि सविसाया गेहकज्जंमि संचरंती दिट्ठा नियजणणी चिंतियं चऽणेण–"मज्झागमणे तुट्ठो सव्वोऽवि जणो विसेसओ ताओ। सह मित्तबंधुपरियणनरिंदसामंतवग्गेण॥ १॥ जणणी पुण मज्झत्था दीसइ ता किमिह कारणं होज्जा। इय चिंततो पच्छा समुट्ठिओ ताओ ठाणाओ ॥ २ ॥" कयण्हाणभोयणविलेवणाइवावारो अणवरयसमागच्छंतलोगनिवहमाभासित्ता अत्थमिए नालिणीदइए दिणयरे विहडंतेसु रहंगमिहुणेसु कयसंझाकायव्वो गओ जहारिहपरियणपरिवुडो अब्भिंतरसालाए जणणीय सयासं, पणमिया विणयसारं, संभमं तट्ठाणवत्तिणा बंधुवग्गेण दिण्णासीसो य उवविसिऊण चलणंतिए भणिउमाढत्तो-अंब! मह पढियनीसेससत्थवित्थरविढत्तकित्तिस्स। आगमणंमि नरिंदाइणोऽवि आणंदिया सव्वे॥ ३ ॥ तं पुण न हट्ठतुट्ठा जाया ता किं हवेज्ज कज्जमिदं ?। इय भणिया भणइ तहिं जणणी

तं ईसि हसिऊण ॥ २ ॥ पुत्त ! कहं अहमिमिणा बहुपाणियघायकारणेण सव्वसत्ताण मिच्छत्तविवड्ढएण तुज्झ
असेससत्थगहणेण विपरिओसमुव्वहामि ?, केवलं दुक्खमेव मज्झ इमिणा, जओ न इमेण पढिएणवि इट्ठफलसं-
पत्ती पाउणिज्जइ, भणियं च—“ श्रुतं यन्न विरागाय, न धर्माय न शान्तये । सुबह्वपि तदभ्यस्तं, काकवासितसं-
निभम् ॥ १ ॥ ” किञ्च—“ पठितं श्रुतं च शास्त्रं गुरुपरिचरणं च गुरुतपश्चरणम् । घनगर्जितमिव विजलं विफलं सकलं
दयाविकलम् ॥ २ ॥ ” वेयसत्थेसु य पढमं हिंसापरूवणमेव, जओ भणियं—“षड् शतानि नियुज्यन्ते, पशूनां मध्यमेऽ-
हनि । अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभिः ॥ १ ॥” इत्यादि, “ता जइ सच्चं हरिसं जणेसि मे तह य सव्वस-
त्ताणं । ता पढसु दिट्ठिवायं तेलोक्कसुहावहं वच्छ ! ॥ १ ॥ एवं जणणिवयणमायण्णिऊण चिंतिउं पयत्तो—भो कत्थ
केत्तिओ वा पावेयव्वो य कस्स पासंमि ? । दिट्ठीण दंसणाणं जो वाओ भण्णए कोवि ॥ १ ॥ पढिऊण जेण सिग्घं
जणणीएँ जणेमि परममाणंदं । इय चिंतिय पुण पुच्छइ विणएण कयंजली सीसे ॥ २ ॥ माऊए भणियं—वच्छ !
इओ नाइदूरे अत्थि उच्छुघरमुज्जाणं, तत्थ तोसलिपुत्ता नाम आयरिया, तेहिंतो पाविहिसि दिट्ठिवायंति, तओ
उट्ठिओ ताओ ठाणाओ, गओ नियसयणीयमंदिरं, तत्थ तहविहविणोएण कंचि वेलं गमिऊण

पसुत्तो, पहायप्पायाए रयणीए समुट्ठिओ सयणीयाओ कयपहाइयकायव्वो अभिवंदियजणणिजणओ जणणिं पुच्छिऊण निग्गओ गेहाओ, इओ य तस्सेव पिइमित्तो णयरग्गामवासी विण्णायरक्खियागमणवुत्तंतो कल्लं न दिट्ठो अज्ज पेच्छामित्ति चिंतयंतो गहियउच्छुलट्ठिपाहुडो समागच्छइ तद्दंसणत्थं, दिट्ठो य निग्गयमेत्तेण चेव तेण संमुहमागच्छंतो, पुच्छिओ य सो तेण—जहा होसि तुमं रक्खिओ ?, तेण भणियं—आमंति, तओ पहिट्ठचित्तेण सागयं २ ति भणमाणेण अवगूहिओ, समप्पियाओ य इक्खुलट्ठीओ, ताओ णव संपुण्णाओ एक्का य खंडमेत्ता, पहाण-सउणोत्तिकाऊण गहियाओ, तओ भणिओ—वच्च तुमं गेहं, लट्ठीओ य इमाओ मज्झ जणणीए समप्पेज्ज, एवं च भणेज्ज—निग्गयमेत्तेण चेव तुह पुत्तेण पढममहं दिट्ठोत्ति, अहं च सरीरचिंताए गमिस्सन्ति पेसिओ, पत्तो गेहं, कयजहोचियपडिवत्तिणा य समप्पियाओ रुद्दसोमाए इक्खुलट्ठीओ, साहियं च पुव्वुत्तं, परमाणंदनिब्भराए य चिंति-यमणाए—मम पुत्तेण सुंदरं मंगलं दिट्ठं, होहिंति संपुण्णा नव पुव्वा दसमस्स खंडंति, अज्जरक्खिओ य मए दिट्ठि-वायस्स नव पव्वाणि अज्झयणाणि वा घेत्तव्वाणि दसमस्स खंडं चात्ति चिंतयंतो पत्तो उच्छुघरं, तत्थ य एगप्पएसे ठाऊण चिंतियं—जहा कहमियरपुरिसोव्वऽविण्णायसाहुसमायारो सूरिसयासं वच्चामि ?, ता चिट्ठामि

जाव एएसिं चेव कोऽवि सावओ एइ जेण तेण समं पविसिऊण तद्दंसियविहिणा सूरिणो वंदामि, तत्थ एगो ढड्ढरसरो सावओ कयसरीरचिंतो दिट्ठो साहुसयासमितो, संपुण्णो मे मणोरहत्ति चिंततो लग्गो तस्स पट्ठीए, सावएणऽवि महया सद्देण साहुउवस्सयं पविसमाणेण कयाओ तिण्णि निसीहियाओ, तेणवि अणु कयाओ, ताहे तहेव ढड्ढरसरेण इरियावहियाए पडिक्कमणाइयं करेइ, सोऽवि अइमेहावित्तणओ सव्वमणुकरेइ ताव जाव साहूणं वंदणं दिन्नं, न वंदिओ सावओ, तओ आयरिएहिं नायं—एस नवल्लसड्ढोत्ति, पच्छा पुच्छिओ य—कइया सावग ! पत्तो अचिंत-चिंतामणी इमो धम्मो ? । कत्तो ? इयरेण भणियं अज्जमिमाओ सुसड्ढाओ" ॥१॥ जओ भणियं—"नेहाणुरागसब्भावविणय-सत्तीहिं जे न गिण्हंति । गुरुणो ताण न सिज्झइ समीहियं पावकम्माणं ॥ १ ॥" एत्थंतरंमि पासट्ठियसाहूहिं साहियं सूरीण—जहा एस सो रुद्दसोमाए सावियाए पुत्तो—जो कल्लं नरवइणा नयरंमि पवेसिओ विभूईए । हत्थिक्खंधारूढो गि-ज्जंतो मंगलसएहिं ॥१॥ तओ सयं चेव आगमणकारणं साहियं चेव गुरूणं, आयरिएहिं भणियं—जइ पव्वज्जं गेण्हसि अम्ह सयासे दढव्वओ होउं । ता दिट्ठिवायलाभो पडिवाडीए तुहं होही ॥१॥ तेणवि भणियं सज्जो पव्वज्जाए अहं मुणिव-रिंद ! । किंतु नरिंदाईओ सव्वो लोगो ममणुरत्तो ॥१॥ मा पव्वज्जाविग्घं काही ता देसि गंतुमन्नत्थ । जइ तमहिज्जामि तओ

कमेणऽहं दिट्ठिवायंपि ॥२॥ जिणपवयणगयणससी होही एसोत्ति चिंतिउं गुरुणा । दिण्णा से पव्वज्जा विहिणा अन्नत्थ नेऊण ॥ ३ ॥ एसो य महावीरातित्थंमि साहूणं सीसचोरियाववहारो पढमो पवत्तो, तओ थोवकालेणं चिय गाहियदुविहसिक्खेण अहिज्जियाणि एक्कारस अंगाणि, जेत्तिओ य दिट्ठिवाओ तोसलिपुत्ताणं सोऽवि गहिओ, तंमि य काले जुगप्पहाणा अज्जवइरा, ताणं दिट्ठिवाओ बहुओ अत्थि, ते य तया पुरीए चिट्ठंति, तओ तत्थ पढणत्थं साहुसहिओ वइरस्सामिसगासं पेसिओ अज्जरक्खिओ गुरूहिं, कमेण य पत्तो उज्जेणिं, तत्थ दिट्ठा भद्दगुत्तथेरा, वंदिया सविणयं, साहिओ निययवुत्तंतो, तेहि य–"तं धन्नोऽसि महायस ! तए विढत्ता सुनिम्मला कित्ती । जो एवं जिणदिक्खं गहिउं उज्जमसि सव्वत्थ ॥ १ ॥" एवमाइ उववूहिऊण भणिओ–जहाऽहमियाणिं संलिहियसरीरो अणसणं काउकामो, न य मम कोइ निज्जामगो अत्थि, ता तुमं चेव मं निज्जामिऊण वच्चसु, तेणवि तहत्तिकाउमब्भुवगयं, कालं करंतेहि य तेहिं समाइट्ठं–अज्जवइरेहिं समं मा एगाए वसहीए चिट्ठेज्ज, वीसुं ठिओ तेहिं अच्छित्ता पढिज्ज, जओ तेसिं समं जो सोवक्कमाउओ एगंपि रयाणिं वसइ सो तेहिं समं कालं करेइ, तए य पवयणाहारेण होयव्वंति, तओ तमट्ठं पडिसुणिऊण गएसु देवलोगं भद्दगुत्तेसु अज्जरक्खिओ गओ वइरसामिसयासं,

ठिओ भिण्णोवस्सए, इओ य अज्जवयरेहिं तीए चेव रयणीए चरिमजामे अम्हं खीरपडिपुण्णपडिग्गहो आगंतुएण केणावि
परिपीओ, नवरं किंचिमित्तं ठियंति सुमिणं पासिऊण विउद्धेहिं साहियं साहूण, तेसिं च अण्णमण्णं वायरिंताणं
भणियं सूरिणा—जहा कोऽवि मह सयासंमि साहू समागंतूण खीरसरिसं सुयमवगाहिस्सइ, किं तु न निरवसेसं,
एत्थंतरंमि समागओ अज्जरक्खिओ, वंदिया सविणयं जहुत्तविहिणा भगवंतो अज्जवइरा, आभासिओ य तेहिं साहु·
सागयंति भणमाणेहिं, पुच्छिओ य कत्तो समागओ ? केण वा कज्जेण ? कहिं वा ठिओसित्ति?, तेण भणियं—तोसलिपुत्ता-
यरियसयासाओ दिट्ठिवायपढणत्थं बाहिं च ठिओऽम्हि, सूरीहिं भणियं—किं तुमं न याणासि केरिसमज्झाइयव्वं होइ
पुढो वसहिट्ठियस्स ?, ताहे सो भणइ—खमासमणेहिं भद्दगुत्तेहिं अहं वारिओ, अज्जवइरेहिं समं एक्कवसहीए न ठायव्वंति,
तओ न निक्कारणा निवारणत्ति चिंतिऊण दिन्नो उवओगो नायं चत्ति, तओ भिण्णोवस्सयठिओ अणुमओ अज्झावेउं,
थोवकालेण चेव अहियाणि नव पुव्वाणि, दसमं पढिउमाढत्तो, इओ य तस्स मायापिऊहिं संदिट्ठं, जहा—तुह पुत्तवि-
रहकंतारदुक्खदावानलेण डज्झंता। दंसणसरंमि सुहजलसंपुण्णे मज्जिउं महिमो ॥ १ ॥ संदेसएण इमिणा न आगओ
अज्जरक्खिओ जाव। तो फग्गुरक्खिओ से लहु भाया तत्थ पट्ठविओ ॥ २ ॥ आगंतूणऽभिवंदिय गुरुणो तो अज्जर-

क्खियं भणइ। आगच्छ तुह विओए दुक्खं चिट्ठंति जणयाई ॥३॥ एवं च तो रक्खिएण पुच्छिया अज्जवइरा, तेहिं भणियं पढसु ताव, पढिउमाढत्तो, फग्गुरक्खिएणवि न अन्नहा एहित्ति चिंतिऊण भणिओ—जइ एसि तुमं ता तुज्झ दंसणे जणणिजणयमाईया। सव्वेऽवि हु पव्वज्जं भाउय ! गिण्हंति भावेणं ॥१॥ अज्जरक्खिएण भणियं—जइ एवं तो पढमं तुमं चेव पव्वय, एवंति पडिवण्णे पव्वाविओ विहिणा सिक्खविओ दुविहसिक्खं, पुणोऽवि भाणियमणेण—इण्हिं पयट्टसु, तओ पुच्छिया गमणनिमित्तं पुणो गुरुणो, तेहिं भणियं—पढसु ताव, सो य तया जविए अवगाहइ, ताणि य अच्चंतसुहुमाणि चउवीसं गहियाणि, पच्छा तेहिं अईव घोलिओ, पुच्छइ—भयवं ! दसमपुव्वस्स केत्तियं गयं? केत्तियं ठियन्ति ?; तओ अज्जवइरेहिं बिंदुसमुद्दसरिसवमंदरदिट्ठंतो दरिसिओ, तओ—सोऊण मंदरोदहिसरिसवजलबिंदुएहिं दिट्ठंतं। सविसायं भणइ गुरुं भयवं ! न तरामि पढिउमहं ॥ १ ॥ आसासिओ य गुरुणा, धीरो तं होहि मा कुण विसायं। सेसंपि गिण्हसि च्चिय, अविसन्नो थोवकालेणं ॥ २ ॥ पुणो पढिउमाढत्तो, पुच्छइ निच्चं-केत्तियं सेसंति, तओ चिंतियं—किं ममाओ चेव वोच्छिज्जिही एयं, जेणेसेवंविहबुद्धिनिहीवि एवं निव्विण्णो पढणाओ, तओ नायं—मे थोवमाउयं एसो य गओ न पुणो एही अओ मएहिंतो चेव वोच्छिज्जिही दसमपुव्वंति विसज्जिओ, तओ कमेण पत्तो दसपुरं, तोसलि-

पुत्तायरिएहिं ठाविओ नियपए, तओ तेण तत्थ पव्वाविओ सव्वोऽवि बंधुवग्गो, जणओऽवि तेसिमणुरागेण गिहत्थलिंगो तेहिं समं चेव चिट्ठइ, भणइ य—वत्थजुयलं न मुयावेह कुंडलं छत्तियं उवाणहाओ जन्नोवइयं च तो पव्वयामि, आयरिएहिं चरणकरणाइ पण्णवंतो सिक्खविस्सामोत्ति चिंतिऊण भणियं—एवं कुणसुत्ति, तहेव पव्वाविओ, गेण्हाविज्जइ दुविहंपि सिक्खं, अन्नया चेइयवंदणवडियाए गएहिं आयरिएहिं संकेइयाणि चेडरूवाणि जहा अम्हे वंदिमो सव्वे मोत्तूण छत्तइल्लंति अज्जसंमुहं भणेज्जह, तओ ताणि तहेव भणंति, पच्छा सो चिंतेइ—किं मज्झ इमिणा छत्तेण ? जेण गहिएण चेडरूवावि एवं पडिचोएन्ति, तओ गओ पुत्तसयासं, भणइ—मम छत्तेण ण कज्जंति, आयरिएहिं भणियं—जुत्तमिमं, जइ उण्हाभिभवो होही तो कप्पं सीसोवरिं करिज्जसु, एवं च उवाएणं कुंडियाईणिवि मोयाविओ जाव कडिपट्टयं न मुयइ, पच्छा ताणि तहेव भणंति—सव्वे वंदामो मोत्तूण कडिपट्टइल्लंति, सो रुट्ठो भणइ—मा वंदह अज्जयपज्जएहिं समं तुमे, अण्णो कोऽवि वंदिही, न मुयामि कडिपट्टयंति, अण्णया य एगो साहू विसुद्धसंलेहणाए संलिहियसरीरो पसत्थेसु दव्वखेत्तकालभावेसु भगवओ अज्जरक्खियसूरिस्स पासंमि दिण्णालोयणो समयं चिय पंचमहव्वएहिं पडिवज्जिऊण सामाइयं संथारंमि निसन्नो उच्चारियअणसणो विहिणा भावेंतो भावणाओ

खामंतो सव्वसत्तसंघायं पंचनमोक्कारपरो समाहितप्पा कालगओ, तओ अज्जरक्खियसूरीहिं पिउणो कडिपट्टयमोयावणत्थं भणिया तस्स समक्खं सव्वसाहुणो—जो वहइ मडयमेवं जायइ से निज्जरा अइमहंती। जम्हा जहुत्तविहिणा विमुक्कदेहस्स देहमिणं ॥ १ ॥ ते य पुव्वसंकेइयत्तणओ मे महई निज्जरा होउत्ति भणंता परोप्परं विवदिउं पयत्ता, तेणावि ते विवयंते दट्ठूण बहुनिज्जरत्थिणा भणियं—जाया ! जइ एवं तो अहंपि वहामि, तेण भणियं—जुत्तमेयं, केवलमेत्थ बहूवसग्गा, ते असहिज्जमाणा मज्झ अणत्थहेउणो हवंति, तो जइ ते सम्मं सहसि तो वहसु एयंति, सम्मं साहिस्सामित्तिभणिऊण वोढुमाढत्तो, तयणुमग्गेण साहुसाहुणिप्पमुहो चउव्विहोऽवि संघो लग्गो, पुव्वकयसंकेएहि य डिंभेहिं समागंतूण गहिओ से कडिपट्टयो दोरेण बद्धो चोलपट्टओ, सो य लज्जंतोऽवि सव्वं सहमाणो वोसिरिऊण मडयं समागओ वसहीए, आभासिओ गुरुणा—खन्त ! जाओ उवसग्गो· त्ति ? तेण भाणियं-जाओ, किंतु अहिआसिओ, पुणो गुरूहिं भणिओ—इण्हिं परिहेसु कडिपट्टयं, तेण भाणियं-दिट्ठं जं दिट्ठव्वं अलं इमिणा, पुणो चिंतियं गुरुणा—उवाएण मोयाविओ छत्ताईणि एसो, इण्हिं भिक्खं भमाडेमि, जओ जइ कहवि एगागी होज्ज तो कहं भुजेज्ज ? निज्जरं वा कहं लहेज्ज ?, तओ साहूहिं समं संकेयं काऊण, भणियं

गुरुणा-जावम्हे गामंतरं गंतुं आगच्छामो ताव तुम्हेहिं तायस्स सव्वं लभेयव्वं, एवंति पडिवण्णे तेहिं पियरमाउच्छिऊण गया गामंतरं गुरुणो, तेऽवि फग्गुरक्खियाइणो साहुणो भिक्खावेलाए हिंडिऊण सव्वे भुत्ता, न तस्स केणवि चिंता कया, ताहे तेण चिंतियं–मे छक्क ( णिस्संक ) निरणुकंपा मुणिणो नामेण केवलं एए । मइ भुक्खिएवि एवं जे जिमिउं जंति कज्जेसुं ॥ १ ॥ एवं रोसेण अट्टदुहट्टाइं चिंततस्स अइक्कंतो सरत्तिओ दिवसो, बीयदिवसे समागया सूरिणो, साहियं सव्वं, अंबाडिऊण कवडेण साहुणो भणियं गुरूहिं-अम्हे चेव भिक्खिउमागच्छामो तुज्झकएत्ति उट्ठिया गुरू, गहिओ पडिग्गहो, चिंतियं च से जणएणं-मज्झ पुत्तो असेसदिसाचक्कपयडमाहप्पो मज्झ कए कहं भिक्खं भमिही?, ता सयं चेव वच्चामि, गहिओ गुरुहत्थाओ पडिग्गहो,निग्गओ अ भिक्खट्ठा,अयाणंतो य अवदारेण पविट्ठो एक्कसेट्ठिस्स गेहं, सिट्ठिणा भणियं-किं अवदारेण अज्ज! पविसासि ?, सिरीए इंतीए किं दारमवदारं वत्ति, [ ग्रन्थाग्रम् ५०० ] पडिभणिय सुपसत्थजंपओ साहुत्ति तुट्ठेण सेट्ठिणा दवाविया बत्तीसं विसिट्ठमोयगा, साहुणा य समागंतूण वसहीए आलोइया गुरूण, तेहिं भणियं–बत्तीसं पहाणसीसा पारंपरेण आवलियाठावगा तुह होहिंति, केवलं पढमा लद्धित्ति साहूण देसु, किंच–" आहारदाणओ इह, जईण पावंति मोक्खसोक्खंपि । पारपरेण सत्ता उवभुंजिय

नरसुरसुहाइं ॥ १ ॥" तओ दिण्णा सव्वे, पुणो अप्पणो निमित्तं गएण लद्धं घयमहुजुत्तं परमन्नं, आगंतूण भुत्तं, तद्दिवसाओ चेव जाओ विसिट्ठलद्धिसंपण्णो सयलगच्छोवयारी, तम्मि य गच्छे अन्नेऽवि परमलद्धिसंपन्ना तिण्णि मुणिणो, तंजहा—वत्थपूसमित्तो घयपूसमित्तो दुब्बलियपूसमित्तो, तत्थ वत्थपूसमित्तस्सेसा लद्धी—दव्वओ जत्तिएहिं वत्थेहिं गच्छस्स पओयणं तत्तियाइं आणेइ, खेत्तओ महुराए, कालओ सिसिरे वासारत्ते वा, भावओ जहा काएवि दुग्गयमहिलाए छुहाए मरंतीए गुरुकिलेसेण कत्तिऊण वुणाविया एक्का पोत्ती, कल्लं सुंदरे दिवसे परिहिस्सामित्ति धरिया, एत्थंतरे जइ सो पत्थेइ तो हट्ठतुट्ठा देइ १ घयपूसमित्तस्स उ दव्वओ जत्तिएण गच्छे सरइ तत्तियं घय-माणेइ, खित्तओ उज्जेणीए, कालओ जेट्ठासाढमासेसु, भावओ जहा—एगा बंभणी गुव्विणी नियभत्तारं जाइरोरं मज्झ पसवणकाले घएण कज्जं होही तं भिक्खिऊण मेलिहित्ति भणियाइया, तेणावि कहकहवि पलियं पलियमु-ग्गाहंतेण पइदिणं छहिं मासेहिं पूरिओ घयकुडओ, समप्पिओ भट्टिणीए, जाइओ घयपूसमित्तेण, सव्वं देइ हट्ठतुट्ठा २ दुब्बलियपूसमित्तो उण निच्चमेव सज्झायवावडो, तेण नव पुव्वा अहिया अहिज्जिया, सुत्तत्थगोयराए निरंतरं चिंताए जाओ दुब्बलो, जइ नाणुप्पेहेइ तो सव्वंपि सुयं पम्हुसइ अओ चेव दुब्बलियपूसमित्तोत्ति पत्तो

पसिद्धिं, अण्णया तत्थेव दसपुरनयरे वत्थव्वा रत्तपडभत्ता से बंधुणो, आयरियं वयासि—मोत्तूण भिक्खुणो न अन्नपासं-डीणं झाणपरिन्नाणमत्थि, आयरिएणं भणिअं—अजुत्तं मा वयह, जओ झाणनिरोहाओ चेव एस मे बंधू एवं दुब्बलो जाओ, तेहिं भणियं—एस सिणिद्धमहुराइं गिहत्थत्ते आहारिंतो तेण बलिओ हुंतो, अंतपंताहाराइणा य इण्हिं दुब्बलो जाओ, न उण झाणेण, गुरुणा भणियं—इण्हिंपि य इमस्स घयपूसमित्ताओ मणोऽणुकूलो सिणिद्धमहुराइगुणजुओ आहारो संपज्जइ चेव, जइ न पत्तियह तो तुज्झे चेव सिणिद्धमहुराहारेणुवयरिऊण बलियं करिऊणाणेहत्ति विसज्जिओ तेहिं सद्धिं, ताणिवि पवराहारेणुवयरिउमाढत्ताणि, सोऽवि खणमवि सज्झायममुंचमाणो आहारेइ, तओ रत्तिं दिया य परिवत्तंतस्स तस्सेसो वराहारो महोवयारोव्व खलयणे न नज्जइ कत्थवि वच्चइ, ताहे बंधुवग्गेण निव्विण्णेण साहियं गुरूण, गुरूहिं भणियं-इण्हिं जं वा तं वा देह, सोऽवि भणिओ—इण्हिं न सुट्ठु सुयपरिवत्तणायरो कायव्वो, तहाकए थोवदिवसेहिं चेव सो बलिट्ठो संपन्नो, तओ तेसिं भावेण परिणयं गुरुवयणं, कया विसेसेण धम्मदेसणा, जायाणि सावगाणि ३। तम्मि य गच्छे विसेसगुणिणो चत्तारि मुणिणो, एक्को सो चेव दुब्बलियपूसमित्तो, अण्णो पुव्वभणिओ फग्गुरक्खिओ, तइओ विंझो, चउत्थओ आयरियाण चेव मामगो गोट्ठामाहिलो, तत्थ य विंझो महामेहावित्तणओ

कमेण सुत्तपरिवाडीए सुत्तं लहंतो झूरेइ, तओ आयरिए विन्नवेइ—मज्झ कंचि वायणायरियं पयच्छह, तेहिंपि दुब्बलिय-पूसमित्तो से वायणायरिओ दिण्णो, कइवय दिणाणि विंझस्स वायणं दाऊण गुरुं भणइ—भयवं! मम वायणं दिंतस्स सेससुयमगुणिज्जमाणं न ठाइ, तओ-जं सन्नायगगेहे मुक्कं जं संपयं च न गुणेमि। तेण समत्तंपि सुयं गलिही मम करयलजलं व॥१॥ तओ चिंतियं गुरूहिं—सुरगुरुसमबुद्धिस्सवि निच्च झरंतस्स जइ सुयमिमस्स। हंत विणस्सइ (ऽसइ) ता का गणणा सेसपुरिसेसु?॥१॥ अइसयकओवओगेण य नायं, जहा-इओपभिइ सुयमेधाधारणाइपरिहीणे सीसे होहिंति, तओ तेसिं अणुग्गहट्ठं चउरोऽवि अणुओगे वीसुं कासी, भणियं च—"जावंति अज्जवइरा अपुहुत्तं कालियाणुओगस्स। तेणारेण पुहुत्तं कालियसुय दिट्ठिवाए य॥ १॥ देविंदवंदिएहिं महाणुभावेहि रक्खियज्जेहिं। जुगमासज्ज विहत्तो अणुओगो तो कओ चउहा॥ २॥ कालियसुयं च इसिभासियाइं तइया य सूरपण्णत्ती। सव्वोऽवि दिट्ठिवाओ चउत्थओ होइ अणुओगो॥ ३॥" देविंदवंदियत्तं च जहा तेसिं तहा साहिज्जइ—"ते कइयवि संपत्ता विहरंता गाम-नगरमाईसु। महुराउरिं समिद्धं भूयगुहाचेइयं तत्थ॥ १॥ तंमि ठिया भयवंतो इओ य सोहम्मसुरवई पत्तो। खेत्ते महाविदेहे, सीमंधरसामिपासंमि॥ २॥ अभिवंदिऊण पुच्छइ तित्थयरं सामि! केरिसा एत्थ। हुंति निओया

जीवा वागरिया भयवया ते उ ॥ ३ ॥ ताहे पुणोऽवि पुच्छइ भरहे वासंमि अत्थि पुण कोई । एए निओयजीवे जो साहइ पुच्छिओ संतो ॥ ४ ॥ तित्थयरेणं भणियं संति तहिं अज्जरक्खिया सूरी । तो सो माहणरूवेण आगओ ताण पासंमि ॥ ५ ॥ गोयरचरियाएँ विणिग्गएसु साहूसु थेररूवेणं । अभिवंदिऊण पभणइ-महल्लयाही मह सरीरे ॥ ६ ॥ तो कत्तियं ममाउं कहेह काऊण अणसणं जेण । मुंचामि इमे पाणे निव्विण्णो जीवियव्वाओ ॥ ७ ॥ तं सोउं उवउत्ता जाया सूरी तओ य वाससयं । नाऊण समहियं से चिंतंति न भारहो एसो ॥ ८ ॥ खयरो व वंतरो वा, होही नाया तओ य तस्स ठिई । दो सागरोवमाइं, भणंति तो होसि तं सक्को ॥ ९ ॥ सब्भावं तो साहइ इंदो संपुच्छए निओए य । कहिएसु सूरिणा तेसु पत्थिओ वंदिउं जाव ॥ १० ॥ भणिओ स ताव गुरुणा, चिट्ठ खणं जाव साहुणो इंति । तुह दंसणेण जेणं थिरयरया हुंति ते धम्मे ॥ ११ ॥ इंदो पभणइ ते अप्पसत्तभावेण चेव मं दट्ठुं । काहिंति नियाणमओ अदंसणं चेव मे सेयं ॥ १२ ॥ जइ एवं ता अण्णं चिण्हं काऊण किंपि वच्चाहि। तो अन्नत्तो दारं काउं वसहिं गओ सक्को ॥ १३ ॥ गोयरचरियनियत्ता साहू वसहीएँ दारमलहंता । वाहरिया सूरीहिं, इओमुहा एह भणिरेहिं ॥ १४ ॥ कहियं सक्कागमणं च ताण ता कीस दंसिओ नऽम्हं ? । इय भणिए आइक्खइ तं

च्चिय सक्केण जं भणियं ॥ १५ ॥ इओ य पुणरवि दसपुरं पइ विहरिएसु सूरिसु—सुरपुरिसंकासाए दीसंताणेयको-
उयसयाए। नाहियवाई एक्को समागओ महुरनयरीए॥ १॥ तेण य अक्खित्तो सव्वो नयरलोओ, न कोऽवि तस्सुत्तरं दाउं
सक्कइ, तओ माहुरसंघेण पवयणपभावणा होउत्ति चिंतयंतेण दसपुरनयरे जुगप्पहाणाण अज्जरक्खियसूरीण सयासं पेसिओ
माहुरसंघाडओ, तेण य समागंतूण साहिओ संघवुत्तंतो ताणं, तेहिं च विद्धत्तणओ सयं गंतुमसमत्थेहिं पवरवायल
द्धिसंपण्णो पेसिओ माउलो गोट्ठामाहिलो, कमेण संपत्तो महुराए, आगमणेणं तस्स य नागरया हरिसनिब्भरा जाया,
आणंदिओ य संघो, परितुट्ठा सयलपासंडी॥१॥ अण्णदियहंमि तथाविहसाहुसंजुओ गओ गोट्ठामाहिलो नरिंदसइं, दिट्ठो
राया, कयप्पणामेण तेण दवावियमासणं, सांनिसन्नो तत्थ गोट्ठामाहिलो समं ससाहूहिं, मिलिया समग्गपासंडिणो,
आपूरिया नरिंदसभा, उवविट्ठेहिं सिट्ठिसेणावइसत्थवाहदु (धि) ज्जाइपमुहेहिं लोएहिं-ससमयपरसमयण्णू कुलंमि जाया
खमाएं विक्खाया ! । पक्खदुगसम्मया तह समागया सब्भविबुहा य ॥१॥ एत्थंतरंमि पुव्वागयनाहियवाइणा संलत्तं—
जमिहऽक्खगोयराइक्कंतं न तमत्थि खरविसाणं व। इंदियविसयाईया य जीवसव्वण्णुमाईया ॥ २ ॥ एस असिद्धो
हेऊ न य भणियव्वो जओ न जीवाई। पच्चक्खपमाणेणं वेप्पंति घडाइभावव्व॥३॥ पच्चक्खपमाणाओ अत्थि पमाणंतरं

च नो अन्नं । इमिणाच्चिय दायव्वो न य अणुमाणेण वभिचारो ॥ ४ ॥ नाहियवाईवि जओ परप्पसिद्धीएँ जंपए सव्वं
मिच्छो हु मिच्छभासाइ बोहियव्वोत्ति नाएणं ॥ ४ ॥ ता एएसिमभावा ववहारो चेव जुत्तिसंजुत्तो । अच्चंतपरोक्खेसु
संवाओ दुक्करो जम्हा ॥ ६ ॥ भणियं च—“ एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः । भद्रे ! वृकपदं पश्य, यद्वदन्ति
बहुश्रुताः ॥ १ ॥ ” तव्वयणावसाणे य भणियं गोट्ठामाहिलेण—जमिहऽक्खगोयराइक्कंतं न तमत्थि खरविसाणव्व । जं
संलत्तं तुमए, तत्थाणेगंतिओ हेऊ ॥ ७ ॥ देसाइविप्पकिट्ठा मंदरमगरागरादओ जम्हा । विज्जंति परोक्खावि हु तह
जीवाईवि होहिंति ॥८॥ किञ्च-एएण हेउणा किं नियतेसुं देसकालपिंडेसुं । जीवाईणमभावो साहिज्जइ किं व सव्वत्थ?
॥ ९ ॥ जइ ताव पढमपक्खो ता सिद्धं चेव मज्झ साहेसि । नियर्यमि देसकाले मयपिंडे जेण न हु जीवो ॥ १० ॥
एवं सव्वन्नुमाईसुवि भावियव्वं ॥ अह सव्वत्थ निसेहो, एवं तुह पिउपियामहस्सावि । एइ अभावो सुंदर ! अहेउयं
तुज्झ तो जम्मं ॥ ११ ॥ केवलिपच्चक्खेण य जीवाईया घडाइभावव्व। घेप्पंति जेण तम्हा कह हेउ असिद्धया नेव? ॥१२॥
भणियं च—“अणिंदियगुणं जीवं, दुन्नेयं मंसचक्खुसा । सिद्धा पासंति सव्वण्णू, नाणसिद्धा य साहुणो ॥ १ ॥ त्ति,
जं च पलत्तं तुमए, परप्पसिद्धीएँ एयमणुमाणं । इमिणाच्चिय वभिचारो तो दायव्वो न मज्झ तए ॥ १३ ॥

एत्थवि परप्पासिद्धी सा तुज्झ पमाणमप्पमाणं वा ? । जइ ताव पमाणं तो सिद्धा जीवाइयावि तहा ॥ १४ ॥ तथाहि— जीवाईयावि जओ परप्पसिद्धा अओऽणुमाणं व । मन्नसु न हुंति दुन्निवि वीसासो गंठिमुद्दा य ॥ १५ ॥ अह अपमाणं सा तुज्झ हंदि तो कह पमाणमणुमाणं ? । तदभावंमि निसेहो अपमाणो चेव सपन्नो ॥ १६ ॥ एतावा-नेव लोकोऽयं, यावानिन्द्रियगोचरः । प्रतिज्ञैषाऽप्यनेनैव, निरस्तेत्यवगम्यताम् ॥ १७ ॥ एवमाइवयणेहिं निरुत्तरीकओ नाहियवाई, आणत्तो निव्विसओ कओ राइणा, पूइओ समणसंघो, घोसावियं नयरे— जयइ वद्धमाणजिणसासणं, एत्थंतरंमि—घणरवमुहलियगयणो संतावियरायहंससंघाओ । अंधारियदिसिचक्को वासारत्तो समुत्थरिओ ॥ १८ ॥ तओ गोट्ठामाहिलो धरिओ तत्थेव सड्ढेहिं ।

इओ य अज्जरक्खियसूरीहिं थोवावसेसमप्पणो आउयं कलिऊण मेलिओ गच्छो, भणियं च—अम्ह थोवमाउयं ता तुम्हं को सूरी ठवेज्जउ ?, तओ गच्छेण नियसयणपक्खवाएण भणियं—फग्गुरक्खिओ गोट्ठामाहिलो वा, तओ सूरीहिं रागाइविरहिएहिं दुब्बलियपूसमित्तं बहुगुणं मन्नंतेहिं भणियं—भो भो समणा ! एगो निप्फावघडोऽवरो य तेल्लघडो । होइ परो घयघडओ अहोमुहे तत्थ वल्लघडे ॥११॥ सव्वेऽवि णिंति वल्ला इयरंमि उ ठंति अवयवा केई । घयकुंभंमि य

चिट्ठइ सेसंपि विलग्गयं बहुकं ॥ २० ॥ दुब्बलियपूसमित्तं पडुच्च एवं अहंपि संजाओ। सुत्तत्थतदुभएहिं आइमकुंभेण सारिच्छो ॥ २१ ॥ जो फग्गुरक्खियमुणी तं पुण पइ तेल्लकुंभतुल्लोऽहं। गोट्ठामाहिलमंगीकाउं घयकुडयसरिसोत्ति ॥ २२ ॥ सुत्तत्थोभयजुत्तो तो तुज्झं एस होउ आयरिओ। दुब्बलियपूसमित्तो मह वयणेणं महाभागा ! ॥ २३ ॥ तओ गच्छेण होउत्ति पडिवन्ने ठविओ दुब्बलियपूसमित्तो आयरिओ, भणिओ सूरिणा—जहा फग्गुरक्खिओ गोट्ठामाहिलाइणो मए दिट्ठा तहा तएवि दट्ठव्वा, फग्गुरक्खियादओऽवि भणिया—तुब्भेहिवि मम सरिसो अहिओ वा एस नवरि दट्ठव्वो। न य पडिकूलेयव्वं गुणनिहिणो वयणमेयस्स ॥ २४ ॥ एवं दुन्निवि वग्गे, संठावेऊण अणसणं काउं। पंचनमोक्कारपरो, सूरी सग्गंमि संपत्तो ॥ २५ ॥

इओ य वासारत्ताणंतरं गोट्ठामाहिलेणं सावगाणं संबोहणत्थं पढियं गाहाजुयलं—उच्छू वोलंति वई, तुंबीओ जायपुत्तभंडाओ। वसभा जायत्थामा गामा पंथा यऽचिक्खिल्ला ॥ १ ॥ अप्पोदगा य मग्गा वसुहावि य पक्कमट्टिया जाया। अण्णोक्कंता मग्गा साहूणं विहरिउं कालो ॥ २ ॥" त्ति, एवं सोउं भणिओ सड्ढेहिं-एत्थेव निच्चं किन्न परिवसह ?, तेण भणियं—समणाणं सउणाणं भमरकुलाणं च गोउलाणं च। अनियत्ता वसहीओ सारइयाणं च मेहाणं ॥ १ ॥ तओ तेहिं अणु-

मओ चालिओ दसपुराभिमुहं, जणाओ य नाओ अज्जरक्खियसूरिपरलोयगमणवुत्तंतो, कमेण पत्तो दसपुरं, जाणिओ य वल्लकुडयदिट्ठंतेण दुब्बलियपूसमित्तो निवेसिओ सूरिपए, संजायमच्छरो ठिओ पुढो वसहीए, णायवुत्तंतेण सूरिणा पेसिया फग्गुरक्खियपमुहा साहुणो तयाणयणनिमित्तं, किंचि उत्तरं दाऊण तेसिं ठिओ तत्थेव, अण्णेहिवि साहुसावयाइएहिं भण्णमाणोऽवि नागओ वसहीए, ताहे चिंतिऊण सूरिणा (भणियं) पेच्छ कसायमाहप्पं जेहिं एवंविहावि-उत्तमपुरिसा नायजिणवयणसारा एवं जगडिज्जंति, अहवा किमच्छरियं ?, जओ भणियमागमे—उवसामं उवणीया गुणमहया जिणचरित्तसरिसंपि। पडिवायंति कसाया किं पुण सेसे सरागत्थे ? ॥१॥ त्ति, तया य सूरिणो विंज्झपमुहसिस्साणं अट्ठमं कम्मपवायपुव्वं वक्खाणेन्ति, गोट्ठामाहिलो य मच्छराओ सूरिसयासमागंतुमपारन्तो विंज्झस्सऽणुभासंतस्स सयासे उवविसइ, अण्णया य—किंचिवि कम्मं जीवप्पएसबद्धं झडत्ति विहडेइ । कालंतरमप्पत्तंपि सुक्ककुड्डंमि चुण्णो व्व ॥ १ ॥ कालंतरेण विहडइ किंचिवि पुण बद्धपुट्ठमिह कम्मं । कुड्डंमि उल्ललित्ते खित्तो ससिणेहचुण्णो व्व ॥ २ ॥ जीवेण समं एगत्तमागयं खीरनीरनाएण । बहुकाल वेइयव्वं अण्णं तु निकाइयं कम्मं ॥ ३ ॥ एवं परूवयंतं विंझं सुणिऊण माहिलो भणइ । मोक्खाभावो पावइ नणु एवं

जं अण्णोण्णाणुगयं जेण समं तं विजुज्जइ न तम्हा । जह जीवाओं पएसे तहेव सव्वजीवाणं ॥ ४ ॥ जं अण्णोण्णाणुगयं जेण समं तं विजुज्जइ न तम्हा । एवं पुट्ठमबद्धं जीवं कम्मं समन्नेइ ॥ ६ ॥ कम्मंपि तो विंझ ! ॥ ५ ॥ पुट्ठो जहा अबद्धो कंचुइणं कंचुओ समण्णेइ । एवं पुट्ठमबद्धं जीवं कम्मं समन्नेइ ॥ ६ ॥ ताहे विंझो पभणइ ताहे गुरुणा मह एवमेवमक्खायं । पडिभणिओ तो तेणं गुरूवि तुह किं वियाणेइ ? ॥ ७ ॥ ताहे विंझो पभणइ ताहे गुरुणा मह एवमेवमक्खायं । होज्ज इमं ता गंतुं नियगुरुं चेव पुच्छामि ॥ ८ ॥ विणओणएण संकइ सो नियमणंमि मा अन्नहा मए गहियं । होज्ज इमं ता गंतुं नियगुरुं चेव पुच्छामि ॥ ८ ॥ विणओणएण संकइ सो नियमणंमि मा अन्नहा मए गहियं । तो माहिलवुत्तंतो पुट्ठा गुरुणो तेहिवि तहत्ति से कहियं । भणियं च कीस अवगयभावस्सवि तुज्झिमा संका ? ॥ ९ ॥ तो माहिलवुत्तंतो पुट्ठा गुरुणो तेहिवि तहत्ति से कहियं । माहिलवुत्तं मिच्छा जहा तहा विंझ ! निसुणेसु ॥ १० ॥ अण्णोऽण्णाणुगयाणेवि कहिओ सूरीण तेहि तो भणियं । माहिलवुत्तं मिच्छा जहा तहा विंझ ! निसुणेसु ॥ १० ॥ अण्णोऽण्णाणुगयाणेवि कहिओ सूरीण तेहि तो भणियं । जा उ पइण्णा साऽविहु पच्चक्ख- उवायओ जेण खीरनीराणि । जायंति पुढो तम्हा हेउअणेगंतया ताव ॥ ११ ॥ जा उ पइण्णा साऽविहु पच्चक्ख- उवायओ जेण खीरनीराणि । जायंति पुढो तम्हा हेउअणेगंतया ताव ॥ ११ ॥ दिट्ठंतोऽवि न साहणधम्माणुगओ जओ विरोहिणी जओ जीवो । मरणसमयंमि दीसइ आऊकम्मेण मुच्चंतो ॥ १२ ॥ दिट्ठंतोऽवि न साहणधम्माणुगओ जओ विरोहिणी जओ जीवो । मरणसमयंमि दीसइ आऊकम्मेण मुच्चंतो ॥ १२ ॥ जं च पलत्तं जीवो, पुट्ठो कम्मेण कंचुएणव्व । तंपि न कम्मव्व । जीवाउ सप्पएसो भिन्नो आगंतुओ होइ ॥ १३ ॥ जं च पलत्तं जीवो, पुट्ठो कम्मेण कंचुएणव्व । तंपि न कम्मव्व । जीवाउ सप्पएसो भिन्नो आगंतुओ होइ ॥ १३ ॥ सा य न पावइ तम्हि अभावओ तन्निमित्तकम्मस्स । सिद्धस्स व न जुत्तं जम्हा वेइज्जइ वेयणा मज्झे ॥ १४ ॥ सा य न पावइ तम्हि अभावओ तन्निमित्तकम्मस्स । सिद्धस्स व न जुत्तं जम्हा वेइज्जइ वेयणा मज्झे ॥ १४ ॥ इय एवमाइ दोसे सुणिउं विंझो य माहिलं भणइ । अवियारिय- तो पयडो समागओ अणुभवविरोहो ॥ १५ ॥ इय एवमाइ दोसे सुणिउं विंझो य माहिलं भणइ । अवियारिय-

रमणीओ तुह पक्खो सव्वहा एसो ॥ १६ ॥ तो तुण्हिक्को थक्को चिंतंतो ताव हुज्ज उ समग्गं । पुव्वं नवमं पच्छा खोडीहामो पुणोवि इमं ॥ १७ ॥ अन्नया नवमपुव्वे साहूण पच्चक्खाणाहिगारे—पाणाइवायं पच्चक्खामि जावज्जीवाए इच्चाइ सोऊण गोट्ठामाहिलो भणइ-पच्चक्खाणं सेयं अप्परिमाणेण होइ कायव्वं । जेसिं तु परीमाणं तं दुट्ठं आससा होइ ॥ १८ ॥ एवं पण्णविन्तो य विंझेण भणिओ—न जुत्तमेयं जं तुमं भणसि, तओ तेण जं नवमपुव्वस्स अवसेसं तं सम्मत्तंति चिंतिऊण भणिओ विंझो—किं ताव तुमं भणसि ?, जो तुज्झ वक्खाणेइ पूसमित्तो सो चेव भणउ, एवं वोत्तुं उट्ठिओ तट्ठाणाओ, गओ आयरियसयासं, भणियं च तेण—जह अज्जरक्खिएहिं वक्खायं तह न किं परूवेसि ?। सुयमयमत्तो होउं मा सुत्तासायणं कुणसु ॥ १९ ॥ भणिओ य नियपक्खो सूरिसयासंमि सूरिणाऽवि तओ । भणिओ न जुत्तिजुत्तो तुह पक्खो जह तहा सुणसु ॥ २० ॥ जं ताव तए भणियं जावज्जीवंति सप्परीमाणं । पच्चक्खाणमजुत्तं आसंसादोसओ तं न ॥ २१ ॥ कयपच्चक्खाणाणं नासंसा तत्थ किं तु देवत्ते । मा होज्जा वयभंगो मुणीण कालावही तेणं ॥ २२ ॥ अप्परिमाणे उ कए हवंति वयभंगमाइया दोसा । ता अभिणिवेसमहुणा मुंचसु पडिवज्ज मह वयणं ॥ २३ ॥ एवं भणिओ मन्नइ न जाव ता अन्नगच्छथेराति। पुट्ठा तत्तियमेत्तं वयंति तो भणइ

सो रुद्दो ॥ २४ ॥ किं तुब्भे भो ! जाणह सव्वेऽविहु जेण भयवया एवं । तित्थयरेण पणीयं भणंति तो तेऽवि तस्समुहं ॥ २५ ॥ मा आसायसु माहिल ! तित्थयरं तहवि जाव नो ठाइ । ताहे संघेण कओ काउस्सग्गो समग्गेणं ॥ २६ ॥ आसणकंपुप्पिच्छा, समागया देवया भणइ संघं । संदिसह ।किं करेमी ? संघो तो देवयं भणइ ॥ २७ ॥ वच्चसु महाविदेहं, तित्थयरं पुच्छिऊण एसु दुयं । किं सम्मवाइ संघो दुब्बलिया पूसमित्ताई ? ॥ २८ ॥ किं वा गोट्ठामहिलो सा जंपइ देहऽणुग्गहं मज्झ । काउस्सग्गं गमणापडिघायत्थं तओ संघो ॥२९॥ तह चेव ठिओ सव्वो काउस्सग्गेण सा उ तित्थयरं । संपुच्छिऊण पुणरवि समागया संघपासंमि ॥ ३० ॥ बेइ जह सम्मवाई संघो इयरो य अलियवाई य । भरहक्खेत्ते जम्हा सत्तमओ निण्हवो एस ॥ ३१ ॥ तो जंपइ सो रुट्ठो कत्तो कडपूयणाएँ एयाए । तित्थयरपायमूलं गंतुं सामत्थमत्थि अहो ? ॥ ३२ ॥ ताहे संघेण कओ सो बज्झो एवमभिनिवेसेणं । मिच्छत्तमेस पत्तो अपडिक्कंतो य कालगओ ॥ ३३ ॥ एवं गोट्ठामाहिलचरियं संखेवओ समक्खायं । सपसंगं वित्थरओ आवस्सयविवरणा नेयं ॥ ३४ ॥ एवं च दर्शितानि जमालिप्रभृतीनि "मइभेएण जमाली" त्यादिगाथोद्दिष्टान्युदाहरणानि, तत्प्रदर्शने च व्याख्याता प्रपञ्चेन तृतीयद्वार-
५ गता "मइभेया पुव्वोग्गहे" त्यादिगाथा ॥ अधुना चतुर्थेन दोषद्वारेणाभिधित्सुराह—

मिच्छत्तपरिणओ खलु, नारयतिरिएसु भमइ इह जीवो ।
जह नंदो मणियारो तिविक्कमो जह य भट्टो वा ॥ ६ ॥

मिथ्यात्वात्मना परिणतो मिथ्यात्वपरिणतः, खलुशब्दोऽवधारणार्थः, मिथ्यात्वपरिणत एव, किं ?—नारकतिर्यक्षु भ्रमति इह जीवः, नारकाश्च तिर्यञ्चश्च नारकतिर्यञ्चस्तेषु ' भ्रमति ' पर्यटति ' इह ' लोके ' जीवः ' आत्मा, न सम्यक्त्वपरिणतोऽपि, तस्य तदायुर्बन्धानुपपत्तेः, उक्तञ्च—" सम्मद्दिट्ठी जीवो विमाणवज्जं न बंधई आउं । जइवि न सम्मत्तजढो, अहव न बद्धाउओ पुव्विं ॥ १ ॥ " ति, धर्मदासगणिनाऽप्युक्तम्—" सम्मत्तंमि उ लद्धे, ठइयाइं नरयतिरियदाराइं । दिव्वाणि माणुसाणि य मुक्खसुहाइं सहीणाइं ॥ १ ॥ " ति, मिथ्यात्वपरिणत इत्यनेन च विशेषणेनैकान्ताविचलितैकस्वरूपस्यात्मनो निषेधमाह, तस्य तथापरिणामासंभवात्, एकस्वरूपत्वे चात्मनो बन्धमोक्षाद्यभावात् । नारकतिर्यक्षु भ्रमतीत्यनेनापि निष्क्रियसर्वगतात्मवादिमतं निराचष्टे, तथाभूतस्य नारकादिभ्रमणानुपपत्तेः स्वर्गनारकादिसाधकबाधकानुष्ठानवैयर्थ्याच्च, अत्र च बहु वाच्यं तत्तु ग्रन्थगौरवभयात्परिहृतमिति । प्रकान्तार्थसमर्थनार्थमेव दृष्टान्तद्वयमाह-यथा नन्दो मणिकारः त्रिविक्रमो यथा भट्टो भ्रान्तवान्, तत्राद्यः सादेर्द्वितीयस्त्वनादेर्मिथ्यात्वप-

रिणामस्य प्रतिपादनार्थो दृष्टान्तः, वाशब्दस्तदन्यैवंविधदृष्टान्तसूचनार्थो द्रष्टव्यः । ननु च सम्यक्त्वादिदोषद्वारेषु तद्विपक्षे दोषानभिधास्यते, इह तु किमर्थं स्वरूप एवोक्तः ?, सत्यं, सम्यक्त्वादीनां स्वरूपतो गुणरूपत्वात् तद्विपक्षे दोषाभिधानं, मिथ्यात्वस्य तु तद्विपर्ययत्वात्स्वरूपमेवेति न दोषः, अत एव सम्यक्त्वदोषद्वारे तद्विपक्षे मिथ्यात्वे दोषं " सम्मत्तपरिब्भट्ठो जीवो दुक्खाण भायणं होइ " इत्यादिना वक्ष्यति, कथितः सप्रपञ्चो गाथाऽक्षरार्थः, भावार्थस्तु कथानकाभ्यामवसेयः, तत्र च नन्दमणिकारकथानकं सम्यक्त्वदोषद्वारे वक्ष्यामः, त्रिविक्रमभट्टकथानकं त्वभिधीयते–

असङ्ख्यवलयाकारद्वीपसागरवेष्टितः । राजतस्थालसंस्थानो, लक्षयोजनविस्तृतः ॥ १ ॥ अनन्तवर्षस्थितिकः, समवर्षाश्रयोऽपि सन् । मेरुमण्डितमध्योऽपि, नमेरुसहितः क्वचित् ॥ २ ॥ हिमवत्प्रमुखैर्युक्तः, षड्भिर्वर्षधराद्रिभिः । गङ्गादिसन्नदीरम्यो, जम्बूद्वीपोऽस्ति विश्रुतः ॥ ३ ॥ मेरोर्दक्षिणतस्तत्र, षट्खण्डप्रविराजितम् । विद्यते भारतक्षेत्रं, शशाङ्कशकलाकृति ॥ ४ ॥ विहारभवनारामवापीकूपादिशोभितम् । तस्य मध्यमखण्डेऽभूत्, पुरं क्षितिप्रतिष्ठितम् ॥ ५ ॥ प्रशास्ति तत्तदा नीत्या, वैरिवारणकेसरी । प्रतापाक्रान्तभूपीठो, जितशत्रुर्महीपतिः ॥ ६ ॥ शान्तिकर्माभिचारादिप्रयो-

जनपटुरिथरः । आन्वीक्षिक्यादिविद्यासु, परं प्रावीण्यमागतः ॥ ७ ॥ कुलक्रमसमायातवेदधर्मोपदेशकः । त्रिविक्रमाभिधो भट्टः, आसीत्तस्य पुरोहितः ॥८॥ युग्मम् ॥ तेनान्यदा स्ववित्तस्य, साफल्यमभिवाञ्छता । नृपत्यनुज्ञयाऽकारि, धर्मबुद्ध्या सरोवरम् ॥ ९ ॥ सत्त्वाश्रयमतिस्वच्छं, गम्भीरं लोकनन्दनम् । सत्पुरुषमनस्तुल्यं, जलं यत्रावभासते ॥ १० ॥ पाल्यां देवकुलं तस्य, कारितं चातिसुन्दरम् । तस्यैव सरलो (सो) लक्ष्म्या, विनोदायेव मन्दिरम् ॥ ११ ॥ परिवेषेण चारामो, रम्यस्तस्य विधापितः । बकुलाशोकपुन्नागनागचम्पकमण्डितः ॥ १२ ॥ प्रतिवर्षं च तेनात्र, मोहान्धेन प्रवर्त्तितः । स यज्ञो यत्र बस्तानां, विनाशः प्रविधीयते ॥ १३ ॥ एवं व्रजति काले च, तत्र मूर्छापरायणः । अन्यदाऽऽर्त्तवशो मृत्वा, छाग एवोदपादि सः ॥ १४ ॥ भवितव्यनियोगेन, तत्पुत्रैरेव सोऽन्यदा । स्वीकृतो यागकर्मार्थं, मल्यदानात्कुतोऽप्यसौ ॥ १५ ॥ नीतः स्वमन्दिरं तत्र, बान्धवादीन् प्रपश्यतः । जातिस्मरणमुत्पन्नं, तस्येहापोहवर्त्तिनः ॥ १६ ॥ सरोऽभिमुखमन्येद्युर्नीयमानः क्रतूत्सवे । बिब्बीतिकर्त्तुमारब्धो, न याति पदमप्यसौ ॥ १७ ॥ अत्रान्तरे तपस्व्येको, ज्ञानातिशयसंयुतः । तं रटन्तं समालोक्य, कारुण्यादिदमब्रवीत् ॥ १८ ॥ स्वयं वृक्षान् समारोप्य, खातयित्वा सरः स्वयम् । स्वयमुपयाचितासो (?), बिब्बीति किमु वाससे ? ॥ १९ ॥

श्रुत्वा तद्वचनं साधोः, परिभाव्य स्वचेतसि । स्वदोषं मन्यमानोऽसौ, तूष्णीभावमुपेयिवान् ॥ २० ॥ ततः पुत्रादयस्तस्य,
कौतुकाकुलमानसाः । साधुं वदन्ति वः पाठादजः किं मौनमाश्रितः ? ॥ २१ ॥ साधुनाऽवादि भो भद्राः !, सैष भट्टस्त्रि-
विक्रमः । यत्प्रवर्त्तितयज्ञेऽसौ, हन्तुं युष्माभिरिष्यते ॥ २२ ॥ तैरूचे प्रत्ययः कोऽत्र?, सोऽब्रवीत् मुच्यतामसौ । सम्पा-
दयति येनायं, प्रतीतिं स्वयमेव वः ॥ २३ ॥ तथाकृते ततस्तैस्तु, यदनेन धृतं पुरा । निधानं स्वसुतैः सार्द्धं, गत्वा
तद्देशमाश्रितः ॥ २४ ॥ जातिस्मरणतो ज्ञात्वा, गेहमध्ये व्यवस्थितम् । तत्तेषां दर्शयामास, खुराग्रैर्विलिखन् महीम्
॥ २५ ॥ संजातप्रत्ययास्ते च, गृहीत्वा तं समाययुः । उद्यानवर्तिनः साधोः, सकाशं शान्तचेतसः ॥ २६ ॥ प्रणि-
पत्य ततः प्रोचुर्भगवन्नेष नः पिता । आसीध्धर्मपरो नित्यं, वेदोदितविधानतः ॥ २७ ॥ तथाहि–तडागः खानितोऽनेन,
यागाश्च विविधाः कृताः । तदयं किमजो जातोऽकृतकर्मा यथा नरः ? ॥ २८ ॥ इत्येवं तैरसौ पृष्टः, प्रोवाच मुनि-
पुङ्गवः । अज्ञानफलमेतेन, दुरन्तमुपभुज्यते ॥ २९ ॥ यदेव कुरुते जन्तुः, किञ्चित्कर्म शुभाशुभम् । तस्यैव फलमा-
प्नोति, नाकृतं तूपतिष्ठते ॥ ३० ॥ तथाहि–अधर्मो धर्मबुद्ध्या यः, पूर्वमज्ञानतः कृतः । तस्यार्त्तध्यानयुक्तस्य, फलमेतदुप-
स्थितम् ॥ ३१ ॥ गम्यागम्यं न जानाति, कृत्याकृत्यं न मन्यते । हिताहितं च नो वेत्ति, यस्मादज्ञानमोहितः ॥ ३२ ॥ उक्तञ्च-

"अज्ञानं खलु कष्टं क्रोधादिभ्योऽपि सर्वपापेभ्यः।अर्थं हितमहितं वा न वेत्ति येनावृतो लोकः ॥३३॥" संभावितो गुणो यस्तु, तडागादिविधापने । नाशहेतुत्वतोऽनन्तसत्त्वानां सोऽपि नोचितः ॥ ३४ ॥ पशुमेधादियागाश्च, यैर्धर्माय प्रवर्त्तिताः । तेऽपि तत्त्वपथोत्तीर्णाः, परलोकविबाधकाः ॥३५॥ उक्तं च कृष्णद्वैपायनेन—" ध्रुवं प्राणिवधो यज्ञे, नास्ति यज्ञस्त्वहिंसकः । तस्मात् सत्यमहिंसा च, सदा यज्ञो युधिष्ठिर ! ॥३६॥ दया दानं तपो होमः, सत्ययूपो गुणाः पशुः । ब्रह्मचर्यमलोभाभिरेष यज्ञः सनातनः॥ ३७ ॥ पशूंश्च ये तु हिंसन्ति, लुब्धाः क्रव्येषु मानवाः । ते मृत्वा नरकं यान्ति, नृशंसाः पापकर्मिणः ॥ ३८ ॥ " इत्यादि, एवमाकर्ण्य ते सर्वे, मुनेर्वाचो मनोहराः । संजातभववैराग्याः, श्रावकत्वं प्रपेदिरे ॥ ३९ ॥ अजः साधुसमीपे च, सद्विवेकमुपागतः । प्रपद्य देशविरतिं, गृहीत्वाऽनशनं तथा ॥ ४० ॥ समः समस्तसत्त्वेषु, नमस्कारपरायणः। मृत्वा भावस्व ( स्वर ) रूपोऽसौ, देवः समुदपद्यत ॥४१॥ मिथ्यात्वं दुर्गतेर्हेतुस्त्रिविक्रमकथानतः ( कात् ) । एवं विज्ञाय भो भव्याः!, युष्माभिस्त्यज्यतामदः ॥४२॥ श्रुतदेव्याः प्रसादेन, दोषद्वारे निरूपितम् । मिथ्यात्वमधुना तस्य, गुणद्वारं क्रमागतम् ॥ ४३ ॥ तदाह—

**मिच्छत्तस्स गुणोऽयं, अणभिनिवेसेण लहइ संमत्तं । जह इंदनागमुणिणा गोयमपडिबोहिएणंति ॥ ७॥**

व्याख्या—मिथ्यात्वं नाम विपरीतबोधस्वरूपम्, उक्तञ्च—" मिथ्यात्वस्य ह्युदये जीवो विपरीतदर्शनो भवति। न च तस्मै सद्धर्मः स्वदते पित्तोदये घृतवत् ॥ १ ॥ " तस्य गुणोऽयम्—एषोऽनभिनिवेशरूपो, वर्त्तत इति शेषः, कुतः ? इति चेदाह—' **अनभिनिवेशेन लभते सम्यक्त्वं** ' यत इत्यध्याहारात्, यस्मादभिनिवेशः—कदाग्रहस्तस्याभावोऽनभिनिवेशस्तेन हेतुना करणेन वा 'लभते' प्राप्नोति, अनभिनिविष्टमिथ्यादृष्टिरिति शेषः, किं ?—'सम्यक्त्वं' यथाऽवस्थितार्थप्रतिपत्तिरूपं, सम्भवापेक्षया चैतदुच्यते, न च नियमः, यदुक्तम्—"विवरीयसद्दहाणे मिच्छा भावा न सन्ति केइ गुणा। अणभिनिवेसाओ कयावि होइ सम्मत्तहेऊवि ॥ १ ॥ " त्ति। ननु मिथ्यात्वस्य सर्वघातिप्रकृतिमध्यपाठितत्वात्कथं गुणरूपता ?, सत्यं, गुणहेतुत्वात्, गुणहेतुत्वं च तस्यानेकभेदत्वेन विशुद्धितारतम्यस्य घटमानकत्वात्, " जात्तियाइं संकिलेसट्ठाणाइं तत्तियाइं विसोहिट्ठाणाइं ' तिवचनाद्, व्यवहारनयापेक्षं चेदं, निश्चयतः सम्यग्दृष्टिरेव सम्यक्त्वं लभत इत्युक्तेः, प्रकृतानुरूपनिदर्शनप्रतिपिपादयिषयाऽऽह—' **यथेन्द्रनागमुनिना गौतमप्रतिबोधितेने** ' ति. यथेत्युदाहरणोपदर्शनार्थः, ' इन्द्रनागमुनिना' इन्द्रनागश्चासौ बालतपस्वितया प्रसिद्धत्वान्मुनिश्च स तथा तेन, किंविधेन ?—गौतमः—चरमतीर्थकृतः प्रथमगणधरस्तेन प्रतिबोधितः—सन्मार्गं लम्भितस्तेन, लब्धमिति शेषः, ' इति-

शब्दः ' एवंप्रकारान्यज्ञातसूचनार्थ इति गाथाऽक्षरार्थः ॥ भावार्थस्तु कथानकगम्यः, तच्चेदम्—

जंबुदीवे दीवे, भारहखेत्तस्स मज्झिमे खंडे । अत्थि पुराणपसिद्धं नामेण वसन्तपुरनगरं ॥ १ ॥ उत्तुङ्ग-देवमन्दिरपायारट्टालहट्टसोहाए । दिट्ठबहुदेसपहियाण कुणइ जं मणचमक्कारं ॥ २ ॥ सयउच्छवंमि जंमि उ वज्जिरआउज्जगुहिरसद्देणं । मंगलरवमुहलेणं सुव्वइ न जणेण जणसद्दो ॥ ३ ॥ निवसइ जत्थ य लोओ दढप्पइण्णो सुसीलसंपुण्णो । पुव्वाभासी दक्खो कयण्णुओ धम्मकज्जपरो ॥ ४ ॥ एक्को च्चिय पर दोसो तंमि पुरे सयलपुरगुणड्ढंमि । जं दीसइ मुणिलोओऽवि निच्चपरलोयतत्तिपरो ॥ ५ ॥ तं पालइ महिवालो, जियसत्तू सत्तुसेणखयकालो । अज्जतरुआलवालो, आवज्जियसयलगुणजालो ॥ ६ ॥ तत्थ य एक्को सेट्ठी विसिट्ठवेसो कलासु पत्तट्ठो । इड्ढिगुणगोत्तजिट्ठो विहलुद्धरणंमि सुपसिद्धो ॥ ७ ॥ भवियव्वयानिओगेण तस्स गेहंपि अन्नया जाओ । मारीदोसो तह जह मरइ समग्गोऽवि गिहलोओ ॥ ८ ॥ तंमि मरंतंमि तहा गिहवइपुत्ताइएसु खीणेसु । सो कोऽवि नत्थि सज्जो मयाइं बारेऽवि जो खिवइ ॥ ९ ॥ लोएण य तह दट्ठुं मारीऍ उवद्दवं गिहे तंमि । संचरणभएणं कंटिआहिं आऊरियं दारं ॥ १० ॥ तंमि य एक्को बालो, उव्वरिओ इंदनागनामोत्ति । आउय

भाया अज्जसमिओ नाम पुव्वं पव्वइओ सीहगिरिसयासे, सा अन्नया आवन्नसत्ता संपन्ना, ताहे धणगिरी भणइ-एस ते गब्भो बिइज्जओ होही, अहं पव्वयामित्ति, तओ तीए अणुन्नाओ सीहगिरिसयासे गंतुं पव्वइओ, इमीएवि नवण्हं मासाणं साइरेगाणं दारओ जाओ, तत्थ य महिलाहिं आगयाहिं भण्णइ—जइ से पिया न पव्वइओ होंतो तो लट्ठं होंतं, सो सण्णी जाणइ—जहा मम पिया पव्वइओ, तस्स एवं चिंतंतस्स जाईसरणं समुप्पण्णं, ताहे रत्तिं दिवा य रोवइ जेण निव्विज्जंती अंबा ममं मुयइ, तओ सुहं पव्वयामि, एवं च छम्मासा वोलीणा, अण्णया आयरिया समोसढा, ताहे अज्जसमिओ धणागिरी य आयरियं आपुच्छंति जहा जइ तुब्भे संदिसह तो सन्नायगाणि पेच्छामोत्ति, एत्थंतरंमि सउणेण वाहितं, आयरिएहिं भणियं—महालाभो तुम्हं, अज्ज जं सचित्तं अचित्तं वा लहेह तं सव्वं लएह, इच्छंति भणिऊण गया ते सन्नायिगेहं, उवसग्गिज्जिउमाढत्ता, एत्थंतरंमि अण्णमहिलाहिं भणिया सुनंदा—हला ! एयं दारगं एयाण समप्पेसु, तो कहिं नेहिंति ?, पच्छा ताए भणिओ [ग्रन्थाग्रम्—२०००] धणगिरी— मए एवइयं कालं संगोविओ एत्ताहे तुमं संगोवाहि, पच्छा तेण भणियं—मा ते पच्छायावो भविस्सइ, ताहे सक्खि काऊण गहिओ छम्मासिओ चोलपट्टएण पत्ताबंधिउं, न रोवइ, जाणइ सन्नी, ताहे तेहिं आयरिएहिं

भाणं भरियंति हत्थो पसारिओ, दिन्नो, हत्थे भूमिं पत्ते भणति—अज्जो णज्जइ वइरंति, जाव पेच्छंति देवकुमारोवमं दारगंति, भणइ य—सारक्खह एयं, पवयणस्स आहारो भविस्सइ एस, तत्थ से वइरो चेव नामं कयं, ताहे संजतीण दिन्नो, ताहिं सेज्जायरकुले समाप्पिओ, सेज्जायरगाणि जाहे अप्पणगाणि चेडरूवाणि ण्हाणेंति मंडेंति वा पीहगं वा देंति ताहे तस्स पुव्विं, जाहे उच्चाराती आयरइ ताहे आगारं दंसेति कुव्वति वा, एवं संवड्ढइ, फासुयपडोयारो तेसिं इट्ठो, साहूवि बाहिं विहरंति, ताहे सा नंदा पमग्गिया, ताओ य निक्खेवगोत्ति न देंति, सा आगंतूण थणं देइ, एवं सो जाव तिवरिसो जाओ, अन्नया साहू विहरंता आगया, तत्थ ववहारो राउले जाओ, सो भणति—मम एयाए दिण्णओ, नगरं सुनंदाए पक्खियं, ताहे बहूणि खेल्लणगाणि गहियाणि, रण्णो पासे ववहारच्छेदो, तत्थ पुव्वहुत्तो राया दाहिणतो संघो णंदा ससयणपरियणा वामपासे णरव-इस्स, तत्थ राया भणति—मम कएण तुब्भे जओ चेडो जाति तस्स भवतु, पडिस्सुयं, को पढमं वाहरउ ?, 'पुरिसादीयो धम्मो'त्ति पुरिसो वाहरउ, ततो नगरजणो आह—एएसिं संवयितो माया सद्दावेउ, अविय—माया दुक्करकारिया, पुणोऽवि पेलवपवत्ता, तम्हा एसा चेव वाहरउ, ताहे सा आसा हत्थी रहवसभे गहिय मणिकण-

वात्सल्ये वज्रस्वामी.

गविविहचित्तेहिं बालभावलोभावएहिं पासधरिएहिं भणइ—एहि वइरसामी ! एहि, ताहे पलोइंतो अच्छइ, जाणइ—जइ संघं अवमन्नामि दीहसंसारिओ भविस्सामि, अविय—एसावि पव्वइस्सइ, एवं तिन्नि वारा सद्दावितो न एइ, ताहे से पिया भणति—जइ सुकयव्ववसाओ धम्मज्झयभूसियं इमं वइर ! । गेण्ह लहुं रयहरणं कम्मरयपमज्जणं धीर ! ॥ १ ॥ ताहेऽणेण तुरियं आगंतूण गहियं, लोगेण जयइ धम्मोत्ति उक्कुट्ठी सीहनाओ कओ, ताहे से माया चिंतेइ—मम माया भत्ता पुत्तो य पव्वइओ, अहं किं अच्छामि ?, एवं साऽवि पव्वइया, सो वइरसामी पव्वाविऊण धणगिरिणा संजईणं चेव सयासे मुक्को, तेण तासिं पासे एक्कारस अंगाणि सुयाणि पढंतीणं, ताणि से उवगयाणि, पयाणुसारी सो भगवं, ताहे अट्ठवारिसओ संजइपडिस्सयाओ निक्कालिओ आयरिअसयासे अच्छइ, आयरिया उज्जेणिं गया, तत्थ वासं पडइ अहोधारं, से य पुव्वसंगइया जंभगा तेणंतेण वोलेंता तं पेच्छंति, ताहे ते परिक्खानिमित्तं उइण्णा वाणियरूवेणं, तत्थ बइल्ले उल्लादित्ता उवक्खडेंति, सिद्धे निमंतिंति, ताहे पट्ठिओ जाव फुसियमत्थि ताहे पडिनियत्तो, ताहे तंपि ठियं, पुणो सद्दावेंति, ताहे वइरो गंतूण उवउत्तो दव्वओ पुस्सफलादि खेत्तओ उज्जेणी कालओ पाउसो भावओ धरणिछिवणणयणनिमेसादिरहिया पहट्ठतुट्ठा य, ताहे देवत्ति काऊण

णेच्छइ, देवा तुट्ठा भणंति–तुमं दट्ठुमागया, पच्छा वेउव्वियं विज्जं देंति, पुणरवि अन्नया जेट्ठमासे सन्नाभूमिं गयं घयपुण्णेहिं निमंतेन्ति, तत्थवि दव्वादिउवओगो, नेच्छितं, तत्थ से णहगामिणी विज्जा दिन्ना, एवं सो विहरइ, जाणि य ताणि पयाणुसारिलद्धीए गहिआणि एक्कारस अंगाणि ताणि से संजयमज्झे थिरयराणि जायाणि, तत्थ जो अज्झाइ पुव्वगयं तंपिऽणेण सव्वं गहियं, जाहे वुच्चति पढाहि ततो सो एंतगंपि कुट्टेंतो अच्छइ अण्णं सुणेंतो, अण्णया आयरिया मज्झण्हे साहूसु भिक्खं निग्गतेसु सन्नाभूमिं निग्गया, वयरसामीवि पडिस्सयवालो, सो तेसिं साहूणं विंटियाओ मंडलीए रएत्ता मज्झे अप्पणा ठाउं वायणं देति, ताहे परिवाडीए एक्कारसवि अंगाणि वाएति पुव्वगयं च, जाव आयरिया आगया चिंतेंति-लहु साहू आगया, सुणंति सद्दं मेघोघरसियमिव, बहिया सुणेंता अच्छंति, नायं जहा वइरोत्ति, पच्छा ओसरिऊण सद्दपडियं निसीहियं करेंति, मा से संका भविस्सइ, ताहे तेण तुरियं विंटियाओ सट्ठाणे ठवियाओ, निग्गंतूण दंडयं गेण्हइ, पाए पमज्जति, ताहे आयरिया चिंतेंति–मा णं साहू परिहविस्संति, ता जाणावेमि, ताहे रत्तिं आपुच्छइ–अमुगं गामं वच्चामि, तत्थ दो वा तिन्नि वा दिवसे अच्छिस्सामि, तत्थ जोगपडिवन्ना भणंति–अम्हं को वायणायरिओ ?, आयरिया भणंति–वइरात्ति, विणीया, तहत्ति पडिसुयं, आयरिया चेव जाणंति, भणियं च–"सीहगिरिसुसीसाणं भद्दं

वात्सल्ये वज्रस्वामी.

गुरुवयण सद्दहंताणं । वइरो किर दाही वायणत्ति न विकोवियं वयणं ॥ १ ॥ (उप०माला) ते गया, साहूवि पए पडिलेहित्ता वसहिकालनिवेयणादि वइरस्स करेंति, निसेज्जा य से रइया, सो तत्थ विनिविट्ठो, तेऽवि जहा आयरियस्स तहा विणयं पउंजंति, ताहे सो तेसिं करकरस्स सव्वेसिं अणुपरिवाडीए आलावए देइ, जेऽवि मंदमेहावी तेऽवि सिग्घं पढेउमारद्धा, ततो ते विम्हिया, जोऽवि एइ आलावगो पुव्वपढिओ तंपि विन्नासणत्थं पुच्छंति, सोऽवि सव्वं आइक्खइ, ताहे ते तुट्ठा भणंति–जइ आयरिया कइवयाणि दियहाणि अच्छेज्ज तो एस सुयक्खंधो लहु समप्पेज्ज, जं आयरियसगासे चिरेण परिवाडीए गेण्हंति तं इमो एक्काए पोरुसीए सारेइ, एवं सो तेसिं बहुमओ जाओ, आयरियावि जाणाविओत्तिकाऊण आगया, अवसेसं च वरं अज्झाविज्जउत्ति, पुच्छंति य–सरिओ सज्झाओ ?, ते भणंति–सरिओ, एस चेव अम्ह वायणायरिओ भवतु, आयरिया भणंति–होहिई मा तुब्भे परिभवेस्सह अतो जाणावणानिमित्तं अहं गओ, न उण एस कप्पो, जओ एतेण सुयं कण्णाहेडएण गहियं, अओ एयस्स उस्सारकप्पो करेयव्वो, सो सिग्घमुस्सारेइ, बितियपोरसीए अत्थं कहेइ, तदुभयजोगे कप्पोत्तिकाऊणं, जे य अत्था आयरियस्सऽवि संकिया तेऽवि तेण उग्घाडिया, जावइयं दिट्ठिवायं जाणंति तत्तिओ गहिओ, ते

विहरंता दसपुरं गया, उज्जेणीए भद्दगुत्ता णामायरिया थेरकप्पट्ठिया, तेसिं दिट्ठिवाओ अत्थि, संघाडओ से दिण्णो, गतो तस्स सगासं, भद्दगुत्ता य थेरा सुविणगं पासंति, जहा किर मम पडिग्गहओ खीरभरिओ आगंतुगेण आवीओ समासासिओ य, पभाए साहूणं साहेइ, ते अन्नमन्नाणि वागरेंति, गुरू भणंति—ण याणह तुब्भे, अज्ज मम पाडिच्छओ एहिइ, सो सव्वं सुत्तत्थं घेच्छिहिति, भगवंपि बाहिरियाए वुच्छे ताहे आगओ, दिट्ठो सुयपुव्वो एस सो वइरो, तुट्ठेहिं अवगूहिओ, ताहे तस्स सगासे दस पुव्वाणि पढियाणि, तो अणुण्णानिमित्तं जहिं उद्दिट्ठो तहिं चेव अणुजाणियव्वोत्ति दसपुरमागया, तत्थ अणुण्णा आरद्धा ताव नवरं तेहिं जंभगेहिं अणुण्णा उवट्ठविया, दिव्वाणि पुप्फचुन्नाणि य से उवणीयाणित्ति, तया य सीहगिरी वइरस्स गणं दाऊण भत्तं पच्चक्खाइउं देवलोगं गया, वइरसामीवि पंचहिं अणगारसएहिं संपरिवुडो विहरइ, जत्थ २ वच्चइ तत्थ २ उरालवन्नकित्तिसद्दा परिभमंति—अहो भगवंति, एवं भगवं भवियजणविबोहणं करेंतो विहरइ। इओ य-पाडलिपुत्ते णगरे धणो सेट्ठी, तस्स धूया अतीव रूववती, तस्स य जाणसालाए साहुणीओ ठियाओ, ताओ पुण वइरस्स गुणसंथवं करेंति, सब्भावेण य लोगो कामियकामियओ, सेट्ठिधूया चिंतेति—जइ सो मम पती होज्ज तोऽहं भोगे भुंजिस्सं, इयरहा अलं भोगेहिं, वरगा एंति, सा पडिसेहावेइ, ताहे

साहेंति पव्वइयाओ-सो न परिणेइ, सा भणइ-जइ न परिणेइ अहंपि पव्वज्जं गेण्हिस्सं, भगवंपि विहरंतो पाडलिपुत्तमागओ, तत्थ से राया सपरियणो अब्भोगइयाए निग्गओ, ते पव्वइयगा फड्डगफड्डगेहिं एंति, तत्थ बहवे उरालसरीरा, राया पुच्छइ-इमो भगवं वइरसामी ?, ते भणंति-न हवइ, इमो ?, तस्स सीसो, जाव अपच्छिमं वंदं, तत्थ पविरलसाहुसहितो दिट्ठो राइणा, वंदिओ, ताहे उज्जाणे ठिओ, धम्मो यऽणेण कहिओ, खीरासवलद्धी भयवं, राया हयहियओ कओ, अंतेउरे साहइ, ताओ भणंति-अम्हेवि वच्चामो, सव्वं अंतेउरं निग्गयं, सा य सेट्ठिधूया लोगस्स पासे सुणेत्ता किह पेच्छज्जामित्ति चिंतंती अच्छति, बितियदिवसे पिया विन्नविओ-तस्स देहि, अह णवि अप्पाणं विवादेमि, ताहे सव्वालंकारविभूसियसरीरा कया, अणेगाहिं धणकोडीहिं सहिया णीणिया, धम्मो कहिओ, भगवं खीरासवलद्धीओ, लोओ भणति-अहो ! सुसरो भगवं सव्वगुणसंपन्नो, णवरि रूवविहूणो, जइ रूवं होंतं सव्वगुणसंपया होन्ता, भगवं तेसिं मणोगयं नाउं तत्थ सयसहस्सपत्तं पउमं विउव्वति, तस्स उवरि निविट्ठो रूवं विउव्वति अतीव सोमं, जारिसं परं देवाणं, लोगो आउट्टो भणति-एयं एयस्स साहावियं, मा पत्थणिज्जो होहामित्ति तो विरूवेण अच्छइ, सातिसओत्ति,

रायावि भणति–अहो भगवओ एयमवि अत्थि, ताहे अणगारगुणे वन्नेइ, पभूयसंखेज्जदीवसमुद्दे विउव्वेत्ता०, ताहे तेण रूवेण धम्मं कहेति । ताहे सेट्ठिणा निमंतिओ भगवं विसए निंदइ, जइ ममं इच्छइ तो पव्वयउ, ताहे पव्वतिया, तेण य भगवया पयाणुसारित्तणओ पम्हुट्ठा महापरिण्णाओ अज्झयणाओ आगासगामिणी विज्जा उद्धरिया, तीए य गयणलद्धिसंपन्नो भगवं जाओ. अण्णया य एवं गुणविज्जाजुत्तो विहरंतो पुव्वदेसाओ उत्तरावहं गओ, तत्थ दुब्भिक्खं जायं, पंथावि वोच्छिण्णा, ताहे संघो उवागओ, नित्थारेहित्ति, ताहे पडविज्जाए संघो चडिओ, तत्थ य सेज्जायरो चारीए गओ एइ, ते य उप्पतिते पासइ, ताहे सो असिएण सिहं छिंदित्ता भणति–अहं भगवं ! तुम्ह साहम्मिओ, ताहे सोवि लइओ इमं सुत्तं संरतेणं–" साहम्मियवच्छल्लंमि उज्जया उज्जया य सज्झाए । चरणकरणंमि य तहा तित्थस्स पभावणाए य ॥ १ ॥ " ततो पच्छा उप्पइओ भगवं, पत्तो पुरियं नयरिं, तत्थ सुभिक्खं, तत्थ य सावया बहुया, तत्थ य राया तच्चण्णियसड्ढओ, तत्थ अम्हच्चयाणं सड्ढयाणं तच्चण्णिओवासगाण य विरुद्धेण मल्लारुहणाणि वट्टंति, सव्वत्थ ते उवासगा पराइज्जंति, ताहे तेहिं राया पुप्फाणि वाराविओ पज्जोसवणाए, सड्ढा अद्दण्णा जाया, नत्थि पुप्फाणित्ति, ताहे सबालवुड्ढा वइरसामिं उवट्ठिया, तुब्भे जाणह जइ

तुब्भेहिं नाहेहिं पवयणं ओहामिज्जइ, एवं भणिते बहुप्पयारं गया उप्पइऊण माहेसरिं, तत्थ हुयासणं नाम वाणमंतरं, तत्थ कुंभो पुप्फाण उट्ठेइ, तत्थ भगवतो पितिमित्तो तडितो, सो संभंतो भणइ—किमागमणपओयणं ?, ताहे भणंति-पुप्फेहिं पओयणं, सो भणइ—अणुग्गहो, भगवया भणितो—ताव तुब्भे गहेह जाव एमि, पच्छा चुल्लहिमवंते सिरिस-गासं गओ, सिरीए य चेतियअच्चणियनिमित्तं पउमं छिण्णगं, ताहे वंदित्ता सिरीए निमंतिओ, तं गहाय एइ अग्गिघरं, तत्थऽणेणं विमाणं विउव्वियं, तत्थ कुंभं छोढुं पुप्फाणं ततो सो जंभगगणपरिवुडो दिव्वेणं गीयगंधव्वणिणाएणं आगासेण आगओ, तस्स पउमस्स वेढे वइरसामी ठिओ, ततो ते तच्चण्णिया भणंति—अम्ह परं पाडिहेरं, अग्घं गहाय निग्गया, तं वोलित्ता विहारं अरहंतघरं गया, तत्थ देवेहिं महिमा कया, तत्थ लोगस्स अतीव बहुमाणो जाओ, रायावि आउट्टो समणोवासओ जाओ, सेसकहासंबंधो तत्तो चेव नायव्वो, पगयं च इमं, जहा तेण वइरसामिणा दुब्भिक्खे संघं नित्थारेंतेण साहम्मियवच्छल्लं कयं तहा कायव्वं, जइ न कुणइ तो अइयारोत्ति ।

अप्रभावनाऽपि प्रभावनाऽकरणस्वरूपा, प्रभावना तु [यथा२] तीर्थपराभवादावुपस्थिते तदुन्नतिहेतुचेष्टाप्रवर्तनात्मिका, तस्यां विष्णुकुमारो निदर्शनं, तत्कथा चेयम्—

विश्वविश्वम्भरासारः, साराढ्यजनताकुलः। कुलकोटीसमाकीर्णपुरग्राममनोरमः ॥ १ ॥ रमानिवासराजीवराजीवरसरोगणः । गणातीताकरोद्देशो, देशोऽस्ति कुरुनामकः ॥ २ ॥ त्रिदिवमिव तत्र सुरभुवनभूषितं हस्तिनागपुरमस्ति । विबुधजनानन्दकरं सदोप्सरोनिवहरमणीयम् ॥ ३ ॥ ( आर्या ) तस्मिन्नरातिभूपालमत्तमातङ्गकेशरी । शरणायातसामन्तसन्तापजलदोदयः ॥ ४ ॥ उदयप्रतापराजिष्णुर्जिष्णुर्विष्णुसमः श्रिया । निजान्वयसरःपद्मोऽभवत्पद्मोत्तरो नृपः ॥ ५ ॥ सकलान्तःपुरसारा तस्य ज्वालाभिधा प्रियतमाऽभूत् । निजरूपनिर्जितरतिलावण्यविलासवासगृहम् ॥ ६ ॥ ( आर्या ) तया च सह तस्य नृपतेर्जन्मान्तरोपार्जितपुण्यसंभारसंपादितं बुधजनप्रशंसनीयं जीवलोकसारं पञ्चप्रकारं विषयसुखमनुभवतोऽतिक्रान्तः कियानपि कालः, अन्यदा च सुखशय्यायामनाकुलनिद्रानुविद्धनयनयुगला ज्वाला महादेवी यामिन्याश्चरमयामे स्वप्ने निरभ्ररजनीरजनिकरकरनिकरावदातदेहं स्कन्धदेशविराजमानकपिलसटाकलापं शारदाभ्रमिव तडिद्वलयालङ्कृतमुपलक्ष्यमाणनिजोत्सङ्गमागतं सिंहपोतं ददर्श, दृष्ट्वा च प्राभातिकप्रहतानवघनादप्रतिबोधिता विधाय तत्कालोचितं सकलकरणीयं परमानन्दनिर्भरा भर्तृसकाशमागत्य कथितवती, तेनापि स्वप्नशास्त्रानुसारेण प्रधानपुत्रजन्मादेशसंजनितासमानमनःसम्मदा सा तत्काले समुद्भूतं सुख-

सुखेन बभार गर्भं, संपाद्यमानयथासमयोपजायमानसकलदोहदा च परिपूर्णसमये प्रसूता देवकुमारोपमं दारकम्,
अभिनन्दितो नृपतिः प्रियङ्करिकाभिधानया चेट्या, दत्तमिच्छातिक्रान्तं पारितोषिकं, तदनन्तरं च स्थानस्थानप्रार-
भ्यमाणवाराविलासिनीसार्थनृत्यप्रबन्धं वाद्यमाननानाविधातोद्यनादबधिरिताखिलब्रह्माण्डं बन्दिनिवहविधीयमान-
विविधप्रस्तावपाठं सकललोकप्रमोदोत्पादकं प्रारब्धं राज्ञा वर्द्धापनकं—यत्र प्रदानमयमिव सम्मदमयमिव सदुत्स-
वमयं वा । समजनि नगरमशेषं गीतादिविलासमयमिव तत् ॥ १ ॥ समुचितसमये च प्रशस्तेषु
तिथिनक्षत्रयोगकरणवारेषु शुभायां लग्नहोरायां प्रतिष्ठितं दारकस्य विष्णुकुमार इत्यभिधानं, वृद्धिं गतो देहोपचयेन
कलाकलापेन च, संप्राप्तः सकलजनश्लाघनीयं यौवनं, तत्र च वर्त्तमानो मातापितृसमाराधनपरः परोपकारपरायणः
कदाचिद्दिवस इव मित्रमण्डलसमन्वितः प्रश्नोत्तरादिविनोदेन अन्यदा च लक्ष्मण इव रामानुगतो नानाविधविलास-
निर्वर्त्तनेन एकदा च समृद्धनृपतिरिव सम्पूर्णविषयग्रामोऽसमानसुखसन्दोहासेवनेन कियन्तमपि कालं निनाय,
अन्यदा च पुनरपि ज्वाला चतुर्दशमहास्वप्नसूचितं सुरकुमाराकारं सुकुमारमसूत तनयं, तस्यापि जन्मनि निर्वर्त्तितो
राज्ञा महानुत्सवः, कृतं चोचितसमये तस्य महापद्म इति नाम, शुक्लपक्षक्षपाकर इव सह कलाभिः प्रवृत्तो देहोप-

चयेन, क्रमेणाऽऽससाद सकलजनमनोहरं तारुण्यं, निवेशितश्च सजिगीष इति जनकेन यौवराज्ये । इतश्चास्त्युज्जयिन्यां नगर्यां श्रीधर्मनामा नृपतिस्तस्य च नमुचिर्मन्त्री, अन्यदा तत्र समवससार मुनिसुव्रतस्वामिनः शिष्योऽनेकमुनिनिवहपरिवृतः सुव्रताभिधानसूरिः, तद्वन्दनार्थं च निजरविभूत्या व्रजन्नालोकितः प्रसादोपर्यवस्थितेन नमुचिमन्त्रिसमन्वितेन राज्ञा नगरीलोकः, भणितं च यथा—क्वैष लोकोऽकालयात्रायां गच्छति ?, नमुचिनोक्तं—देव ! प्रातरश्ववाहनिकागतेन मया श्रुतं यथाऽत्रोद्याने श्रमणाः केचनागता विद्यन्ते, अतस्तद्भक्तो जनोऽयं तत्पार्श्वे गच्छति, राज्ञोक्तं—वयमपि व्रजामः, नमुचिनाऽभाणि—किंनिमित्तं तत्र युष्माकं गमनं ?, यदि धर्मशुश्रूषया तदा वयमेव वेदविहितं सर्वलोकसंमतं भणामो धर्मं, नृपतिनाऽवाचि—सत्यमेतद्, भवता कथ्यते धर्मः, केवलं तेऽपि द्रष्टव्या महात्मानः, तथाऽवगन्तव्यं च कीदृशं ते धर्मं प्ररूपयन्ति ?, तेनोक्तं—यद्येवं तर्हि गम्यतां, किन्तु तत्र गतैर्युष्माभिर्मध्यस्थैरासितव्यं येनाहं तान् वादेन जित्वा निरुत्तरान् करोमि, तत एवमस्त्विति प्रतिपन्ने नृपेण सामन्तादिलोकसमेता गतास्ते, तत्र च दृष्टः प्रथमागतनागरकजनस्य धर्मदेशनां कुर्वाणो मुनिमण्डलमध्यवर्त्ती शशीव तारानिकरपरिकरितः सुव्रताचार्यः, प्रणम्य तं यथास्थानमुपविष्टेषु नरेन्द्रादिष्वकस्मादेवोक्तं सूरिसम्मुखं नमु-

चिमन्त्रिणा–यथा भो ! भो ! यावत्सम्यग्विभाव्यते तावदज्ञातपरमार्था यूयं, यतः प्रत्यक्षानुभूयमानानन्दस्वरूपं विषयसुखमुत्सृज्याङ्गीकृतः सर्वपाषण्डिभू(दु षितो विशिष्टजनपरिहृतो जिनधर्मः, तथा निजश्रियं परित्यज्य स्वीकृता भिक्षा, यद्वा मलमलिनदेहानामशुचितया पिशाचोपमानानां मुण्डितमुण्डतुण्डानां कियदेतत् ? अपिच–यत्र त्रिपुरुषपूजा न समस्ति हविर्भुजो न वा हवनम्। न द्विजजनप्रदानं धर्मः स कथं भवति मूढ ? ॥ १ ॥ इत्याकर्ण्य अहो ! मूर्खशठोऽयमसमीक्षितवादी तत्किमस्योत्तरदानेनेति विचिन्त्य तूष्णीं स्थितः सूरिः, यत उक्तम्–" विद्वानृजुरभिगम्यो, विदुषि शठे चाप्रमादिना भाव्यम्। मूर्खार्जवोऽनुकम्प्यो मूर्खशठः सर्वथा त्याज्यः ॥ १ ॥" स च हतप्रतिभ एव मुण्डो न किञ्चिदुत्तरं दातुं शक्नोतीति चिन्तयंस्तदुत्प्रासनार्थं पुनः पुनस्तदेव भणितुमारेभे, ततो भणितः सूरिणाऽसौ –भो भोः किमेवमसम्बद्धमुल्लपसि ?, यदि जल्पसामर्थ्यमस्ति तदा कुरु पूर्वपक्षं पञ्चावयववाक्योपन्यासेन, अत्रान्तरे पादयोर्निपत्य विज्ञप्तं सविनयमेकेन विनेयेन, यथा–भगवन् ! कोऽयं ? यदस्योपरि एवं संरम्भः समारभ्यते भवद्भिः, यतः—" गण्डस्थलोल्लसदमन्दमदप्रवाहगन्धावबद्धमधुपोद्धुरवारणेन्द्राः। एकैकघातवशतोऽपि पतन्ति यस्य, तस्य क्रमः किमु चकास्ति हरेर्मृगेषु ? ॥ १ ॥" तदलमाक्षेपेण, दीयतामादेशो मह्यं येनापनयामि वादगर्वमेतस्य,

ततोऽनुज्ञातो गुरुणा स मन्त्रिणं भणितुमुपचक्रमे–भो यत्त्वयोक्तम्–आनन्दरूपं विषयसुखं, तदसम्बद्धं, यतः केषाञ्चिदसमसमुल्लंसितसद्विवेकानां विषविकारसममेव विषयसुखमाभाति, तथाहि–त एवं चिन्तयन्ति, यथोक्तं व्यासेन–"एकैकशोऽपि निघ्नन्ति, विषया विषसंनिभाः। किं पुनर्न विवेकात्मा, यः समं पञ्च सेवते ॥ १ ॥" अन्येषां तु मोहावष्टब्धचेतसां यद्यप्यानन्दरूपं प्रतिभाति तथाऽपि तेषामपि विद्युल्लताविलसितमेव स्तोककालिकमेतद्, यत उक्तम्–"सुखास्वादलवो योऽपि, संसारे सत्समागमात्। सवियोगावसानत्वादापदां धुरि वर्त्तते ॥ १ ॥" किञ्च–"सुरतसुखं खलमैत्री सन्ध्यारागः सुरेन्द्रकोदण्डम्। कलिकालयौवनं जीवितं च सर्वाण्यनित्यानि ॥ १ ॥" यच्चोक्तं 'सर्वपाषण्डदूषितो जिनधर्मः,' तदप्ययुक्तं, यतः सकलपाषण्डिनामपि प्राणातिपातादिपरिहारात्मको धर्मः सम्मत एव, तथा चोक्तम्–"पञ्चैतानि पवित्राणि, सर्वेषां धर्मचारिणाम्। अहिंसा सत्यमस्तेयं, त्यागो मैथुनवर्जनम् ॥ १ ॥" 'विशिष्टजनपरिहृत'मिति यदुक्तं तदप्यसङ्गतं, यतः सर्वस्यापि धर्मस्य दया मूलं, सा चाविकलाऽत्रैव, यथावज्जीवतत्त्वपरिज्ञानात्, नान्यथा, अतोऽयमेव विशिष्टजनैराद्रियते सम्पूर्णधर्म्मफलकाम्यया, यच्च निजश्रियं परित्यज्येत्याद्युक्तं तद्दूषणमेव न भवति, लक्ष्मीपरित्यागभिक्षाटनाङ्गीकारयोः सकलधार्मिकाभिप्रेतत्वात्, तथाहि–

लक्ष्मीः तावत्प्राणिना सकलव्यसनमूलमिति त्याज्या, तथा चोक्तम्—“या गम्याः सत्सहायानां, यासु खेदो महद्भयम् । तासां किं यन्न दुःखाय, विपदामिव सम्पदाम्? ॥ १ ॥” इति, भिक्षा तु विशिष्टगुणेत्युपादेया, तथा चार्षम्—“ अत्र- धूतां च पूतां च, मूर्खाद्यैः परिनिन्दिताम् । चरेन्माधुकरीं वृत्तिं, सर्वपापप्रणाशिनीम् ॥ १ ॥ ” तथा—“ एकान्नं नैव भुञ्जीत । बृहस्पतिसमादपि । चरेन्माधुकरीं वृत्तिमपि म्लेच्छकुलादपि ॥ २ ॥ ” यद्वा (च्च) ‘ मलमलिने ’ त्याद्युक्तं तत्रापि मुनिजनस्य शास्त्रे स्नाननिषेधान्मलधारित्वं न दूषणं, यथोक्तं भवदार्षे—“ स्नानं मददर्पकरं, कामाङ्गं प्रथमं स्मृतम् । तस्मात्कामं परित्यज्य, न स्नान्तीह दमे रताः ॥ ३ ॥ ” अशुचित्वं च ब्रह्मचारिणां भवदागम एव ‘ ब्रह्मचारी सदा शुचि ’ रित्यादौ निषिद्धम् । शिरस्तुण्डमुण्डनमपि व्रतिनां शास्त्रोक्तमनुपालयतां भूषणं, न दूषणं, यच्च ‘ यत्र त्रिपुरुषपूजा न समस्ती ’ त्याद्युक्तं तत्र विवक्षितत्रिपुरुषीपू(जा पू)जैव न भवति, रागाद्यनुगतत्वादितरपुरुष- वद्, रागाद्यनुगतत्वं चाङ्गनादिपरिग्रहादिलिङ्गान्यथानुपपत्तेः, तथा चोक्तम्—“ कश्चिद्रागी भवति हसितोद्गीतनृत्य- प्रपञ्चः, प्रद्वेष्टयन्यः प्रहरणगणव्यग्रपाणिः पुमान् यः । बिभ्रन्मोही स्फटिकविमलामक्षमालां यतस्ते, तल्लिङ्गानामभ- वनमतः सर्ववित्त्वं विरागः ॥ १ ॥” हविर्भुजो हवनमपि प्राणातिपातकारणत्वान्न सुन्दरं, प्राणातिपातकारणत्वं चास्य

भवदागमे हविर्भुजः शूनापञ्चकमध्ये पाठितत्वाद्, यथोक्तम्—“कण्डनी पेषणी चुल्ली, उदकुम्भः प्रमार्जनी। पञ्च शूना गृहस्थस्य, तेन स्वर्गं न यात्यसौ ॥ १ ॥” न च हिंसानुगतमप्येतद्विहितानुष्ठानत्वात्स्वर्गायेति वचनीयं, यदाह व्यासः—“यूपं छित्त्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम्। यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ? ॥१॥” दानं च यन्मोक्षार्थिभिर्दीयते तत्पात्रमन्विष्य देयं, नैवमेव, पात्रं च विषयविरक्तत्वादिगुणोपेतं श्लाघ्यते, तस्यैव संसारसागरपतज्जनरक्षणक्षमत्वात्, तथा चोक्तम्—‘विषयी विषयासक्तं, सधनः सधनं गृही गृहिणमेव। सारम्भः सारम्भं, न तुल्यदोषस्तु तारयति ॥ १ ॥ विषयी विषयविरक्तं, सधनोऽसधनं गृही गृहविमुक्तम्। सारम्भोऽनारम्भं, संचिन्त्य भवार्णवं तरति ॥ २ ॥” एते च विषयविषपूर्णमानसाः कथं पात्रभूता भवन्ति ? इत्याहतप्रत्याहत्या यावदसौ मध्येसभं निरुत्तरीकृतस्तावत्साधुजनस्योपरि महान्तं प्रद्वेषं गतः, ततो रात्रावाकृष्टखड्गः समागतो मुनिहननार्थं, स्तम्भितो देवतया, प्रभाते च तदाश्चर्यमालोक्य राजा लोकश्च मुनिसमीपसमाकर्णितधर्माधर्मफलः समुपशान्तोऽङ्गीकृतवान् जिनधर्मं, नमुचिस्तु तथाऽपमानितो विलक्षीभूतो गतो हस्तिनागपुरं, महापद्मस्य मन्त्री जातः, तस्य च तदा सिंहबलनामा दुष्टसामन्तो विषमदुर्गबलेन देशमुपद्रवति, ततो महापद्मेन पृष्टो नमुचिः,

ततो गत्वा तद्देशं निपुणोपायेन
यथा—जानासि कमप्युपायं सिंहबलग्रहणे ?, नमुचिनोक्तं—सुष्ठु जानामि, ततो गत्वा तद्देशं निपुणोपायेन
यथा—जानासि कमप्युपायं सिंहबलग्रहणे ?, नमुचिनोक्तं—सुष्ठु जानामि, अतितुष्टेन राज्ञा वरं वृणीष्वेत्युक्तोऽब्रवीन्मन्त्री—यदा याचिष्ये
भङ्क्त्वा दुर्गं सिंहबलं च गृहीत्वा समागतो नमुचिः, अतितुष्टेन राज्ञा वरं वृणीष्वेत्युक्तोऽब्रवीन्मन्त्री—यदा याचिष्ये
तदा दद्याः, एवं च यौवराज्यमनुपालयति महापद्मः, कदाचित्तदीयमात्रा ज्वालया कारितो जिनरथः, अन्यया
च लक्ष्म्यभिधानया विमात्रा ब्रह्मरथः, तयोश्चान्योऽन्यं विवादे प्रथमरथभ्रमणविषये समुत्पन्ने पद्मोत्तरेण
नरपतिना द्वयोरपि निवारितौ रथौ, ततो महापद्मकुमारस्तमेवापमानं मन्यमानो निजमातुर्गतोऽकथयन्नेव
महाटवीं, तत्र स्थित्वा तापसाश्रमे कानिचिद्दिनानि जनमेजयनरपतेः पुत्रिकायां नागवतीकुक्ष्युत्पन्नायां मदनावल्यां
कालनरेन्द्रेण सह युद्धे समापतिते निजपितुः पलायिते दिशो दिशमन्तःपुरादिपरिकरे भयेन तत्रैव तापसाश्रमे
समागतायां प्रथमदर्शन एव दर्शितानुरागायां जातानुरागः कुलपतिना विसर्जितो गच्छन् प्राप्तः सिन्धुनन्दनपुरम्,
तत्रोद्यानिकामहोत्सवे मदोन्मत्तमहाकरिणो विमोच्य क्रीडन्तं नगरनारीजनं समानिनायालानस्तम्भमेतं महाकरिणं,
विज्ञातव्यतिकरोऽसौ राज्ञा तत्रत्येन परिणायितः कन्याशतं, मनसा च समुद्वहति सदैव मदनावलीं, तिष्ठंश्च विशिष्ट-
सौख्येन अन्यदा रात्रौ सुप्तोऽपहृतो विद्याधराङ्गनया वेगवत्या, निद्रावसानावेदितापहारकारणयावत्तदा (च तया) नीतोऽसौ

वैताढ्यपर्वते सूरोदयं नगरं, समर्पित इन्द्रधनुर्नाम्नो विद्याधराधिपतेः, परिणायितस्तेन स्वभार्यायाः श्रीकान्तायाः सुतां जयकान्तां, तत्परिणयनोपजातकोपावागतौ च गङ्गाधरमहीधरौ तदीयमातुलभ्रातरौ प्रवरविद्याधरौ विजित्य सङ्गरे क्रमेण समुपार्जितसमस्तविद्याधराधिपत्यो वशीचकार वैताढ्यश्रेणिद्वयं, न च परितोषं कमप्युवाह मदनावलीविरहितः, अन्यदा च जगाम केनापि मिषेण तमेव तापसाश्रमं, तत्र तापसैः प्रवरपुष्पफलादिभिर्विहितोऽस्य सन्मानः, दत्ता च तत्रैवागतेनामुष्य मदनावली शतधनुःपुत्रेण जनमेजयेन, परिणीता च महाप्रमोदमुद्वहताऽनेन सा, ततो महाविभूत्या विद्याधरचक्रवर्त्तिसमृद्धिसमेतो गतो हस्तिनागपुरं, प्रविष्टो बन्दिजनस्तूयमानः, आनन्दितवांश्च प्रणामाद्युचितप्रतिपत्तिकरणेन चिरवियोगदूनमानसौ जननीजनकौ विष्णुकुमारं च, अत्रान्तरे समवसृतः स एव मुनिसुव्रतस्वामिशिष्यः सुव्रताचार्यो यः कुलगहं क्षमाङ्गनायाः नन्दनवनं मार्दवसुरतरोर्निधानमार्जवधनस्यालम्बनं मुक्तिवल्ल्याः क्रीडागृहं तपःश्रियः स्वामी संयमसेवकस्य सहायः सत्यबन्धोः पारिजातप्रसवः शौचकिंजल्कस्य पणितभूमिराकिञ्चन्यपण्यस्य यौवनं ब्रह्मचर्यमण्डनस्य, तस्य च निजोद्यानपालकादवगम्यागमनं नरपतिः सपरिवारः समं विष्णुकुमारमहापद्माभ्यां वन्दनार्थमाययौ, तत्स्थानप्राप्तेन च करकमलकलितया मुखवस्त्रिकया मकरध्वजविजयगृहीतजयपताकयेव

मुखदेशविनिवेशितया विराजमानो दक्षिणपार्श्वभागस्थापितेन रजोहरणेन शोभमानो विरचितपद्मासनः सूरिरभिवन्दितस्त्रिः प्रदक्षिणीकृत्य सपरिवारेण नरपतिना, सूरिणाऽप्यानन्दितः पापमलपटलप्रक्षालनजलेन धर्मलाभेन, समुपविष्टो नृपतिर्यथोचितस्थाने, भणितं च भगवता—भो भव्याः ! दुरन्तः खल्वेषः जन्मजरामरणरौद्रजलजन्तुभीषणः शारीरमानसानेकदुःखसङ्घातानर्वाक्परपारनीरपरिपूर्णश्चतुर्गतिमहावर्त्तभीमो मनोदुष्पवनप्रेरणाविषयावर्त्तघूर्णमानचटुलेन्द्रिययानपात्रः संसारसागरसमुद्रमध्यपतितरत्नमिव दुष्प्रापमत्र मानुषत्वं, विषमिव विपाककटुकं विषयसुखं, वीचय इव निरन्तराः प्रसरन्ति कमपरिणतयः, नक्रादिक्रूरजलचरा इव समुच्छलन्ति भयावहा रागद्वेषादयः, गम्भीरपातालमिवातीवदुःखबहुलं श्रूयते नरकजालं, वडवानल इव बहलदाहहेतुः प्रवर्द्धते कषायदहनः, विषकन्दल्य इव विवशं जनं विदधति स्त्रियः, तस्मादेतत्तरणवाञ्छया विधीयतां विविधव्रतफलकनिवहानिबद्धे ज्ञानकर्णधारविराजिते सम्यक्त्वकूपस्तम्भशोभिते प्रशस्ताध्यवसायवायुपरिपूर्णविविधतपोऽनुष्ठानसितपटकलिते परतीरवर्त्तिपरमगतिपुरीनिवासार्थिमुनिजनवणिक्सार्थपरिकरिते परमगुरुप्रणीते सद्धर्मयानपात्रे यत्नः, अपिच—अत्र चतुर्दशरज्ज्वात्मकेऽत्र लोके जनस्य संवसतः । अस्ति न कुत्रापि सुखं विमुच्य

निर्वाणपुरमेकम् ॥ १ ॥ द्विविधस्तस्य च पन्था यतिधर्मगृहस्थधर्मभेदेन । प्रथमः पञ्चमहाव्रतपालनरूपोऽतिदुर्गश्च ॥ २ ॥ परिषोढव्या यस्मादुपसर्गपरीषहा बहुविकल्पाः । गुरुपारतन्त्र्यमनिशं कर्त्तव्यमभग्नपरिणामैः ॥ ३ ॥ जेयो मोहपिशाचः पञ्चेन्द्रियनिग्रहो विधातव्यः । हन्तव्यो मदनगजः कषायदावः प्रशमनीयः ॥ ४ ॥ यद्यपि च कष्टरूपः, प्रतिभाति मनस्ययं गुरुः पन्थाः । निर्वाणपुरप्राप्तिं, तथाऽप्यविक्षेपतः कुरुते ॥ ५ ॥ इतरस्त्वणुव्रतादिद्वादशभेदो जिनैः समाख्यातः । सुकरो बहुभङ्गतया यथा तथा भङ्गकाश्रयणात् ॥ ६ ॥ किन्तु–प्रापयति न मोक्षपुरीमक्षेपेणैव तेन वीरनराः । तत्र द्रुतजिगमिषया समाश्रिताः प्रथमपथमेव ॥ ७ ॥ अत्रान्तरे विनयविरचिताञ्जलिपुटः पद्मोत्तरनृपतिर्जातिजरामरणादिपरिवर्त्तनात् निर्विण्णः समाकर्ण्य परमसुखावासं निर्वाणनिवासं तद्विषयजातश्रद्धातिशयः समुल्लसितजीववीर्यजनितसर्वविरतिपरिणतिर्व्यजिज्ञपत्–भगवन् ! यावत् निजराज्ये कमपि विष्णुकुमारादिकं निवेशयामि तावद्भवदनुज्ञया युष्मदन्तिक एव सकलकर्ममलक्षालनदक्षां दीक्षां गृहीष्ये, भगवतोक्तं–देवानुप्रिय ! बहुविघ्नः कुशलानुष्ठानक्षणः प्राणिनां, कर्त्तव्यं चेदं भव्यसत्त्वानां, तन्मा प्रतिबन्धं व्यधासीरित्युक्तः प्रणम्य गुरुं पुनः प्रविष्टो नगरं, निजनिलयगतेन चाकारिता मन्त्रिणः सहप्रधानपरिजनेन विष्णुकुमारश्च, भणितं च राज्ञा–भो ! भो ! समाक-

र्णितमेव भवद्भिर्भगवता वर्ण्यमानं संसारासारत्वं, तदिदानीं सहृदयस्य नात्रावस्थानं युज्यते, किन्तूच्छेदनमेवास्य श्रेयः, अतो विष्णुकुमारं राज्येऽभिषिच्य करोमि प्रव्रज्याग्रहणेन सफलां मनुजत्वादिसामग्रीं, तत उक्तं कुमारेण—तात ! किमनिष्टोऽहं भवतो येन किम्पाकफलमिव मुखमधुरं परिणामदारुणं राज्यं मयि निधाय स्वयं परिणतिपेशलं सकलकर्मव्याधिनिर्मूलनदक्षं दीक्षामहौषधं प्रतिपत्स्यते ?, तदहमपि त्वरितमेवानुचरिष्यामि, ततो राज्ञा तस्यापि प्रव्रज्याग्रहणनिर्बन्धमवबुध्याह्वायितो महापद्मो भणितश्च—पुत्र ! प्रतिपद्यस्व राज्यं येनाहं त्यक्तनिःशेषसङ्गः प्रव्रज्यां पालयामि, तेनोक्तं—तात ! प्रतिपादय विष्णुकुमाराय येन तस्य भृत्यो भवामि, राज्ञोक्तं—वत्स ! नाङ्गीकुरुते विष्णुकुमारः, स हि मयैव सह प्रव्राजिष्यति, ततो यदाज्ञापयति देव इत्यभिधाय तूष्णीं स्थितवति महापद्मे पित्रा सर्वोपाधिविशुद्धे वासरे महाविमर्देन समस्तसामन्तचक्रसम्मत्या समागते सुविशुद्धलग्ने तस्यैव विरचितो राज्याभिषेकः, स्वयं च त्रिकचतुष्कचत्वरादिष्वाघोषणापूर्वं दापितं दीनानाथादिलोकेभ्यो महादानं, पूजितो महाराध्यस्य भगवतस्तीर्थङ्करस्यापि पूजनीयः श्रीश्रमणसङ्घः, कारितः सर्वजिनायतनेष्वष्टाह्निकामहोत्सवः, प्रशस्तवासरे चानुगम्यमानोऽनेकैर्नरेन्द्रादिभिः समं विष्णुकुमारेण गतः सूरिपादान्तिकं,

प्रव्राजितश्च भगवता यथोचितविधानेन, ततो वन्दितः पद्मोत्तरः सविष्णुकुमारो नरेन्द्रादिभिः, गुरुणा च धर्मदेशना प्रारब्धा, यथा—चत्वारि परमाङ्गानि दुर्लभानीह देहिनः। मानुषत्वं श्रुतिः श्रद्धा, संयमे [च] वीर्यमेव चेत्यादि, क्रमेण च तथाविधक्षयोपशमवशतः स्तोककालेनैव गृहीता द्विविधाः शिक्षाः, जातो विषयविरक्ततया परित्यक्तगीतार्थोऽपि प्रधानगीतार्थः, कालान्तरेण चोत्पादितं सकलघातिकर्मविगममाधायातीतानागतवर्त्तमाननिखिलपर्यायाध्यासितलोकालोकाविर्भावकं केवलज्ञानं, महापद्मराजस्याप्यायुधशालायामुदपादि चक्ररत्नं, कृतः सकलदिग्विजयः साधितं षट्खण्डं भरतक्षेत्रं जातो नवमश्चक्रवर्त्ती, यौ चैतावत्कालं स्थितौ रथौ तयोश्च प्रथमं जिनरथं नगर्यां पर्यटय विहिता समं जननीतोषेण जिनप्रवचनप्रभावना, तत्प्रभृति चानेको लोकः प्रपन्नो जिनशासनं, कारिता च तेन चक्रवर्त्तिनाऽनेकजिनभवनमण्डिता सकलभरतक्षेत्रभूमिः, पद्मोत्तरमुनिस्तु केवलिपर्यायेण विहृत्य कियन्तमपि कालं गतो निर्वाणं। विष्णुकुमारसाधोश्च विविधतपोविशेषविशोषितशरीरस्य ज्ञानदर्शनचारित्रपर्यायैः प्रवर्द्धमानस्योत्पन्ना नानाविधवैक्रियकरणगगनगमनादिलब्धयः, न चैतच्चित्रं यदनुकलमविकलं सकलधर्ममाराधयतां साधूनां लब्धयः समुत्पद्यते, तथा चोक्तं—"चरणरजसा प्रशमनं सर्वरुजां साधवः क्षणात्

धर्माद्रत्नोन्मिश्रितकाञ्चनवर्षादिसर्ग-
कुर्युः । त्रिभुवनविस्मयजननान् दद्युः कामांस्तृणाग्राद्वा ॥ १ ॥ इतश्च—सुव्रताचार्यः स्वशि-
सामर्थ्यम् । अद्भुतभीमोरुशिलासहस्रसम्पातशक्तिश्च ॥ २ ॥” इत्यादि । समवसृतो बाह्योद्याने, समागता
ष्यपरिकरितो मासकल्पेन विहरन् संप्राप्तो वर्षासन्नदिनेषु हस्तिनागपुरं, प्रशंसिताः सम्यक्त्वादयः, ततश्च केचि-
वन्दनार्थं नरेन्द्रादयः, प्रारब्धा धर्मकथा, निन्दिता मिथ्यात्वादयः पदार्थाः, अत्रान्तरे पूर्ववैरसस्मरणोपजातगाढकोपस्य
दवगतयथाऽवस्थिततीर्थंकरवचनाः प्रव्रजिता, अपरे च श्रावका जाताः, यत्र—मार्गा दुर्गमतां गता विरहिणः शुष्यन्ति
नमुचिमन्त्रिणो मुनिच्छिद्रावलोकनपरस्य समागतो वर्षासमयः, आलोक्येव मलीमसोदयमितो हंसा गता मानसं,
कामातुरा, निर्जित्येव निदाघमूर्जितरिपुं गर्जन्ति धाराधराः । एवंविधघनसमये, मुनिजनकोपेन याचितो राजा ।
जाता मासविहारिणोऽपि हि पुरा स्थानस्थिताः साधवः ॥ १ ॥ ब्रूहि तव यदभिलषितं स आह वेदोदितेन विधिनाऽहम् ।
पूर्वप्रतिपन्नवरो, दत्तश्च नृपेण भणितं च ॥ २ ॥ देहि स्वकीयराज्यं दत्तं राज्ञा च सत्यसन्धेन । अन्तःपुरं
इच्छामि यज्ञयजनं तन्मे तावन्ति दिवसानि ॥ ३ ॥ राज्यस्थिते च तस्मिन् वर्द्धापनकार्थमागतास्तस्य । सर्वे पाखण्डस्थाः
१५ प्रविश्य स्वयं च तस्थौ मनुजनाथः ॥ ४ ॥

प्रव्राजितश्च भगवता यथोचितविधानेन, ततो वन्दितः पद्मोत्तरः सविष्णुकुमारो नरेन्द्रादिभिः, गुरुणा च धर्मदेशना प्रारब्धा, यथा—चत्वारि परमाङ्गानि दुर्लभानीह देहिनः। मानुषत्वं श्रुतिः श्रद्धा, संयमे [च] वीर्यमेव चेत्यादि, क्रमेण च तथाविधक्षयोपशमवशतः स्तोककालेनैव गृहीता द्विविधाः शिक्षाः, जातो विषयविरक्ततया परित्यक्तगीतार्थोऽपि प्रधानगीतार्थः, कालान्तरेण चोत्पादितं सकलघातिकर्मविगममाधायातीतानागतवर्त्तमाननिखिलपर्यायाध्यासितलोकालोकाविर्भावकं केवलज्ञानं, महापद्मराजस्याप्यायुधशालायामुदपादि चक्ररत्नं, कृतः सकलदिग्विजयः साधितं षट्खण्डं भरतक्षेत्रं जातो नवमश्चक्रवर्त्ती, यौ चैतावत्कालं स्थितौ रथौ तयोश्च प्रथमं जिनरथं नगर्यां पर्यटय विहिता समं जननीतोषेण जिनप्रवचनप्रभावना, तत्प्रभृति चानेको लोकः प्रपन्नो जिनशासनं, कारिता च तेन चक्रवर्त्तिनाऽनेकजिनभवनमण्डिता सकलभरतक्षेत्रभूमिः, पद्मोत्तरमुनिस्तु केवलिपर्यायेण विहृत्य कियन्तमपि कालं गतो निर्वाणं। विष्णुकुमारसाधोश्च विविधतपोविशेषविशोषितशरीरस्य ज्ञानदर्शनचारित्रपर्यायैः प्रवर्द्धमानस्योत्पन्ना नानाविधवैक्रियकरणगगनगमनादिलब्धयः, न चैतच्चित्रं यदनुकलमविकलं सकलधर्ममाराधयतां साधूनां लब्धयः समुत्पद्यते, तथा चोक्तं—" चरणरजसा प्रशमनं सर्वरुजां साधवः क्षणात्

धर्माद्रत्नोन्मिश्रितकाञ्चनवर्षादिसर्ग-
कुर्युः । त्रिभुवनविस्मयजननान् दद्युः कामांस्तृणाग्राद्वा ॥ १ ॥ इत्यादि । इतश्च—सुव्रताचार्यः स्वशि-
सामर्थ्यम् । अद्भुतभीमोरुशिलासहस्रसम्पातशक्तिश्च ॥ २ ॥” हस्तिनागपुरं, समवसृतो बाह्योद्याने, समागता
ष्यपरिकरितो मासकल्पेन विहरन् संप्राप्तो वर्षासन्नदिनेषु प्रशंसिताः सम्यक्त्वादयः, ततश्च केचि-
वन्दनार्थं नरेन्द्रादयः, प्रारब्धा धर्मकथा, निन्दिता मिथ्यात्वादयः पदार्थाः, अत्रान्तरे पूर्ववैरसस्मरणोपजातगाढकोपस्य
दवगतयथाऽवस्थिततीर्थंकरवचनाः प्रव्रजिता, अपरे च श्रावका जाताः, यत्र—मार्गा दुर्गमतां गता विरहिणः शुष्यन्ति
नमुचिमन्त्रिणो मुनिच्छिद्रावलोकनपरस्य समागतो वर्षासमयः, आलोक्येव मलीमसोदयमितो हंसा गता मानसं,
कामातुरा, निर्जित्येव निदाघमूर्जितरिपुं गर्जन्ति धाराधराः । एवंविधघनसमये, मुनिजनकोपेन याचितो राजा ।
जाता मासविहारिणोऽपि हि पुरा स्थानस्थिताः साधवः ॥ १ ॥ ब्रूहि तव यदभिलषितं स आह वेदोदितेन विधिनाऽहम् ।
पूर्वप्रतिपन्नवरो, दत्तश्च नृपेण भणितं च ॥ २ ॥ देहि स्वकीयराज्यं दत्तं राज्ञा च सत्यसन्धेन । अन्तःपुरं
इच्छामि यज्ञयजनं तन्मे तावन्ति दिवसानि ॥ ३ ॥ राज्यस्थिते च तस्मिन् वर्द्धापनकार्थमागतास्तस्य । सर्वे पाखण्डस्थाः
१५ प्रविश्य स्वयं च तस्थौ मनुजनाथः ॥ ४ ॥

विमुच्य तं साधुजनमेकम् ॥ ५ ॥ अत्रान्तरे तदेव छिद्रं लब्ध्वा मुनीनाकार्योक्तवान्—भो ! भो ! समुत्सृजत मदीयं देशं विमुञ्चतेदानीं मे नगरं, अद्रष्टव्यमुखा हि यूयं ये सकलजनसम्मतमपि समुचितं लौकिकाचार-मुल्लङ्घयन्ति, नीतिशास्त्रप्रतिषिद्धश्च भवदाचारः, तथा चोक्तम्—"यद्यपि निपुणो योगी, छिद्रां पश्यति मेदि-नीम् । तथाऽपि लौकिकाचारान्, मनसाऽपि न लङ्घयेत् ॥ १ ॥" किञ्च—"लोकवत्प्रतिपत्तव्यो, लौकि-कोऽर्थः परीक्षकैः । लोकव्यवहारं प्रति, सदृशौ बालपण्डितौ ॥ २ ॥" न चान्यदर्शनिभ्यो भवन्तः प्रधानतराः, ते च सर्वेऽप्यभिनवराज्यलाभेऽस्मद्वर्द्धापनाय समायाताः, भवन्तस्तु गुरुदर्पाध्मातान्तःकरणा लोकव्यवहारबाह्या न समा-गता इत्याद्युक्तवति तस्मिन् सूरिरवोचत्—महाराज ! न वयं दर्पान्नागताः, किन्तु त्यक्तसकलसङ्गानां मुनीनां कल्प एषः, तथाहि भवदागमेऽप्युक्तम्—"तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना । अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥ १ ॥" लोकव्यवहारबाधाऽपि न काचिदस्माभिर्विहिता, राजविरुद्धाद्यनासेवनाद्, यच्चोक्तं देशत्यागं कुरुत यूयमिति, तच्चायुक्तं, यतः—"व्रतिनो जङ्गमं तीर्थं, सदाचारपरायणाः । न सन्ति येषु देशेषु कुतस्तेषां पवित्रता ? ॥१॥" किञ्च—"यमु-पार्जयन्ति धर्मं, कायक्लेशं विधाय मुनयोऽमी । साधयति तपःक्लेशेन, नरपतिः पालनात्तेषाम् ॥२॥" अपिच—परैरप्यनार्यैः

पराभूयमानानां तपस्विनां पार्थिव एव शरणं भवति, तथा च स्मृतिवाक्यम्—"दुर्बलानामनाथानां, बालवृद्धतपस्विनाम् । अनार्यैः परिभूतानां, सर्वेषां पार्थिवो गतिः ॥ १ ॥" किञ्च—मनुनाऽपि सामान्येनैवैवमुक्तम्—"प्रजानां धर्मषड्भागो, राज्ञो भवति रक्षतः । अधर्मादपि षड्भागो, भवत्यस्य ह्यरक्षणात् ॥ १ ॥" अतः किमिति निरपराधानेव साधून्निष्काशयसि देशात् ?, अथैवमेव भवतो न प्रतिभान्त्यमी तथाऽपि वर्षाकालं यावन्न किञ्चिद्गणनीयं, तदूर्ध्वं निर्गमिष्याम इत्युदितवति सूरौ नमुचिरुवाच—भो! भो! किमत्र बहुना वाक्कलहेन ? यदि जीवितेन कार्यं तदा दिनसप्तकादर्वागितो निर्गच्छत, तदुपरि तु बान्धवसममपि यदि विलोकयिष्यामि तदाऽवश्यं महानिग्रहेण निग्रहीष्यामि, एवं च तन्निर्बन्धमवबुध्य मुनयः स्वस्थानमाजग्मुः, समारब्धश्च सूरिणा साधुभिः सार्द्धं पर्यालोचः—भो! भो! किमधुना कर्त्तव्यं ?, अयं हि वादकालविहितोत्तरदानप्रकोपितो मिथ्याभिनिवेशादेवमस्मान् खलीकरोति, अत्रान्तरे भणितमेकेन साधुना—विष्णुकुमारवचनादेष द्रुतमुपशमिष्यतीति संभाव्यते, ततो यद्यनेनोपशान्तेन प्रयोजनं तदाऽविलम्बेन मन्दरशैलादाहूय विष्णुकुमारमेतत्समीपं प्रेष्यतां, ततः सूरिणोक्तं—कस्तत्र गन्तुं शक्ष्यति ? दूरदेशवर्त्ती नः स शैलो, यदि च कश्चिज्जङ्घाचरणो विद्याचारणो वा भवति स एव तत्र गन्तुं शक्नोति, नान्य इति, ततोऽन्येन मुनिनोदितं—यथाऽहमाकाशेन

गन्तुं समर्थो नागन्तुं, सूरिणोक्तं—यद्येवं गच्छ स एवानेष्यति, ततः (सः) समुत्पतितस्तमालदलश्यामलं गगनमण्डलं, क्षणमात्रेण प्राप्तस्तमुद्देशं, दृष्टो विष्णुकुमारेणागच्छन्, चिन्तितवांश्च, गुरुतरं किञ्चित्सङ्घादिकार्यं तेनायं वर्षाकाल एव समायातः, सोऽप्येवं चिन्तयन्तं तं विधिवत् प्रणम्य कथितवानागमनप्रयोजनं, स्तोकवेलायां च विष्णुकुमारोऽपि तमादायाऽऽकाशयानेन प्रवृत्तो गजपुराभिमुखं गन्तुं, गतः क्षणमात्रेण, वन्दिताः सूरयः, साधुद्वितीयो गतो नमुचिदर्शनार्थं, किञ्च—तं विमुच्य वन्दितः सर्वैरपि महानरेन्द्रादिभिः, सुखासनासीनेन च धर्मकथनादिपूर्वं भणितं विष्णुना—वर्षाकालं यावत्तिष्ठन्तु मुनयस्तदूर्ध्वं यद्भणिष्यथ तत्करिष्यामः, तस्य च महामत्सरभराक्रान्तान्तःकरणस्य न किञ्चित्प्रतिभातं तद्वचः, केवलं सलिलमिव कर्णप्रविष्टं शूलमुपजानितवत्, ततश्च तेनोक्तं—किमत्र पुनः पुनरुक्तेन ?, दिनपञ्चकमप्यवस्थानं नानुमन्यामहे, विष्णुनोक्तं—नगराद्बहिरुद्याने तिष्ठन्तु, ततः पुनरुदितोद्दीपितकोपेनोक्तं नमुचिना—तिष्ठन्तु तावदेतन्नगरोद्यानं, मम राज्येऽपि सर्वपाषण्डिनामधमैरभिर्न स्थातव्यं, तस्मात्त्वरितं मम राज्यं मुञ्चत यदि जीवितेन कार्यं, ततस्तदत्यन्तासहिष्णुताविलोकनेन्धनप्रज्वालितक्रोधवह्निना भणितं विष्णुना—तथाऽपि पदत्रयस्थानं मुञ्च, तेनोक्तं—यदि पदत्रयोपरि द्रक्ष्यामि तदा लूनशीर्षं करिष्यामि, ततः समुत्पन्न-

दारुणकोपो वर्द्धितुं प्रवृत्तः, विवर्द्धमानश्च योजनलक्षप्रमितदेहः संवृत्तः, तस्मिंश्च स्वर्गमर्त्यलोकयोरन्तरालमान
मिव ग्रहीतुं तथा प्रवृद्धे कृते चानेन गाढमाक्रमेण क्रमदर्दरे–आकम्पिता सकाननशिलोच्चया वसुमतीयमखि-
लाऽपि । उच्छलिता जलनिधयस्तरलतरङ्गस्फुरच्छफराः ॥ १ ॥ उत्सृज्य मदं नष्टाः, भयविवशद्दशो दिशो गजे-
न्द्राश्च । प्रतिपथगमनाः सरितः सर्वा अपि झगिति संपन्नाः ॥ २ ॥ त्रासवशीकृतचित्तं ज्योतिश्चक्रं च विघटितं
सकलम् । व्यन्तरसुराश्च सह भवनवासिभिर्दूरमुत्त्रस्ताः ॥ ३ ॥ अत्रान्तरे विहितभुवनत्रयक्षोभं महामुनिं कुपित-
मालोक्य सौधर्माधिपतिः प्रेषयामास तत्सकाशं स्वकीयगीतविद्याकुशलं गाथकसुरसुन्दरीसमूहं, स च समागत्य मुनेः
कर्णमूले कोपहन्तृभिर्वचोभिर्गातुं प्रवृत्तः,यथोक्तं–"क्रोधः परितापकरः सर्वस्योद्वेगकारकः क्रोधः। वैरानुषङ्गजनकः क्रोधः
क्रोधः सुगतिहन्ता ॥१॥ क्रोधो नाम मनुष्यस्य, शरीराज्जायते रिपुः। येन त्यजन्ति मित्राणि, धर्माच्च परिहीयते ॥२॥" अपि
च-" एकः श्रीखण्डलेपेन, लिम्पत्यागत्य भक्तितः। अन्यो वासी समादाय, संतक्ष्णोति क्षणं क्षणम् ॥ १ ॥ एको
ददाति वन्दित्वा, भोजनाच्छादनादिकम् । ताडयित्वा कशैरन्यो, निष्काशयति गेहतः ॥ २ ॥ एकः संस्तौति सुश्लो-
कैर्हृदयाल्हाददायिभिः । निर्भर्त्सयति दुर्वाक्यैरन्यः कोपमुपागतः ॥ ३ ॥ इष्टानिष्टकरेष्वेवं, प्राणिषु प्राणवत्सलाः ।

रागद्वेषौ न कुर्वन्ति, समभावाः सुसाधवः ॥ ४ ॥ ” अन्यच्च—“ देशोनपूर्वकोटीं, विहृत्य यदुपार्जयेन्नरश्चरणम् । हारयति तत्समस्तं मुहूर्त्तमात्रेण कोपगतः ॥ ५ ॥ एवं किंनरखचरादयोऽपि कोपापहारिभिर्वचनैः । गायन्ति भीतचित्तास्त्रैलोक्यक्षोभदर्शगताः ॥ ६ ॥ इतश्च—आरब्धा जिनपूजा निःशेषसुरालयेषु शान्तिकृते । कायोत्सर्गस्थोऽजनि चतुर्विधः श्रमणसङ्घोऽपि ॥ ७ ॥ ” अत्रान्तरे नमुचिस्तस्य क्षामणानिमित्तं यावदागत्य पादयोर्लग्नस्तावत्पादाग्रेणैवोत्पाट्य प्रक्षिप्तः पश्चिमसमुद्रे, विज्ञातवृत्तान्तेन तु भयवेपमानेन समागत्य महापद्मचक्रवर्त्तिना शान्तिनिमित्तसमायातसमस्तसङ्घसमन्वितेन प्रसाद्यमानः स्तूयमानश्च देवादीनामुपशमकस्तावकवाक्यगीतकाव्यादिबन्धैः कथञ्चिदुपशमितो विष्णुकुमारः पुनर्घोरतरं तपो विधाय कञ्चित् कालं घातिकर्मचतुष्टयक्षयाविर्भूतलोकालोकाविर्भावक केवलज्ञानो विनाशितभवोपग्राहिकर्मचतुष्टयः प्राप्तोऽनन्तैकान्तिकात्यन्तिकसुखं विगतजरामरणादिनिःशेषदुःखं लोकाग्रवर्त्तिपरमपदम्, तद्भ्राताऽपि महापद्मो विपाककटुकं चक्रवर्त्तिपदमालोच्य नरपतिसहस्रसहितो गृहीत्वा प्रव्रज्यां विहितदुष्टाष्टकर्मक्षयो मोक्षं गतः । उक्तं प्रभावनायां विष्णुकुमारचरितं, प्रस्तुतार्थोपसंहारस्तु यथा

विष्णुकुमारसाधुना प्रभावना कृता तथा सति सामर्थ्येऽन्येनापि करणीया, तदकरणे त्वतीचार इति ॥ उक्तं सप्रस-
ङ्गोदाहरणं सप्तमं सम्यक्त्वातिचारद्वारमधुनाऽष्टमं भङ्गद्वारमभिधत्ते—

संमत्तं पत्तंपि हु रारेण निहाणगव अइदुलहं ।
पावेहि अंतरिज्जइ पढमकसाएहि जीवस्स ॥ १९ ॥

‘ सम्यक्त्वं ’ व्याख्यातस्वरूपं ‘ प्राप्तमपि ’ लब्धमपि, हुशब्दः पूरणे, ‘ अंतरिज्जइ ’ त्ति सम्बन्धाद-
पनीयते, कस्य ?– ‘ जीवस्य ’ प्राणिनः, किंविशिष्टम् ?– ‘ अतिदुर्लभं ’ दुःखेन लभ्यते यत्तत्तथा, अतिशयेन
दुर्लभमितिविग्रहः, भावार्थस्त्वयमस्य—अनादौ संसारे परिवर्त्तमान एष जीवोऽभिन्नकर्मग्रन्थिर्न कदाचिदवाप्तवानतोऽ-
तिशयदुष्प्रापमिदमित्युक्तं, केन किमिव दुष्प्रापमित्याह–‘ रोरेण ’ रङ्केण निधानमेव निधानकं तदिव—निधानक-
मिव, कैः ?–‘ प्रथमकषायैः’ अनन्तानुबन्ध्याख्यैः, प्रथमता चैषां प्रथमगुणघातित्वेन, प्रथमगुणश्च सम्यक्त्वं, तन्मूल-
कत्वाद्देशविरत्यादिगुणानां, कीदृशैस्तैः ?–‘ पापैः ’ पापहेतुत्वाद्, यद्वा पापप्रकृतिरूपैरिति गाथाऽक्षरार्थः । भावा-
र्थस्त्व(यम)त्र—क्षायोपशमिकौपशामिकसम्यक्त्वापेक्षमेतद्गाथायां भङ्गद्वारं निर्दिष्टं, न क्षायिकापेक्षं, तस्य शुद्धाशुद्धभेदेन

द्विभेदत्वात्, तत्रापायसद्द्रव्यविकला भवस्थकेवलिनां मुक्तानां च या सम्यग्दृष्टिस्तच्छुद्धं क्षायिकं, तस्य च साद्यपर्यवसानत्वान्नास्त्येव भङ्गः, यदाह गन्धहस्ती—भवस्थकेवलिनो द्विविधस्य सयोगायोगभेदस्य सिद्धस्य वा दर्शनमोहनीयसप्तकक्षयाविर्भूता सम्यग्दृष्टिः सादिरपर्यवसाने " ति, या त्वपायसहचारिणी श्रेणिकादेरिव सम्यग्दृष्टिस्तदशुद्धं क्षायिक, तस्य च सादिपर्यवसानत्वादस्ति प्रतिपातः, यदुक्तं गन्धहस्तिना—" तत्र याऽपायसद्द्रव्यवर्त्तिनी, अपायो—मतिज्ञानांशः सद्द्रव्याणि—शुद्धसम्यक्त्वदलिकानि तद्वर्तिनी, श्रेणिकादीनां च सद्द्रव्यापगमे भवत्यपायसहचारिणी सा सादिसपर्यवसाने " ति, केवलज्ञानोत्पत्तावपायक्षये, अपायो—मतिज्ञानांशस्तत्क्षयेऽसौ भवति, न प्रथमकषायोदये, तत्काले तदुदयाभावात्, तत्क्षय एव तस्योत्पत्तेरित्यलं प्रसङ्गेन गमनिकामात्रफलत्वादारम्भस्येति, दृष्टान्ताश्चात्र कुरुडोत्कुरुडप्रभृतयः स्वमत्याऽभ्यूत्याः ॥ १९ ॥ गतमष्टमं भङ्गद्वारमधुना नवमं भावनाद्वारमुच्यते—

भंगद्वारे गा. १९
भावनायां गा. २०

मिच्छत्तकारणाइं कुणंति नो कारणेऽवि ते धन्ना ।
इइ चिंतेज्जा मइमं, कत्तियसेट्ठी उयाहरणं ॥ २० ॥

मिथ्यात्वस्य--प्राग्व्यावर्णितस्य कारणानि—हेतवो मिथ्यात्वकारणानि—परतीर्थिकादिपरिचर्यापरिचयप्रभृतीनि 'कुर्वन्ति' विदधति यत्तदोर्नित्यसम्बन्धाद् ये 'नो' नैव 'कारणेऽपि' हेतावपि, राजादिजनिते जात इति शेषः, ते 'धन्याः' पुण्यभाजो, वर्त्तन्त इति शेषः, 'इति' एतत् 'चिन्तयेत्' भावयेत् 'मतिमान्' धीयुक्तः, अत्रार्थे को दृष्टान्तः ? इति चेद् ब्रूमः—कार्त्तिकाभिधानः श्रेष्ठी—वणिक्पतिः कार्त्तिकश्रेष्ठी 'उदाहरणं' दृष्टान्त इति गाथासमासार्थः ॥ २० ॥ व्यासार्थः कथानकगम्यस्तच्चेदम्—

हत्थिणपुरंमि नयरे जियसत्तू नाम आसि नरनाहो । तस्स य कित्तियसेट्ठी विसिट्ठचिट्ठासु पत्तट्ठो ॥ १ ॥ नेगमसहस्ससारो मणिरयणहिरण्णपुन्नभंडारो । दीणजणब्भुद्धारो पसिद्धसुविसुद्धववहारो ॥ २ ॥ अवगयजीवाजीवो नायासवसंवरो विऊ बंधे । निज्जरवियारनिउणो मुक्खपयत्थंमि उज्जुत्तो ॥ ३ ॥ निग्गंथे पावयणे अणुरत्तो दूरचत्तमिच्छत्तो । बारसविहेऽवि सम्म सावगधम्मंपि अपमत्तो ॥ ४ ॥ अन्नोऽवि गङ्गदत्तो तत्थेव सुसावओ तया सा य । मुणिसुव्वयजिणपासे पव्वइओ भवविरत्तमणो ॥ ५ ॥ तइया य तंमि नयरे बहुमासखमणकरणविक्खाओ । भागवयवयपहाणो वसइ परिव्वायगो एगो ॥ ६ ॥ सो य-पविसइ पुरस्स मज्झे जइयाच्चिय पारणाए

कज्जेण । तइयच्चिय सव्वजणो अब्भुट्ठाणाइ से कुणइ ॥ ७ ॥ तहाहि—कोऽवि निमितंइ गेहे कोऽवि य पाएसु पडइ हिट्ठमणो । कोऽवि हु वंदइ सथुणइ कोवि परिपूयए कोऽवि ॥ ८ ॥ नवरं कत्तियसिट्ठी उवविट्ठो चेव चिट्ठइ तओ सो । नाढाइ मज्झ एसुत्तिचिंतिउं कोवमावण्णो ॥ ९ ॥ अण्णंमि दिणे मासस्स पारणे राइणा स सयमेव । सागिहंमि भोयणत्थं निमंतिओ नेच्छई कहवि ॥ १० ॥ भणइ य नियहत्थेणं जइ परिवेसेइ कत्तिओ सिट्ठी । मज्झं तो तुज्झ गिहे पारेमि न अन्नहा राय ! ॥ ११ ॥ पडिवन्नं तं रन्ना सिट्ठिसयासं गओ सयं चेव । दिण्णासणोववविट्ठो हिट्ठो आभासितो सिट्ठी ॥ १२ ॥ तो तन्निमंतणाई कहइ परिव्वायगस्स वुत्तंतं । पडिभणति कत्तिओ देव ! अम्ह एयं न जुत्तंति ॥१३॥ सम्मत्तमइलणा खलु, जायइ एवं जओ तहावि तुहं । विसए वसामि नरवर ! करेमि जं भणसि तं तेण ॥ १४ ॥ एवं होउत्ति तओ भणियं राया गओ निययगेहं । भोयणवेलाए पुण सेट्ठीवि समागओ तत्थ ॥ १५ ॥ उवविट्ठो सो भयवं सिट्ठी परिवेसिउं समाढत्तो । तज्जइ तमंगुलीए परिवेसंतं अमरिसेणं ॥ १६ ॥ चिंतेइ तओ सिट्ठी धिरत्थु जीवाण भागसिद्धाणं । संवसणं गिहवासे एवंविहपरिभवावासो ॥ १७ ॥ धन्नो स गंगदत्तो जो चत्तक लत्तपुत्तगिहमित्तो । पत्तो संजमरज्जं मुणिसुव्वयसामिपासंमि ॥ १८ ॥ तइय च्चिय पव्वज्जं जइ गिण्हंतो अहंपि

ता इण्हिं । सम्मत्तमइलणाईपराभवं नेव पाविंतो ॥ १९ ॥ एयं विचिंतयंतो भुंजावित्ता गओ निवसगासं ।
विन्नविओ नरनाहो पव्वज्जमहं पवज्जामि ॥ २० ॥ ताहे से निब्बंधं रन्ना नाउ विसज्जिओ संतो । आपुच्छिउं
कुडुंबं तयाहिवत्ते ठविय पुत्तं ॥ २१ ॥ आढत्ताओ जिणवरगिहेसु अट्ठाहियाओ पवराओ । दीणाणाहाईणं पयट्टियं
विविहदाणं च ॥ २२ ॥ पूइज्जइ सिरिसंघो एत्थंतरयंमि सुव्वयजिणिंदो । तत्थेव पुरे पत्तो समोसढो बाहिरुज्जाणे
॥ २३ ॥ नाऊण जिणागमणं वंदणवडियाए आगओ सिट्ठी । नेगमसहस्ससहिओ धम्मं सोऊण पव्वइओ
॥ २४ ॥ थोवेणवि कालेणं जाओ सो बारसंगसुयधारी । संगहियविहियसिक्खो गीयत्थो परमसंविग्गो
॥ २५ ॥ संवच्छराइं बारस सामण्णं निक्कलंकमणुचरिउं । पच्छा विहियाणसणो कालं काऊण
सुहझाणो ॥ २६ ॥ दोसागरोवमाऊ, बत्तीसविमाणसयसहस्सवई । इंदत्तेणुववण्णो सोहम्मव-
डिंसयविमाणे ॥ २७ ॥ आवज्जियाभिओगियकम्मो अह गेरुओऽवि मरिऊण । अभिओगिय
देवेसुं जाओ तव्वाहणत्ताए ॥ २८ ॥ भणिओ य तन्निओगियसुरेहि लीलाए विलसमाणो उ । एरावणकरिरूवं,
विउव्व आरुहइ जेणिंदो ॥ २९ ॥ ताहे विभंगनाणेण जाणिउं एस सिट्ठिजीवुत्ति । न विउव्वइ करिरूवं, हढेण

भणिओ विउव्वइ य ॥ ३० ॥ दो कारविररूवाइं, सक्केणवि जाणिऊण से भावं। दो रूवाइं काउं पुढो २ तेसु आरूढो ३१ ॥ एवं च जत्तियाइं करेइ सो तत्तियाइं सक्कोऽवि । रूवाइं विउव्वेउं, आरोहइ तेसु सव्वेसुं ॥ ३२ ॥ तप्पसरभंजणत्थं च किंचि रोसागएण सक्केणं। वज्जेण हओ पच्छा ठिओ य साहावियगईए ॥ ३३ ॥ एवं च—सम्मत्तभावणाए कत्तियसिट्ठिस्स साहियं चरियं। सुयएविपसाएणं होउ सुणंतो थिरो धम्मे ॥ ३४ ॥ व्याख्यातं सम्यक्त्वभावनाद्वारं, तद्व्याख्यानाच्च समाप्तं नवधाऽपि द्वितीयं मलद्वारं सम्यक्त्वं, एतच्च चित्रशुद्धौ भित्तिशुद्धिवत्प्रासादस्थिरत्वे गर्त्तापूरकबन्धवन्नताङ्गीकारे मूलकारणम्, एतदन्तरेण तदभावात्, तथा चोक्तम्—" मूलं द्वारं प्रतिष्ठानमाधारो भाजनं निधिः । द्विषट्कस्यास्य धर्मस्य, सम्यक्त्वं परिकीर्त्तितम् ॥ १ ॥ " अतस्तदनन्तरोद्दिष्टस्य व्रतानीत्यस्य तृतीयद्वारस्यावसरः, एतच्च सामान्योद्दिष्टमपि 'श्राद्धानामनुग्रहार्थं वक्ष्य' इति सम्बन्धाऽन्यथानुपपत्तेः श्रावकव्रतविषयं, श्रावकव्रतानि पञ्चाणुव्रतत्रिगुणव्रतचतुःशिक्षाव्रतभेदभिन्नत्वाद्द्वादश, एतानि च मलोत्तरगुणरूपाणि सर्वाण्यपि क्रमेणाभिधातुं प्रथमं प्रथमाणुव्रतमेव नवभिर्द्वारैर्याद्दशादिभिर्विवरीषुः प्रथमद्वारं तावदाह—

दुन्नि सया तेयाला पाणइवाए पमाउ अट्ठविहो। पाणा चउराईया परिणामेऽट्ठुत्तरसयं च ॥ २१ ॥

प्रथमद्वारेण तावदाह—" दोन्न सया तेयाला " द्वे शते त्रिचत्वारिंशदधिके, भेदानामिति गम्यते, ' पाण-
इवाय ' त्ति प्राणाः—वक्ष्यमाणरूपास्तद्योगात् प्राणिन एव प्राणाः, दण्डयोगाद्दण्डः पुरुषो यथा, तेषामतिपातो—
विनाशः प्राणातिपातस्तस्मिन् प्राणातिपाते—प्राणातिपातविषये, स्वरूपमित्युपाहृतपदेन योजना, भणितसङ्ख्या
चेत्थमानीयते—पृथ्वीकायिकादयो वनस्पतिकायिकान्ताः पञ्च ५ जीवभेदाः, द्वीन्द्रियादिपञ्चेन्द्रियावसानैश्चतुर्भिः ४
सह नव ९, ते च मनोवाक्कायलक्षणेन करणत्रिकेण गुणिताः सप्तविंशतिः २७, भूयः करणकारणानुमतिरूपयोगत्रयता-
डिता एकाशीतिः ८१, पुनरतीतानागतवर्त्तमानकालत्रयाभ्यस्ता द्वे शते त्रिचत्वारिंशदधिके भवतः २४३।
तथा ' पमाओ अट्ठविहो ' त्ति प्रमाद्यति—मोक्षमार्गं प्रति शिथिलोद्यमो भवत्यनेन प्राणीति प्रमादः, किंवि-
शिष्टः ? ' अष्टविधः ' अष्टप्रकारः, तथा चोक्तम्—" अज्ञानं संशयश्चैव, मिथ्याज्ञानं तथैव च । रागद्वे-
षावनास्थानं, स्मृतो धर्मेष्वनादरः ॥ १ ॥ योगदुष्प्रणिधानं च, प्रमादोऽष्टविधः स्मृतः । तेन योगात्प्रमत्तः स्याद-
प्रमत्तस्ततोऽन्यथा ॥ २ ॥ " इति, अयमपि प्राणातिपाते स्वरूपमिति पूर्ववत्सम्बन्धः । ननु केऽमी
प्राणा यदतिपातविषयमेतत्स्वरूपं प्ररूप्यते, ? उच्यते, ' पाणा चउराईय ' त्ति 'प्राणाः' इन्द्रियादयः ' चतुरादयः '

चतुःप्रभृतयः, आदिशब्दात्षडादिपरिग्रहो, यथोक्तम्—" इंदियबलऊसासा पाणा चउ छच्च सत्त अट्ठेव । इगिविगलऽसण्णसण्णी नवदस [ ग्रन्थाग्रम् २५०० ] पाणा उ बोद्धव्वा ॥ १ ॥ " इति, परिणामे—चित्तादिपरिणातिविशेषे यदष्टोत्तरशतं, भङ्गकानामिति गम्यं, तच्च प्राणातिपाते स्वरूपमिति प्राग्वद्योगः, उद्दिष्टसङ्ख्या चैवं—संरम्भसमारम्भारम्भैस्त्रिभिर्मनोवाक्कायकरणकारणानुमतिनवकताडितैः सप्तविंशतिः २७, पुनः कषायगुणितैरष्टोत्तरं शतं, संरम्भादिस्वरूपं चैवं—प्राणातिपातादिसंकल्पः संरम्भः, तत्करणजनितः परितापः समारम्भः, तत्क्रियानिष्पत्तिश्चारम्भः, तदुक्तम्—" संकप्पो संरम्भो परितावकरो भवे समारंभो । आरम्भो उद्दवओ सुद्धनयाणं तु सव्वेसिं ॥ १ ॥ " स्यादेतद्—व्रतान्यत्र याद्दशादिद्वारैर्व्याख्यातुमुपक्रान्तानि, तेषु च प्रथमव्रतं प्राणातिपातपरिहारः, ततो याद्दशद्वारे तस्यैव स्वरूपं वक्तुमुचितं, न प्राणातिपातस्य, यतः प्राणातिपातः प्राणविनाशोऽभिधीयते, तत्परिहारस्तु तद्विरतिः, यदाह वाचकमुख्यः—" हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रत—( तत्त्वा० ७—१ ) " मिति, सत्यं, विषयविषयिणोरभेदोपचारादेतद्विषया निवृत्तिरप्येतच्छब्देनोपात्तेति न दोषः, एतच्चानपेक्षिताणुस्थूलविशेषस्य प्राणातिपातस्य स्वरूपाभिधानं

यतिश्रावकयोः सामान्येनैव स्वामित्वप्रदर्शनार्थं, निवृत्तिस्तु यथासम्भवं भाव्येति गाथार्थः ॥ २१ ॥ व्याख्यातं यादृशद्वारमधुना भेदद्वारस्यावसरस्तत्प्रतिपादनायाह—

**थूला सुहुमा जीवा संकप्पारंभजो य सो दुविहो ।**
**सवराह निरवराहो, साविक्खो तह य निरविक्खो ॥ २२ ॥**

'स्थूलाः' द्वीन्द्रियादयश्चक्षुरिन्द्रियग्राह्याः 'सूक्ष्माः' तद्विपरीता एकेंद्रियाः '**जीवाः**' प्राणिनो, द्विविधा भवन्तीतिशेषः, सूक्ष्मत्वं च सूक्ष्मदृष्टिगम्यतया न तु सूक्ष्मनामकर्मोदयेन, तद्गतामतिपातनासम्भवात्, स्वायुःक्षयेणैव तन्मरणाभ्युपगमात्, अनेन जीवद्वैविध्येनाश्रयाश्रयिणोरभेदोपचारात् प्राणातिपातो द्विविधः स्थूलः सूक्ष्मश्चेत्येतदुक्तं भवति, तेन प्राणातिपातभेदद्वारेऽपि जीवभेदाभिधानमदुष्टमेवेति सूत्रार्थः सूक्ष्मधिया भाव्यः, अन्यथापि प्राणातिपातद्वैविध्यमाह—'**संकप्पारंभओ य सो दुविहो**'त्ति सङ्कल्पश्च—मारयाम्येनं कुलिङ्गिनमित्येवं विकल्पः आरम्भश्चकृष्यादिरूपः सङ्कल्पारम्भौ ताभ्यां जातः सङ्कल्पारम्भजः, चशब्दः पूर्वापेक्षया समुच्चये, 'सः' पूर्वोक्तः स्थूलसूक्ष्मभेदेन द्विविधोऽपि प्रत्येकं द्विविध इति सम्बन्धः, यः सङ्कल्पजः सोऽपि द्विभेद इत्याह—सापराधो निरपराधः, '**सवराह**'त्ति

सूत्रत्वाल्लुप्तविभक्तिकं पदं, ततः सहापराधेन वर्त्तत इति सापराधः—प्रतिकूलकारी जीवस्तद्विषयो वधोऽपि सापराधः, पूर्वोक्तादेव हेतोर्निर्गतोऽपराधान्निरपराधः, शेषं प्राग्वत्, एष च सर्वोऽपि सापेक्षस्य कर्त्तुर्यदा भवति तदा सापेक्षो, निरपेक्षस्य तु निरपेक्षः, अत्र च श्रावकेण स्थूलप्राणातिपातस्य निवृत्तिं कुर्वता संकल्पजान्निरपराधान्निवर्त्तितव्यं, सापराधे तु गुरुलघ्वालोचनया सापेक्षक्रियया प्रवर्त्तितव्यं, न तु निरपेक्षता कार्या, आरम्भजे तु न नियमः, किन्तु तत्रापि यतनया प्रवर्त्तितव्यमिति गाथार्थः ॥ २१ ॥ गतं द्वितीयद्वारमिदानीं यथा जायते स्थूलप्राणातिपातविरति-रित्येतद्वारमुच्यते—

सम्मत्तंमिवि पत्ते बीयकसायाण उवसमखएणं ।
तव्विरईपरिणामो एवं सव्वाणवि वयाणं ॥ २२ ॥

'**सम्यक्त्वे**' सम्यग्दर्शने, अपिशब्दस्य भिन्नक्रमः सम्बन्धः, स च '**प्राप्तेऽपि**' लब्धेऽपि, अयमभि-प्रायः—अप्राप्तसम्यग्दर्शनस्य विरतिपरिणामो न जायत एव, अतः प्राप्तेऽपीत्युक्तं, '**द्वितीयकषायाणाम्**' अप्रत्याख्या-नाभिधेयानां '**उवसमखएणं**' ति प्राकृतत्वात्परनिपातः ततः क्षयोपशमेनेत्यर्थः, '**तद्विरतिपरिणामः**' प्राणा-

'एवं सव्वाणवि वयाणं'ति एवं उक्तरूपेण द्वितीयकषाय-
तिपातविरतेः परिणामो, जायत इति शेषः, प्राप्तिरित्यध्याहृतपदेन सम्बन्ध
क्षयोपशमलक्षणेन सर्वेषामपि—समस्तानामप्युक्तशेषाणां—मृषावादविरत्यादीनां,
इति गाथार्थः ॥ २३ ॥ उक्तं तृतीयद्वारमधुना चतुर्थमुच्यते——

पाणाइवायअनियत्तणंमि इहलोय परभवे दोसा ।
पइमारिया य इत्थं जत्तादमगो य दिट्ठंता ॥ २४ ॥

प्राणातिपातो—हिंसा तस्या अनिवर्त्तनमनिवृत्तिस्तस्मिन् प्राणातिपातानिवर्त्तने, इहलोकश्च परभवश्च इहलो-
कपरभवं, समाहारत्वादेकवचनं, तस्मिन् इहलोकपरभवे, यद्वा प्राकृतत्वाद्वचनव्यत्ययः—इहलोकपरभवयोः 'दोषा'
दूषणानि, भवन्तीति शेषः, अत्र च को दृष्टान्तः ? इति चेत् आह—पतिमारिका च 'अत्र' प्राणातिपातानिवर्त्तने
यात्राद्रमकश्च 'दृष्टान्तौ' उदाहरणे, चशब्दौ परस्परापेक्षया समुच्चये, इति गाथार्थः ॥ २५ ॥ भावार्थः कथान-
कगम्यः, तयोश्चाद्यं तावत्कथ्यते——

लाटदेशे भृगुकच्छपत्तने गङ्गाभिध एक उपाध्यायो बहुच्छात्रपाठको बभूव, भार्या तस्य नर्मदाभिधा तरुणी,

सा चान्यदा तमुक्तवती, यथा—वैश्वदेवपूजाकाले बलिप्रक्षेपं कुर्वन्तीं मां काका उपद्रवन्ति तत् मां तेभ्यो रक्षय, सोऽपि तस्याः कुटिलस्वभावतामजानानः छात्रान् अभाणीत्, यथा—प्रत्येकं भवद्भिर्भट्टिनी बलिविधानकाले काकेभ्यो वारकेण रक्षणीया येनैषा सुखेन तत्करोति, तथेति प्रतिपन्ने तैस्तथा गच्छत्सु दिवसेष्वन्यदा विदग्धच्छात्रस्य वारको जातः, तेन चिन्तितं—नेयमतिमुग्धा, किन्तु वैशिकमेतदस्याः, तदहमद्यतनमहोरात्रमस्या गत्यागती विलोकयामीति विचिन्त्य तयाऽलक्षित एव तद्व्यापारं निरीक्षितुमारेभे, यावद्विकालवेलायां घटं गृहीत्वोदकानयनाय नर्मदां प्रति प्रस्थिता, सोऽपि पृष्ठतो लग्नस्तच्चेष्टां विलोकयितुं, साऽपि तत्तीरमासाद्य कक्षाबन्धं विधाय घटमत्राङ्मुखं गृहीत्वा तरीतुमारब्धा, सोऽपि तयाऽविज्ञात एव तीर्त्वा परं तीरमापत् क्षणमात्रेण, साऽपि परतीरमागत्य तद्देशवर्त्तिन एकस्य तरुणगोपालस्य समीपं गत्वा चिरं रन्त्वा तथैवाऽऽयातुमारब्धा, अत्रान्तरे चौराः कुतोऽपि कुतीर्थादिविभागमनवगच्छन्तो नदीमवतीर्णाः सुंसुमारेण गृहीताः, ततस्तं नानाविधताडनाभिस्ताडयतोऽपि तेन तानविमुच्यमानानवलोक्य तयोक्तं—यथा भो भद्राः ! भवन्तः कुतीर्थावतीर्णाः सुंसुमारेण गृहीताः, न चायमेवंविध पृष्ठहननादिभिर्दूरमवसर्पति, किं न श्रुतः सुंसुमारग्रहो युष्माभिः ?, तदेनमक्ष्णोः कुञ्चत, ततस्तैस्तथा कृते दूरं

पलायितोऽसौ, तच्च छात्रेण रात्रिविलसितं सर्वं विज्ञाय काकरक्षणवेलायां विजने जाते—दिवा बिभेषि काकेभ्यो, रात्रौ तरसि नर्मदाम् । कुतीर्थानि च जानासि, नेत्रकुञ्चनकानि च ॥ १ ॥ इति पठता ज्ञापितं तस्याः, ततस्तया विज्ञाताऽहमनेनेति विचिन्त्योक्तं—भवादृशविदग्धाप्राप्त्येदमनुष्ठीयते, किं करोमि ? यथा तथा कालयापनां विदधामि, इतः प्रभृति तु त्वमेव मम प्राणनाथ इति गदितः, तेनोदितं—आः ! पापे ! किमुपाध्यायस्यापि न लज्जसे ?, तया चिन्तितं—अस्यैवं वदतोऽयमाशयः—उपाध्यायः कण्टकप्राय आवयोस्तदेनं व्यापादयेति स्वमत्या परिभाव्य रात्रौ सुखप्रसुप्तो व्यापादितः क्षुरिकया, बहूनि खण्डानि कृत्वा क्षिप्तो जरत्पिटिकायां, परिस्थापनार्थं च विभातप्रायायां रजन्यां पिटिकां मस्तके कृत्वा गताऽटव्यां, परिस्थापनवेलायां च कुलदेवतया मस्तक एव स्तम्भिता पिटिका, ततो लज्जावशान्नगरमागन्तुमशक्नुवती कतिचिद्दिनानि तत्रैव निनाय, अन्यदा तु बाढं गाढबुभुक्षया दोदूयमाना लज्जां विहाय पत्तनं प्रविष्टा, भिक्षार्थं च गृहे २ ददत भिक्षां पतिमारिकाया इति प्रलपन्ती रुदती च पर्यटितुमारब्धा, लज्जादयश्च गुणास्तावदेव प्राणिनां, प्रसर्पन्ति यावद्बुभुक्षा पिशाचीव नोच्छलति, तथा चोक्तम्—

" रूवं सिरि सोहग्गं, नाणं माणं परक्कमं सत्तं । लज्जा इंदियविसओ, नवरि य एक्का छुहा हणइ ॥ १ ॥ "

कियताऽपि च कालेन तस्मिन् कर्मणि क्षयोपशमं गते साध्वीः संमुखीर्दृष्ट्वा चिन्तितमनया—धन्याः खल्वेता विरक्तकामभोगा याः सर्वसावद्यनिवृत्तिं गृहीत्वा प्रकृष्टसन्तोषसुखतृप्तास्तिष्ठन्ति, मया पुनः पापिष्ठया इहपरलोकविरुद्धमीदृशमनुष्ठितं यन्न त्यक्तुं न वा ग्रहीतुं शक्यते, पादयोः पतितुकामायाश्च पिटिका भूमौ निपतितेति ॥

द्वितीयकथानकम्—राजगृहनगरे कश्चिद्द्रमकः प्रतिवसति स्म, अन्यदा च तत्र कस्मिंश्चिदुत्सवे लोको वैभारगिरिवरनितम्बवर्तिनि विविधवनखण्डमण्डिते सर्वर्तुकोद्याने क्रीडानिमित्तमुद्यानिकायां निर्गतः, स च द्रमकः प्रहरद्वयप्रमाणे दिवसे भिक्षार्थं नगरमेव प्रविष्टः, उद्यानिकागमनव्यतिकरं लोकस्याजानानः प्रतिगृहं पर्यटितुमारेभे, न कश्चिद्भिक्षां प्रयच्छति, वक्ति च गृहरक्षपालादिः—यथोद्यानं गतः सर्वोऽपि लोकः खाद्यपेयचूष्यलेह्यादि गृहीत्वा अद्य, ततस्तत्रैव गत्वा याचस्वेत्युक्तो गत उद्यानं यावत्तावत्तत्र सकलोऽपि लोको भुक्त्वा प्रेक्षणकादिव्यग्रस्तिष्ठति स्म, न तस्य कश्चिदुत्तरमपि ददाति, ततोऽसौ बुभुक्षितत्वादतिक्रुद्धः पर्वतस्योत्तुङ्गशृङ्गमारुह्य लोकस्य हननार्थमेकस्याः शिलाया अधः खनित्वा कोपाद्विस्मृतात्मा तदधःस्थित एव तां पातयितुमारब्धः, तया च पतन्त्या स एव चूर्णितः, लोकश्च प्रलयकालघटितघटनावनघण्टाघोरघोषानुकारितदीयखटखटारवत्रासित

इतस्ततो नष्टः, स च रौद्रध्यानो मृत्वा नरके दुःखभाजनं संवृत्तः ॥ एवं च यथाऽसौ पतिमारिका द्रमकश्च प्राणातिपातस्यानिवृत्तौ दुःखभाजनतां गतौ इहपरलोकयोः एवमन्येऽपीति ॥ अधुना पञ्चमं गुणद्वारमुच्यते —

जे पुण वहविरइजुया उभओ लोगेऽवि तेसि कल्लाणं ।
जह सूवगहियदारग दामन्नगमाइयाणं च ॥ २५ ॥

ये पुनः प्राणिनो ' वधविरतियुताः ' प्राणातिपातनिवृत्तिसमन्विताः, उभयोरपि लोकयोस्तेषां कल्याणमिति सम्बन्धः ' लोगेऽवीति ' अपिशब्दस्य भिन्नक्रमत्वात् प्राकृतत्वेन वचनव्यत्ययाच्च, यथाशब्द उपप्रदर्शने, ' सूव 'त्ति पदावयवेन पदसमुदायापेक्षणात्सूपकारगृहीतदारकस्य, सूत्रत्वाल्लुप्तषष्ठीकं पदं, न केवलमस्य दामन्नकादीनां च, मकारोऽलाक्षणिकश्चकारः समुच्चये, आदिशब्दात्क्षेमादीनां चेति गाथासङ्क्षेपार्थः । विस्तरार्थस्तु कथानकेभ्योऽवसेयः, तानि चामूनि क्रमेणोच्यन्ते—

पुरा धान्यपुरग्रामे महासमृद्धिमतो माणिभद्रश्रावकस्य प्रशमादिगुणगणालङ्कृतो निष्कलङ्कसम्यक्त्वो गृहीताणुव्रतः स्वभ्यस्तसमयो यथार्थाभिधानो धर्मरुचिस्तनयः, असौ कदाचिन्निजवयस्यपरिवृतो ग्रामाद्बहिर्निर्गतः, स

च कुतोऽपि समागतैश्चौरैरपहृत्योज्जयनीं नीतः, विक्रीतो राजसूपकारपार्श्वे, नीतः स्वशालां, भणितश्च—लावकादीनुच्छासय, तेनापि ते मुक्ताः, ततोऽसौ सूपकारेण बहु विरूपं भणितः पुनर्नैतत्करणीयमित्युक्त्वा धृतश्च, यावद्द्वितीयदिने तित्तिरादीन् मारयेत्युक्तो बभाण—नाहं मारयिष्यामि, ततो दुर्वचनैरपि भणितो यावन्नेच्छति मारयितुं तावत्कोपावेशविवशेन सूपकारेण ताडितो गाढं, ताड्यमानश्चारटितुमारेभे, निकटगवाक्षवर्त्तिना च राज्ञा तमारटन्तमाकर्ण्य पृष्टं—किमेष रारटीति ?, तत एकेन पुरुषेण कथितं—यथाऽसौ सूपकारेण क्रयक्रीतोऽपि तित्तिरादीन् हन्तुमाज्ञापितोऽपि न हन्तुमिच्छति, राज्ञोक्तं—पश्याम्येनमानयत, आनीतश्च राजसमीपं, पतितः पादयोः, भणितो राज्ञा—किमिति भो ! लावकादीन्न मारयसि ?, तेनोक्तं—देव ! जीववधः प्रत्याख्यातो मया, राज्ञोक्तं—स्वायत्तस्य प्रत्याख्यानं भवति, त्वं तु परायत्तः, तेनोक्तं—किं परः करिष्यति मे ?, ततो राज्ञा तत्साहसपरीक्षार्थमलीकभृकुटिभीषणं ललाटपट्टमाधायोक्ताः सन्निहितपुरुषाः—अरे रे ! कसाप्रहारैस्ताडयतैनमलीकप्रत्याख्यानावलेपवाहिनं, तथाऽपि नेच्छति, ततो राज्ञाऽऽनायितो दुष्टगजः, तेन भापयितुमारब्धः, ततोऽसौ वक्ति——वरमहमेको मृतो, न पुनरनेके मारिताः, यत एवं श्रूयते——" एक्कस्स कए नियजीवियस्स बहुयाओ जीवकोडीओ । दुक्खे

ठवंति जे केइ ताणं किं सासयं जीयं ? ॥ १ ॥ ” ततो राज्ञोक्तम्—भो भो ! सूपकार ! ममैवैष समर्प्यतां,
ततस्तेन यदादिशति देव इत्युक्त्वा मुक्तो नृपसमीपेऽसौ, राज्ञापि—एवंविधाभिग्रहाग्रहवानेष योग्योऽङ्गरक्षाकर्म-
णीति विभाव्य लक्षपाकतैलेनाभ्यज्य स्नापयित्वा अग्रासने च भोजयित्वा शरीररक्षाकर्मणि नियुक्तः, समृद्धदेशा-
धिपतिश्च विहितोऽसौ, प्रभूतकालं पञ्चप्रकारं जीवलोकसारं विषयसुखमनुभूय तथाविधाचार्यसमीपेऽन्यदा धर्म-
माकर्ण्य प्रव्रजितः । प्राणिवधनिवृत्तावेवं गुणोऽस्य दर्शितः ।

दामनककथानकं च—कश्चिन्मत्स्यबन्धो जालेन मत्स्यानादाय तथाविधजलाशयान्माघमासविकालवेलायामु-
त्तीर्णो निकटवर्त्तिनं श्रमणकमेकमप्रावरणमातापनां कुर्वाणमवलोक्यानुकम्पापरीतान्तःकरणो जालेनावेष्टय गतः
स्वगृहं, रजन्यां च पलालसंस्तारकसंनिविष्टोऽन्तिकोपविष्टाभीष्टविशिष्टभार्यया परिष्वक्तो ज्वलज्ज्वालाजालजटिल-
ज्वलने निकटवर्त्तिन्यपि तुहिनकरनिकरवाहिनि वहति गन्धवाहे गाढं शीतवेदनाव्यथ्यमानकाययष्टिः
कथं तथाविधनिरावरणस्थानवर्त्तिना महानुभावेन तेन तपस्विनेयमतिदुःसहा शीतपीडा विषोढव्येति
पुनः पुनश्चिन्तयामास, कथञ्चिच्च प्रभातप्रायायां रात्रौ समुत्थाय गतः साधुसमीपं यावद् दृष्टस्तथैवोर्ध्वस्था-

नस्थो मुनिः, भक्तिभरनिर्भरमनाः पतितः पादयोरुत्सारितं जालं, अत्रान्तरे विदधानः कमलवनविकाशमसमप्रभाप्राग्भारेण प्रसृततिमिररिपुविनाशं चाहिमरश्मिरुदयगिरिशिखरमारुरोह, साधुरपि समुत्सारयामास कायोत्सर्गं, धर्मलाभयित्वा च प्रारब्धा तस्य धर्मदेशना, प्रतिबुद्धस्तथाविधक्षयोपशमवशेन, परिणता मनस्यङ्गाङ्गीभावेन जीवदया, प्रकाशितं धीवरेण धीवरत्वं, ग्रहीतुं प्रवृत्तः प्राणिवधनिवृत्तिं, साधुनोक्तो—यथा सौम्य ! सुपर्यालोचितं कृत्वा गृह्यतां, न खल्वेवमेव गृहीतोऽभिग्रहः पालयितुं शक्यते, तेनोक्तं—पर्यालोचितमेवैतत्, न खल्वत्र स्ववशीकृतचेतसां किञ्चिद्दुष्करमस्ति, ततस्तन्निर्बन्धं साधुनाऽवबुध्य दत्तो जीववधनिवृत्त्यभिग्रहः, छित्त्वा जालं गतः स्वगृहं, अवगतवृत्तान्ता च ततस्तदुपरि रटितुमारब्धा तत्पत्नी, पुनः २ प्रेर्यमाणश्चावोचत्—भद्रे ! किमित्येवं पुनः पुना रारटीषि ?, न मया जीवता मत्स्यग्रहणजीविका विधेया, यत उक्तम्—" गच्छद्भिरपि प्राणैर्बुद्धिमता तन्न युज्यते कर्त्तुम् । उभयत्र यद्विरुद्धं दीर्घं भवभ्रमणकृदपथ्यम् ॥ १ ॥ " अत्रान्तरे तदीयमहेलाकलकलाकर्णनान्मत्स्यपाटकवर्ती लोकः समस्तोऽपि मिलितः, तेनोक्तं—भो भो अस्मदीयकुलोत्पन्नोऽप्यतीव दयालुर्वर्त्तसे?, न खलु जीवरक्षयाऽस्माकं धात्रा निर्वाहश्चिन्तितः, तत्प्रवर्त्तस्व जालमादायास्माभिः सह स्वयं नदीतटाभिमुखं

ततस्तदीयकर्कशवचनताडितो गतो नदीतटं, समर्पितं तैर्जालं,
मत्स्यग्रहणाय, अन्यथा गले गृहीत्वाऽपि त्वां नेष्यामः, ततस्तदीयकर्कशवचनताडितो गतो नदीतटं, समर्पितं तैर्जालं, केव-
प्रक्षिप्तं जलमध्ये, मत्स्यपरिपूर्णमालोक्य सशूकमनसा जातानुतापेन पुनर्मुक्तं, निःसृताः सर्वेऽपि ततो मत्स्याः, एवं
लमेकस्य पक्षो भग्नः, ततः पुनरपि तैर्बलात्कारेण प्रेर्यमाणो द्वितीयवारां प्रक्षिप्तवान्, तथैव दृष्ट्वा पुनर्मुक्तवाँश्च, यत्किमपि
तृतीयवारामपि, ततो निरपेक्षीभूय तेनोक्तं—भो ! भो! स्वजनाः ! मयैतन्निर्घृणं कर्म प्राणात्ययेऽपि न कर्त्तव्यं, किय-
भवद्भ्यो रोचते तत्कुरुत, ततस्तेऽपि तन्निर्बन्धमवबुध्य तूष्णीं स्थिताः, असावपि तां प्राणातिपातविरतिप्रातिज्ञां भवितव्यतानियोगेन
न्तमपि कालमनुपाल्यानुकम्पागुणेन निवर्त्तितमनुष्यायुष्को मृत्वा राजगृहे नगरे श्रेष्ठिपुत्रः संजातः, पूर्वजन्मपरि-
च तत्कुलं मारिदोषेणोच्छादितं,लोकेन च मारिसञ्चारभीतेन तद्गृहं सर्वतो वृत्या वेष्टितं, असौ च बालकः सुप्तं प्रमत्तं
पालितजीवदयाव्रतानुभावान्न मृतः, तथा चोक्तम्—"रणे वने शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा । सारमेयच्छिद्रमवलोक्य
विषमस्थितं वा, रक्षन्ति पुण्यानि पुराकृतानि ॥ १ ॥" अन्यदा च गृहपरिसरे परिसरन् अन्यदा च
निर्गतः, तस्मिन्नेव पत्तने गृहे २ भिक्षाटनं कुर्वाणो वृद्धिं गतः, हट्टैकदेशेषु च रात्रौ स्वापं विधत्ते, व्रजन्
समुद्रदत्तवणिजा स्वकीयहट्टस्थितेन शीतकाले तथाविधप्रावरणाविकलस्तेनैव पथा शीताभिभूतदेहो

वीक्षितः; ततोऽनुकम्पापरीतचेतसा स्वगृहं नीतः, कर्मकरवृत्त्या धृतश्च, अपरेद्युः साधुसङ्घाटकस्तद्गृहं भिक्षार्थमागतः, तत्रैकेन साधुना द्वितीयस्य कथितं—यथाऽयं द्रमकोऽस्य गृहस्य स्वामी भविष्यति, तच्च वचः समुद्रदत्तश्रेष्ठिना कटकान्तारितेनाकर्णितं, चिन्तितं च—कथं मम पुत्रादयो न स्वामिनो भविष्यन्ति ?, अयं मम गृहस्य नायको भविता ?, तद् यावदद्यापि मुनिवचनं नावितथं संपद्यते तावद्व्यापादयामि केनचिदुपायेनैन-मिति विचिन्त्याकारितः पूर्वपरिचितश्चण्डाल एको, दानसन्मानादिनाऽऽगृह्यैवैनमाज्ञापितवांस्तद्व्यापादनं प्रति, अभ्युपगतमनेन, अन्यदा हट्टमार्गे मायया याचितो द्रम्मानसौ चण्डालः श्रेष्ठिना, तेनोक्तम्—इदानीं मम पार्श्वे न सन्ति द्रम्माः, यदि कञ्चिन्मदीयस्थानं प्रेषयसि तदा प्रयच्छामि, ततः श्रेष्ठिना दामन्नक एव पार्श्ववर्त्ती प्रहितः; गतस्तेन सहितः, अनेन चान्तावसायिना चण्डालपाटकाद्दूरतरं नीत्वा तत्पुण्यानुभावसंजनितकरुणेन श्रेष्ठ्यादिष्ट-मारणव्यतिकरं बोधयित्वा भणितः—यदि त्वमितो दूरमपक्रामसि तदा भवतोऽङ्गुलीं छित्त्वा श्रेष्ठिनः साभि-ज्ञानदर्शनार्थं त्वां जीवन्तं मुञ्चामि, अन्यथाऽवश्यं मारयामीत्युक्तो भीतभीतोऽसौ जजल्प—मुञ्च मां यदा-दिशसि तत्करोमि, प्रतिपन्ने गृहीत्वाऽङ्गुलीं मुक्तोऽसौ, गतो मरणभयभीतोऽज्ञातचर्यया तस्यैव श्रेष्ठिनो

चण्डालेनापि दर्शिता तदङ्गुली श्रेष्ठिनः, निराकुलचित्तः
गोकुलं, स्थितस्तत्र तत्रेह एव वत्सपालकवृत्त्या, विकालवेलायामश्वादिचतुष्पदानवलोकयन् वत्सरूपैः सहागच्छन्तं
संवृत्तः श्रेष्ठी, गतोऽन्यदा गोकुलं
ददर्श दामन्नकम्, अचिन्तयच्च—कथमेष दामन्नको दृश्यते ?, अनुकूलवचनैराभाषितः प्रत्यायितश्च—
यथा द्रम्मलोभेन तेनैतत्कृतं न मदीयं मनोऽपीदृशकर्मसु प्रवर्त्तते, तत्कथय निःशङ्कं तदीयवृत्तान्तं,
ततः कथितोऽनेन, चिन्तयामास श्रेष्ठी—गाढबद्धपक्षपातो विधिर्दामनके, कथमन्यथैवं मारितोऽपि जीवतीति, तत्किं
सत्यमेव मुनिवचनं भविष्यति ?, अथवा भवतु किञ्चित्, 'अनिर्वेदः श्रियो मूल'मिति जनवादः, तदन्यमेव मारणो-
पायमधुना विरचयामीति विचिन्त्य लिखितो निजपुत्रस्य सागरदत्तस्य नाम्ना लेखः, विभातप्रायायां रजन्यां लेखमर्प-
यित्वा प्रहितो दामनको राजगृहाभिमुखं, प्राप्तोऽसौ प्रहरद्वयसमये तदासन्नवर्त्युद्यानं, मार्गश्रमखिन्नश्च गले लेखं
बद्ध्वा तत्रैव बहलतरच्छायपादपस्याधः प्रसुप्तः, अत्रान्तरे भवितव्यतानियोगेन तस्यैव श्रेष्ठिनो दुहिता सखीजन-
सहिता तदैव क्रीडानिमित्तमुद्यानमागता, दृष्टः पादपतलप्रसुप्तः स्वर्ग इव सलेखो दामनकः प्रत्यभिज्ञातश्च, तथैवा-
जाग्रतो ग्रन्थिमुन्मोच्य शनैर्गृहीतो लेखः सागरदत्तनाम तद्बहिर्विलोक्य, अतिचपलतयोद्वेष्ट्य वाचितश्च, यावत्तत्र

लिखितम् 'अधौतपादस्यास्य विषं दातव्य'मिति, ततोऽसौ तमेवानुकम्पापरेण चेतसा निर्निमेषया दृशा विलोकयितुमारब्धा, चिन्तितवती च—ननु किमनेन वराकेणातिदारुणं वैरकारणमनुष्ठितं येन तातेन विषं दापितमस्य, एवं च तं पुनः पुनर्निर्वर्णयन्त्या तदीयाङ्गप्रत्यङ्गनिरीक्षणादुपजातगाढानुरागया समादाय नयनकज्जलं नखशुक्त्या विषा दातव्येति विधाय भूयः संवर्त्तितो लेखस्तथैव गले संबद्धश्च, क्षणमात्रं तत्र च क्रीडित्वा सा गता गृहं, सोऽपि क्षणान्तरे प्रतिबुद्धः समुत्थाय ततो गतः सागरदत्तसमीपं, समर्पितो लेखः, पितुर्बहुमानेन तेनापि सप्रश्रयमादाय निवेशितः शिरसि, उन्मोच्य वाचितश्च, यावदधौतपादस्य विषा दातव्येति, विषेति तस्या एव कन्याया नाम, ततोऽसाववधारितलेखाभिप्रायो 'गुर्वादिष्टं न विकल्पये' दिति वचनार्थमनुस्मरन् गत उपाध्यायपार्श्वे, पृष्टो विवाहलग्नशुद्धिं, असावप्यचिरात्परिभाव्य अद्यैवार्द्धरात्रेऽनयोर्लग्नशुद्धिरन्यदा तु वर्षद्वयेनेत्यवादीत्, ततः सागरदत्तोऽचिन्तयत्—इतः प्राप्तवरा विषा इतश्चातिनिकटमेतल्लग्नमन्यच्च दूरे तत्किमुचितमिदानीम् ?, अथवा यद्भवति तद् भवतु आराध्यते तावल्लग्नमिति विचिन्त्य गतः स्वगृहं, प्राप्तेऽर्द्धरात्रे लग्नवेलायां निर्वर्त्तितो गन्धर्वविवाहः, प्रभाते च समुद्गते मयूखमालिनि समागतः श्रेष्ठी गोकुलतो यावत्पश्यति

दामनकं नवीनानुपहतनिर्मोकधवलदुकूलपरिधानम्, अभ्युत्थितोऽनेनाभिवन्दितश्च, पृष्टः श्रेष्ठिना तनूजस्तद्व्यतिकरः, कथितस्तेन स लेखादिवृत्तान्तः, ततश्चेतसा सखेदोऽप्यदर्शितमुखविकारः साधु पुत्र ! कृतमिति प्रतिपाद्य चित्रशालिकावार्त्तिनि पर्यङ्कैकदेशे समुपविश्याचिन्तयत्—अहो ! विजयी कर्मव्यवहारः, प्राणिनां यस्मिन्ननुकूलेऽपाया अप्युपाया भवन्ति, विपदोऽपि सम्पदः संपद्यन्ते, तदिदं सत्यमेव संजातं यदुक्तं केनचित्—" अन्यथैव विधीयन्ते, पुरुषेण मनोरथाः । दैवेन प्राप्तिसद्भावात्, कार्याणां गतिरन्यथा ॥ १ ॥ " तदिदानीं नान्यथा मुनिभाषितमिति संभाव्यते, भवतु, तथाऽपि प्रारब्धाभिलषितार्थविषये पुरुषेण तदसिद्धावपि न विषादवता भाव्यं, प्रत्युत प्रयत्नः करणीयः, यदुक्तम्—" प्रारभ्यते न खलु विघ्नभयेन नीचैः, प्रारभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः, प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ १॥ " इत्यालोच्य समाहूता पत्नी, कथितं तदग्रे—यथा मया कुलदेवताया उपयाचितमेवं प्रतिपन्नमास्ते, यथा—यो मदीयां दुहितरं परिणेष्यति स एकाकी समागत्य गृहीतबलिपुष्पपटलकस्त्वां पूजयिष्यति, तदद्यापि कालवेलायां भगवत्याः पूजानिमित्तं जामाता यास्यति, ततो भवत्या सकलं तद्योग्यबलिपुष्पादिकं प्रगुणीकृत्य धरणीयमित्यभिधाय स्वयं गतः श्रेष्ठी पूर्वपरिचितस्यान्यस्य चण्डालस्य

पार्श्वे, विधाय महान्तमुपचारं कारितस्तद्वधाभ्युपगमं, समागतौ गृहं, अस्तगिरिशिखराभिमुखं प्रस्थिते च चक्रवाकबन्धौ दिनकरे बलिपटलकहस्तः प्रेषितो देवतार्चनव्याजेन नगरदूरवर्त्ति चण्डिकायतनं, गच्छंश्च हट्टपथेन दृष्टः सागरदत्तेन हट्टव्यवस्थितेन, आभाषितश्च—क्वोच्चलित एकक एव अस्यामवेलायां ?, तेनोक्तं—चण्डिकापूजनार्थं श्वशुरेण प्रहितः, ततः किञ्चित्कोपमादर्श्योक्तम्—अहो ! शोभना वेला देवतार्चनस्य, अहो तातस्य बुद्धिकौशल-मित्याभिधाय तमेव विपणावुपवेश्य स्वयं गृहीतबलिपटलको यावद्देवतार्चनं विधाय गच्छामि तावत्क्षणमात्रमत्रैव प्रतीक्षणीयमित्यभिधाय जगाम यममुखमिव चाण्डिकायतनाभिमुखं, ततस्तत्प्रदेशवर्त्तिना सव्यवधानदेशानुपलक्ष्य-माणेन लक्ष्यवेधिना चण्डालेनाऽऽकर्णाकृष्टधनुषा शरेण विद्धः, आः ! केन पापेनाकारणवैरिणेदमनुष्ठितमिति ब्रुवाणः पतितो भूमौ, मिलितस्तदासन्नवर्त्ती लोकः, पारम्पर्येण समाकर्णितं समुद्रदत्तवणिजा तदीयं मरणं, अकरुणहृदयस्तुष्टश्चित्तेन, तथाऽपि लोकापवादभयात् हा ! किमेतज्जातमिति ब्रुवाणो निर्गतो गेहात्, गच्छता च दृष्टो हट्टोपविष्टो दामन्नकः, पृष्टश्च—क्व गतः सागरदत्तः ?, कथं च त्वमत्र स्थितः ?, तेनोदितं—मम (स,)बलात्कारेण गतश्चण्डिकापूजनार्थमहं चात्रैव धृतः, ततस्तद्वचः श्रवणविदारणमाकर्ण्य हा हतो मन्दभाग्यो

यन्निमित्तो मयैष दामन्नकवधश्चिन्तितः स एव मम पुत्रो विधात्रा प्रतिकूलकारिणा हतः, अहो ! तदेतदाख्यानकं जातं—" यच्चिन्त्यते परस्य तदुपैति स्वस्ये " त्येवं चिन्ताकुलो झगिति समागतहृदयसंघट्टः पतितो भूमौ, पापकर्मा खल्वेषोऽपापे पापं चिन्तयतीत्येवं संजातरोषैः परित्यक्तः प्राणैः, सपुत्रः श्रेष्ठी मृतो, न च तदन्वयेऽन्योऽस्तीति श्रुतं राज्ञा, ततो जामाता दामनक एव भवत्वस्य गृहसारस्य स्वामीति परिभाव्य स्थापितः स एव श्रेष्ठिपदे, गच्छत्सु दिवसेषु कियत्स्वपि स्वभावानुरक्तया पत्न्या कस्मिँश्चिदवसरे कथितो लेखादिव्यतिकरः, ततः शेषं स्वमत्यैव वितर्कितं यथा सर्वमेतन्मद्वधावबद्धबुद्धिना श्रेष्ठिना कृतमिति । अन्यदा तु समुद्रदत्तवणिजा यानि पूर्वं पारेसमुद्रं प्रेषितान्यभूवन् प्रवहणानि तानि तदीयपुण्योदयाकृष्टानि विशिष्टभाण्डपरिपूर्णानि समागतानि, वर्द्धापितः समागत्यैकपुरुषेण, दत्तं पारितोषिकं, चलितस्तद्दर्शननिमित्तं, अर्द्धपथे नटप्रेक्षणकमद्राक्षीत्, तत्र च प्रस्तावे गीता नवगीतगीतिका, यथा—" अणुपुंखमावहंतावि अणत्था तस्स बहुगुणा हुंति । सुहदुक्खकच्छपुडओ, जस्स कयंतो वहइ पक्खं ॥ १ ॥ " तत् श्रुत्वा तेन सुवर्णलक्षेण प्रसादं भाणयित्वा भणितो नटः—पुनः पठ, पाठावसाने द्वितीयलक्षं प्रसादीकृतं, एवं यावत् तृतीयमपि, अत्रान्तरे वणिग्जनासंभाव्यमानमहादानप्रवृत्तिं जनपरम्परया विज्ञाय राज्ञा द्वितीं-

यदिवसे समाहूय पृष्टो दामन्नकः—किमर्थं लक्षत्रयदानं ?, किं परोपार्जितं वित्तं सुदेयं भवतीति हेतोः ?, किं वा प्रेक्षापूर्वकारितयेति, तेनोक्तं—देव ! विज्ञापयामि, प्रेक्षापूर्वकारितयेति मम मतिः, यतो यथा कथञ्चिदपि निजप्रस्तावागतां पठता गाथां नटेन स्मृतिपथमानीतो मे स्वयमनुभूतो व्यतिकर इत्यभिधाय सविस्तरं चण्डालघातप्रभृतिवृत्तान्तवर्णनं गाथाश्रवणावसानं कृतं नरपतेः पुरतः, ततः सन्मानितो राज्ञा विसर्जितश्च गतः स्वगृहं विशिष्टभोगभागी संवृत्त इति, एवं च प्राणातिपातविरतानामिह परत्र च दृष्टान्तद्वयानुसारेण गुणगणं परिभाव्य तन्निवृत्तौ भव्यजनैर्यत्न आस्थेय इति गाथागर्भार्थः ॥ २४ ॥ आदिशब्दोपात्तं तु क्षेमकथानकं कथ्यते—

पाटलिपुत्रे नगरे जितशत्रू राजा, तस्य क्षेमो नामामात्यः प्रधानश्रावकः, स च राज्ञोऽतिप्रिय इति कृत्वाऽन्येषां सामन्तादीनामप्रियः, ते च तस्य विनाशमिच्छन्तोऽन्यदा क्षेमपुरुषान् दानसन्मानादिभिर्वशीकृत्य राज्ञोऽभिमरत्वेन व्यापारितवन्तो, राजपुरुषैश्च प्राप्ता वयं क्षेमामात्यप्रयुक्ता इति ते भणितवन्तः, ततः समानायितः क्षेमो राज्ञा, भणितश्च—यथा त्वमप्येवमक्षेमंकरः ?, तेनोदितं—देव ! कीटिकाया अप्यहं नाक्षेमावहः, किं पुनर्भवतः ?, तथाऽपि राज्ञा वध्य आज्ञापितो, यश्च तत्रान्योऽपि वध्य आज्ञाप्यते स तस्यैव

राज्ञोऽशोकवनिकायामनेकपद्मिनीपत्रसंछन्ना विचित्रकमलकुवलयकुमुदकह्लारोपशोभिता मकरादिरौद्रजलचर-दुरवगाहा वापी समस्ति ततः पद्मान्यानाय्यते, तत्र प्रविष्टश्च मकरग्रहादिभिर्ग्रस्यते इति क्षेमोऽपि तदेवादिष्टः, ततो गतोऽसावनेककौतुकार्थिजनपरिवृतस्तत्र, पठित्वा पञ्चपरमेष्ठिनमस्कारं भावसारमवदत सकलजनप्रत्यक्षं—यथा यद्यहं राज्ञो द्रोहकारी घातकान् व्यापारयामास तदा मामेते मकरादयो भक्षयन्तु, नो चेद्देवता मे सान्निध्यं विधायैतेभ्यो रक्षतु, ततः साकारमनशनं गृहीत्वा प्रविष्टोऽगाधजलमध्यं, देवतासान्निध्येन च महान्तं मकरमेकमादाय तत्पृष्ठमारूढो बहूनि फलानि गृहीत्वोत्तीर्णः, समर्पितवांश्च राज्ञः, तुष्टेन चानुतापवता तेन क्षमित आलिङ्गितश्च, प्रतिपक्षनिग्रहपुरस्सरं प्रवेशितश्च महाविभूत्या नगरं, भणितश्च—कं ते वरं ददामि ?, क्षेमेणापि संवेगाद्यागतमानसेन निवार्यमाणेनापि वृता प्रव्रज्या, देवपूजादिपूर्वकं तथाविधाचार्य समीपे प्रव्रजितश्चेति प्रथमव्रतपालने गुणः ॥ उक्तं गुणद्वारमधुना यतनोच्यते—

पाणाइवाएँ जयणा दारुयधन्नाइउदगविसयाओ ।
तसजीवे रक्खंतो विहिणा गमणाइयं कुज्जा ॥ २६ ॥

'पाणाइवाए'त्ति सप्तम्येकवचनान्तत्वेऽपि लघुत्वं ' एओयारा बिंदू पयनिहणे हुन्ति लहुयाइं ' इति प्राकृतलक्षणेन, प्राणातिपाते—वधनिवृत्तौ, कृतायामिति गम्यते,यतना—रागद्वेषरहितोऽशठव्यापारः,तदुक्तम्—" रागद्दोसविउत्तो जोगो असढस्स होइ जयणा उ । रागद्दोसाणुगओ,जो जोगो सा अजयणा उ ॥१॥ " सा कर्त्तव्या भवतीति शेषः, किंविषया ? इत्याह—'दारुये'त्यादि, दारूण्येव दारुकाणि—काष्ठानि धान्यं—शाल्यादि आदिर्येषां त्रपुषादिफलशाकपत्रादीनां तानि धान्यादीनि उदकं—जलमेषां द्वन्द्वे विषयशब्देन बहुव्रीहावेतद्विषयेत्यर्थः, तत्र दारुविषया तावदियमित्थं—शुषिरादिकाष्ठपरिहारेण कुठारादिविपाटितस्य दारुणश्चक्षुषा निरीक्ष्य भूमौ प्रस्फोटच च रन्धनादिनिमित्तमग्नौ प्रक्षेपणं, धान्यादिजलविषया तु कीटसंसक्तादित्यागतः परिमितवस्त्रपूतजलादानादितश्च यथाक्रममवगन्तव्या, एतदेवोपदेशद्वारेणाह—' तसे ' त्यादि,त्रस्यन्तीति त्रसाः—त्रसनामकर्मोदयवर्तिनो द्वीन्द्रियादयस्ते च ते जीवाश्चत्रसजीवास्तान् ' रक्षन् ' पालयन् ' विधिना ' सिद्धान्तनिर्दिष्टविधानेन गमनं—चङ्क्रमणं तदादिर्यस्यावस्थानादेः तत ' कुर्यात् ' विदध्यात्, उपलक्षणं चैतत्स्थावराणामपि यथासंभवं रक्षां कुर्वंश्चरेद्, यतो यतनाफलम्—" जयणा उ धम्मजणणी, जयणा धम्मस्स पालणी चेव । तव्वुड्ढिकरी जयणा, एगंतसुहावहा जयणा ॥ १ ॥ जयणाए वट्ट-

माणो जीवो सम्मत्तनाणचरणाणं। सब्भावोहासेवणभावेणाराहगो भणिओ ॥ २ ॥ ” इति गाथार्थः ॥ २५ ॥ व्याख्यातं यतनाद्वारमिदानीमतिचारद्वारमुच्यते—

बंधवहछविच्छेयं अइभार णिरोह भत्तपाणेसु ।
पढमवयस्सऽइयारे, कोहाईहिं ण उ करेज्जा ॥ २७ ॥

बन्धश्च—रज्जुदामकादिभिः संयमनं वधश्च—कसादिभिर्हननं छविः—त्वक् तद्योगाच्छरीरमपि छविस्तस्याश्छेदः असिपुत्रिकादिभिः पाटनं छविच्छेदश्च बन्धवधच्छविच्छेदामिति समाहारद्वन्द्वः, तन्नैव कुर्यादिति सम्बन्धः, ‘ बह ’ त्ति वाधमित्यन्ये, तथा भरणं भारोऽतीव भारोऽतिभारः, अनुस्वारस्य पूर्वलक्षणेन लोपे तं गवादिपृष्ठादौ प्रभूतस्य पूगफलादेर्न कुर्यात्, तथा ‘ निरोह ’ त्ति प्राग्वदनुस्वाराभावः, निरोधनं निरोधः—अदानं तं ‘भत्तपाणेसु’त्ति ‘ बहुवयणेण दुवयण- ’ मिति प्राकृतलक्षणेन द्विवचनं, ततो ‘ भक्तपानयोः ’ भोजनोदकयोर्विषये निरोधं न विदध्यादित्यर्थः, एतान् पञ्च ‘ प्रथमव्र-तस्य’स्थूलप्राणातिपातविरतिरूपस्यातिचारान् अतिक्रमान्—वधविरतिमालिन्यानि, प्राकृतत्वाद्विभक्तिव्यत्ययः,एवं बन्धादीनां सामान्येनाकरणीयत्वोपदेशे सति मा भूत् प्रियपुत्रादेर्विनयग्राहणरोगचिकित्साद्यर्थमप्येतेषामकरणं व्रतमालिन्यभ-

येनेत्याह–' क्रोधादिभिः ' क्रोधः–कोपः स आदिर्येषां लोभादीनां तैः क्रोधादिभिर्न कुर्यादित्यपवादः,अन्यथा करणे तु न प्रतिषेध इति भावः, अत्र चायमावश्यकचूर्ण्याद्युक्तो विधिः–बन्धो द्विपदानां चतुष्पदानां वा स्यात्, सोऽप्यर्थायानर्थाय वा, तत्रानर्थाय तावदसावविधेय एव, अर्थाय त्वसौ द्विविधः–सापेक्षोऽनपेक्षश्च, तत्रानपेक्षो नाम यन्निश्चलमतीव बध्यते, सापेक्षस्तु दामग्रन्थिना, यश्च प्रदीपनकादिषु विमोचयितुं छेत्तुं वा शक्यते, एवं तावच्चतुष्पदानां बन्धः, द्विपदानां तु दासो वा दासी वा चौरो वा पाठादिप्रमत्तपुत्रादिर्वा यदि बध्यते तदाऽनागाढं बन्धनीयो, रक्षणीयश्च प्रदीपनादितः, तथा ते किल द्विपदचतुष्पदाः श्रावकेण संग्राह्या येऽबद्धा एवासत इति, वधोऽपि तथैव, नवरं निरपेक्षवधो–निर्दयताडना, सापेक्षः पुनरेवं–प्रथममेव भीतपर्षदा श्रावकेण भवितव्यं, यदि पुनर्न करोति कोऽप्याज्ञां तदा मर्म मुक्त्वा लतया दवरकेण वा सकृद्द्विर्वा ताडयेदिति,छविच्छेदोऽप्येवं, नवरं निरपेक्षो हस्तपादकर्णादि यन्निर्दयं छिनत्ति, सापेक्षः पुनर्यद्गण्डादिकं छिन्द्याद्दहेद्वेति, तथाऽतिभारो नारोपयितव्यः, पूर्वमेव हि या द्विपदादिवाहनेन जीविका सा श्राद्धेन मोक्तव्या, अथान्याऽसौ न स्यात्तदा द्विपदो यं भारं स्वयमुत्क्षिपति उत्तारयति च तं वाह्यते, चतुष्पदस्य तु यथोचितभारात्किञ्चिदूनः क्रियते, हलशकटादिषु पुनरुचितवेलायामसौ मुच्यत इति, तथा भक्तपाननिरोधो

इति, तथा भक्तपाननिरोधोऽप्यर्थानर्थादिभेदो बन्धवद्द्रष्टव्यः, निरपेक्षो निर्दयं भक्तपाननिरोधो न कस्यचिद्विधेयो, मा भूत्तीक्ष्णबुभुक्षितस्य मरणमिति, सापेक्षस्तु रोगचिकित्सार्थं स्याद्, वाचा वा वदेद्—अद्य ते भोजनादि न दास्यामि, शान्ति-निमित्तं चोपवासं कारयेत्, किं बहुना ?, यथा स्थूलप्राणातिपातविरमणस्यातिचारो न भवति तथा सर्वत्र यतनया प्रवर्त्तितव्यं, बन्धादीनां चोपलक्षणत्वान्मन्त्रतन्त्रप्रयोगादयोऽन्येऽप्यत्रातिचारा दृश्या इति गाथार्थः ॥ २६ ॥

उक्तमतिचारद्वारमधुना भङ्गद्वारमभिधीयते—

बंधाईणि (उ) आउट्टियाइणा जइ करेज्ज तो भंगो ।
बीयकसायाणुदए तिवाणं होइ सङ्कस्स ॥ २७ ॥

बन्ध आदिर्येषां वधादीनां तानि ' तुः ' अवधारणे भिन्नक्रमश्च आकुट्टिका—उपेत्य करणमादिशब्दान्निरपेक्षस्य दर्पादिग्रहस्तेन विरत्यनपेक्षप्रवृत्तिभावेनेतियावत् यदि ' कुर्यात् ' विदध्यात् तदा ' भङ्ग एव ' विनाश एवेति वक्ष्यमाणेन सम्बन्धः, प्राणातिपातविरतेरिति शेषः, द्वितीयाः—सूत्रोक्तक्रमापेक्षया अप्रत्याख्यानावरणास्ते

च ते कषायाश्च, कष्यते-हिंस्यते येन यस्मिन् वा प्राणी स कषः—कर्म भवो वा तस्यायो—लाभो येभ्यस्ते कषायाः, तथा

चोक्तम्—" कम्मं कसं भवो वा कसमाओ सिं जओ कसाया ते । " तेषामुदये—विपाके ' तीव्राणां ' उत्कटानां ' भवति ' जायते ' श्राद्धस्य ' श्रावकस्य देशविरतिभाजः, ननु बन्धादीनामप्रत्याख्यातत्वात्कथं तत्करणे भङ्गः ?, अथ तेऽपि प्रत्याख्यातास्तर्हि सूत्रोक्तव्रतद्वादशसङ्ख्याविरोधः, एतेषामपि पृथक् प्रत्याख्यातत्वेन भिन्नव्रतरूपतापत्तेः, सत्यं, प्राणातिपाते प्रत्याख्याते बन्धादयोऽपि प्रत्याख्याताः, तदुपायत्वात्तेषां, न हि कारणनिर्वृत्तिमन्तरेण कार्यनिरोधः कर्तुं शक्यः, अत आकुट्टिकया बन्धादिविधानेऽपि भङ्ग इति, यच्चोक्तम् 'अथ तेऽपि प्रत्याख्याता' इत्यादि, तच्चायुक्तमेव, विशुद्धहिंसाविरतिसद्भावे तत्संभवस्यैवाभावात्, यद्येवं कथं प्राक्तनद्वारेऽमीषामतिचारत्वमुक्तं ?, सत्यमुक्तं, किन्तु विवक्षया, तथाहि—यदा मारयामीति सङ्कल्पाभावेऽपि कोपादिविवशः परप्राणप्रहाणमवगणयन् बन्धाद्यारभते तदा निष्करुणतया व्रतानपेक्षस्य देशेन विरतिभङ्गो, न सर्वात्मना, तथा प्रवृत्तस्याप्यग्रे प्राणातिपातासिद्धेरतो भङ्गाभङ्गरूपाविवक्षयाऽतिचारत्वममीषामुक्तं, तदुक्तं—" न मारयामीति कृतव्रतस्य, विनैव मृत्युं क इहातिचारः ? । निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमेऽनपेक्षः ॥ १ ॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः । देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥२॥" इति गाथार्थः ॥२७॥

उक्तं भङ्गद्वारमधुना भावनाद्वारं निगद्यते—

**पणमामि अहं निच्चं आरंभविवज्जिआण विमलाणं ।**
**सवजगजीवरक्खणसमुज्जयाणं मुणिगणाणं ॥ २८ ॥**

इह प्रतिपन्नप्रथमाणुव्रतेन श्रावकेण त्रिकालमप्येवं चिन्तनीयं, यथा '**प्रणमामि**' प्रणिपतामि नमस्करोमीतियावत् अहमित्यात्मनिर्देशे '**नित्यं**' सदा '**मुनिगणेभ्यः**' साधुवृन्देभ्य इत्युत्तरेण सम्बन्धः, षष्ठ्याश्चतुर्थ्यर्थत्वाद्, यदुक्तं—'छट्ठी विभत्तीएँ भन्नइ चउत्थी" सा च प्रणमामीति क्रियायोगे, यथा—"तस्मै तत्त्वविदां वराय जगतः शास्त्रे प्रणम्ये" ति, कीदृशेभ्यः ? इत्याह—आरम्भविवर्जितेभ्यः, प्राकृतत्वात् क्तान्तस्य परनिपातः, विवर्जितः—त्यक्त आरम्भः—पृथिव्याद्युपमर्दो यैस्ते तथा तेभ्यः, अत एव विगतो मलो—भावतः क्रोधादिरूपो येभ्यस्ते विमलास्तेभ्यः, विवर्जितारम्भत्वस्यैव विशेषणद्वारेण हेतुमाह—'**जगति**' लोके '**जीवाः**' सूक्ष्मबादरादिभेदभिन्ना एकेन्द्रियादिपञ्चेन्द्रियान्ताश्चतुर्दश, यदुक्तम्—"एगिंदिय सुहुमियरा सन्नियर पणिंदिया य सबितिचऊ। पज्जत्तापज्जत्ता भेएणं चोद्दसग्गामा ॥ १७ ॥" जगज्जीवाः सर्वे च

ते जगज्जीवाश्च सर्वजगज्जीवास्तेषां रक्षणं—पालनं तत्र सम्यक्—सिद्धान्तोक्तविधिना उद्यता—उद्युक्ताः सर्वजगज्जीवरक्षणसमुद्यतास्तेभ्यः, विशेषणसाफल्यं च हेतुहेतुमद्भावेन भावनीयं, तथाहि—रक्षायामनुद्युक्ता नारम्भं त्यजन्ति न चात्यक्तारम्भा निर्मला भवन्तीति गाथार्थः ॥ १८ ॥

उक्तं नवभेदमपि प्रथमाणुव्रतमिदानीं द्वितीयस्यावसरस्तदपि नवभेदमतः प्रथमभेदेन तावदाह—

अणभूयं उब्भावइ, हूयं निण्हवइ तह य विवरीयं ।
गरिहा सावज्जं वा अलियं एमाइरूवं तु ॥ २९ ॥

'अणहूयं' ति प्राकृतत्वाद् 'अभूतं' असत्यं तद् 'उद्भावयति' प्रकाशयति यदिति गम्यं, यथा श्यामाकतन्दुलमात्र आत्मा ललाटस्थो हृदयस्थः सर्वव्यापी वेत्यादि, असत्यत्वं चैतद्वचसामनुभवबाधितत्वात्, तथाहि—एतावन्मात्रत्वे आत्मनः सकलशरीराधारसुखदुःखाद्यनुभवो न भवेदिति सूक्ष्मधिया भावनीयं, सर्वव्यापित्वे शरीराद्बहिरपि चैतन्यमनुभूयेतेत्यादि दोषजातं ग्रन्थान्तरतः परिभाव्यम्, एवं—" एक एव हि भूतात्मा, देहे देहे व्यवस्थितः । एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥१॥ " इत्याद्यप्यभूतम्, एकात्मत्वे ह्येकस्य सुखदुःखबन्धमोक्षादिसद्भावे

सर्वस्य तत्प्रसङ्गादिति, तथा 'भूतं' सत्यं तन्निह्नुवते यदिति दृश्यं, यथा नास्त्यात्मा नास्ति परलोक इत्यादि, तथा विपरीतम्—अन्यथा यद्ब्रवीतीति शेषः, यथा बलीवर्दोऽश्वादिरिति, अथवा यथा बौद्धाः प्राहुः—क्षणक्षयि ज्ञानमेवात्मा, साङ्ख्या वा नित्यैकस्वरूप इति, 'गरिहं'ति गर्हा—निन्दां यत्करोतीति गम्यं, यथा काणः कुब्जो दासस्त्वमित्यादि, 'सावद्यं' सपापं यद्वदतीत्यध्याहारः, यथा दम्यन्तां गोरथका इत्यादि, वाशब्दः समुच्चये, 'अलीकं' अनृतमेवमादिरूपं तद्भवतीत्यध्याहृतक्रियया सम्बन्धः, उक्तञ्च—"यद् भावदोषवद् वाक्यं, तत्त्वादन्यत्र वर्त्तते। सावद्यं वाऽपि यद्वाक्यं, तत्सर्वमनृतं विदुः ॥ १ ॥" तथा आदिशब्दाद्यदात्मपरोभयेषां सङ्क्लेशोपघातादिहेतुस्तदनृतमिति गाथार्थः ॥ २९ ॥

उक्तं यादृशद्वारं, भेदद्वारमधुनोच्यते—

कण्णागोभूमालियनासवहारं च कूडसक्खेज्जं।
भेया य तस्स पंच उ हवंति एए जिणुद्दिट्ठा ॥ ३० ॥

कन्या च—कुमारी गौश्च—बहुला भूमिश्च—भूरिति द्वन्द्वस्तासु विषयेऽलीकम्—अनृतं कन्यागोभूम्यलीकं,

इहालीकशब्दस्य ह्रस्वत्वश्रुतिः प्राकृतशैल्या, तच्च तथा न्यस्यते—निक्षिप्यते रक्षणायान्यपार्श्वे ध्रियत इति न्यासो—निक्षेपकस्तस्यापहरणमपहारश्च—अपलपनमिति पुनः समाहारद्वन्द्वः, एते चत्वारो भेदाः, 'चः' समुच्चये भिन्नक्रमः तेन 'कूटसाक्ष्यं' च व्यंसकसभ्यत्वमिति पञ्चमः, अत एवाह—'भेदाः' प्रकाराः चः पूरणे 'तस्य' मृषावादस्य 'पञ्च' इति पञ्चसङ्ख्याः तुशब्दैवकारार्थत्वात्पञ्चैव 'भवन्ति' स्युः 'एते' कन्यालीकादयः 'जिनोद्दिष्टाः' जिनैः—वीतरागैरुद्दिष्टाः—कथिता इति । तत्र कन्यालीकमभिन्नकन्यां भिन्नकन्यां वक्ति विपर्ययं वा, इदं च सर्वकुमारादिद्विपदविषयालीकोपलक्षणं, गवालीकं त्वल्पक्षीरां गां बहुक्षीरां विपर्ययं वा वदति, इदमपि सर्वचतुष्पदविषयालीकोपलक्षणं, भूम्यलीकं परसत्कामप्यात्मादिसत्कां भुवं ब्रूते विपर्ययं वा, एतच्च शेषापदद्रव्यविषयालीकोपलक्षणं, यद्येवं द्विपदचतुष्पदापदग्रहणमेव कस्मान्न कृतम् ?, अत्रोच्यते, कन्यालीकादीनामतिगर्हितत्वेन रूढत्वात्, न्यासापहारस्य च स्तेयस्वरूपस्याप्यपलापरूपतया मृषावादत्वादिहोपादानं पूर्वादिकेभ्यो भेदश्च, कूटसाक्ष्यं तत् क्रोधमत्सराद्यभिभूतः प्रमाणीकृतः सन् कूटं वक्ति—यथाऽस्याहमत्र साक्षी, अस्य चान्यपाप—समर्थकत्वलक्षणं विशेषमाश्रित्य पूर्वेभ्यो भेद इति गाथार्थः ॥ ३० ॥

व्याख्यातं भेदद्वारमधुना यथा जायत इत्येतदुच्यते—

**दुगतिग दुग दुग दुग एक्कगेण एगेण होइ तिविहं तु ।**
**इग दुग इग एक्केणं वयाण एसेव गहणविही ॥ ३१ ॥**

अस्या भावार्थः—इह व्रतं प्रतिपित्सुः कोऽपि किञ्चित्प्रतिपद्यते, श्रावकव्रतप्रतिपत्तेर्बहुभङ्गत्वात्, तत् त दुल्लेखदर्शनार्थमियं गाथा, तत्र '**दुगतिग**' त्ति द्विविधात्रिविधेन—करणकारणमनोवाक्कायस्वरूपेणैको भङ्गः सूचितः, श्रावकस्य सर्वत्रानुमतेरप्रतिषेधात्, यश्च भगवत्यां त्रिविधंत्रिविधेनेत्ययमपि भङ्गो भणितः स विषयविभागेन कस्यचिच्छ्रावकस्य कस्याञ्चिदवस्थायां क्वचिद्वस्तुनि कस्मिंश्चित्क्षेत्रादौ विज्ञेयो न सर्वत्र, भङ्गाभिलापश्चैवं-न करोमि न कारयामि मनसा वाचा कायेनेति, '**दुगदुग**' त्ति द्विविधं द्विविधेन भङ्गत्रयं सूचितं, पूर्वोक्तादेव हेतोः, एवमुत्तरत्रापि हेतुर्भाव्यः, उच्चारणं चेत्थं—न करोमि न कारयामि मनसा वाचा १ मनसा कायेन २ वाचा कायेन ३। '**दुगएक्कगेणं**' ति अनेनापि त्रयो भङ्गाः, तदुक्तिश्चैवं—न करोमि न कारयामि मनसा १ वाचा २ कायेन ३। '**एक्केण होइ तिविहं**' तीत्यनेन द्वौ, तौ चेमौ—न करोमि मनोवाक्कायैः १ न कारयामि मनोवाक्कायैः २।

' इगदुगे ' त्यनेन तु षड् भङ्गाः, ते चेमे—न करोमि मनसा वाचा १ न करोमि मनसा कायेन २ न करोमि वाचा कायेन त्रयः ३, एवं न कारयामीत्यनेनापि त्रयः ३, सर्वे षट् ' एग इक्केण मित्यनेनापि षट्, ते च न करोमि मनसा १ वाचा २ कायेन ३, एवं न कारयामीत्यनेनापि त्रयः सर्वे षट्, पण्णामपि पदानां सर्वसङ्ख्या २१, तथा चोक्तं-" दुविहतिविहाइ छच्च उ, तेसिं भेया कमेणिमे हुंति। पढमेक्के दुन्नि तिया दुगेग दो छच्च इगवीसा ॥ १ ॥ " एषां च स्थापना—

| | | | | | |
|---|---|---|---|---|---|
| २/३ | २/२ | २/१ | १/३ | १/२ | १/१ |
| १ | ३ | ३ | २ | ६ | ६ |

एते चोत्तरगुणाविरतसहिता अष्ट, तथा च निर्युक्तिकारः—" दुविहतिविहेण पढमो दुविहं दुविहेण बीयओ होइ । दुविहं एगविहेणं, एगविहं चेव तिविहेणं ॥ १ ॥ एगविहं दुविहेणं एक्केक्क-विहेण छट्ठओ होइ । उत्तरगुण सत्तमओ अविरओ चेव अट्ठमओ ॥ २ ॥ " अस्यैव च षट्कस्याणुव्रतपञ्चकैकादि-संयोगापेक्षया षोडश सहस्राणि अष्टौ शतानि षडुत्तराणि भङ्गानां भवन्ति, तदानयनोपायश्च " एगवए छब्भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय पयवुड्ढीए सत्तगुणा छज्जुया कमसो ॥ १ ॥ " त्ति गाथातो बोद्धव्यः, तथाहि—प्राणातिपाताख्ये एकस्मिन् व्रते ये द्विविधत्रिविधादयः षड् भङ्गास्ते च सप्तकेन ताडिताः

षड्युताश्चोक्तसङ्ख्यां पूरयन्ति, यतः—षट् सप्तगुणाः षड्युताश्चाष्टचत्वारिंशद्भवन्ति ४८, इयं च सप्तगुणा षड्युता त्रीणि शतानि द्विचत्वारिंशदधिकानि ३४२, एतानि च सप्तगुणानि षड्युतानि चतुर्विंशतिशतानि २४००, एतान्यपि सप्तगुणानि षडधिकानि षोडश सहस्राण्यष्टौ शतानि षडुत्तराणि १६८०६ । अथवा प्रकारान्तरं कथ्यते-प्राणातिपातादीनां पञ्चानां पदानामेकसंयोगेन पञ्च ५ द्विकसंयोगेन दश १० त्रिकसंयोगेन दश १० चतुष्कसंयोगेन पञ्च ५ पञ्चकयोगेनैकः १, तथा चोक्तम्—" पंचण्हऽणुव्वयाणं एक्कगदुगतिगचउक्कपणगेहिं । पंच य दस दस पणगेक्कगो य संयोग नायव्वा ॥ १ ॥ " संयोगानयनोपायश्चायम्—" उभयमुहं रासिदुगं हेट्ठिल्लानंतरेण भय पढमं । लद्धहरासिविहत्ते, तस्सुवरि गुणं तु संजोगा ॥ १ ॥ " अस्या भावार्थः—उभयमुखम्—उपर्यधोभावेन राशिद्वयं, द्वितीयपङ्क्तावित्थं स्थापयित्वाऽधस्त्यराशेर- १२३४५ / ५४३२१ न्त्यानन्तरो योऽङ्को द्विकस्तेनोपरितनराशेरन्तस्य पञ्चकस्य भागे हृते जातं सार्द्धद्वयं २॥ लब्धं च पुनरुपरितनाङ्केन चतुष्केन गुणितं जातं दश १०, द्विकसंयोगसङ्ख्येयं, एवमन्येऽपि संयोगा आनेतव्याः, नवरमुपरितनराशावागतदशाद्यङ्कस्यैवाधस्त्यराशित्रिकादिना भागहारादि कर्तव्यं, अथवा पञ्चानां पदानामेकसंयोगे प्रत्येकं पञ्च ५, द्विकसंयोगे दश, ते चैवं—प्रथमद्वितीयप्रथमतृतीयप्रथमचतुर्थ-

प्रथमपञ्चमचारणया चत्वारः ४ द्वितीयतृतीयद्वितीयचतुर्थद्वितीयपञ्चमचारणया त्रयः ३ तृतीयचतुर्थतृतीयपञ्चमचारणया द्वौ२चतुर्थपञ्चमचारणया त्वेकः, सर्वे दश १० । एवं त्रिकादिसंयोगचारणाऽपि कर्तव्या, तथा चोक्तम्—"अहवा पयाणि ठविउं, अक्खे घेत्तूण चारणं कुज्जा । एक्कगदुगाइजोगे, भंगाणं संख कायव्वा ॥१॥" ततश्च प्राणातिपातादिपदानि द्विविधत्रिविधादिभिः षड्भिः पदैर्यान् भङ्गान् लभन्ते ते प्रत्येकं संयोगसंख्यया गुणिता मीलिताश्चोक्तसङ्ख्यां पूरयन्ति, तथाहि—यथा प्राणातिपातः षट् भङ्गानाप्नोति, तथा मृषावादादयोऽपि, इत्येकसंयोगसङ्ख्यया पञ्चलक्षणया षड् गुणितास्त्रिंशत् ३०, तथा प्राणातिपातमृषावादद्विकयोगे यथा षट्त्रिंशत् तथा शेषद्विकयोगेऽपि, अतः षट्त्रिंशत् द्विकसंयोगैर्दशभिर्गुणितास्त्रीणि शतानि षष्ट्यधिकानि ३६०तथा प्राणातिपातमृषावादादत्तादानात्रिकयोगे यथा द्वे शते षोडशोत्तरे २१६ तथा शेषत्रिकयोगेऽप्यतो द्वे शते षोडशोत्तरे त्रिकसंयोगैर्दशभिर्गुणिते एकविंशतिः शतानि षष्ट्यधिकानि २१६०, तथा प्राणातिपातादिचतुष्कयोगे यथा द्वादश शतानि षण्णवत्याधिकानि १२९६ एवं शेषचतुष्कयोगेऽपि, अतो द्वादश शतानि षण्णवत्यधिकानि चतुष्कसंयोगैः पञ्चभिर्गुणितानि चतुःषष्टिशतान्यशीत्यधिकानि भवन्ति ६४८०, पञ्चकसंयोगस्य त्वेकत्वात्तद्गुणराशेः क्षयवृद्ध्यभावात्सप्तसप्ततिः शतानि

पट्सतत्यधिकानीत्यत्रस्थितैव सङ्ख्या, ७७७६ स्थापना चेयम्—

| | | |
|---|---|---|
| ६ | ५ | ३० |
| ३६ | १० | ३६० |
| २१६ | १० | २१६० |
| ५२९६ | ५ | ६४८० |
| ७७७६ | १ | ७७७६ |

व्रतयन्त्रस्थापना चेयम्—,

| प्रा | | मृ | | अद | | मै | | प | |
|---|---|---|---|---|---|---|---|---|---|
| २ | ३ | २ | ३ | २ | ३ | २ | ३ | २ | ३ |
| २ | २ | २ | २ | २ | २ | २ | २ | २ | २ |
| २ | १ | २ | १ | २ | १ | २ | १ | २ | १ |
| १ | ३ | १ | ३ | १ | ३ | १ | ३ | १ | ३ |
| १ | २ | १ | २ | १ | २ | १ | २ | १ | २ |
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |

भङ्गाभिलापश्चैवं-प्राणातिपातं प्रत्याचक्षे द्विविधं त्रिविधेनेत्याद्येकसंयोगो, द्विकयोगे प्राणातिपातं प्रत्याचक्षे मृषावादं च द्विविधत्रिविधेन, प्राणातिपातं द्विविधत्रिविधेन मृषावादं द्विविधद्विविधेनेत्यादि यावत् प्राणातिपातेन मूलपदस्थेन मृषावादात् सर्वपदगामिनो लब्धा भङ्गाः षट् ६, पुनः प्राणातिपातेन क्रमशः सर्वपदगामिना प्राप्ताः षट्त्रिंशद् ३६ भङ्गाः, एवं शेषद्विकसंयोगेष्वप्यूह्यं, त्रिकयोगे प्राणातिपातं मृषावादमदत्तादानं च प्रत्याचक्षे द्विविधत्रिविधेन, प्राणातिपातं मृषावादं द्विविधत्रिविधेनादत्तादानं द्विविधद्विविधेनेत्यादि यावत्प्राणातिपात-मृषावादाभ्यां स्वस्थानादचलिताभ्यामदत्तादानात्सर्वचारिणो लब्धा भङ्गाः षट् ६ ततो मृषावादचारणया षट्त्रिंशत् ३६ प्राणातिपातचारणया तु द्वे शते षोडशोत्तरे २१६, एवं शेषत्रिकयोगेष्वपि, चतुष्कयोगे त्रीणि पदानि तान्येव तुर्यपदं मैथुनं द्विविधत्रिविधेन प्रत्याचक्षे, पुनः पदत्रयं तथैव मैथुनं तु द्विविधं

द्विविधेनेत्यादि यावत्षट् ६ पुनः तृतीयपदस्य चारणया षट्त्रिंशत् ३६ द्वितीयपदस्य द्वे शते षोडशोत्तरे २१६, प्रथमपदस्य द्वादश शतानि षण्णवत्यधिकानि १२९६, एवं शेषचतुष्कयोगेऽपि, पञ्चकयोगे तु चत्वारि तान्येव पञ्चमं च परिग्रहपदं द्विविधत्रिविधेन प्रत्याचक्षे, पुनः पदचतुष्टयं तथैव, परिग्रहपदं तु द्विविधद्विविधादिना यावद्भङ्गाः षट्, ततस्तूर्यपदचारणया षट्त्रिंशत् ३६ तृतीयचारणया द्वे शते षोडशोत्तरे २१६ द्वितीयचारणया द्वादश शतानि षण्णवत्यधिकानि १२९६ प्रथमचारणया तु सप्तसप्ततिः शतानि षट्सप्तत्य-धिकानि ७७७६, एवं द्वादशव्रतभङ्गा अप्यूह्यास्तत्संख्या च–" तेरसकोडिसयाइं, चुलसीजुयाइं बारस य लक्खा। सत्तासीइ सहस्सा, दो य सता तह दुरग्गा य ॥ १ ॥ " आनयनोपायश्चोह्याव्यः, तथा येऽपि द्विविधत्रिधादिपदेषु षट्सु चारणा क्रमेणैकविंशतिभङ्गा लब्धास्तेऽपि पञ्चव्रतचारणया द्वादशव्रतचारणया वाऽन्यान्यां भङ्गसङ्ख्यामुप-जनयन्ति, तदानयनोपायश्च " इगवीसं खलु भंगा निद्दिट्ठा सावयाण जे सुत्ते। ते च्चिय बावीसगुणा इगवीसं पक्खिवेयव्वा ॥ १ ॥ " अनेन च लब्धं पञ्चव्रतभङ्गपरिमाणं यथा एकपञ्चाशल्लक्षाः त्रिपञ्चाशत्सहस्राणि षट् शतान्येकत्रिंशदधिकानि ५१५३६३१, प्रागुक्तसंयोगादिवक्तव्यतया चेदं लभ्यते, तस्य च मूलसंयोगगुण्य-

गुणकारागतक्रमेण यादृशी स्थापना भवति तादृश्युपदर्श्यते,

| | | |
|---|---|---|
| २१ | ५ | १०५ |
| ४४१ | १० | ४४१० |
| ९२६१ | १० | ९२६१० |
| १९४४८१ | ५ | ९७२४०५ |
| ४०८४१०१ | १ | ४०८४१०१ |

अत्र चागतपदैकीकरणे उक्तसङ्ख्यापूर्त्तिर्भवति, द्वादशव्रतभङ्गसङ्ख्या त्वनेनैव क्रमेण स्वयमभ्यूह्येति, एवं तावदावश्यकनिर्युक्त्यभिप्रायेण भङ्गप्ररूपणा कृता, साम्प्रतं भगवत्यभिप्रायेणोपदर्श्यते—"तिन्नि तिया तिन्नि दुया तिन्निक्केक्का य होंति जोएसु । तिदु एक्कं तिदुएक्कं तिदुएक्कं चेव करणाइं ॥ १ ॥" अस्य स्थापना

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | २ | २ | २ | १ | १ | १ |
| ३ | २ | १ | ३ | २ | १ | ३ | २ | १ |
| १ | ३ | ३ | ३ | ९ | ९ | ३ | ९ | ९ |

अत्र चैकद्विकत्रिकसंयोगचिन्तनया एकोनपञ्चाशद् भङ्गा भवन्ति, तथा चोक्तम्—"मणवइकाइयजोगे करणे कारावणे अणुमईण। एक्कगदुगतियजोए सत्ता सत्तेव इगुवन्ना ॥ १ ॥" एतेषां चायमभिलापः—न करोमि न कारयामि कुर्वन्तं नानुजानामि मनसा वाचा कायेनेति त्रिविधत्रिविधेनैको भङ्गः १ त्रिविधद्विविधे त्रयो भङ्गाः, ते चैवं—न करोमि न कारयामि कुर्वन्तं नानुजानामि मनसा वाचेत्येकः १ मनसा कायेनेति द्वितीयः २ वाचा कायेनेति तृतीयः ३ त्रिविधैकविधेऽपि त्रयो, यथा—न करोमि न कारयामि कुर्वन्तं नानुजानामि मनसेत्येकः १ वाचेति द्वितीयः २, कायेनेति तृतीयः ३, द्विविधत्रिविधे च त्रयो, यथा—न करोमि न कारयामि मनसा वाचा कायेनैकः, न करोमि कुर्वन्तं नानुजानामि तैरेव द्वितीयः, न कारयामि कुर्वन्तं नानुजानामि तैरेव तृतीयः ३, द्विविधद्विविधे

तु नव, यथा न करोमि न कारयामि मनसा वाचैकः १ मनसा कायेन द्वितीयः २ वाचा कायेन तृतीयः ३ न करोमि नानुजानामि मनसा वाचेत्यादयस्त्रयः ३, न कारयामि नानुजानामि मनसा वाचेत्यादयोऽपि त्रयः ३, सर्वे नव, द्विविधैकविधेऽपि नव, तद्यथा—न करोमि न कारयामि मनसैकः १ वाचा द्वितीयः २ कायेन तृतीयः ३, न करोमि नानुजानामि मनसेत्यादयस्त्रयः ३, न कारयामि नानुजानामि इत्यादयोऽपि त्रयः ३, सर्वे नव ९, एकविधत्रिविधे तु त्रयो, यथा—न करोमि मनोवाक्कायैरेकः १, न कारयामीत्येतैरेव द्वितीयः २ नानुजानामीत्येतैरेव तृतीयकः ३, एकविधद्विविधे तु नव, तद्यथा—न करोमि मनसा वाचैकः १ मनसा कायेन द्वितीयः २ वाचा कायेन तृतीयः ३, एवं न कारयामि नानुजानामीत्येतयोरपि त्रयस्त्रयः ३, सर्वे नव ९, एकविधैकविधेऽपि नव ९, तद्यथा—न करोमि मनसैकः१वाचा द्वितीयः २ कायेन तृतीयः३, एवं न कारयामि नानुजानाम्यनयोरपि त्रयस्त्रयः ३, सर्वे नव, सर्वे संयोगागतमीलने चैकोनपञ्चाशद्भवन्ति ४९, कालत्रयगुणने च सप्तचत्वारिंशदधिकं शतमिति १४७, तथा चोक्तं—"पढमेक्को तिन्नितिया, दोन्निनवा तिण्णि दोनवा चेव। कालतिएण य गुणियं सीयालं होइ भंगसयं ॥ १ ॥" एते च ये नव मूलभेदाः [ ग्रन्थाग्रम् ३००० ] संयोगभेदाश्चैकोनपञ्चाशदत्र प्रतिपादितास्ते व्रतपञ्चकेन व्रतद्वादशकेन वा

चिन्त्यमाना बहुतरां सङ्ख्यामापूरयन्ति, तदानयनोपायश्च—"एगवए नव भंगा निद्दिट्ठा सावयाण जे सुत्ते । ते च्चिय दसगुण काउं नव पक्खेवंमि कायव्वा ॥ १ ॥ इगुवन्नं खलु भंगा, निद्दिट्ठा सावयाण जे सुत्ते । तेच्चिय पन्नासगुणा एगुवन्नं पक्खिवेयव्वा ॥ २ ॥" इति गाथाद्वयाद्बोद्धव्यः, भावना तु पूर्वोक्तैव, भङ्गसङ्ख्या तु पञ्चानां व्रतानां नवभिः पदैरियं—नवनवतिः सहस्राणि नव शतानि नवनवत्याधिकानि ९९९९९, एकोनपञ्चाशता त्वियं—एकत्रिंशत्कोट्यश्चतुर्विंशतिलक्षाः नवनवतिः सहस्राणि नव शतानि नवनवत्याधिकानि ३१२४९९९९९, यद्वा प्रागुक्तसंयोगादिक्रमेणेमे सङ्ख्ये समानेये, तत्स्थापनाक्रमश्च द्वयोरपि यथाक्रमेणायं द्रष्टव्यः—

| | | |
|---|---|---|
| ९ | ५ | ४५ |
| ८१ | १० | ८१० |
| ७२९ | १० | ७२९० |
| ६५६१ | ५ | ३२८०५ |
| ५९०४९ | १ | ५९०४९ |

एवं द्वादशव्रत-

| | | |
|---|---|---|
| ४९ | ५ | २४५ |
| २४०१ | १० | २४०१० |
| ११७६४९ | १० | ११७६४९० |
| ५७६४८०१ | ५ | २८८२४००५ |
| २८२४७५२४९ | १ | २८२४७५२४९ |

भङ्गसङ्ख्याऽप्यानेया,एषां च द्वादशादय एव गुणकाराः,यथोक्तम्—"बारस १२ छावट्ठीविय ६६ वीसहिया दो य २२० पंच नव चउरो ४९५। दो नव सत्त य७९२चउ दोन्नि नव य९२४दो नव य सत्तेव७२९॥१॥पण नव चउरो ४९५ वीसा य दोन्नि २२० छावट्ठि ६६ बारसे १२क्को १य। सावगभंगाण इमे सव्वाणं हुंति गुणयारा॥२॥"इत्यादिक्रमेण भङ्गकस्वरूपं परिज्ञाय मृषावादविरतिः स्वस्वभावाद्यालोचनपूर्वकं स्वीकर्त्तव्येत्यध्याहृतपदसंटङ्कः, इत्थमेवासौ

जायत इतिकृत्वा, कुत एवमिति चेद्ब्रूमः यत इत्यध्याहाराद् यस्माद् व्रतानां प्राणातिपातविरत्यादीनामेषः—एवं उक्तरूपो 'ग्रहणविधिः' उपादानाम्नायो 'ज्ञात्वाऽभ्युपगम्य पालनं विरतिः' इति वचनात्, तथा च निर्युक्तिकारः—"सीयालं भंगसयं जस्स विसोहीएँ होइ उवलद्धं। सो खलु पच्चक्खाणे कुसलो सेसा अकुसला उ ॥ १ ॥" इति गाथार्थः ॥ ३१ ॥

उक्तं यथा जायत इति द्वारम्, अधुना दोषद्वारमुच्यते—

अलियं च जंपमाणो मूगत्ताईणि लहइ दुक्खाणि ।
जायइ तहा (तह तस्स) निहणं वसुराया एत्थुदाहरणं ॥ ३२ ॥

'अलीकं' अनृतं 'चः' पादपूरणे 'जल्पन्' ब्रुवन् 'मूकत्वादीनि' वाग्विकलत्वादीनि 'लभते' प्राप्नोति 'दुःखानि' असातोदयरूपाणि, परलोक इति गम्यते, तदुक्तम्—"मूका जडाश्च विकलाः, वाग्घीना वाग्जुगुप्सिताः। पूतिगन्धिमुखाश्चैव, [ नरा ] जायन्तेऽनृतभाषकाः ॥ १ ॥" नन्वयं परलोके दोषः, इहलोके तस्य किं भवति ? इत्याह—'जायते' भवति च तथा तस्येह लोक इति शेषः 'निधनं' क्षयः, वसुराजा 'अत्र' अनृते 'उदाहरणं' दृष्टान्त इति गाथाऽक्षरार्थः ॥ भावार्थस्तु कथानकगम्यस्तच्चेदम्—

इहैव जम्बूद्वीपे भारतवर्षालङ्कारभूतः सूरसेनाभिधो देशः, तत्र मूर्त्तिमती नगरी, तस्यां हरिवंशगगनमण्डल-

मण्डनं सौम्यत्वकान्तिमत्त्वादिगुणसमुदयसमुपहसितचन्द्रोऽभिचन्द्रो राजा, तस्य पुत्रो वसुकुमारः, स चान्यदा
विद्याग्रहणयोग्य इति मत्वा तन्नगरीवास्तव्यस्यैव क्षीरकदम्बकाभिधानोपाध्यायस्य सत्कारपूर्वकं समर्पितः,
इतश्च तत्पुत्रः पर्वतको नारदश्च छात्रस्तदैव तत्पार्श्वे पठितुमुपस्थितौ, ततस्तांस्त्रीनप्यसौ वेदमध्यापयितुं प्रवृत्तः,
अन्यदा चाकाशचारिणौ साधू गच्छन्तौ तान् पठतः समालोक्यैकेन साधुना द्वितीयस्य कथितं—यथा य इमे वेद-
मधीयन्ते एतेषां द्वावधोगामिनावेक ऊर्ध्वगामीति, एतच्च क्षीरकदम्बकोपाध्यायेन श्रुतं, साधू च तद्वदन्तावेवाद-
र्शनीभूतौ, उपाध्यायस्त्वधृत्या महत्या गृहीतः, चिन्तयति च—यथा मयैते वेदार्थज्ञाः कृताः, अन्यसकलशास्त्र-
विदश्च, अनेनाभिसन्धिना यथाऽमी अवगताशेषशास्त्ररहस्याः शास्त्रोदितानुष्ठानासेवनपूर्वकं परमपदमाराधयिष्यन्ति,
यावदास्तां तत, प्रत्युताधोगामिनौ द्वावेतेषां भविष्यतः, न च साधुवचनं मृषा, तदहो पश्यान्यथैव चिन्त्यन्ते पुरु-
पार्थाः पुरुषेण अन्यथा च भवन्ति, तदहमपि यावज्जराजर्जरितवपुः सकलपुरुषार्थनिर्वर्त्तनापटिष्ठो न भवामि ताव-
त्स्वहितमाचरामीति विचिन्त्य संसारविरक्तचित्तस्तथाविधाचार्यसमीपे प्रवज्यां प्रतिपेदे, उग्रतपश्चरणरतश्च कञ्चित्कालं
भूत्वा लोकालोकप्रकाशनप्रत्यलं दिव्यं केवलज्ञानमुत्पाद्य निःशेषकर्मकलङ्कविकलो मोक्षं प्राप्तः। वसुश्चाभिचन्द्रेण

राज्ञा स्वराज्येऽभिषिक्तः, स्वयं च निष्क्रान्तः । ततो वसुराजा स्तोककालेनैवाप्रतिहतशासनो जातः । इतश्च अन्यदा मृगयागतेन लुब्धकेन केनचिन्नातिदूरवर्त्तिनं मृगमालोक्य कर्णान्ताकृष्टकोदण्डेन मुक्तो बाणो यावदसावग्रतः प्रतिस्खलितः सम्मुखमेव समायातः, ततस्तेन चिन्तितं—किमेतदिति, यावदग्रे गत्वाऽत्र लोकयति तावदवगतं स्फाटिकशिलेति, ततोऽद्भुतं रत्नमेषा खलु शिला, एतदन्तरितमृगाविप्रलब्धबुद्धिना हि मया बाणप्रेरणप्रयासो विहितः, इदृशरत्नानां च नृपतिरेव योग्य इत्यतो राज्ञो निवेदयामि येन विशिष्टरत्नदर्शनतुष्टो महाप्रसादं विदधातीति विचिन्त्याभिज्ञानं स किञ्चिद्विधाय गतो वसुराजसमीपं, कथितः शिलावृत्तान्तः, ततोऽसौ तामानाय्य प्रच्छन्नं प्रधानवैज्ञानिकैः सिंहासनं कारयित्वाऽऽस्थानमण्डपे न्यवीविशत्, तांश्च वैज्ञानिकान् सह तेन लुब्धकेन जनप्रसिद्धिपरिहारेच्छया प्रच्छन्नमेव व्यापादितवान्, तस्मिंश्च प्रदेशे न केचन प्रवेशं लभन्ते, ततो राजा सिंहासनोपविष्ट आकाशस्थ इव ज्ञायते, ततो राज्यान्तरेष्वप्येवं प्रसिद्धिरभूद्, यथा वसुराज आस्थानमाकाशगतो विदधाति सत्यप्रभावेन, नारदोऽपि तस्य सहाध्यायी स्वगृहं गतोऽनेकेषां छात्राणां व्याख्यानं करोति श्रावकधर्मं चानुपालयति, पर्वतकस्तु तत्रैव स्वशिष्येभ्योऽनेकेभ्यो वेदान् व्याख्यानयति, अन्यदा च नारदः स्वशिष्यप-

रिवांरो गुरुभ्रातृस्नेहेन पर्वतकं द्रष्टुं तत्रैव समायातः, हर्षवशोद्भिन्नबहुलरोमाञ्चश्च प्रविष्टस्तद्गृहं, दृष्टः पर्वतकेन, कृता आसनदानादिका प्रतिपत्तिः, पृष्टा परस्परं सुखदुःखवार्त्ता, स्थित्वा च कियन्तमपि कालमुक्तं नारदेन—भ्रातः! क्रियतां व्याख्यानं, मा विमुखीक्रियन्तामिमे शिष्याः, न ह्यनध्यायायाहमागतः, ततः पर्वतको यद् वेदेषु यागविधानेऽर्द्धव्याख्यानमुक्तवान् तद्व्याख्यातुमारब्धः, तत्र चेदं सूत्रम्—"अजैर्यष्टव्यं" अस्य व्याख्या—अजाः—छागास्तैर्यष्टव्यं—यागः करणीय इति, अत्रान्तरे नारदेन भणितं—मैवं वोचः, यागविधाने हि वर्षत्रयपर्युषिता व्रीह्यादयो न जायन्ते—न रोहन्तीतिकृत्वाऽजा भण्यन्ते, तैर्यष्टव्यं, न तु छागैः, ततश्च तयोरुत्तरप्रत्युत्तरेण महान् विवादो जातः, तस्मिंश्च सति ताभ्यामुक्तं—यथाऽस्माकं वसुराजस्तृतीयः सहाध्यायी बभूव सोऽत्रार्थे प्रमाणं, केवलं यो जेतव्यस्तस्य जिह्वाछेदो विधातव्यः, एवं प्रतिज्ञायां विहितायां नारदः समुत्थाय स्वच्छात्रपरिवारः स्वावासं गतः, पर्वतकोऽपि स्वकीयश्रोतॄन् विसृज्य मातृसमीपं गत्वा नारदवृत्तान्तं निवेदितवान्, ततस्तयाऽवादि—यथा नारदेन व्याख्यातं तथा तव पित्राऽपि, एवं मम स्मृतिः, ततस्तेनोदितं—यद्येवं भवतु मम जिह्वाच्छेदः, तयोक्तं—वत्स! मोत्सुको भूः, त्वया हि राजा प्रमाणमाहृत आस्ते, अतस्तमेवोपसर्पामः, मा कदाचि-

दुपरोधवशीकृतो नृपतिस्त्वत्पक्षमपि पूरयति, एवमुक्त्वा गता सा सपुत्रा नृपसमीपं, प्राप्ता दौवारिकभूमिं, निवेदितं द्वारपालेन राज्ञः, यथा—देव ! उपाध्यायी पर्वतकश्च त्वां द्रष्टुमिच्छतः, राज्ञोक्तं—प्रवेशय शीघ्रं, असावपि यथाऽऽज्ञापयति देव इत्यभिधाय प्रवेशितवान्, ततो राज्ञा उपाध्यायीं पर्वतकं च प्रति कृतमभिवादनं, ताभ्यामप्युक्त आशीर्वादः, राज्ञाऽपि दापिते उपवेशनके भणितं—प्रभूतकालादस्माकं स्मृतं, किमम्बायाः प्रयोजनं मया ?, दीयतामादेशः, ततस्तयोक्तं—व्याक्षेपबहुलतयैतावन्ति दिनानि भवद्भिः सह दर्शनं न कृतं, यच्च कार्यं पृष्टं वत्सेन तत्पुनरेकान्ते भणनीयं, ततो राज्ञा तद्वचनानन्तरमेव शीघ्रमुत्सारितः सकलो लोकः, साऽपि पर्वतकं समीप एव विधाय कथितवती नारदवृत्तान्तं जिह्वाच्छेदप्रतिज्ञावसानं, तदिदानीं कृत्यमकृत्यं च यदहं भणामि तदवश्यं त्वयाऽभ्युपगन्तव्यमिति, किं बहुना ?, यथा मम पुत्रो न जीयते तथा कर्त्तव्यं, ततस्तदुपरोधेन प्रतिपन्नं राज्ञा, अथवा कर्णविषं महाविषमेतत्, अपरिणतसत्त्वत्वामृतस्य कां न विडम्बनामुपजनयति ?, तदुक्तम्—"कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः । क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन ॥ १ ॥" ततो हृष्टा पर्वतकमाता, समं पुत्रेण निर्गता भवनात्, जातः सर्वनगर्यां जनप्रवादो यथा नारदपर्वतकयोर्महावादो राज्ञोऽग्रे प्रातर्भविष्यति, ततो राजा द्वितीयदिवसे संपूर्णमास्थानं दत्त्वा नारद-

पर्वतकावाकारितवान्, तावपि सपरिवारौ समायातौ, उपविष्टौ च दत्तोपवेशनकौ उचितस्थाने, मिलिताश्च मन्त्रिमहा-
मन्त्रिसामन्तप्रमुखा राजलोकाः, आयाताश्चानेके वेदविचक्षणाः, ततस्तेषु निजनिजस्थानोपविष्टेषु दिक्पालानां
देवतानां चाघोषणां कृत्वा भणितं मध्यस्थपुरुषैर्नृपसम्मुखं—देव! नारदपर्वतकाभ्यां व्यवहारे त्वं प्रमाणीकृतस्तदिदानीं
भवद्भिस्तत्सत्यं वक्तव्यं येन न प्रभवन्ति नदीवेगाः न छलन्ति शाकिनीभूतादयः वशीभवन्ति देवाः न दहति वैश्वा-
नरः, सर्वथा यथा क्षीरकदम्बोपाध्यायेन व्याख्यातं तथा कथयन्तु भवन्तः, वसुराजेन भणितं—नाहमलीकं भणामि, यतः
सत्यवादित्वेनैवास्थानावसरमाकाशे करोमि, तस्मान्माऽत्र शङ्का कदाचित्कृथाः, यदुत वसुराजोऽसत्यवादीत्यभिधाय
अजाः छागा यागविधाने क्षीरकदम्बोपाध्यायेन व्याख्याता इत्येवं मम स्मृतिः, ततोऽत्रान्तरे तस्य कुलदेवता
कोपमुपगता सती चिन्तयामास—अहह! कथमनेन पापेन असत्यसन्धिना व्यलीकप्रतिपादनकलङ्केन कलङ्कितो निर्म-
लोऽपि निजवंशः, तद्दर्शयाम्येतस्येदानीं पापफलमिति विचिन्त्य तथा हतो यथा सिंहासनान्निपतितमात्र एव निध-
नमुपगतः, ततो लोकेन वसुराजस्य तथाविधामवस्थामवलोक्य पर्वतकोऽपि धिक्कारितः, नारदश्च सुरासुरगन्धर्वादिभिः
संपूजितो, लोकसकाशात्परां श्लाघां प्राप्त इत्येवमनृतभाषणे दोषः, सत्यप्रतिपादने गुणः, इत्येकेनाप्याख्यानकेन दोष-

गुणलक्षणद्वारद्वयं व्याख्यातमवगन्तव्यं, तथाहि-गुणद्वारेऽपि सूत्रकृता नारद एव दृष्टान्तीकृतः, तथा च सूत्रम्—

जे मिउ सच्चं जंपंति निउणयं सव्वसत्तहियजणयं ।
ते इह पुज्जा रिसिनारयव्व सुगइं पुणो जंति ॥ ३३ ॥

'ये' प्राणिनः 'मृदु' कोमलं 'सत्यं' अवितथं जनपदादिभेदवत् 'जल्पन्ति' भाषन्ते 'निपुणं' सुपर्यालोचितं 'सर्वसत्त्वहितजनकं' समस्तप्राणिसुखप्रापकं 'ते' प्राणिनः 'इह' मनुष्यजन्मनि 'पूज्याः' अर्च्या ऋषिनारदवत् 'सुगतिं' स्वर्गादिलक्षणां, पुनःशब्दो विशेषणार्थः, स च परलोक इति विशिनष्टि, 'यान्ति' गच्छन्तीत्यक्षरार्थः ॥ भावार्थस्तु कथानकेनैवोक्त इति ॥ अधुना षष्ठं यतनाद्वारमुच्यते—

बुद्धिं पुव्वं काऊण भासए अंधगोविव सचक्खुं ।
अप्पाणम्मि परम्मि य वज्जंतो पीडमुभओवि ॥ ३४ ॥

'बुद्धिं' मतिं 'पूर्वं' अग्रे 'कृत्वा' विधाय 'भाषते' वक्ति, गृहीतस्थूलमृषावादविरतिः श्रावक इति गम्यते, 'अन्धक इव' चक्षुर्विकल इव 'सचक्षुषं' विद्यमाननेत्रं, सशब्दस्य विद्यमानार्थस्य ग्रहणं, यथा

सलोमको, विद्यमानलोमक इत्यर्थः, ततोऽप्ययमत्र भावार्थः—यथाऽन्धश्चक्षुष्मन्तं पुरतो विधाय गमनादि करोति, एवं श्राद्धो बुद्धिं पूर्वं कृत्वा भाषते, कोऽर्थः?—प्रेक्षापूर्वकारी मत्या पर्यालोच्य भाषत इत्यर्थः, किं कुर्वन् भाषते? इत्याह—'**आत्मनि**' स्वस्मिन् '**परस्मिन्**' अन्यत्र, चशब्दः पूर्वापेक्षया समुच्चये, '**वर्जयन्**' परिहरन् '**पीडां**' बाधां, न केवलं स्वपरयोः प्रत्येकं, किन्तु '**उभओऽवि**'त्ति उभयोरपि समुदितयोरितियावत्, तत्र स्वपीडाजनकं यथा पिङ्गलस्थपतेः खानितसरःसलिलस्थैर्यार्थिनृपतिप्रश्नानन्तरकथितात्मसदृशपुरुषबलिदानप्रतिवचनं, तद्धि तथाविधान्यपुरुषाप्राप्तौ स्ववधाय तस्य जातमिति स्वपीडाजनकं, परपीडाजनकं कस्यचिच्चौरोऽयं यातीति वचनं, तद्धि नगरारक्षकादिना श्रुतं तद्वधाय भवतीति परपीडाहेतुः, उभयपीडाजनकमप्येतदेव, यतस्तद्वचनश्रवणसमुपजातकोपात् कदाचित्तं हन्यादपि, नगरारक्षकादिश्च चौरादिकमित्युभयपीडाजनकमिति गाथार्थः ॥ उक्तं यतनाद्वारमधुनाऽतीचारद्वारमभिधीयते—

सहसा अब्भक्खाणं रहसं च सदारमंतभेयं च ।
मोसुवएसं तह कूडलेहकरणं च वज्जेज्जा ॥ २५ ॥

इह गृहीतस्थूलमृषावादविरतिः श्रावकः '**सहसा**' अनालोच्य '**अभ्याख्यानं**' असद्दोषाध्यारोपणं, यथा चौरस्त्वं पारदारिको वेत्यादि, सहसाऽभ्याख्यानं, तद्वर्जयेदिति तुर्यपादान्तेन संबन्धः, तथा '**रहसं च**' त्ति चशब्देन अभ्याख्यानशब्दस्य सम्बन्धाद्रहोऽभ्याख्यानं च, तत्र रहः—एकान्तस्तत्र तेन वा अभ्याख्यानं रहोऽभ्याख्यानं, एतदुक्तं भवति—रहसि मन्त्रयमाणानभिधत्ते—एते हीदं चेदं च राजविरुद्धादिकं मन्त्रयन्ते, तथा '**स्वदारमन्त्रभेदं च**' स्वकलत्रविश्रब्धभाषितान्यकथनं, दारग्रहणं चेह मित्राद्युपलक्षणार्थं, 'चः' समुच्चये, तथा '**मोसुवएसं**' ति मृषा—अलीकं तद्विषय उपदेशो मृषोपदेशः, त्वमिदमेवं च ब्रूहीत्याद्यसत्याभिधानशिक्षणं, तथा '**कूटलेखानां**' असद्भूतार्थसूचकाक्षरलेखनानां करणं—विधानं कूटलेखकरणं तच्च '**वर्जयेत्**' परिहरेद्, यत एतानि समाचरन्नतिचरति द्वितीयाणुव्रतमिति। नन्वाद्यातिचार एवैक आस्तां द्वितीयाभिधानमनर्थकम्, अभ्याख्यानस्योभयत्राप्यविशेषात्, सत्यं, किन्तु रहोऽभ्याख्यानमेकान्तनिमित्तवितर्कमात्रपूर्वकं संभाव्यमानाभ्याख्येयार्थाभिधानम्, इतरत्त्ववितर्कपूर्वमेवेति विशेषः, नन्वभ्याख्यानमसद्दोषाभिधानरूपत्वेन प्रत्याख्यातत्वाद्भङ्ग एव, न त्वतिचारः इति, सत्यं, किन्तु यदा परोपघातकमनाभोगादिनाऽभिधत्ते तदा सङ्क्लेशाभावेन व्रतानपेक्षत्वाभावान्न व्रतभङ्गः, परोपघात-

हेतुत्वाच्च भङ्ग इति भङ्गाभङ्गरूपतयाऽतिचारः, यदा पुनस्तीव्रसङ्क्लेशादभ्याख्याति तदा भङ्ग एव, व्रतनिरपेक्षत्वात्,
आह च–" सहसब्भक्खाणाई जाणंतो जइ करेज्ज तो भंगो। जइ पुणऽणाभोगाईहिं सो तो होइ अइयारो
॥ १ ॥" स्वदारमन्त्रभेदः पुनरनुवादरूपत्वेन सत्यत्वाद् यद्यपि नातिचारो घटते तथाऽपि मन्त्रितार्थप्रकाशन-
जनितलज्जादितः स्वदारादेर्मरणादिसंभवेन परमार्थतस्तस्यासत्यत्वात् कथञ्चिद्भङ्गरूपत्वादतिचार एव, तथा मृषोपदेशो
यद्यपि मृषा न वादयामीत्यत्र न वदामि न वादयामीत्यत्र वा व्रते भङ्ग एव, न वदामीति व्रतान्तरे तु न किञ्चन,
तथाऽपि सहसाकारानाभोगाभ्यामतिक्रमव्यतिक्रमातिचारैर्वा मृषावादे परप्रवर्त्तनं व्रतस्यातिचारोऽयं, अथवा व्रत-
संरक्षणबुद्ध्या परवृत्तान्तकथनद्वारेण मृषोपदेशं यच्छतोऽतिचारोऽयं, व्रतसव्यपेक्षत्वान्मृषावादे परप्रवर्त्तनाच्च भग्ना
भग्नरूपत्वाद्व्रतस्येति, कूटलेखकरणं तु यद्यपि कायेन मृषावादं न करोमीत्यस्य न करोमि न कारयामीत्यस्य वा
व्रतस्य भङ्ग एव, व्रतान्तरे तु न किञ्चन, तथाऽपि सहसाकारादिनाऽतिक्रमादिना वाऽतिचारः, अथवा 'मृषावाद'
इति मृषाभाषणं मया प्रत्याख्यातं इदं पुनर्लेखनमिति भावनया मुग्धबुद्धेर्व्रतसव्यपेक्षस्यातिचार इति गाथाऽर्थः
२० ॥ ३४ ॥ गतमतिचारद्वारमधुना भङ्गद्वारं प्रतिपाद्यते—

अब्भक्खाणाईणि उ जाणंतो जइ करेज्ज तस्स भवे ।
भंगो पावस्सुदए मूलं सो सव्वदुक्खाणं ॥ ३६ ॥

'अभ्याख्यानं' प्रागुक्तस्वरूपं तदादिर्येषां स्वदारमन्त्रभेदाद्यतिचारपदानां तान्यभ्याख्यानादीनि 'जानन्' अवबुध्यमान आकुट्टयेतियावत् 'यदि कुर्यात्' चेद्विदध्यात्तदा 'तस्य' मृषावादव्रतिनो 'भवेद्भङ्गः' संपद्येत विनाशः, अलीकविरतेरिति शेषः, 'पापस्योदये' पातकस्य विपाकानुभवे, द्वितीयकषायप्रादुर्भाव इति तात्पर्यं, 'मूलं' कारणं 'स तु' स पुनः विनाशः 'सर्वदुःखानां' समस्तासातानामिहपरलोकभाविशरीरमानसानां, तुशब्दः प्रथमपादान्तवर्त्त्यप्यत्रार्थवशात्सशब्देन योजित इति गाथार्थः ॥३६॥ गतं भङ्गद्वारं, सम्प्रति भावनाद्वारमुच्यते—

तेसिं नमामि पयओ साहूणं गुणसहस्सकलियाणं ।
जेसिं मुहाउ निच्चं सच्चं अमयं व पज्झरइ ॥ ३७ ॥

इह गृहीतासत्यविरतिना गृहस्थेन सदैवैवमभिध्यानं कार्यं, यथा—तेभ्यो 'नमामि'—प्रणिपतामि, क्रियायोगे चतुर्थी पूर्ववत्, सूत्रे च षष्ठी चतुर्थीस्थाने, यत उक्तं—" छट्ठिविहत्तीएँ भण्णइ चउत्थी "ति 'प्रयतः' प्रयत्नवान्

' साहूणं ' त्ति साधयन्ति पौरुषेयीभिः क्रियाभिर्मोक्षमिति साधवस्तेभ्यः, कीदृशेभ्यः ? इत्याह–' गुणसहस्रकलि-
तेभ्यः ' गुणाः–मूलोत्तरगुणलक्षणास्तेषां सहस्राणि अष्टादशशीलाङ्गसहस्ररूपाणि तैः कलिता–युक्तास्तेभ्यः, अनेन
नामादिसाधुव्यवच्छेदेन भावसाधुभ्य इत्युक्तं भवति, तेभ्यो नमामि, येषां किमित्याह–येषां ' मुखात् ' वदनात्
' नित्यं ' सदा ' सत्यं ' ऋतं चतुर्विधं कायमनोवागजिह्मताऽविसंवादनरूपं जिनमतप्रसिद्धमेव, तथा च वाचक-
मुख्यः–" अविसंवादनयोगः, कायमनोवागजिह्मता चैव । सत्यं चतुर्विधं तच्च जिनवरमतेऽस्ति नान्यत्र
॥ १ ॥ " अथवा दशविधं सत्यं दशवैकालिकनिर्युक्तिप्रसिद्धं, तदुक्तम्–" जणवय सम्मय ठवणा, नामे
रूवे पडुच्चसच्चे य । ववहार भाव जोगे दसमे ओवम्मसच्चे य ॥ १ ॥ " ' अमृतमिव ' पीयूषमिव आह्लादकत्वात्
' पज्झरइ ' त्ति प्रक्षरति प्रसरति निर्गच्छतीतियावदिति गाथार्थः ॥ ३६ ॥ उक्तं मृषावादभावनाद्वारं, तद्वचनाच्च
समाप्तं नवप्रकारमपि मृषावादव्रतम्, अधुनाऽदत्तादानाख्यं तृतीयाणुव्रतं नवभेदमभिधित्सुः क्रमागतं प्रथमद्वारमाह—

सामीजीवादत्तं तित्थयरेणं तहेव य गुरूहिं ।
एयस्स उ जा विरती होइ अदत्ते सरूवं तु ॥ ३८ ॥

स्वामी च—प्रभुर्जीवस्तु—आत्मा स्वामिजीवौ ताभ्यामदत्तम्—अवितीर्णं स्वामिजीवादत्तं, 'द्वन्द्वात्परं पदं प्रत्येकमभिसम्बध्यते' इति न्यायाददत्तशब्दस्य प्रत्येकं सम्बन्धः, स्वाम्यदत्तं जीवादत्तं च, तत्र यद्वस्तु हिरण्यादिकं स्वामिना स्वयं न वितीर्णं तत्स्वाम्यदत्तं, यत्तु पश्वादिजीवरूपं स्वपरिग्रहवर्त्ति कश्चिद्विनाशयति तत्तस्य जीवादत्तं, यतस्तेन पश्वादिना न खल्वात्मप्राणास्तस्य हननायानुमताः, सर्वस्य जीवराशेर्जीवितकाम्यत्वात्, तदुक्तम्—" सव्वे जीवावि इच्छन्ति, जीविउं न मरिज्जिउं "। तथा ' तित्थयरेणं ' ति तीर्यतेऽनेन संसारसमुद्र इति तीर्थं—सम्यग्दर्शनादिपरिणामस्तदनन्यत्वात् सङ्घश्च तीर्थं, तत्करणशीलस्तीर्थकरस्तेन तीर्थकरेण, अदत्तमिति प्रथमपदसमस्तमपि पदमिष्टत्वात् सर्वत्र योज्यं, ततो यद्गृहस्वामिना आधाकर्मिकादि दत्तमप्यर्हताऽननुज्ञातमादीयते तत्तीर्थकरेणादत्तमिति, ' तहेव य गुरूहिं ' ति यथा स्वाम्यदत्ताद्यदत्तं तथैव ' गुरुभिः ' आचार्यादिभिरदत्तं यद् द्विचत्वारिंशद्दोषविनिर्मुक्तमपि गुरूणामननुमत्या भुज्यते तद्गुर्वदत्तमिति, यदुक्तम्—" सत्तविहालोगविवज्जिए भुंजमाणस्स तेणियं होइ " त्ति, सप्तविधालोकश्च—" ठाण दिसि पगासणया भायण पक्खेवणा य गुरु भावे । सत्तविहो आलोओ सयावि जयणा सुविहियाणं ॥१॥" ति गाथातोऽवगन्तव्यः, एतस्य चतूरूपस्यादत्तस्य या विरतिः—निवृत्तिः, ग्रहणं

प्रतीति शेषः, ' भवति ' जायते ' अदत्ते ' अदत्तादानव्रते ' स्वरूपं ' स्वभावः ' तु ' छन्दःपूरणे इति गाथार्थः ॥ ३७ ॥ कथितं यादृशद्वारमधुना भेदद्वारमाख्यायते—

सचित्ताचित्तोभयदुपयचउप्पय तहेव अपयं च ।
जेण य चोरंकारो विसओऽदत्तंमि सो नेओ ॥ ३९ ॥

सचित्तं च—सचेतनमचित्तं च—अचेतनमुभयं च—मिश्रं सचित्ताचित्तोभयं, किमेतावद्भेदमित्याह—द्विपदं चतुष्पदं च द्विपदचतुष्पदं, वस्त्विति शेषः, समाहारत्वादेकवचनमनुस्वारलोपस्तूभयत्रापि प्राकृतत्वात्, तत्र सचित्तं द्विपदं—जीवन्मनुष्यादि अचित्तम्—अर्हत्प्रतिमादि उभयं—हाराद्यलङ्कृतसीमन्तिन्यादि चतुष्पदं च सचित्तमश्वादि अचित्तमैरावतप्रकृत्यादि उभयं नक्षत्रमालाद्यलङ्कृतगजादि, एतच्च द्विपदादि सचित्तादिरूपं विषयोऽदत्ते ज्ञेय इति तुर्यपादेन सम्बन्धः, किमेतावानेवादत्तविषयः ?, नेत्याह—अपदं च, कथं ?—' तथैव ' तेनैव सचित्ताचित्तोभयप्रकारेण, तत्र सचित्तमपदं—सजीवधान्यादि अचित्तं—स्वर्णादि मिश्रं—कम्बलीबद्धमुद्गादि, अनेन च नवभेदमदत्तादानमुक्तम्, अथवा बहुतरभेदत्वमस्याह—' जेण य चोरंकारो विसओऽदत्तंमि सो नेओ ' त्ति येन च चौरङ्कारः—

चौरोऽयमिति शब्दप्रत्ययप्रवृत्तेः 'विषयो' गोचरः 'अदत्तस्य' अदत्तादानस्य स 'ज्ञेयः' ज्ञातव्यः, षष्ठीसप्तम्योरर्थं प्रत्यभेदाददत्तस्येति व्याख्यातं, भावार्थस्त्वयं—येन येन द्रव्यादिनाऽपहृतेन चौरोऽयमिति व्यपदिश्यते तत्तद्द्रव्यादिसम्बन्धेन स सोऽदत्तादानभेद इति गाथार्थः ॥ ३८ ॥ उक्तं भेदद्वारमधुना यथा जायत इत्युच्यते—

भेदाः सचित्ताद्याः गा. ३९
यथा जायते गा. ४०

गुणठाणगंमि तह परिणयंमि जीवस्स कुगइभीयस्स ।
वयगहपरिणामो च्चिय होइ दढं तिव्वसड्ढस्स ॥ ४० ॥

गुणाः—सम्यग्ज्ञानदर्शनचारित्ररूपास्तेषां स्थानं—तिष्ठन्त्यस्मिन्निति स्थानं—शुद्ध्यशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदो, यथाऽध्यवसायस्थानमिति, तस्मिन् 'तथापरिणते' तेन स्वरूपेण आगमोक्तेन परिणते, कोऽर्थः ?—मिथ्यादृष्टिगुणस्थानकादारभ्य मोहनीयादिकर्मणः स्थितिघातादिक्रमेणोत्तरोत्तरगुणस्थानावाप्तौ, यद्यपि चात्र सामान्येन 'गुणठाणगम्मि' इत्युक्तं तथाऽपि देशविरतिगुणस्थानक इति गम्यते, यतोऽत्र तृतीयाणुव्रतं यथा जायत इति द्वारेण व्याख्यातुमुपक्रान्तम्, एतच्चात्रैव गुणस्थानके संभवि, न शेषेषु, अस्य च तथा परिणामोऽयं—सम्यक्त्वलाभानन्तरं पल्योपमपृथक्त्वप्रमाणस्थितिघाते एतद्भवनं, अस्मिंश्च जाते 'जीवस्य' आत्मनः 'कुग-

तिभीतस्य ' दुर्गतित्रस्तस्य अविरतिमूलकर्मबन्धभीरोरितियावत्, व्रतमिह प्रस्तावाददत्तादानविरतिरूपं तस्य ग्रहो-ग्रहणं तत्परिणामः-तदध्यवसायः ' च्चिय ' त्ति पूरणे ' भवति ' जायते ' दृढम् ' अत्यर्थं ' तीव्रश्रद्धस्य ' उत्कटानिजाभिलाषस्य, कोऽर्थः ?--" परिमियमुवसेवंतो अपरिमियमणंतयं परिहरंतो । पावइ परम्मि लोए अपरिमियमणंतयं सोक्खं ॥ १ ॥ " इत्यभिप्रायवत इति गाथार्थः ॥ ३९ ॥ गतं यथा जायत इति द्वारम्, अधुना चतुर्थं दोषद्वारमुच्यते—

जे पुण करेंति विरइं अदिन्नदाणस्स नेह लोहिल्ला ।
ते मंडियविजया इव चोरा पावेंति दुक्खाइं ॥ ४१ ॥

ये पुनः, प्राणिन इति शेषः, ' कुर्वन्ति ' विदधति ' विरतिं ' निवृत्तिं ' अदत्तादानस्य ' अवितीर्णग्रहणस्य चौर्यस्येतियावत् ' ने 'ति निषेधे ' इह ' मनुष्यलोके ' लोहिल 'त्ति, प्राकृतेऽस्त्यर्थे इल्लं, तथा चोक्तम्—'आलं इल्लं चास्त्यर्थे ' ततो लोभवन्त इत्यर्थः, ' ते मंडियविजया इव चोर 'त्ति ' बहुवयणेण दुवयण 'मिति

वचनात् मण्डिकविजयाविव 'चौरौ' तस्करौ 'प्राप्नुवन्ति' लभन्ते 'दुःखानि' शूलारोपणोद्बन्धनादीनीति गाथार्थः ॥ ४० ॥ भावार्थः कथानकगम्यस्तच्चेदम्—

विश्वविश्वम्भराभोगचूडालङ्कारसन्निभा । अवन्तीदेशप्रसरा, श्रीमदुज्जयनी पुरी ॥ १ ॥ यस्यां विपणिवीथीषु, वीक्ष्य रत्नादिसन्ततीः । पानीयमात्रसंशेषं, मन्यन्ते सागरं जनाः ॥ २ ॥ यस्यां च विततोत्तुङ्गरम्यहर्म्यावलीश्रियः । स्वर्गिणामपि चेतांसि, हरन्ति विप्रलोकिताः ॥ ३ ॥ औदार्यदाक्ष्यदाक्षिण्यशौर्यवीर्यादिसद्गुणैः । यन्निवासी जनो भाति, धर्मकर्मनिषण्णधीः ॥ ४ ॥ तस्यामरातिसामन्तमत्तमातङ्गकेशरी । अनीतिकौमुदीभानुर्जितशत्रुर्महीपतिः ॥ ५ ॥ सिक्तोऽप्यरिपुरन्ध्रीणां, सन्ततं नेत्रवारिभिः । प्रतापदहनो यस्य, जाज्वलीति स्म कौतुकम् ॥ ६ ॥ यस्य च—रागः सन्नीतिशास्त्रेषु, विचित्तत्वं कुकर्मसु । निःस्पृहत्वं परस्त्रीषु, लाम्पट्यं गुणसङ्ग्रहे ॥ ७ ॥ तस्य भूमीपतेर्मान्यो, बन्धुकैरवचन्द्रमाः । अचलः सार्थवाहोऽभूदुदग्रनवयौवनः ॥ ८ ॥ अपि च—रूपेण पुष्पधन्वानं, धनेन नरवाहनम् । जिगाय यो महासत्त्वः, सत्त्वेन च युधिष्ठिरम् ॥ ९ ॥ इतश्च—निःशेषकलाकुशला निरुपमलावण्यरूपसौभाग्या । तस्यामभून्नगर्यां विलासिनी देवदत्ताख्या ॥ १० ॥ या च—कन्दर्पसर्पदष्टानां, संजीवनमहौषधी । सम्भोगसुखरत्नानां,

सौकु- कथमम्लानि, अन्यथा । विनिर्मितः धात्रा मन्ये यद्देहो, अस्पृश्यतैव अपिच– ॥ ११ ॥

रोहणाचलकाश्यपी ॥ ११ ॥ अपिच–अस्पृश्यतैव यद्देहो, मन्ये धात्रा विनिर्मितः । अन्यथा कथमम्लानि, सौकु-
मार्यं भवेत्तनोः? ॥ १२ ॥ द्यूतकरचक्रवर्ती तत्रैव बभूव मूलदेवाख्यः। निःशेषकलाकुशलो धूर्त्तपतिर्धीमतां धुर्यः॥१३॥
तत्र भावानुरक्ता सा, तमेव परिपश्यति । अग्रतः पृष्ठतो द्वारि, मध्ये हट्टे गृहेषु च ॥ १४ ॥ मूलदेवोऽपि तद्रागात्त-
द्वियोगे न कुत्रचित् । लेभे रतिं दिवा रात्रावासने शयनेऽपि वा ॥ १५ ॥ ततश्च–जीवलोकं सुखं सारमन्योऽन्यमनु-
रक्तयोः। आसेवमानयोर्जातस्तयोः कालः कियानपि॥ १६ ॥ अन्यदा च समायातः, स वसन्तमहोत्सवः। यत्रोद्यानगताः
पौरा, नानाक्रीडाः प्रचक्रिरे ॥१७॥ अचलः सार्थवाहस्तु, तदोद्यानमुपागतः। ददर्श देवदत्तां तां, मूलदेवसमन्विताम्॥१८॥
ततोऽसौ चिन्तयामास, धन्यः कोऽप्येष सद्युवा । योऽनया मृगलक्ष्मेव, पौर्णमास्या विराजते ॥ १९ ॥ अहो सौभाग्य-
सम्पत्तिरहो लावण्यमुत्तमम्। अहो यौवनमेतस्या, यूनामुन्मादहेतुकम् ॥२०॥ अहो नव्यो विषग्रन्थिरियं धात्रा विनिर्मिता ।
यत्संभोगे जनः सौख्यं, संत्यागे दुःखमश्नुते ॥२१॥ ततः–तत्संजाताभिलाषेण, चिन्तयित्वैवमादिकम्। समीपे प्रेषितस्त-
स्यास्तेन सङ्गमको नरः॥ २२॥ तेनोदिता च सा गन्तुं, गृहं तेऽद्य समेष्यति। त्वत्सङ्गमाभिलाषेण, सार्थवाहोऽचलाभिधः
॥ २३ ॥ तयोदितं समायातु, तूर्णं स्वागतभाजनम् । धनदं स्वयमायान्तं, गृही को न समीहते? ॥ २४ ॥ इत्युक्त्वा सा

गता गेहं, सोऽपि सार्थपतेः पुरः । सप्रहर्षं समागत्य, तद्वृत्तान्तं न्यवेदयत् ॥ २५ ॥ ततः प्रदोषकालेऽसौ, कृत्वा स्नानविलेपने । गृहीतालङ्कृतिर्मित्रैः, समेतस्तद्गृहं गतः ॥ २६ ॥ यच्च—रत्नदीपकृतोद्योतं, चित्रकर्मोपशोभितम् । लक्ष्मीकुलगृहं लोकलोचनानन्ददायकम् ॥ २७ ॥ उपविष्टश्च तत्रासौ, स्वयं दत्तासनस्तया । कृताङ्घ्रिक्षालनो वासशय्यायां विनिवेशितः ॥ २८ ॥ उचितप्रतिपत्त्या च, तदीया मित्रमण्डली । प्रस्तुतैर्विदग्धालापैरनुरागविवर्द्धनैः ॥ २९ ॥ स्थित्वा क्षणं गता यावत्स्वस्थानान्यचलस्ततः । सद्भावसारमारेभे, रन्तुमेष तया समम् ॥ ३० ॥ साऽपि नानाविधैर्बन्धप्रयोगकरणैस्तथा । तं रञ्ज यथाऽन्यासां, स्त्रीणां नामापि नेच्छति ॥ ३१ ॥ तत्प्रभृत्येव तुष्टोऽसौ, वस्त्रालङ्कारभोजनैः । नानाविधोपचारैश्च, सेवते तामहर्निशम् ॥ ३२ ॥ केवलं कुट्टिनीभीता, तमेषा बहु मन्यते । ज्वलदङ्गारकल्पं तु, चेतसा कल्पयत्यलम् ॥ ३३ ॥ मूलदेवो यतस्तस्याश्चित्ताभीष्टोऽचलः पुनः । कुट्टिन्या अर्थलोभिन्या, उपरोधात्प्रवेशितः ॥ ३४ ॥ परं—कृत्रिमेणापि रागेण, तया सोऽप्यनुवर्त्तितः । तथा यथा दिवा रात्रौ, पृष्ठं नैव स मुञ्चति ॥ ३५ ॥ अत एवोक्तम्—"कारिमकयाणुरागाण वित्तमट्ठं परत्तमाणीणं । वेसाण कवड्डीणं वसं गओ को जए चुक्को ? ॥ ३६ ॥" इतश्च—अचलो यत्प्रभृत्यस्य, विवेश भवनं धनी । तत्प्रभृत्येव नायाति,

मूलदेवस्तदालयम् ॥ ३७ ॥ ततोऽसौ तद्वियोगाग्नितीव्रसन्तापतापिता । कुट्टनीमन्यदोवाच, मूलदेवं प्रवेशय ॥ ३८ ॥ प्रसर्पद्दर्पकन्दर्पविषवेगविघूर्णितम् । तं विना मां यतो मातः! कोऽन्यः सुखयितुं क्षमः ? ॥ ३९ ॥ तयोदितं यथा वत्से !, सत्यमेव त्वया कृतम् । यदेतन्नीतिशास्त्रेषु, पण्डितैरनुघुष्यते ॥ ४० ॥ अपात्रे रमते नारी, गिरौ वर्षति माधवः । नीचमाश्रयते लक्ष्मीः, प्राज्ञः प्रायेण निर्द्धनः ॥ ४१ ॥ मुक्त्वाऽचलं यतो मूर्खे !, समस्तगुणसागरम् । निःस्वं द्यूतरतं धूर्तं, मूलदेवं त्वमिच्छसि ॥ ४२ ॥ देवदत्तया भणितम्—मातर्न रूपतारुण्यधनाढ्यत्वादिसद्गुणे । लुब्धाऽहं किन्तु विज्ञानकौशले तत्तु यादृशम् ॥ ४३ ॥ मूलदेवे समस्तीह, तादृशं न सुरेष्वपि । जनन्योक्तं—विज्ञानेनापि नो हीनोऽचलोऽयं मूलदेवतः ॥४४॥ (युग्मम्) तयोदितं यथा मातर्मैवं वोचोऽसमञ्जसम् । अनयोरन्तरं यस्माद्भानुखद्योतयोरिव ॥ ४५ ॥ जनन्योक्तं यथा वत्से !, यद्येवं तत्परीक्ष्यताम् । अनयोः को गुणः कस्य ?, तयोक्तं साधु साध्विदम् ॥ ४६ ॥ गच्छ त्वमम्ब ! तत्पार्श्वे, मद्वचनात्त्वं न्यवेदय । यथाऽद्य देवदत्तायाः, इक्षुवाञ्छोदयो हि भोः ! ॥४७॥ ततस्तदन्तिकं गत्वा, तदुक्तं सा न्यवेदयत् । सोऽपीक्षुसंभृतां गन्त्रीं, प्रेषयामास तद्गृहम् ॥ ४८ ॥ ततोऽसौ प्राह तां वत्से !, श्रेष्ठिनः सर्वमद्भुतम् । विभवो दानशक्तिश्च, महत्त्वं प्रियभाषिता ॥ ४९ ॥ मुहूर्त्तमिव मौनेन, सविषादं

विलम्ब्य सा । मूलदेवस्य विज्ञानं, स्मरन्ती समभाषत ॥ ५० ॥ मत्ता करेणुकाऽहं किं ?, क्षिप्तो येनैवमग्रतः । ममायमिक्षुसंभारः, संस्कारपरिवर्जितः ॥ ५१ ॥ इदानीं गच्छ मातस्त्वं, मूलदेवमिदं वद । येन तस्यापि विज्ञानसारासारत्वमीक्ष्यते ॥ ५२ ॥ ततः सा मूलदेवस्य, समीपमागमद् द्रुतम् । संदेशं देवदत्तायाः, अवादीच्च सविस्तरम् ॥ ५३ ॥ सोऽपि तत्कथनस्यान्ते, जगाम द्यूतमण्डपम् । जित्वा द्यूतकरांस्तत्र, ललौ दश कपर्दकान् ॥ ५४ ॥ शराव, संपुटं द्वाभ्यां, द्वाभ्यां सारेक्षुयष्टिके । चतुर्जातादिकं शेषैः, क्रीत्वा गेहमुपागतः ॥ ५५ ॥ ततोऽसाविक्षुयष्टी ते, घटित्वा द्व्यङ्गुलान्यथ । चक्रे लघूनि खण्डानि, शूलाग्रैः स बबन्ध च ॥ ५६ ॥ चतुर्जातकसंस्कारं, तेषां कृत्वाऽतिपेशलम् । शरावसंपुटे पश्चात्, स्थापयामास धूपिते ॥ ५७ ॥ आहूय देवदत्तायाः, दासचेटीं ततोऽर्पयत् । शरावसंपुटं साऽपि, गत्वा तस्या न्यवेदयत् ॥ ५८ ॥ तदेतन्मूलदेवेन, स्वामिनि ! प्रेषितं तव । अम्बामुखेन संदिष्टं, यत्त्वया तस्य धीमतः ॥ ५९ ॥ ततः सा सादरं पाणी, प्रसार्य प्रतिगृह्य तत् । प्रोवाच जननीमम्ब !, पश्य पश्यान्तरं नृणाम् ॥ ६० ॥ यतः—व्ययित्वाऽपि बहुद्रव्यमिक्षूणां भक्षणार्हताम् । अचलो न तथा चक्रे, मूलदेवो यथा सुधीः ॥ ६१ ॥ गाढमन्युभरावेगवशवर्त्तिन्यसावपि । न ददावुत्तरं किञ्चित्तत्प्रभृत्येव केवलम् ॥ ६२ ॥ छिद्राणि मूलदेवस्य, वीक्षितुं सा प्रच-

क्रमे । दुष्प्रापाणि न चैतानि, विषयासक्तचेतसाम् ॥ ६३ ॥ यदुक्तम्—"कोऽर्थान् प्राप्य न गर्वितो ? विषयिणः कस्यापदोऽस्तं गताः ?, स्त्रीभिः कस्य न खण्डितं भुवि मनः ? को नाम राज्ञां प्रियः ? । कः कालस्य न गोचरान्तरगतः ? कोऽर्थी गतो गौरवं ?, को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ? ॥ ६४ ॥" ततोऽन्येद्युस्तयाऽभाणि, सार्थनाथोऽचलो यथा । त्वमद्य देवदत्ताऽग्रे, स्वस्य ग्रामगमं वद ॥ ६५ ॥ मूलदेवं गृहे येन, सा प्रवेशयति द्रुतम् । ततः प्रदोषवेलायामागत्य निगृहाण तम् ॥ ६६ ॥ एवमुक्तेन तेनापि, सर्वमेतदनुष्ठितम् । देवदत्ता ततो हृष्टा, मूलदेवमथाह्वयत् ॥ ६७ ॥ विज्ञाय तं समायातमचलस्तज्जिघृक्षया । पुरुषैर्वेष्टयामास, सर्वतस्तन्निकेतनम् ॥ ६८ ॥ मूलदेवो भयत्रस्तः, पर्यङ्काधो व्यवस्थितः, । खड्गव्यग्रकरस्तस्मिन्नचलोऽपि समागतः ॥ ६९ ॥ उपविष्टश्च पल्यङ्केऽवगम्य तमधः स्थितम् । देवदत्ता समादिष्टा, स्नानहेतुप्रसिद्धये ॥ ७० ॥ आदेशानन्तरं सर्वं, तस्य निष्पाद्य शासनम् । समस्तस्नानपोतं च, बभाणैतदसावमुम् ॥ ७१ ॥ एतत्त्वद्वचनान्नाथ !, स्नानाय प्रगुणीकृतम् ।
११ आसनादि तदुत्तिष्ठ, स प्राहात्रैव मज्ज्यताम् ॥ ७२ ॥ पल्यङ्कारूढ एवाहं, यतः स्नास्यामि सुन्दरि ! । तयोदितं भव-त्वेवं, किन्तु शय्या विनङ्क्ष्यति ॥ ७३ ॥ सोऽवदच्छोभनामन्यां, कारयिष्याम्यहं प्रिये ! । तस्मादानीयतामेताचि-

न्तया किं तवैतया ? ॥ ७४ ॥ ततः सोद्वेगचित्ताऽसौ, तं तत्रैव व्यवस्थितम् । स्नपयितुं समारेभे, शनैर्नात्युष्णवारिणा ॥ ७५ ॥ तद्भावं स तु विज्ञाय, तथा क्षुद्रतया जलम् । चिक्षेपोष्णं यथाऽधःस्थो, दह्यमानः स निर्गतः ॥७६॥ तं निर्यातं स वीक्ष्याह, गृहीत्वा केशसञ्चये । किं करोमि तवेदानीं, प्राप्तक्षुण्णस्य कथ्यताम् ? ॥ ७७ ॥ सोऽब्रवीद्रोचते तुभ्यं, यत्तदेव विधीयताम् । ततोऽसौ चिन्तयामास, महात्माऽसावहो ! अयम् ॥ ७८ ॥ मनागपि न दीनत्वमापन्नव्यसनोऽपि यः । प्रकाशयति यद्वाऽत्र, सतामेतत्कुलव्रतम् ॥ ७९ ॥ यदुक्तम्—" विपदि न यस्य विषादः सम्पदि हर्षो रणे च धीरत्वम् । तं भुवनातिलककल्पं जनयति जननी सुतं विरलम् ॥ ८० ॥ " किञ्च-विरला एव संसारेऽनवाप्तव्यसना जनाः । अनुपायजीविनः स्थायिसौख्या वाच्यविवर्जिताः ॥ ८१ ॥ उक्तञ्च—" कस्य वक्तव्यता नास्ति ?, सोपायं को न जीवति ? । व्यसनं केन न प्राप्तं?, कस्य सौख्यं निरन्तरम् ? ॥८२॥ " विचिन्त्यैवं ततस्तेन, मामप्येवंविधापदि । विमुञ्चेस्त्वं महाभाग !, गदित्वैवं विसर्जितः ॥ ८३ ॥ पराभवपदापन्नो, मूलदेवो व्यचिन्तयत् । स्वमुखं दर्शयिष्यामि, कथं लोकस्य साम्प्रतम् ? ॥ ८४ ॥ यतः—" धनमानविहीनेन, नरेणापुण्यभोगिना । सवासा यत्र नेष्यन्ते, गन्तव्यं तत्र कुत्रचित् ॥८५॥ इत्येवं चिन्तयित्वाऽसौ, बिन्नातटपुरं प्रति । प्रवृत्तो गन्तुमेकाकी, स्वल्प-

पाथेयसंयुतः ॥ ८६ ॥ गच्छंश्च दिवसैः कैश्चित, संप्राप्तोऽसौ महाटवीम् । क्षीणसंबलकस्यास्य, सद्धतो मिलितस्ततः
॥ ८७ ॥ सक्तुपोट्टलिकाहस्तस्तं वीक्ष्यैष व्यचिन्तयत् । पाथेयेनाहमप्यस्य, लङ्घयिष्ये महाटवीम् ॥ ८८ ॥ ततस्तेन
समं गन्तुं, प्रवृत्तो यावदागतः । मध्याह्नसमयस्तीव्रस्ततो वीक्ष्य सरोवरम् ॥ ८९ ॥ मार्गासन्नतरं सारं, तथा न्यग्रोध-
पादपम् । छायायां तस्य विश्रान्तौ, तौ क्षणं सद्धटस्ततः ॥ ९० ॥ उत्थाय नीरतीरे च, भूत्वा सक्तूनभक्षयत् ।
दास्यत्येष ममाप्येवं, मूलदेवस्त्वचिन्तयत् ॥ ९१ ॥ आलापमप्यकुर्वाणस्तेन सार्द्धं च सद्धटः । सक्तुपोट्टलिकां बद्ध्वो,
चचाल कृपणाशयः ॥९२॥ मूलदेवोऽपि मे चिन्तामग्रे कापि करिष्यति । एवमालोचयंश्चित्ते, तत्पृष्ठे व्यलगत्पुनः ॥९३॥
दिनत्रयं व्यतिक्रान्तमेवं तस्य तदाशया । महाटवीं व्यवच्छिद्य, ग्रामनैकट्यमागतौ ॥ ९४ ॥ मूलदेवस्ततश्चित्ते,
व्यवस्थापितवानिदम् । एतदाशानुभावेन, लङ्घितेयं महाटवी ॥ ९५ ॥ उपकर्त्तुं तदेतस्य, शक्यते न मयाऽधुना ।
संकल्प्यैवमवादीत्तं, भो भो भद्र ! यदा मम ॥ ९६ ॥ राज्यलाभं विजानीयास्तदाऽऽगच्छेर्ममान्तिकम् । येन प्रत्युप-
कारं ते, यथाशक्ति करोम्यहम् ॥ ९७ ॥ युग्मम् । इत्येवमुक्त्वा मुक्त्वा तं, स्वयं ग्रामं विवेश सः । भिक्षार्थं तत्र लब्धाश्च,
कुल्माषाः पूरिता पुटी ॥ ९८ ॥ व्यावृत्तः संप्रवृत्तश्च, तडागाभिमुखं ततः । भिक्षार्थं ग्राममायान्तं, साधुं मासोपवासिनम्

॥ ९९ ॥ दृष्ट्वा संकल्पयामास, धन्य एष महामुनिः । अहो ! पुण्यैर्ममात्रैवं, दृष्टिमार्गमुपागतः ॥ १०० ॥ कुल्माषांश्च विमुच्येमान्, नापरं देयमस्ति मे । तद्देतद्दानतोऽप्यद्य, करोम्यात्मकृतार्थताम् ॥ १०१ ॥ एवं चिन्तयता तेन, भक्तिनिर्भरचेतसा । साधुराभाषितो नाथ !, कल्पन्ते यद्यमी तव ॥ १०२ ॥ स्वीक्रियन्तामिमे तर्हि, ममानुग्रहकाम्यया । मुनिरप्येवमुक्तस्तानुपयुज्य गृहीतवान् ॥१०३॥ युग्मम् ॥ मुनिकुल्माषदानेन, मूलदेवोऽतितोषितः । सपयःपयोदनादेन, गाथाऽर्द्धमथ गीतवान् ॥ १०४ ॥ " धन्नाणं खु नराणं कुम्मासा हुंति साहुपारणए ।" अत्रान्तरेऽसौ भणितो देवतया—यत्त्वमीहसे वत्स ! याचस्व निर्विशङ्कं तद्गाथापश्चिमार्द्धेन, तेनोक्तं—"गणियं च देवदत्तं दंतिसहस्सं च रज्जं च " ॥ १०५ ॥ ततो देवतयाऽभाणि, याचितं वत्स ! यत्त्वया । भविष्यति चिरात्तत्ते, मुनिदानानुभावतः ॥ ६ ॥ ततो भिक्षाटनं कृत्वोपभुज्य चलितः पुनः । गच्छंश्चैकपुरं प्राप्तस्तत्र दैशिकमण्डपे ॥७॥ प्रसुप्तो रात्रिशेषे च, स्वप्नेऽसौ रविमण्डलम् । मुखे विशन्तमालोक्य, प्रतिबुद्धस्तदैव च ॥ ८ ॥ दृष्टस्तथाविधः स्वप्नो, देशिकेनापरेण च । कथितश्चोत्सुकीभूय, तेन कार्पटिकाग्रतः ॥ ९ ॥ तैरुक्तम्—आदित्यमण्डलाकारं, सर्पिर्गुडसमन्वितम् । स्वप्नानुभावतोऽद्य त्वं, मण्डकं समवाप्स्यासि ॥ १० ॥ ततः प्रहृष्टचित्तः सन्, भिक्षाकाले समागते । भ्राम्यंस्तल्लब्धवानेकं, मण्डकं स यथोदितम् ॥ ११ ॥ मूलदेवोऽपि विज्ञाय,

स्वप्ने तेषामकौशलम् । समुत्थाय शुचिर्भूत्वा, फलपुष्पसमन्वितः ॥ १२ ॥ गतः सुखासनस्थस्योपाध्यायस्य समी-
पकम् । कृतपूजोपचारश्च, स्वप्नं तस्य न्यवेदयत् ॥ १३ ॥ सोऽपि तस्य तदाकर्ण्य, ग्राहयित्वा स्वपुत्रिकाम् ।
समादिदेश सप्ताहाभ्यन्तरे राज्यमुत्तमम् ॥ १४ ॥ बिन्नातटपुरं प्राप्तो, मूलदेवः क्रमेण च । नगरारक्षकै रात्रौ, क्षेत्र-
द्वारे च वीक्षितः ॥ १५ ॥ गृहीतो लोप्त्रहस्तश्च, दण्डाघातैः प्रताडितः । शरावमालिकां कण्ठे, कारितो बाहुबन्धनः
॥ १६ ॥ आरोप्य रासभं नेतुमारब्धो वध्यभूमिकाम् । एवं कष्टदशां प्राप्तश्चिन्तयामास चेतसि ॥ १७ ॥ किमन्यथा
वचो देव्याः, उपाध्यायस्य चाधुना । मदीयापुण्यसंभारभाराक्रान्तं भविष्यति ॥ १८ ॥ अत्रान्तरे—अपुत्रो नृपतिस्तत्र,
जगाम यममन्दिरम् । पञ्चदिव्याभिषेकोऽभूत्ततस्तानि भ्रमन्ति च ॥ १९ ॥ समायातानि तत्रैव, पथि यत्र स
नीयते । वध्यभूमिं ततो हस्ती, विधाय गलगर्जितम् ॥ २० ॥ करेण तं समादाय, निजस्कन्धमरोपयत् । हेषारवं
तुरङ्गश्च, चक्रे श्रवणसौख्यदम् ॥ २१ ॥ उद्दण्डपुण्डरीक चोपरिष्टात् शिरसोऽभवत् । वीजितं तत्क्षणादेव, चञ्च-
च्चामरयोर्युगम् ॥ २२ ॥ अनाहतोऽपि गम्भीरस्वरं दध्वान दुन्दुभिः । पतिता पुष्पवृष्टिश्च, वृष्टं गन्धोदकं तथा ॥२३॥
सर्वतो बन्दिवृन्दस्योत्तस्थौ जयजयारवः । सान्निध्यतुष्टमनसो, ननृतुश्च पुराङ्गनाः ॥ २४ ॥ एवं महाविभूत्या च,

मूलदेवो नृपोऽजनि । सामन्तादिजनः सर्वस्तदाज्ञां प्रतिपन्नवान् ॥ २५ ॥ दिनेषु केषुचिद्राज्ये, क्रमेण स्थिरतां गते ।
चिन्तितं किं ममैतेन, राज्यलाभेन यस्य मे ॥२६॥ वियोगो देवदत्तायाः, वर्त्तते दुःखहेतुकः ? । संपत्तिः किं च मे श्लाघ्या,
यस्यां न प्रियमेलकः ? ॥ २७ ॥ यतः—“ निवासो यत्र तत्रास्तु, यत्तद्भवतु भोजनम् । य इष्टजनसंयोगस्तद्राज्यं
बन्धनं परम् ॥ २८ ॥ ” इष्टा च देवदत्ता मे, जीवितादपि वर्त्तते । तत्तामानाययाम्येवं, विचिन्त्योज्जयिनीं प्रति
॥ २९ ॥ प्रेषितः प्रयतो दूतः, प्रचुरप्राभृतान्वितः । गतोऽसौ दृष्टवांस्तत्र, जितशत्रुमहीपतिम् ॥ ३० ॥ प्रणामपूर्व-
मेतस्य, ढौकनीयं समर्प्य सः । प्रोवाच मूलदेवाख्यो, बिन्नातटनराधिपः ॥ ३१ ॥ प्रेषयामास मां देवपादान्तं
प्रीतमानसः । संग्रहे देवपादानां, देवदत्ता विलासिनी ॥ ३२ ॥ तदर्थमनुमन्यध्वं, तत्र तद्गमनाय ताम् । एवं दूत-
वचः श्रुत्वा, हृष्टचित्तोऽवदन्नृपः ॥ ३३ ॥ कियन्मात्रमियं दूत ! त्वत्प्रभोर्येन केनचित् । कार्यमार्य ! समस्तीह,
तदन्यदपि कथ्यताम् ॥ ३४ ॥ एतद्राज्यमिमे लोका, इदं द्रव्यमिमे वयम् । स्वाधीनं सर्वमेवेह, त्वत्प्रभोरिति
बुध्यताम् ॥ ३५ ॥ एवमुक्त्वाऽथ सन्मान्य, दूतं वस्त्रादिदानतः । तूर्णं प्रस्थापयामास, समं तेनैव तां नृपः ॥ ३६ ॥
मूलदेवोऽपि तल्लाभप्रीतचेतस्तया समम् । पराभिश्च वरस्त्रीभिर्भूपलक्ष्म्या विराजितः ॥ ३७ ॥ मुनिदानतरोः पुष्पप्रायं

वैपयिकं सुखम् । इच्छातीतभवत्प्राप्तिर्बुभुजे भुजविक्रमी ॥ ३८ ॥ इतश्च मूलदेवस्य, ज्ञात्वाऽसौ राज्यसम्पदम् ।
आयातः सद्धटश्चक्को, पृष्टो राज्ञोदितश्च सः ॥ ३९ ॥ यत्र ग्रामे भवानास्ते, स तत्रैव परं पुनः । नागत्य दर्शनं
कार्यमेवमुक्त्वा विसर्जितः ॥ ४० ॥ इतश्चोज्जयनीपुर्यां, सार्थवाहोऽचलाभिधः । अन्यदा चिन्तयामास, यथा किल
शरीरिषु ॥ ४१ ॥ स एव श्लाघ्यते कीर्त्तिरासमुद्रान्तगामिनी । यस्य प्रह्लादयत्युर्वीमिन्दोः कान्तिरिवोज्ज्वला ॥ ४२ ॥
सा च दानेन तपसा, पराक्रमबलेन वा । विज्ञानज्ञानसंपत्त्या, जायते यशः(त्न)शालिनः ॥४३॥ एतेषु च–तपोऽति-
ष्करं तावद्वणिजः (?) प्रायो न विक्रमः । विज्ञानज्ञानलाभश्चानुपासितगुरोः कुतः ? ॥ ४४ ॥ तद्दानेनैव सत्कीर्त्तिमर्जयामि
यथोचिति। तेनापि स्वभुजोपात्तवित्तस्यैषा प्रशस्यते ॥४५॥ अतो देशान्तरं गत्वा, द्रव्यं तावदुपार्जये । ततो दीनादिदानेन,
वर्द्धयिष्यामि तामहम्॥४६॥एवं च चिन्तयित्वाऽसौ, देशान्तरगमोचितम्। विविधं भाण्डमादाय, कारयित्वा च घोषणाम्॥४७॥
प्रशस्ततिथिनक्षत्रलग्नवारांशदर्शने। चचाल दीनकीनाशवणिग्वर्गादिभिः सह ॥ ४८ ॥ अपि च-अखण्डखण्डितातङ्कप्रण-
यार्थिशिखण्डिकः। लोकलोचनदात्यूहानन्दसन्दोहदायकः ॥ ४९ ॥ लसद्दानजलोत्पीलनिर्वापितमहीतलः । अचलो गन्तु-
मारेभे, प्रावृषेण्य इवाम्बुदः ॥५०॥ अखण्डितप्रयाणैश्च, व्रजन्नेष विवक्षितम् । नगरं संप्राप्तो धीमानाहितक्रयविक्रयः

॥ ५१ ॥ समुपात्तमहालाभोऽचलन्नुज्जयनीं प्रति । मध्ये बिन्नातटं गच्छंस्तत्र भाण्डं प्रवेशयन् ॥ ५२ ॥ अदत्तशुल्कं किमपि, गृहीतः शौल्कशालिकैः । नीतो राजसभां दृष्टो, मूलदेवनृपेण सः ॥५३॥ प्रत्यभिज्ञाय भणितो, भो ! भो ! भो ! सार्थनायक ! । किं मां प्रत्यभिजानासि, भीतभीतो बभाण सः ॥ ५४ ॥ को न प्रत्यभिजानाति, देव ! त्वां नरनायकम् ?। सुविशुद्धयशोराशिनिरुद्धभुवनोदरम् ॥ ५५ ॥ पुनः प्राह ततो राजा, श्रेष्ठिन्नेवमुदाहर । विशेषप्रत्यभिज्ञानं, यतस्त्वं गृह्यसे मया ॥ ५६ ॥ एवमुक्तो न स श्रेष्ठी, यावत्प्रत्युत्तरं जगौ । स्वकेशकबरीं तावत्प्रदर्श्योदाहरन्नृपः ॥ ५७ ॥ स्वकीयचरितं तस्य, ततोऽसौ लज्जयाऽन्वितः । भीतश्चोक्तो नरेन्द्रेण, लज्जसे किंनिमित्तकम्, ? ॥ ५८ ॥ किं वा बिभेषि भो श्रेष्ठिंस्त्वं मे बदुपकारकः । एवमाश्वास्य सन्मान्य, वस्त्रालङ्कारदानतः ॥ ५९ ॥ विसर्जितो गतः श्रेष्ठी, निजावासं क्रमेण च । पुरीमुज्जयिनीं प्रापदमन्दानन्दनिर्भरः ॥ ६० ॥

इतश्च मूलदेवस्य, राज्यं पालयतोऽन्यदा । उल्ललास महारौद्रस्तस्करोपद्रवः पुरे ॥ ६१ ॥ आत्यागत्य कुर्वन्ति, लोकाः प्रचुरमारवम् । अनाथमिव ते देव!, मुष्यते तस्करैः पुरम् ॥६२॥ यत्र यत्र गृहे देव!, द्रव्यसंभावना क्वचित् । सुप्तोत्थितैस्तत्र तत्र, क्षत्रं पतितमीक्ष्यते ॥६३॥ एकं द्वे त्रीणि वा यत्र, क्षत्राणि निपतन्ति नो । न सा विभावरी याति, राजन्नत्र

पुरेऽधुना ॥ ६४ ॥ लोकानामेवमारावं; समाकर्ण्य महीपतिः। जातलज्जः समाहूय, दण्डपाशकमब्रवीत् ॥ ६५ ॥
भो ! भो ! प्रमत्तता किं ते; वर्त्तते निजकर्मणि ?। उद्वेजितं पुरं सर्वं, येनैवं क्षत्रपातकैः ॥ ६६ ॥ स प्राह—देव ! रोषं
परित्यज्य, विज्ञप्तिः श्रूयतां मम। नोपलब्धो मया चौरो; गाढयत्नवताऽप्यलम् ॥ ६८ ॥ तथा च भ्रमणं रात्रौ, पुरस्या-
न्तर्बहिस्तथा। समं पदातिवृन्देन, करोमि प्रतिवासरम् ॥ ६८ ॥ तण्डकः स्वामिनः ( तण्डकांश्चाभितः ) कृत्वा, स्थाने २
चतुष्किकाः। निविष्टाश्च तथा देव !, नोपलब्धस्तथाऽप्यसौ ॥ ६९ ॥ एवं तस्य वचः श्रुत्वा, चिन्तयामास भूपतिः।
नूनं धूर्त्ततमः कोऽपि, स यो नैवमपीक्ष्यते ॥ ७० ॥ तदद्य स्वयमेवाहं, यतिष्ये तन्निरीक्षणे। एवं संचिन्त्य
संतस्थे, यावदस्तं गतो रविः ॥ ७१ ॥ तमोभरनिरुद्धे च, सर्वतो मण्डले दिशाम्। नीलं पटमपावृत्त्य, प्रासादा-
न्निर्गतो नृपः ॥ ७२ ॥ चतुष्कचत्वरारामशून्यदेवकुलादिषु। भ्रान्त्वा भ्रान्त्वा स निर्विण्णस्तस्करं न समैक्षत ॥७३॥
ततो रात्रेरतिक्रान्ते, यामयुग्मे नराधिपः। सुप्तो हट्टकुणीकोणमुपाश्रित्य श्रमान्वितः ॥ ७४ ॥ अत्रान्तरे
समायातस्तस्करो मण्डिकाभिधः। बभाण मूलदेवं सः, कस्त्वं ?, कार्पटिकः प्रभो ! ॥ ७५ ॥ यदि त्वं सत्यमे-
वेह, प्रभुं मामभिमन्यसे। तदुत्तिष्ठ समागच्छेः, करोमि त्वामपीश्वरम् ॥ ७६ ॥ श्रुत्वैवं मूलदेवोऽपि, स्वचे-

तस्यकरोदिदम् । सैष संभाव्यते नूनं, यन्निमित्तो मम श्रमः ॥ ७७ ॥ तदुत्तिष्ठामि गच्छामि, पश्याम्येतस्य चेष्टितम् । किं करोति क्व वा याति ?, धृष्टोऽयं वीक्ष्यते यतः ॥ ७८ ॥ एवं संचिन्त्य चलितः, समं तेन गतश्च सः । एकं धनपतेर्गेहं, क्षत्रद्वारेण तत्र च ॥ ७९ ॥ प्रविश्य हेरितं पूर्वं, द्रव्यमादाय निर्गतः । आरोप्य तच्छिरस्यंसकृतोऽसावात्मनः पुनः ॥ ८० ॥ स्वयं च खड्गमादाय, प्रस्थितः पृष्ठतस्ततः । गतो यावत्पुरद्वारं दत्वाऽवस्वापिनीं ततः ॥ ८१ ॥ प्रतोलीद्वारपालानां, द्वारमुद्घाट्य वेगतः । भूमिगृहमनुप्राप्तः, पुरदूरव्यवस्थितम् ॥ ८२ ॥ तत्र प्रवेशितः पूर्वं, मूलदेवस्ततः स्वयम् । प्रविश्याहितसङ्केतां, भगिनीमादिदेश सः ॥ ८३ ॥ भद्रे ! प्राघूर्णकस्यास्य, महादरपुरःसरम् । पादधावनमाधेहि, देहि भद्रासनं परम् ॥ ८४ ॥ ततः सा तूर्णमुत्थाय, समागच्छोपविश्यताम् । अत्रेति स्थानमेतस्य, ससंभ्रममदर्शयत् ॥ ८५ ॥ अन्धकूपान्तकत्वेन, प्रत्यासन्नीकृतान्तके । मूलदेवोऽप्यजानानो, निविष्टस्तत्र विष्टरे ॥ ८६ ॥ साऽपि पानीयमादाय, पादं प्रक्षालनच्छलात् । यावदुत्पाटयत्यस्य, कूपप्रक्षेपणोद्यता ॥८७॥ सौकुमार्यगुणाधिक्यनवनीतजयावहम् । तावत्तदंह्रिसंस्पर्शमनुभूय व्यचिन्तयत् ॥ ८८ ॥ यथा पादतलेऽमुष्य, मृदुत्वमनुभूयते । तथा मन्येऽहमेषोऽत्र, कश्चित्सौख्यनिधिर्नृपः ॥ ८९ ॥ किञ्च—रूपलावण्यसौभाग्यभाग्यसम्पत्ति-

सङ्गतः । सदेहः कामदेवोऽयं, नूनं रत्या विवर्जितः ॥ १० ॥ मदीयजीवितेनापि, यदयं जीवितेश्वरः । भूयाद्दीपालिकाकोटीं, यावदक्षतजीवितः ॥ ९१ ॥ एवं संचिन्त्य तं कूपं, प्रदर्श्यानुपलक्षितम् । भावानुरक्तया शीघ्रं, पलायस्वेति संज्ञितः ॥ ९२ ॥ तदभिप्रायमागम्य, ततस्तत्र पलायिते । भ्रातृविज्ञापनाहेतोश्चक्रे कोलाहलस्तया ॥ ९३ ॥ भ्रातर्भ्रातः ! समागच्छ, गृहाणैतमसौ गतः । श्रुत्वैवं सोऽपि तद्द्रव्यमसंगोप्यैव निर्गतः ॥ ९४ ॥ करालकरवालं च, करे कृत्वाऽस्य पृष्ठतः । क यासि रे मदग्रे त्वं, वदन्नेवं च धावितः ॥ ९५ ॥ मूलदेवोऽपि तं ज्ञात्वा, वेगान्निकटमागतम् । आश्रित्य चत्वरस्तम्भमेकमन्तरितः स्थितः ॥ ९६ ॥ सोऽपि कङ्ककृपाणेन, तमुद्देशमुपागतः । तमेव स्तम्भमाजघ्ने, तद्बुध्या तीव्ररोषतः ॥ ९७ ॥ यद्वा—अयथावस्थितं वस्तु, कोपाद्यन्तरितेक्षणः । पश्यति प्रायशो लोकस्तथा चोक्तं महात्मभिः ॥ ९८ ॥ "कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः । अभूतानपि पश्यन्ति, पुरतोऽवस्थितानिव ॥ ९९ ॥" हतो मयाऽयमित्येवं, ज्ञातश्चौरो मयेति च । प्रहृष्टौ चौरराजानौ, स्वं स्वं स्थानमथो गतौ ॥ २०० ॥ विभातायां विभावर्यामुद्गते दिननायके । कृतप्रभातकर्त्तव्यो, राजा स्वल्पैरिच्छदः ॥ २०१ ॥ अश्ववाहनिकाव्याजं, कृत्वा चौरदिदृक्षया । हट्टमार्गेण निर्यातः, क्षिपन् दृष्टिमितस्ततः ॥ २०२ ॥ अत्रान्तरे—

हट्टमेकं समाश्रित्य, विदधत्तूर्णनक्रियाम् । विलोचनव्यथाव्याजादर्द्धावच्छादिताननः ॥ ३ ॥ विशीर्णवस्त्रखण्डैश्च, पिनद्धचरणद्वयः । राज्ञो दृष्टिपथं प्रापत्तस्करो मण्डकाभिधः ॥ ४ ॥ साभिज्ञानेन केनापि, प्रत्यभिज्ञाय तं नृपः । विधाय कमपि व्याजं, चलितः स्वगृहं प्रति ॥ ५ ॥ तस्य चाकारणाहेतोः, प्राहिणोदङ्गरक्षकम् । आहूतस्तेन स त्रस्तोऽचिन्तयन्निजचेतसि ॥ ६ ॥ न स व्यापादितो नूनं, विभावर्यां मया नरः । अकाण्ड एव तेनेदं, राज्ञ आकारणं मम ॥७॥ भाव्यो ह्यन्यायवृक्षस्य, तदिदानीं फलोदयः । क्वचित्सर्पोऽपि यद्वा स्यान्न गोधैव बिले बिले ॥८॥ तद्भवतु किमप्यत्र, यामि तावन्नृपान्तिकम् । अभिन्नमुखरागोऽहं, यदियं सात्त्विकस्थितिः ॥९॥ अलक्षितानिजाकाराः, धीराः स्युः समदर्शिनः । उत्कर्षदैन्यरहिताः, संपत्सु च विपत्सु च ॥१०॥ इत्यादि चिन्तयन्नेव, गतोऽसौ राजमन्दिरम् । अभ्युत्थानादिना राज्ञा, संपूज्योक्तो रहस्यदः ॥११॥ भो ! भवन्तमहं किञ्चिदर्थये चेद्ददासि मे । ग्राह्यतां गृहिणीं शस्तां, स्वकीयभगिनीं मम ॥१२॥ स उवाच कियन्मात्रं, द्विपदाद्येतद्ग्राह्यकम् । जीवितव्यमपि स्वामिंस्त्वदायत्तं हि मादृशाम् ॥ १३ ॥ गृह्यतां तादियं कन्या, ततो राज्ञा विवाहिता । प्रेमप्रदर्शनेनास्याश्चित्तमेष जहार च ॥ १४ ॥ तदुद्दिष्टधनाद्यस्य, सन्मानादिपुरस्सरम् । जग्राह मण्डिकाद्राजा, ज्ञात्वा तं निर्द्धनं ततः ॥१५॥ निग्राह्योऽयमनाचार, इदानीं येन भूभुजाम् । निर्दिष्टे

दुष्टशिष्टेषु, नीतौ निग्रहपालने ॥ १६ ॥ एवं विचिन्त्य पञ्चत्वं, प्रापितोऽसौ महीभुजा । वेदयित्वा महद् दुःखं, विचित्रैर्यातनाशतैः ॥ १७ ॥ एवं मण्डिकवृत्तान्तः, सङ्क्षेपेण निवेदितः । उत्तराध्ययनवृत्तेर्विस्तरेणावबुध्यताम् ॥ १८ ॥
अदत्तादानदोषेऽत्र, तावदेकं कथानकम् । उक्तं च मण्डिकस्यातो, विजयस्याधुनोच्यते ॥ २१९ ॥

अस्ति रम्यतानिरस्तसमस्तसुरलोकलोचनानन्ददायिस्थान२वीक्ष्यमाणप्रेक्षणकादिविविधविलासविस्तरविस्तरदतुच्छसच्छायमहोत्सववितीर्यमाणदीनानाथातिथिप्रभृतिप्रभूतजनकाञ्चनादिपदार्थसार्था सार्थिकवास्तव्यादिभेदभिन्नलोकसङ्घातसंजनितप्रमोदपरिदृश्यमानसदापुष्पितप्रचुरचम्पका चम्पाभिधाना नगरी, तस्यां बन्दीकृताराति-सामन्तसीमन्तिनीसमूहविधीयमानशुद्धान्तवधूविविधचरणपरिचरणोपलक्ष्यमाणप्रौढप्रतापः प्रतापाक्रान्तविक्रान्तभूपालमौलिमालामाल्यमलनदुर्ललितपादपल्लवो लव इव विषमशरशरासनवशीकृतोद्दामरामो जितशत्रुनामा महीपतिरासीत्, तस्य कुलक्रमसमागतासमशेमुष्युपहसितामरमन्त्रिणि मन्त्रिमण्डले निवेशितराज्यचिन्ताभारस्य सकलान्तःपुरप्रधानया नयविनयशालिन्या शालीनतादिगुणकलापधारिण्या धारिण्याख्यया प्रवरदेव्या सह सुखं विषयसौख्यं समनुभवतोऽतिचक्राम कियानपि कालः, अन्यदा च तन्नगर्यामविचार्यानार्यचर्यापरोऽत्य-

न्तमकारुण्योपेतोऽवस्वापिन्याद्यनेकचौरविद्याबलावलेपदृप्तहृदयः स्तेयाहितचित्तवृत्तिर्विजयनामा तस्करः तस्करत्वोपार्जितापर्यन्तद्रव्यसञ्चयसमुत् समुत्तस्थौ, तेन चाविज्ञातागमनेन कृतान्तेनेव प्रतिदिनापह्रियमाणप्रधानगृहसारोऽपरं परिरक्षणोपायमात्मनोऽनवलोकयन्निःशेष एव नगरीजनो राजानमुपतस्थौ, बभेष चोपायनार्पणादिपूर्वं—चतुरङ्गवरूथिनीभराक्रमणावनमितवसुमतीभारभुग्नफणिपतिफणाचक्रवाले सत्यपि भवति भूपाले नगरीयमराजिकेव देव! बाढमुपद्रुता तस्करैः, न सा काचिदतिक्रामति रात्रिर्यस्यां द्वित्राणि क्षत्राणीश्वरवेश्मसु न पतन्ति, तदिदमाकर्ण्य देवः प्रमाणं, राजाऽप्यश्रुतपूर्वं तत्तथाविधमुपश्रुत्य नागरिकवचनं महदप्येवंविधोपालम्भभाजनं संवृत्त इति मनाङ् मनस्युपजातखेदस्तूर्णं स्थित्वा क्षणं इतः प्रभृति सर्वं सुन्दरं करिष्यमीति प्रतिपाद्य नगरीजनं व्यसर्जयत्, क्षणाच्चाह्वाय्य नगररक्षकाधिपतिमब्रवीत्—भो! भो! किमयमेवंविधः प्रमादो भवतो यदेवं प्रतिदिवसं मुष्यमाणामपि मोषकैर्नगरीं न स्वयं पालयसि, नापि मम वार्त्तां ज्ञापयसि, तदिदानीमेष एव ते दण्डो यत्पञ्चरात्रमध्ये चौरं लभस्वान्यथा तवैव चौरनिग्रहं करिष्ये, सोऽपि यथाऽऽज्ञापयति देव इत्यभिधाय प्रणामपूर्वकमुत्थाय तत्स्थानात्तत्प्रभृत्येव त्रिकचतुष्कचत्वराराममठविहारशून्यशालापणादिनिलयेषु आकारादिभिस्तदुपलक्षणाक्षणिकचित्तवृत्तिः सपरिवारो दिवसमतिवाहितवान्, अत्रान्तरे सकलजगच्चक्षुरप्यह-

मेतस्यैवं प्रयत्नवतोऽपि न शक्नोमि तं तस्करमुपदर्शयितुमतो धिग् मामित्युत्पन्नगुरुविषादादिवास्तमुपागते गभस्तिमालिनि कियन्मात्रमेष तस्करोऽहमेनमुपदर्शयामीत्युद्दाममत्सरादिव क्षणमात्रं सरागमुल्लस्य तत्सामर्थ्यवन्ध्यताजातवैलक्ष्यादिव विच्छायीभूय क्षयमुपगतायां सन्ध्यायां पश्य मत्साहाय्यान्निपुणमीक्ष्यमाणोऽप्यारक्षिकलोकेनासौ न मनागप्युपलक्षित इत्यद्भुतोद्भूतहर्षप्रकर्षादिव तारतारकनिकरानट्टहासच्छदानिव दर्शयन्त्यां रजन्यां तथैव च तद्द्रोपायनार्थमिव सर्वतः प्रसारिते नीलपट इव सकललोकलोचनप्रसरहारिणि बहलतिमिरपटले स विजयचौर एकस्मिन्नीश्वरसद्मनि दुरारोहतरे पद्माकारं क्षत्रं पातयित्वा समस्तमपि गृहसारमादाय स्ववासमयासीत्, क्षणमात्रेण विभातायां विभावर्यां क यासि एष गृहीतोऽसीति संभ्रमादिव सर्वतः प्रसारितकरे समुत्थिते सहस्ररश्मौ किमद्यापि सुप्यते युष्माभिरवलोक्यतां क्षत्रमिति वार्त्तां निवेदयितुमिव तद्द्वारेणैव गृहान्तः प्रविष्टे रश्मिमण्डले क्षत्रावलोकनसंभ्रमाकुलितगृहजनकलकलोन्मिलिते नगरारक्षकादि (ग्रन्थाग्रम् ३५००) लोके स विजयतस्करः कुतोऽपि तथाविधभवितव्यताकालपाशकाकृष्टो विहितस्नानविलेपनाशनाद्यलङ्कारशृङ्गारः समं पुत्रेण तत्रैव जनसमाजमध्ये समाजगाम, तत्र चायं तथाविधदुरारोहप्रासादे पद्माकारं लघुद्वारं क्षत्रमालोक्य कथं नु नामैवंविधदुरारोहस्थानमारुह्यासावीदृशमतिचित्रं क्षत्रं

कृतवान् ? कथं चानेनैवान्तः प्रविश्य सकलगृहसारमादाय निर्यात इत्याश्चर्यमेतदित्यादि वदतो जनस्यालापान् श्रुत्वा ननु सत्यमेवैष जना मन्त्रयन्ते कथमहमत्र प्रविष्टो निर्गतो वा कथं वा मयेदमीदृशं कृतमिति विचिन्तयन् स्वसामर्थ्यविज्ञानोपजातविस्मयः स्वयमेव स्वकृतकर्मासम्भावनया क्षणं कपाटपट्टायमाने वक्षसि क्षणं विकटकटीतटे क्षणं पुत्रमुखे क्षणं क्षत्रद्वारे चक्षुरपातयत्, ततश्चासौ तथाविधविशिष्टचेष्टाविष्टतनुतया तत्स्थाननिकटवर्त्तिभिरेवारक्षकैरिङ्गिताकारादिभिरयमेव चौरो नान्य इत्यवबुध्य दण्डाघातताडनापुरःसरं विहितपृष्ठतोमुखबाहुबन्धनो राज्ञः समीपमुपनिन्ये, तेन च विविधविडम्बनापूर्वकं वध्यभूमावुपनाय्य विचित्रयातनाभिर्देशाविधप्राणेभ्यः पृथक्कारित इति ॥ अत्र च मण्डकोदाहरणेनादत्तादानदोषद्वारस्य गतत्वाद्विजयोदाहरणं तच्छास्त्रप्रसिद्धैवंविधोदाहरणबाहुल्यख्यापनार्थम्, अनेन च मण्डिकाद्युदाहरणद्वयेनात्रैव जन्मन्यनेकदुःखावसानमदत्तादानमित्येतद्दोषद्वारं निरूपितम्, इदानीमेतत्परिहारे यो गुणस्तदुपदर्शनाय पञ्चमं गुणद्वारमाह—

परदव्वहरणविरया गुणवंता पडिमसंठियसुसीला ॥
इहपरलोए सुहकित्तिभायणं णागदत्तो व्व ॥ ४२ ॥

यत्तदोर्भवन्तीति क्रियायाश्चाध्याहारादेवं योजना—ये 'परद्रव्यहरणविरताः' परेषां द्रव्यं परद्रव्यं तस्य हरणं परद्रव्यहरणं—परद्रव्यापहरणं तस्माद्विरताः, कोऽर्थः ?—अन्यदीयद्रविणचोरणानिवृत्ताः, तथा गुणाः सम्यक्त्वादयस्ते विद्यन्ते येषां ते तथा, असाधारणविशुद्धजीवधर्मोपेताः, किञ्च—प्रतिमा—दर्शनप्रतिमाद्या कायोत्सर्गो वा तत्र संस्थिताः प्रतिमासंस्थिताः, तथा शोभनं शीलं—चारित्रं येषां ते सुशीलाः, प्रतिमासंस्थिताश्च ते सुशीलाश्च ते तथा, कायोत्सर्गस्थिताः सचारित्राश्चेत्यर्थः, इह—अत्र जन्मनि परलोके—अन्यभवे, ते किमित्याह—सुखं च—शर्म कीर्तिश्च—यशःकीर्त्ती तयोर्भाजनं—स्थानं यद्वा शुभा—पुण्या या कीर्त्तिस्तस्या भाजनं, भवन्तीति सम्बन्धः, क इव ?—'नागदत्त इव' नागदत्ताभिधानश्रेष्ठिपुत्र इवेति गाथाऽक्षरार्थः ॥ ४२ ॥ भावार्थस्तु कथानकगम्यस्तच्चेदम्——

वाराणसीपुरीए जियसत्तुनरेसरस्स वरमित्तं । धणयत्तो नामासी सेट्ठी सुविसिट्ठगुणजुत्तो ॥ १ ॥ जिणसासणंमि रत्तो नियगुरुजणचरणसेवणासत्तो । साहम्मियजणभत्तो मयमच्छरदोसपरिचत्तो ॥ २ ॥ मयरद्धउव्व रूवेण तह य थिरयाएँ अमरसेलोव्व । गंभीरयाएँ जलहिव्व जो य धणउव्व रिद्धीए ॥ ३ ॥ तस्सासि हिययदइया सिरिव्व कण्हस्स धणासिरी भज्जा । लायण्णरूवजोव्वणसोहग्गकलाकलावड्ढा ॥ ४ ॥ जम्मंतरसुचरियसलिलसित्तवर-

पुण्णपावफलव्व । विसयसुहमणुहवंताण ताण कालो गओ कोऽवि ॥ ५ ॥ अह अन्नया कयाई रयणीए पच्छिमंमि जामद्धे । पेच्छइ सुहं पसुत्ता वरसुमिणं धणसिरी तुट्ठा ॥ ६ ॥ जह नागदेवयाए हारो ओयारिउं सकंठाओ । खित्तो मह वच्छयले उज्जोइयदसदिसाचक्को ॥७॥ पाहाइयमंगलगेयसद्दमायन्निऊण एत्ताहे । उट्ठेऊण पहट्ठाए साहिओ सो य दइयस्स ॥ ८ ॥ तेणवि भणियं कुलकमसमागया नागदेवया अम्हं । तीए पसाएण पिए ! होही तुह सुंदरो पुत्तो ॥ ९ ॥ तइयच्चिय संभूओ गब्भो तीसे पहाणगुणकलिओ । तस्साणुभावओ च्चिय, जाया सा अहियसोहग्गा ॥ १० ॥ जिणबिंबसंघपूयादोहलेसुं पसत्थरूवेसुं । माणिज्जंतेसु सुहंसुहेण संपुण्णमासेसु ॥ ११ ॥ निम्मलगुणोववेओ समुज्जलो जणियजणमणाणंदो । अण्णंमि दिणे जाओ मुत्ताहारोव्व से पुत्तो ॥ १२ ॥ वद्धाविओ य सेट्ठी चेडीए पियंवयाभिहाणाए । दिण्णं च तेण अह पारिओसियं चिंतियब्भहियं ॥ १३ ॥ तत्तो उट्ठेऊणं सेट्ठी गंतूण सूइभवणंमि । दट्ठूण पुत्तयं तो वद्धावणयं करावेइ ॥१४॥ जयमंगलतूरपसत्थरवं, रवपूरियसव्वदिसाविवरं । वरकामिणिनट्टपहट्ठजणं, जणचित्तविलासपउत्तधणं ॥१५॥ धणकंचणतोसियदीणजणं, नयणु(जणउ)च्छवकारियपत्थय(घ)णं । घणकुंकुमवारिविइण्णछडं, छडिउज्जलतंदुलथालसयं ॥ १६ ॥ सयवत्तुवसोभियपुण्णघडं, घडलक्खपलोढियतेल्लवहं ।

वहमारिनिवारियविस्सयणं, सयणव्व विमोइयगुत्तिजणं ॥ १७ ॥ वित्ते वद्धावणए एक्कारसमंमि आगए दियहे ।
पुत्तस्स तओ नामं पइट्ठियं नागदत्तोत्ति ॥ १८ ॥ जं नागदेवयाए दिण्णो हारच्छलेण मे एसो । सुमिणंमि ता इमं
चिय नामं जुत्तंति कलिऊणं ॥ १९ ॥ अह वड्ढिउं पवत्तो, कमेणिमो सेयपक्खचंदव्व । देहोवचएण तहा कला-
कलावेण पवरेणं ॥ २० ॥ वच्चइ पिउणा सद्धिं जिणभवणे मुणिवराण य समीवे । जाओ य भावियप्पा निसुणंतो तत्थ
जिणवयणं ॥ २१ ॥ भणियं च—नवनवसंवेगो खलु नाणावरणक्खओवसमभावी । तत्ताहिगमो य तहा
जिणवयणायण्णणस्स गुणा ॥ २२ ॥ पत्तोऽवि जोव्वणं सो तओ य मयरद्धयस्स कुलभवणं । मण्णइ
विसं व विसए समुज्जओ धम्मकज्जेसु ॥ २३ ॥ जा जाउ इंति कुलबालियाओ लायण्णरूवकलियाओ ।
नेच्छइ वीवाहेउं ता ताओ निव्वुईरत्तो ॥ २४ ॥ तो तस्स पिऊहिं वियाणिऊण विसएसु निप्पिवासत्तं । दुल्ललिय-
मित्तगोट्ठीएँ विरइओ नवर पक्खेवो ॥ २५ ॥ मित्तुवरोहेण तओ, अणिच्छमाणोऽवि निययचित्तेणं । वच्चइ आराम-
विहार वाविदेउ(ऊ)लमाईसु ॥ २६ ॥ वच्चंतेसु दिणेसु य, अहऽण्णदियहे पभायसमयंमि । सहसंबवणुज्जाणं गओ
समं मित्तवग्गेणं ॥ २७ ॥ पुण्णफलभारनमिएहिं सउणजणसेविएहिं तुंगेहिं । सप्पुरिसाण व अणुहरइ जं च

सहयारनिवहेहिं ॥ २८ ॥ जत्थ य सरणागयसीयरक्खणत्थं वसंति सच्छाया । दिंति पवेसं तरुणो मणयंपि न तरणिकिरणाणं ॥ २९ ॥ जं च नवचूयमंजरिकवलणकलकलिरकोइलरवेणं । वीसामत्थं आमंतेइ व पहियाण संघायं ॥ ३० ॥ दीसंति विविहसुमणोमणोहरे तंमि नंदणवणे व्व । पेच्छइ मज्जणवाविं कमलुप्पलकुवलयाइण्णं ॥ ३१ ॥ संमज्जिऊण तत्थ य जहिच्छियं मित्तमंडलेण समं । निविडतडसंनिविट्ठं जिणमंदिरमणुपविट्ठो सो ॥ ३२ ॥ जम्मि वरकणयनिम्मियकलसावलिफुरियाकिरणपंतीओ । जिणझाणजलणडज्झंतकामजालाउ व सहंति ॥ ३३ ॥ जं च पवणपहोलिरधयलग्गरणिरघग्घरयकिंकिणिरवेण । भणइ व्व मह सरिच्छं, कहेह जइ अण्ण सुरभुवणं ॥ ३४ ॥ अविय—कुपइट्ठियंपि रम्मं सुरूवयं विगयरूवसोहंपि । अणुवहणयपायजंघंपि गमणसत्तीएँ परिचत्तं ॥ ३५ ॥ तंमि य पुव्वपविट्ठा विसिट्ठचेट्ठावरिट्ठगुणचिट्ठा । लायण्णरूवलट्ठा, कलाकलावंति पत्तट्ठा ॥ ३६ ॥ जुवईजुवयणमणहारिदेहसोहाएँ विजियसुररमणी । रमणीयअहिणवुब्भिन्नजोव्वणा कुवलयदलच्छी ॥ ३७ ॥ सहियायणेण सहिया दिट्ठा जिणबिंबपूयणट्ठाए । वरपत्तछेज्जकम्मं विरयंती विविहभंगीहिं ॥ ३८ ॥ दट्ठूण तीएँ निरुवमविण्णाणाइसयभावियमणो सो । चिंतइ अहो णु सच्चो एस सिलोओ

जयपसिद्धो ॥ ३९ ॥ दाने तपसि शौर्ये च, विज्ञाने विनये नये । विस्मयो हि न कर्त्तव्यो, बहुरत्ना वसुन्धरा ॥४०॥
एत्थंतरंमि तीयवि समुट्ठियाए जिणिंदपूयत्थं । सच्चविओ सो नियंयंगचंगिमानिज्जियअणंगो ॥ ४१ ॥
तम्मोवरि अणुराओ संजाओ तीएँ तक्खणच्चेव । अहवा पहाणवत्थुंमि कस्स नहु होइ पडिबंधो ?
॥ ४२ ॥ तह कहवि तीएँ एसो पलोइओ जायमच्छरेणेव । जह पंचसरेणेसा पहया पंचहिवि बाणेहिं ॥ ४३ ॥
मयणसरपेल्लियाइवि इमीएँ लज्जाए ठाविओ अप्पा । कुलबालियाण अहवा एसा अंगुट्ठियाभरणं ॥ ४४ ॥
वरविच्छित्तीए तओ पूयं काउं जिणिंदचंदस्स । नीहरिया जिणभवणा पुणो २ तं पलोयंती ॥४५॥ जिणवंदणकयचित्तो,
सोऽविय काऊण उत्तरासंगं । दाउं पयाहिणातियं जिणनाहं थोउमाढत्तो ॥ ४६ ॥ जय तिहुयणसंतावयमयरद्धयग-
रुयमाणनिम्महणा ! । जय दूसहरोसानलविज्झावणपयंडजलवाह ! ॥ ४७ ॥ जय सुक्कज्झाणामयअवहरियकसाय-
विसमविसवेग ! । जय उवसग्गपरीसहपिसायअक्खलियसमचित्त ! ॥ ४८ ॥ जय घाइकम्मतमपडलफेडणुल्लसियके-
वलुज्जोय ! । जय चउगइगमणभमंतजंतुसंताणकयताण ! ॥ ४९ ॥ जय नमिरसुरासुरमउडकोडितप्पडणमसिणपा-
वीढ ! । जय सेसकम्मकुलसेलदलणवज्जासणि नमो ते ॥५०॥ एवं थोऊण जिणं पूयाइसयं पलोइऊणं च । आपुच्छइ

नियमित्ते, करसेसा का य वरकन्ना ? ॥५१॥ नियकलाकोसल्लं ठाणंमि पयासियं इमं जीए। विरयंतीएँ सहत्थेहिं जिणवरिंदस्स वरपूयं ॥ ५२ ॥ नूणमयं अणुरत्तो एयाए तेण पुच्छए एवं । इय कलिऊणं तहिवि भणियं किं तं न याणेसि ?॥ ५३ ॥ पियमित्तसत्थवाहो एत्थेव पुरीएँ अत्थि वत्थव्वो। नागसिरी तब्भज्जा नागवसू ताण एस सुया ॥ ५४ ॥ आबालभावउच्चिय एईएँ कलासु आसि कोसल्लं । किं पुण विलासनट्टावयंमि तारुण्णए दाणिं ?॥५५॥ किञ्च-लायण्णाइगुणेहिं विणिज्जिया लज्जियाओ व न इंति इहं । एईए रंभाई सुरंगणा मणुयलोयंमि ॥ ५६ ॥ एयाए देहसोहावलोयणे विरहमसहमाणव्व । हयहियया देवावि हु अणिमिसनयणत्तणं पत्ता ॥ ५७ ॥ जो जो रूवाइगुणो चिंतिज्जइ कोऽवि एयदेहंमि । सो सो अउव्वभावेण जणइ चित्ते चमक्कारं ॥ ५८ ॥ एक्कोऽत्थि किंतु दोसो इमीए जं नाणुरूववरलाभो । अवलोइयाए तुमए इण्हिं पुण सोऽवि पम्हुट्ठो ॥ ५९ ॥ तो भणइ नागदत्तो निरत्थओ वयणवित्थरो एस । तुब्भेहिं समाढत्तो मह भावमयाणमाणेहिं ॥ ६० ॥ मणयंपि न मज्झ जओ अणुराओ एत्थ पुच्छणे हेऊ । किं तु इमीए विण्णाणकोसल्ले कोउहल्लंति ॥ ६१ ॥ इच्चाइ जंपमाणो निग्गंतूणं जिणिंदभवणाओ । सह मित्तमंडलेणं समागओ नियभवणंमि ॥ ६२ ॥ अह सावि दिव्वकन्ना नागवसू नियसहीहि परियरिया । संपत्ता नियभवणं हियएणं तं

बोल्लावंतीण पुणो पडिवयणं देइ
च्चिय वहंती ॥ ६३ ॥ तत्थ य न सुयइ न हसइ, नाहरणं लेइ नालवेइ जणं । वच्छे ! कहेसु किं ते देहे पीडानिमित्तंति ?
न सहीणं ॥ ६४ ॥ एयावत्थं च तयं नाउं माया समागया भणइ । किं तु महादाहो मे वियंभिओ सव्वदे-
॥ ६५ ॥ तीए भणियं—अंब ! न याणामि अहं पीडाए कारणं सरीरंमि । पीओ किं न सलोणो जणो अहियं
हंमि ॥ ६६ ॥ परिहासपेसलाए सहीएँ एत्थंतरंमि संलत्तं । नयणंजलीहि भणिया सावट्ठंभं ताव इमीएवि तज्जणणी
॥ ६७ ॥ तो तुण्हिक्का होउं जाव न किंचिवि करेइ पडिवयणं । अहयं एयसरूवं वियाणिऊणं कहिस्सामि
॥ ६८ ॥ मा अंब ! कुणह तुब्भे एयाएँ कए मणंमि उव्वेयं । जं दुक्खकारणं तुह अकहिए नत्थि
॥ ६९ ॥ सह परियणेण जणणिं विसज्जिउं भणइ पियसहि ! कहेसु । तीरइ नो काउं जे मुद्धे सुवियक्खणे-
पडियारो ॥ ७० ॥ लोओऽवि जओ जंपइ एवं थवियाण मोत्तियाणऽत्थ । जलं जालाजालं मलयजरसो अग्गि-
णावि ॥ ७१ ॥ किञ्च—जहा खारो हारो तुह ससिकरा बाणनियरा, तहा मण्णे नूणं मयणदहणो तावदि तुमं ॥ ७२ ॥
सरिसो । जलद्दा संतावं जणयदि जहा यंगधरिदा, कहसु ता मज्झ ॥ ७३ ॥ सोऊण
एवं च तुह सरूवं सामण्णेणं वियाणियं चेव । कस्सोवरि तुह चित्तं अणुरत्तं ?

सहीवयणं, तो तीए चिंतियं नियमणंमि । सच्चमिमीएँ भणियं अक्कहिए जं न पडियारो ॥ ७४ ॥ किं चाभणियं मए वियाणियं मह सरूवमेयाए । लिंगेहि ता किमज्जवि, गोविज्जइ चिंतिउं भणइ ॥ ७५ ॥ सहि ! जाणसि च्चिय तुमं, पहायसमयंमि अज्ज जिणभवणे । पूयं विरयंतीए जिणिंदबिंबस्स सविसेसं ॥ ७६ ॥ तारायणपरियरिओ, ससिव्व नियमित्तमंडलसमेओ । दिट्ठो पहिट्ठचित्तो, सेट्ठिसुओ नागदत्तोत्ति ॥ ७७ ॥ तेण ममं नयणखडक्कियाए पविसित्तु चित्तभवणंमि । अवहरियमविण्णायं, विवेयरयणं अइमहग्घं ॥ ७८ ॥ तप्पभिइं च न याणे, किं वा जंपामि किं च रोयामि । किं वा हसामि किं वा सुयामि इच्चाइ सव्वाइं ॥ ७९ ॥ ताए भणियं पियसहि ! संपइ मा ऊसुया तुमं होसु । अइरा समीहियत्थो जह होइ तहा तुह करेमि ॥ ८० ॥ एवं भणिऊण तओ नागसिरीए सयासमुवगंतुं । जिणभवणगमणमाई कहिओ तव्वइयरो सयलो ॥ ८१ ॥ तीएवि नियदइयस्स सोऽवि पडिभणइ अम्ह धूयाए । ठाणेच्चिय अणुराओ, जाओ अहवावि जुत्तमिणं ॥ ८२ ॥ उत्तमकुलप्पसूया उत्तमठाणंमि चेव रज्जंति । मोत्तुं महागयंदं, किं करणी जंबुयं महइ ? ॥ ८३ ॥ ता तह करेमि संपइ जह मज्झ सुयाएँ तेण सह जोगो । संजायइ अणुरूवो रईएँ मयरद्धएणेव ॥ ८४ ॥ एवं भणिउं तत्तो, धणयत्तागि-

हंमि उट्ठिऊण गओ । अब्भुट्ठिओ सविणयं तेणवि कय उचियपडिवत्ती ॥ ८५ ॥ पुट्ठो य किं पओयणमालंबेऊण
आगया तुब्भे ? । अपओयणा पवित्ती, न होइ जं बुद्धिमंताणं ॥ ८६ ॥ पियमित्तेणवि भणियं एक्कं तुम्हाण दंसणं चेव ।
उत्तमजणावलोयणमुत्तमकल्लाणहेउं जं ॥ ८७ ॥ नीईएवि भणियं—"दट्ठव्वा रायसहा, दट्ठव्वा राइपूइया पुरिसा ।
जइवि न हवंति अत्था तहवि अणत्था खयं जंति ॥८८॥" बीयं पुण मह धूया नागवसू नाम अत्थि विक्खाया । सा अणुरत्ता
गाढं, तुह पुत्ते नागदत्तंमि ॥८९॥ तीएँ समप्पणहेउं, समागओ ता करेह तह तुब्भे । एयाए नागदत्तो पाणिग्गहणं जह करेइ
॥९०॥ धणदत्तो तो चिंतइ तं एयं जं जणो भणइ विसमं । एत्तो वग्घो एत्तो य दुत्तडी भीसणायारा ॥९१॥ पच्चक्खं
( पव्वज्जं ) मज्झ सुओ अहिलसइ इमोऽवि देइ नियधूयं । एवं ववत्थिए ता पडिवयणमिमस्स किं देमि ? ॥९२॥
नियपुत्तस्स सरूवं अहवा साहेमि ताव एयस्स । तो जं उचियं होही पच्छा तं चेव काहामो ॥ ९३ ॥ इय चिंति-
ऊण कहियं पुत्तसरूवं तओ इमेणावि । पडिभणियं मज्झ सुया, सुमिणेवि न इच्छई अन्नं ॥ ९४ ॥ तीएँ जणणीएँ
जओ जह चिट्ठा तग्गया महं सिट्ठा । ताए जाणामि अहं अवि मरइ न मणगए अण्णं ॥ ९५ ॥ धणदत्तेणवि
१३ भणियं जइ एवं ता भणामि नियपुत्तं । तप्पाडिवयणे पुणरवि तुज्झ सरूवं कहिस्सामि ॥ ९६ ॥ वच्च तुमं नियगेहं

एवं भणिउं विसज्जिए तंमि । पुत्तो बहुप्पयारं भणिओ न य मण्णए किंपि ॥ ९७ ॥ इओ य—तत्थेव पुरवरीए वसुदत्तो नाम आसि वणिपुत्तो । जियसत्तुणा नियत्तो जो नगरारक्खियत्तंमि ॥ ९८ ॥ भवियव्वयाएँ एसो, तम्मि य दियहंमि परिभमंतो य । संपत्तो पियमित्तस्स सेट्ठिणो गिहदुवारंमि ॥ ९९ ॥ एत्थंतरंमि केणवि पओयणेणं विणि-ग्गया दिट्ठा । सा नागवसू तेणं नियगेहदुवारदेसंमि ॥ १०० ॥ दंसणमित्तेणं चिय सो तीएँ उवरि झत्ति अणुरत्तो । अहवा भवाभिनंदीण इत्थिया रायहेऊओ ॥ १ ॥ तो पविसिऊण गेहं पियमित्तो तेण जाइओ कण्णं । तेणवि भणियं एसा दिण्णा धणयत्तपुत्तस्स ॥ २ ॥ अण्णस्स विइण्णाओ अण्णस्स पुणोऽवि नेय दिज्जंति । कुलबालियाओ जम्हा नीईयवि भणियमेयंति ॥३॥ "सकृज्जल्पन्ति राजानः, सकृज्जल्पन्ति धार्मिकाः । सकृत्प्रदीयते कन्या, त्रीण्येतानि सकृत्स-कृत् ॥ ४ ॥" एवं भणिओऽवि इमो मोहवसेणं पुणोऽवि संलवइ । जत्तियमेत्तं इच्छसि, दव्वं तुह तत्तियं देमि ॥५॥ देसु मह नियधूयं तओ सहासेण सेट्ठिणा वुत्तं । मज्झ गिहंमि मह्यायस ! नो विक्कायंति कण्णाओ ॥६॥ एवं च निसुणिऊणं विलक्ख-वयणो विणिग्गओ तत्तो । अवलोइउं पयत्तो छिद्दाइं नागदत्तस्स ॥७॥ एयंमि जीवमाणे मह एसा नेय होहिई कण्णा । मारे-मि ता इमं लहु मणसा एवं विचिंततो ॥ ८ ॥ अण्णंमि दिणे तत्थ य रण्णो आसाण वाहणनिमित्तं । नयरीओ निग्गयस्सा

कण्णाओ कुंडलं पडियं ॥९॥ निययावासगएण य नायं रण्णा तओ समाइट्ठो । सो चेव य वसुदत्तो निरिक्खमाणेण तेण तयं ॥१०॥ नयरीएँ बहिपएसे दिट्ठो भवियव्वयानिओएणं । चउरंगपोसहत्थो अट्ठमिपव्वंमि एगागी ॥११॥ उज्जाणे पुव्वुत्ते पडिमं पडिवज्जिउं वियालंमि । वच्चंतो जिणभवणं सेट्ठिसुओ नागदत्तोत्ति ॥ १२ ॥ तओ य–जा कित्तियंपि एसो उवउत्तो जाइ ताव तेण तयं । दिट्ठं कुंडलरयणं उज्जोवियदसदिसायक्कं ॥१३॥ अत्थमणंपिव दट्ठूण अत्तणो गयणमंडलाहिंतो । पडियं भएण तं [ तह ] तरणिमंडलं धरणिवट्टंमि ॥ १४ ॥ तं दट्ठूण नियत्तो लग्गो मग्गंतरेण अण्णेण । तप्पुट्ठीएँ विलग्गो वसुदत्तो सो विचिंतेइ ॥ १५ ॥ किं एस झत्ति वलिओ किं वा मग्गंतरेण लग्गोत्ति । एत्थंतरंमि तेणवि दिट्ठं तं कुंडलं तत्थ ॥ १६ ॥ सो चिंतिउं पयत्तो, वलिओ कुंडलभएण नूणमिमो । ता एयं चिय छिद्दं पत्तं एयस्स मरणाय ॥ १७ ॥ इय चिंतिऊण गहिऊण कुंडलं तयणुमग्गओ लग्गो । ताव गओ जा पत्तो चेइहरं नागदत्तोत्ति ॥१८॥ पडिमागयस्स तत्थ य गलंमि से बंधिऊण तं तेण । आहूया निवपुरिसा पयंसियं कुंडलं तेसिं ॥ १९ ॥ भणियं च एस पावो रण्णो गहिऊण कुंडलं पत्तो । एगंते थवणत्थं ता गहिओ बंधिउं च इमं ॥ २० ॥ उवणेह निवसमीवं तेहिवि संपाडिऊण से आणं । नीओ रायसयासं कहियं च इमं जहा देव !

॥ २२ ॥ तुम्हेस कुंडलं पाविऊण तस्सेव थवणकज्जेणं । एगंतगओ पत्तो संपइ देवो पमाणंति ॥ २२ ॥ तव्व-
यणायण्णणजायगरुयरोसारुणच्छिजुयलेणं । जुत्ताजुत्तं अवियारिऊण तो राइणा भणियं ॥ २३ ॥ भो ! भो !
रयणिविरामे विगोविऊणं नयरमज्झंमि । आरोविज्जउ एसो सूलाए अणज्जवावारो ॥ २४ ॥ तो वसुदत्तेण इमो
धरिओ लहिऊण राइणो वयणं । रयणीएँ बंधिऊणं जाए य पहायसमयंमि ॥ २५ ॥ रत्तकणईरमालोवमालिओ
रत्तचंदणविलित्तो । आरोविऊण खंजे खरंमि लुयपुच्छकन्नम्मि ॥ २६ ॥ छित्तरियधरियछत्तो पुरओ
वज्जंतडिंडिमो नयरे । भामेउ आढत्तो भणइ य वसुदत्तवयणेणं ॥ २७ ॥ एगो मायंगजुवा वच्चंतो
तस्समीवदेसंमि । एएण निवइसंतं अवलत्तं कुंडलं लोय ! ॥ २८ ॥ अवराहेण इमेणं विडंबणाकरणपुव्वमेव-
मिमो । वज्झवसुहाए निज्जइ परुढनिवइस्स आणाए ॥ २९ ॥ सोऊण तस्स वयणं दारुणमेयं जणो
विचिंतेइ । किं एवमिमो जंपइ किमलीयमुयाहु सच्चमिणं ? ॥ ३० ॥ आरुहिऊणं ताहे पासायसिरंमि कोऽवि तं
दट्ठुं । भणइ इमं नरवइणा अवियारियमेयमादिट्ठं ॥ ३१ ॥ जम्हा ण एरिसागिईए जुज्जए कम्ममेरिसं कहवि ।
तत्थत्थो वयइ परो जुज्जइ एयंपि कम्मवसा ॥ ३२ ॥ जओ भणियं—" कम्माइं नूणं घणचिक्कणाइं अइकढिण-

वज्जसाराइं । नाणड्डयंपि पुरिसं पंथाओ उप्पहं निंति ॥ ३३ ॥ ” अन्नत्थ गवक्खत्था तयवत्थं नियवि काऽवि तं बाला । पलवइ सकामहियया अहो न जुत्तं कयं विहिणा ॥ ३४ ॥ जं गुणरयणनिहीविहु एसो संपाविओ इममवत्थं । अण्णा उ भणइ जीसे एस पइ सा हया अज्ज ॥ ३५ ॥ जइ एएणं चिय सह न मरिस्सइ चिंतई तहा अवरा । जीसे दिट्ठिपहं चिय एस गओ सावि इह धन्ना ॥ ३६ ॥ किं पुण कंठविलग्गा इमस्स जा एव-माइ आलावं । निसुणंति नागवसूवि दट्ठुं तं गेहमारूढा ॥ ३७ ॥ पासित्तु रायमग्गेण तं निउत्तेहि नीयमाणं च । हाहा हयम्मि एवं विलवंती मुच्छिया सहसा ॥ ३८ ॥ सा तारिसया तेणं दिट्ठा भवियव्वयानिओएणं । चिंतइ पेच्छ मदत्थं पत्तेयं केरिसमवत्थं ? ॥ ३९ ॥ जइ मज्झ कहवि होही इमाओ वसणाओ मोयणोवाओ । ताऽवस्सं एईए मणोरहे पूरइस्सामि ॥ ४० ॥ इय सो चिंततो च्चिय नीओ नरवइनरेहिं वज्झभुवं । भणिओ य पाव रे इढदेवयं सुमरसु ! इयाणिं ॥ ४१ ॥ तो सरियजिणमयत्थो सिद्धाणालोयणं स दाऊणं । गिण्हइ पच्चक्खाणं सागारं सुद्धपरिणामो ॥ ४२ ॥ इओ य--सा नागवसू किह किहवि चेयणं पाविउं सगिह एव । जिणपडिमाणा-वासं गंतुं पूइत्तु जिणइंदे ॥ ४३ ॥ काउस्सग्गेण ठिया सासणदेवीपसायणट्ठाए । एगग्गमणा एवं काऊणं तीएँ

विन्नत्तिं ॥ ४४ ॥ सच्चं चिय सन्निज्झं जइ जिणभत्ताण कुणसि तं देवि ! । ता पसिय नागदत्तं मोयसु एयाओ वसणाओ ॥ ४५ ॥ तब्भत्तिपवणिया सा समागया जत्थ नागदत्तो सो । आरोविउमाढत्तो, सूलाएँ तडत्ति सा भग्गा ॥ ४६ ॥ अण्णाएँ चडाविज्जइ जाव इमो ताव सावि दोखंडा । संजाया तइयाविहु एवं तो रायपुरिसेहिं ॥ ४७ ॥ रज्जूए उव्विद्धो तुट्टा साऽओ पुणो२ एवं । वाराउ तिण्णि जाए भणइ इमं रुसिय वसुदत्तो ॥ ४८ ॥ खग्गेण लुणह सीसं, इमस्स रे रे ! नरा ! तओ तेहिं । मुक्को असिप्पहारो इमस्स जा कंठदेसंमि ॥ ४९ ॥ तो देवयावसाओ जाओ सो पुप्फमालियारूवो । तं दट्ठुं भीएहिं नरेहिं रण्णो समाइट्ठं ॥ ५० ॥ भणियं रण्णावि झडत्ति मज्झ पासंमि आणह तयंति । इय अच्चब्भुयचरियं पलोइयं जस्स तुज्झेहिं ॥ ५१ ॥ जं आइसई देवोत्ति भणिय तो तेहिं तस्स पासंमि । सो आणीओ भणिओ, रन्ना संमाणिऊण बहुं ॥ ५२ ॥ भो ! भो ! न तुमं कत्ता, इमस्स कज्जस्स चेट्ठिएणेव । तुह संतिएण कहियं, किंतु फुडं साह सब्भावं ॥ ५३ ॥ जस्सेह विलसियमिणं तो सो पडिभणइ सामि ! जइ अभयं । देसि तुमं तस्स तया कहेमि नो इहरहा कहवि ॥ ५४ ॥ एवं हवउत्ति तओ भणिए रण्णा कहेइ जहवत्तं । मूलाओ आरब्भा तो रण्णा हत्थिखंधंमि ॥ ५५ ॥ आरोविओ पुरीए भमाडिओ

अप्पणा सम एसो । वज्जंताउज्जपढंतभट्टगिज्जन्तगेएहिं ॥ ५६ ॥ इयरोऽविहु निव्विसओ आणत्तो हियअसेस-
दविणोहो । रण्णा पभणंतेणं वयणमिणं बहुसहामज्झे ॥ ५७ ॥ रे ! रे ! अण्णज्ज ! तुह अज्ज नागदत्तेण
रक्खियं जीयं। छुट्टेज्ज कह णु इहरा जीवंतो मह सयासाओ ? ॥ ५८ ॥ मुक्को रण्णा निययं गिहमणुपत्तो स नागद-
त्तोऽवि । जणयंतो नियजणणीं, जणयाइजणस्स परिओसं ॥ ५९ ॥ पियमित्तसत्थवाहो, समागओ तत्थ तो कुमा-
रस्स । साहइ नागवसए काउस्सग्गाइवुत्तंतं ॥ ६० ॥ तो परितुट्ठो भण्णइ तप्परिणयणाइ तस्स विण्णत्तिं । हिट्ठो
इमो य कारइ, सुहदिणे तीएँ परिणयणं ॥ ६१ ॥ वित्ते पाणिग्गहणे महाविभूईएँ नागदत्तो उ । सोहइ नागवसूए जुत्तो
रामव्व सीयाए ॥ ६२ ॥ जम्मंतरकयसुकयाणुभावसंपज्जमाणसुहनिवहो । अह सो तीएँ समाणं उवभुंजइ माणुसे भोए
॥ ६३ ॥ अन्नम्मि दिणे पासायवरगओ सह पियाएँ कीलंतो। दट्ठूण पुरवरीए सोहं हासेण भणइ पियं ॥ ६४॥ पिहुपायारनियं-
बा चलग्गरंगंतपरिहसारसणा । सुरभवणसिहरओतुगचंगघणकलसरमणीया ॥ ६५ ॥ रमणीयवासभवणो
वसोहिसुन्दरगवक्खनयणिल्ला । पिच्छाविए एस पुरीवे तुज्झ करणिं समुव्वहई ॥ ६६ ॥ सा भणइ किं अमीए
नाह ! असंबद्धवयणरयणाए । चिट्ठामो खणमेगं, विउसिट्ठेणं विणोएणं ॥ ६७ ॥ पण्हुत्तरगूढचउत्थमाइणा भणइ

नागदत्तो तो । जइ एवं ता सुंदरि ! निसुणसु पण्हुत्तरं एक्कं ॥ ६८ ॥ सह पवणेणं इट्ठा, निदाहदाहदुयाण के हुंति । पंकयदलच्छि ! का वा गयाण पाणप्पिया कहसु ॥ ६९ ॥ लहिउं पढिज्जमाणंपि तीएँ भणियं करेणुया (करेऽणुया) नाह ! । तो विम्हएण पढियं, अन्नं लहु नागदत्तेण ॥ ७० ॥ पुच्छंति थोवलोभा भवसुहहेऊ जणस्स को सिट्ठो ? । केरिसया वा नगरी, न होइ परचक्कदुल्लंघा ॥ ७१ ॥ अप्पायारा उत्तरमिमस्स कहिऊण जंपइ तओ सा । गूढचउत्थं किंचिवि, सक्कयभासाएँ पढसु पिय ! ॥ ७२ ॥ प्रसरति मनसिजवायौ लीलालस-नयनपल्लवविलासा । कं मदवशं न कुरुते," पढियं तो नागदत्तेण ॥ ७३ ॥ इयरीयवि सुचिरं चिंतिऊण रंजिय-मणाएँ भणियमिणं । पिययम ! लद्धामिमंपि हु, यौवनवनकन्दली बाला ॥ ७४ ॥ ता बुद्धिपयरिसं से, अवलोइय भणइ नागदत्तोऽवि । भणसु पिए ! किंवि तुमंपि जेण अहयं वियाणामि ॥ ७५ ॥ तो पभणइ नागवसू अद्धाबंधेण विरइयमउव्वं । गूढचउत्थइगूढं पिययम ! सुण एगचित्तो तं ॥ ७६ ॥ मा रातु भावहारक नीतीनां निलयदा नवर कीर्त्ते । धौतस्वनरपते ता क्षीणार्त्तिगृहा सुगतकीला ॥ ७७ ॥ सुइरं विचिंतिऊणं लद्धे कहकहवि भणइ तो एसो । साहु अउव्वं सुंदरि ! पढियं लद्धं व किच्छेणं ॥ ७८ ॥ मालतीहारनीहारक्षीराभा दानवस्तुता । स्वकीयकीर्त्ति-

धौतेव, तूर्यपादोऽस्य तु प्रिये! ॥ ७९ ॥ भारती वरदाऽस्तु ते, भावियाचित्तत्तेणं, इमस्स ।चिंतिय पुणो पुणो
चेव। परिवत्तं तस्सेसा बुद्धी सुंदरयरा जाया ॥ ८० ॥ माराणुभावहारगपाएण इमाएँ कामविजयित्तं
भणियं गुणाण सारं, तं पुण विरलं जओ आह ॥ ८१ ॥ अह्नाय वह्नौ बहवो विशन्ति, शस्त्रैः स्वदेहानि
विदारयन्ति। चित्राणि कृच्छ्राणि समाचरन्ति, मारारिवीरं विरला जयन्ति ॥ ८२॥ एयं पुण एयं चिय, कहन्नहाऽहं
विवेयजुत्ताऽवि। विसयासत्तो चिट्ठामि एत्थ वीसरिय अत्ताणं ॥ ८३॥ एमाइ चिंतयंतो, नागवसूएँ स एवमाभट्ठो। पिय-
यम! किमण्णचित्तो व दीससे संपयं कहसु ?॥ ८४ ॥ तो जाव नागदत्तो हियगयं कहइ तीएँ सब्भावं।
आसन्ने ताव घरे अक्कंदरवो समुच्छलिओ ॥ ८५ ॥ अविय–हा पुत्त! पुत्त! पियमाइभत्त! हा नाह! कहिं
गओ साह ?। हा भायभइणिवच्छल! कह छलिओ हय कयंतेणं? ॥ ८६ ॥ हा सामिय! गुणगणमणिकरंड!
एमाइबहलहलबोली । विलवंति माइभज्जाभयणीपणईण सदेहिं ॥ ८७ ॥ तं सोऊं नागवसू भणइ पियं णाह!
किं इमं एवं। अक्कंदंति वराया विलवंता करुणसद्देहिं? ॥८८॥ भणइ पिए! जमदंडो सो अज्ज इमाण निवडिओ
गेहे। पेक्खंताणवि जेणं गिहसामी निहणमुवणीओ ॥ ८९ ॥ माया नो भज्जा नो भइणी नो नो य पणइवग्गो

य । नो अत्था सुसमत्था रक्खंति जमेण हीरंतं ॥ ९० ॥ ता अम्हाणत्रि एसो न पहुप्पइ जा अकज्जपडियारो । अवियाणियआगमणो जमराओ सव्वनासयरो ॥ ९१ ॥ तावुज्जमं करेमो सुंदरि ! सव्वन्नुभासिए धम्मे । बहुविहजम्मणजरमरणरोगसोगाइअंतयरे ॥ ९२ ॥ तीए वुत्तं तुमए जं दिट्ठं विसयनिरभिलासित्तं । तं चिय इमेण वेरग्गहेउणा पोढयं नीयं ॥ ९३ ॥ जम्हा निमित्तमित्तेण चेव बुज्झंति केवि कयउण्णा । जेसिं जिणिंदधम्मो, सुपरिचिओ पुव्वजम्मंमि ॥ ९४ ॥ ता जुत्तं चिय एवं कीरउ मज्झंपि अणुमयं नाह ! । तुज्झाणुमग्गलग्गा लंघिस्समहंपि भवजलहिं ॥ ९५ ॥ एवं च तीए वयणं, सोउं संजायबहलरोमंचो । पिइमाइजणं आपुच्छिऊण तेहिंपिऽणुण्णाओ ॥ ९६ ॥ महया विच्छड्डेणं कारावियजिणिंदभवणमहमहिमो । दीणाणाहपयट्टियदाणो संघस्स कयपूओ ॥ ९७ ॥ सुट्ठियसूरिसमीवे निक्खंतो से पियाऽवि पडिवण्णा । समणत्तं तस्सेव य महत्तराए समीवंमि ॥ ९८ ॥ चरिऊण चिरं कालं कलंकमुक्कं तओ समणधम्मं । आराहियविहिमरणाइं दोऽवि पत्ताइं सुरलोयं ॥ ९९ ॥ एवं जहा सो किर नागदत्तो, अदत्तदाणाइ नियत्तचित्तो । इहन्नजम्मे य सुहिक्कठाणं, जाओ तहऽन्ने य भवंतु सत्ता ॥ २०० ॥

॥ इति नागदत्ताख्यानकं समाप्तमिति ॥

उक्तं तृतीयाणुव्रतस्य पञ्चमं गुणद्वारमधुना षष्ठं यतनाद्वारमाह—

**उचियकलं जाणिज्जसु धरिमे मेए कलंतराइसु य ।**
**पडियस्स य गहणंमी जयणा सव्वत्थ कायव्वा ॥ ४२ ॥**

उचिता चासौ कला च उचितकला—अष्टगुणलाभादिलक्षणा तां '**जानीयात्**' अवगच्छेत् , अदत्तादानव्रतीति शेषः, क केत्याह—'**धरिमे**' ध्रियते—स्थाप्यते तुलादौ परिमाणावगमाय यत्तद्धरिमं—गुडादि तस्मिन्, तथा मीयते—परिच्छिद्यते असृतिप्रसृतिसेतिकादिमानेन यत्तन्मेयं धान्यादि तत्र, तथा कलान्तरं—वृद्धिप्रयुक्तधनस्य लाभादानं तदादिर्येषां, आदिशब्दादेकदान द्वयादानादिग्रहः, तानि तेषु कलान्तरादिषु, चशब्द उचितकलाविशेषज्ञापनार्थः, कलान्तरे शतं प्रति द्रम्मपच्चकाद्यादानलक्षणे उचितकला, तथा पतितस्य—भूम्यादावस्तस्यान्यदीयद्रव्यस्य, चः समुच्चये, स च ग्रहणे चेति योज्यः, ग्रहणम्—आदानं तस्मिंश्च, किं बहुना ?, उपदेशसर्वस्वमाह—'**यतना**' गुरुलाघवालोचनप्रवृत्तिलक्षणा '**सर्वत्र**' सर्वस्मिन् क्रयविक्रयादौ कार्ये '**कर्त्तव्या**' विधेयेत्यक्षरार्थः, भावार्थस्त्वयम्—गुडादौ धान्यादौ कलान्तरादौ च देशकालाद्यपेक्षमुचितमेव लाभं गृह्णीयात्, पतितादानेऽप्यल्पदोषबहुगुणालोचनया काष्ठलोष्टा-

दिकं उचितं गृह्णीयात्, न हिरण्यादिकं, यदुक्तम्—" अप्पेण बहुमेसेज्जा, एयं पंडियलक्खणं। सव्वासु पडिसेवासु, एयं अत्थपयं विऊ ॥ १ ॥" इति गाथार्थः ॥ ४४ ॥ गतं यतनाद्वारमधुनाऽतिचारद्वारमाह—

तेनाहडं च तक्कर—पओगकूडतुलकूडमाणं च ।
तप्पडिरूवं च विरुद्धरज्जगमणं च वज्जेज्जा ॥ ४५ ॥

स्तेनाः— चौरास्तैराहृतं—आनीतं कुङ्कुमादि स्तेनाहृतं, 'वज्जेज्ज'त्तिगाथान्तस्य सर्वत्र सम्बन्धात् 'वर्जयेत्' त्यजेत्, चकारः परस्परापेक्षया समुच्चये, तथा तस्करप्रयोगकूटतुलाकूटमानं चेत्येकं पदमतिचारद्वयप्रतिपादकं, अस्य चार्थः—तस्कराः—मलिम्लुचास्तेषां प्रयोगो—हरणक्रियायां प्रेरणं 'हरत यूय—'मित्यनुज्ञा तस्करप्रयोगः, कूटा—प्रसिद्धस्वभावापेक्षया न्यूनाऽधिका वा तुला कूटतुला, कूटं—न्यूनमधिकं वा मानं कुडवादि कूटमानं कूटतुला च कूटमानं च कूटतुलाकूटमानं तस्करप्रयोगश्च कूटतुलाकूटमानं चेति पुनर्द्वन्द्वः, तच्च वर्जयेत्, अथवा "नीयालोयमभूया य आणिया दीहबिंदुदुब्भावा।" इति लक्षणेनानुस्वारलोपेन तस्करप्रयोगं वर्जयेदिति भिन्न एव सम्बन्धः, कूटतुलेत्यादिस्तु भिन्न एवेति, तथा 'तत्प्रतिरूपं च'

तेन प्रस्तुतेन व्यवह्रियमाणेन घृतादिना वा व्रीह्यादिना वा प्रतिरूपं—सदृशं वसादि पलञ्ज्यादि वा यत्र स तथा
तं, व्यवहारमिति शेषः, अथवा तस्य—व्यवह्रियमाणस्वर्णादेः प्रतिरूपं—सदृशं युक्तिस्वर्णादि तत्प्रातिरूपं तेन यो
व्यवहारः स तदभेदोपचारात्प्रतिरूपस्तं च वर्जयेत्, तथा विरुद्धः- प्रतिपन्थी, स च प्रस्तावात्स्वराज्यापेक्षया
द्रष्टव्यः, तस्य राज्यं—कटकं देशो वा तत्र गमनं विरुद्धराज्यगमनं तच्च वर्जयेत्, अतिचाररूपता चैषामेवं-
काणक्रयेण लोभदोषाच्चौराहृतं प्रच्छन्नमाददानश्चौरो भवति, यदुक्तम्—" चौरश्चौरापको मन्त्री, भेदज्ञः काणक-
क्रयी । अन्नदः स्थानदश्चैव, चौरः सप्तविधः स्मृतः ॥ " इत्यतश्चौर्यकरणाद् व्रतभङ्गो, वाणिज्यमेव मया क्रियते न
चौर्यमिति बुद्ध्या च व्रतसापेक्षत्वादभङ्ग इति भङ्गाभङ्गरूपोऽतिचारः स्तेनाहृतं । तस्करप्रयोगस्तु द्विविधत्रिविधेन
गृहीतादत्तादानविरतेर्यद्यपि भङ्ग एव, तथाऽपि भवदानीतं मोषमहं निगमयिष्यामि भक्तकादि च भवतामहं दास्यामि,
किं भवन्तो निर्व्यापारास्तिष्ठन्तीत्युक्तिभिश्चौरान् प्रेरयतः चोरयत यूयमित्यहं न भणामीत्यभिसन्धिना तद्व्यापारणं
परिहरतो व्रतापेक्षित्वादतिचारः । तथा कूटतुलादितत्प्रतिरूपयोः परवञ्चनारूपत्वात्ताभ्यामदत्तादानविरतेर्भङ्ग एव,
१४ केवलं क्षत्रखननाद्येव चौर्यं, कूटतुलादि तत्प्रतिरूपकरणं तु वणिक्कलैवेति स्वकल्पनया व्रतरक्षणोद्यतस्यातिचारावे-

तांविति । विरुद्धराज्यगमनं तु यद्यपि स्वस्वाम्यननुज्ञातपरकटकादिप्रवेशस्य "सामीजीवादत्त" मित्यादिलक्षणयोगेन तत्कारिणां चौर्यदण्डयोगेन चादत्तादानरूपत्वाद्भङ्ग एव, तथाऽपि विरुद्धराज्यगमनं कुर्वता मया वाणिज्यमेव क्रियते न चौर्यमित्यभिसन्धिना व्रतसापेक्षत्वात् लोके च चौरोऽयमिति व्यपदेशाभावाददतिचार इति, अथवाऽनाभोगादिनाऽतिक्रमादिना वा पञ्चानामप्यतिचारत्वं चिन्त्यमिति गाथार्थः ॥ ४५ ॥ भङ्गद्वारमधुनाऽभिधत्ते—

जो चिंतेइ अदिन्नं गेण्हामि पयंपए तहा गिण्हे ।
अइयारेसु य वट्टइ पुणो पुणो तस्स भंगोऽत्थ ॥ ४६ ॥

'यः' प्राणी 'चिन्तयति' वितर्कयति, किमित्याह—'अदत्तं गृह्णामि' अवितीर्णं लामि, अनेन मनोव्यापार उक्तः, वाक्कायव्यापारप्रतिपादनायाह—'पयंपए तहा गिण्हि' त्ति तथाशब्दः समुच्चये द्वयमध्यवर्त्ती चोभयत्रापि योज्यते, ततोऽयमर्थः—यः केवलं चिन्तयति, तथा प्रजल्पति—वक्ति चादत्तं गृह्णामीति, न केवलं जल्पति तथा गृह्णाति—आदत्ते च कायेन तदिति सम्बन्धः, न केवलमेतत् त्रयं करोति, 'अतिचारेषु च' पूर्वोक्तस्तेनाहृ-

तादिषु 'वर्त्तेत पुनः पुनः' भूयो भूयस्तेषु प्रवृत्तिं करोति 'तस्य' प्राणिनोऽतिसङ्क्लिष्टस्य 'भङ्गः' विनाशः 'अत्र' अदत्तादानव्रतविषये इति गाथार्थः ॥ ४६ ॥ भणितं भङ्गद्वारमधुना भावनोच्यते—

**जे दंतसोहणंपि हु गिण्हंति अदिण्णयं न य मुणिंदा ।**
**तेसिं नमामि पयओ निरभिस्संगाण गुत्ताणं ॥ ४७ ॥**

ये मुनीन्द्रा इति सम्बन्धः, 'दन्तशोधनं' दशनशलाका तदपि, अपिशब्दादास्तां स्वर्णादि, दशनशोधनमपि, अथवाऽपिशब्दः (ब्दात्) भस्मगोमयादि, 'गृह्णन्ति' आददते अदत्तमेव अदत्तकं—अननुज्ञातं स्वामिनेति भावः 'नच' नैव, मन्यते जगतस्त्रिकालावस्थामिति मुनयस्तेषामिन्द्रा इवेन्द्रा मुनीन्द्राः, प्रधानयतय इति हृदयं, 'तेसिं' "छट्ठिविभत्तीएँ भण्णइ चउत्थी" ति लक्षणेन 'तेभ्यो' मुनीन्द्रेभ्यः 'नमामि' प्रणिपतामि 'प्रयतः' आदृतः 'निराभिष्वङ्गेभ्यः' द्रव्यादिप्रतिबन्धरहितेभ्यः वीतरागेभ्य इतियावत्, पुनः किंविशिष्टेभ्यः ?-गुप्तयो मनोवाक्काय-निरोधरूपा विद्यन्ते येषां ते गुप्तास्तेभ्यः, अर्शआदित्वान्मत्वर्थीयात्प्रत्यये रूपम्, अनेन च गाथासूत्रेणैवंविधसाधु-नमस्कारद्वारोपात्तादत्तादानविरतिगुणबहुमानरूपा भावना सूचितेति गाथार्थः ॥ ४७ ॥

भणितं भावनाद्वारं, तद्भणनाच्च तृतीयाणुव्रतमुक्तं, सम्प्रति चतुर्थस्यावसरः, तदपि यादृशादिनवद्वारम्, अतः क्रमप्राप्तं प्रथमद्वारेण चतुर्थव्रतं निरूपयन्नाह—

अट्ठारसहा बंभं नवगुत्तीपंचभावणासहियं ।
कामचउवीसरहियं दसहा वा अठ्ठहा वावि ॥ ४८ ॥

कीदृशं ब्रह्मचर्यमिति स्वरूपाजिज्ञासायां शिष्यस्योच्यते—'अष्टादशधा ब्रह्मे'ति ब्रह्मशब्देन ब्रह्मचर्यमभिधीयते, 'पदैकदेशे पदसमुदायोपचारात्'तच्च अष्टादशाभिः प्रकारैरष्टादशधा त्रिविधं त्रिविधेन वैक्रियादौदारिकाच्च निवृत्तेः, यदुक्तं वाचकमुख्येन—"दिव्यात्कामरतिसुखात् त्रिविधं त्रिविधेन विरतिरिति नवकम् । औदारिकादपि तथा तद्ब्रह्माष्टादशविकल्पम् ॥ १ ॥" पुनः कथम्भूतमित्याह—'नवगुप्तिपञ्चभावनासहितं' नव गुप्तयो—ब्रह्मचर्यरक्षणप्रकाराः स्त्र्यादिसंसक्तवसतिविसर्जनादयो यत्र तत् नवगुप्ति, भावनाभिः सहितं, कियत्यो भावनाः? इत्याह—पञ्च, यदिवा नव च ता गुप्तयश्च नवगुप्तयः पञ्च च ता भावनाश्च पञ्चभावनाः, नवगुप्तयश्च पञ्चभावनाश्च ताभिः सहितं, तत्र नव गुप्तयो यथा—"वसहि १ कह २ निसिज्जि ३ दिय ४ कुडुंतर ५ पुव्वकीलिय ६ पणीए ७ । अइमायाहार ८ विभूसणा ९ य नव बंभगुत्तीओ ॥ १ ॥" भावनाः पञ्च इमाः—

“ आहारगुत्ती १ अविभूसियप्पा २, इत्थिं न निज्झाइ ३ न संथवेज्जा ४ । बुद्धे मुणी खुद्दकहं न कुज्जा ५, धम्माणुप्पेही संधए बंभचेरं ॥ १ ॥ ” भूयः किंविशिष्टं ?, उच्यते—‘ **कामचतुर्विंशतिरहितं** ’ काम्यन्ते—अभिलष्यन्ते ये ते कामास्तेषां चतुर्भिरधिका विंशतिश्चतुर्विंशतिः, सा चैवं—संप्राप्तासंप्राप्तभेदाद्विविधः कामः, तत्र संप्राप्तश्चतुर्दशविधो दृष्टिसम्पातदृष्टसेवादिलक्षणः, तदुक्तं दशवैकालिकानिर्युक्तौ—“ दिट्ठीए संपाओ १ दिट्ठीसेवा २ य संभासो ३ ॥ १ ॥ हसिय ४ ललियो ५ वगूहिय ६ दंत ७ नहनिवाह ८ चुंबणं चेव ९ । आलिंगण १० आयाणं ११ कर १२ सेवण १३ ऽणंगकीडा य १४ ॥ २ ॥ ” तत्र च दृष्टिसम्पातः—स्त्रीणां कुचाद्यवलोकनं १ दृष्टिसेवा च भावसारं तद्दृष्टेर्दृष्टिमीलनं २ संभाषः—संभाषणमुचितकाले स्मरकथाभिर्जल्पः ३ हासितं वक्रोक्तिगर्भं प्रतीतं ४ ललितं पाशकादिक्रीडा ५ उपगूहितं-परिष्वक्तं ६ दन्तनिपातो-दशनच्छेदविधिः ७ नखनिपातो—नखरदनजातिः ८ चुम्बनं-वक्त्रसंयोगः ९ आलिङ्गनं-गात्रसंश्लेषः १ आदानं-कुत्रापि ग्रहणं ११ ‘करसेवणं’ति प्राकृतशैल्या करणासेवने तत्र करणं-नागरकादिप्रारम्भयन्त्रं १२ आसेवनं—मैथुनक्रिया १३ अनङ्गक्रीडा च अस्यादावर्थक्रियेति १४ । अयं प्रथमपादद्वयोनगाथाद्वयोक्तः सम्प्राप्तकामश्चतुर्दशधा, असम्प्राप्तकामश्च दशधैवम्—“प्रथमे जायते चिन्ता, द्वितीये द्रष्टुमिच्छति । तृतीये दीर्घनिः-

श्वासश्चतुर्थे ज्वरमादिशेत् ॥१॥ पञ्चमे दह्यते गात्रं, षष्ठे भक्तं न रोचते। सप्तमे तु भवेत्कम्पः, उन्मादश्चाष्टमे तथा ॥ २ ॥ नवमे प्राणसन्देहो, दशमे जीवितं त्यजेत् ॥" अथवा दशवैकालिकनिर्युक्त्यनुसारेणैवमसम्प्राप्तकामो दशविधः—तथा च तदुक्तम्—" तत्थ असंपत्तोऽत्था १ चिंता २ तह सद्ध ३ संभरणमेव ४ । विक्लवय ५ लज्जनासो ६ पमाय ७ उम्माय ८ तब्भावे ९ ॥ १ ॥ मरणं च १० होइ दसमं"ति, अस्या अर्थः—तत्रासंप्राप्तकामोऽयं 'अर्थे'ति अर्थनमर्थः—अदृष्टेऽपि विलयादौ श्रुतेस्तदभिप्रायमात्रमित्यर्थः १ तत्रैवाहो रूपादिगुणा इत्यभिनिवेशेन चिन्तनं चिन्ता २ तथा श्रद्धा—तत्सङ्गमाभिलाषः ३ स्मरणं—कल्पिततद्रूपस्यालेख्यादिविनोदः ४ विक्लवता—तच्छोकातिरेकेणाहारादिष्वपि निरपेक्षता ५ लज्जानाशो—गुर्वादिसमक्षमपि तद्गुणोत्कीर्त्तनं ६ प्रमादः—तदर्थमेव सर्वारम्भेष्वप्रवर्त्तनं ७ उन्मादो—नष्टचित्ततया आलजालभाषणं ८ तद्भावः—स्तम्भादीनामपि तद्बुद्ध्याऽऽलिङ्गनादिचेष्टा ९ मरणं च—शोकाद्यतिरेकेण प्राणत्यागः १० इत्थमसंप्राप्तकामो दशविधः । दश चतुर्दश च मीलिताश्चतुर्विंशतिस्तया रहितं—त्यक्तम् । अन्यथा वा ब्रह्मचर्यस्वरूपमभिधीयते—दशधा वाऽष्टधा वा, अपिवाशब्दावथवार्थौ, ततोऽथवा दशधा ब्रह्माथवाऽष्टधेति, तत्र दशधा गन्धहस्त्युक्तदशविधमैथुनादिरूपकामप्रत्येकवर्जनया, तथा च तदुक्तम्—" मैथुना १ नुस्मृति २—

संस्कार ३ स्पृहे ४ न्द्रियालोक ५ वृष्यरस ६ विषया ७ विकथा ८ सत्कृति ९ संसक्तसेवा १० भेदाद्दशविधाद्-ब्रह्मणो निवृत्तिरिति । अष्टधा त्वेवम्-" स्मरणं १ कीर्त्तनं २ केलिः ३, प्रेक्षणं ४ गुह्यभाषणम् ५ । सङ्कल्पो ६ ऽध्यवसायश्च ७, क्रियानिवृत्तिरेव ८ च ॥ १ ॥ एतन्मैथुनमष्टाङ्गं, प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥ २ ॥ " इति, अपिशब्दस्त्वेतदाह-एवमाद्यनेकप्रकारं ब्रह्मव्रतस्वरूपं विज्ञाय विवेकिना यथौचित्यं व्रतग्रहणं विधेयमिति गाथार्थः ॥ ४८ ॥ व्याख्यातं यादृशद्वारेण चतुर्थाणुव्रतम्, अधुना यावद्भेदद्वारस्यावसरः, ततो यावन्तो भेदा अस्य संभवन्ति तदुपदर्शनायाह—

ओरालियं च दिव्वं तिरियं माणुस्सयं पुणो दुविहं ।
माणुस्स सदाराईकाए सयकारणाईहिं ॥ ४९ ॥

अत्र च विषयविषयिणोरभेदोपचाराद् यावद्भेदं मैथुनं तावद्भेदैव तद्विरतिरित्यभिसन्धिना ' ओरालियं चे-' त्यादि गाथासूत्रमुक्तम्, अस्य चैवं व्याख्या-द्विविधं मैथुनं, तदाह-औदारिकं च दिव्य 'मिति उदारैरुरालैर्वा वैक्रियाद्यपेक्षया स्फारैरघनैश्च पुद्गलैर्निर्वृत्तमौदारिकं औरालिकं वा शरीरं तद्विषयं तत्सम्बन्धि वा मैथुनमप्यभेदोप-

चारादौदारिकं, तिर्यङ्मनुष्यसम्बन्धीतियावत्, अत एवाह सूत्रकृत्--'**तिरियं माणुस्सयं पुणो दुविहं**' ति पुनः-शब्दस्य विशेषणार्थत्वादौदारिकमिति विशिनष्टि, तत्किमित्याह--'**द्विविधं**' द्विभेदं, कथम्?, उच्यते-तिरश्चामिदं तैरश्चं, मनुष्याणामिदं मानुष्यकं, तिर्यक्सम्बन्धि नरसम्बन्धि चेत्यर्थः, चकारः समुच्चये, स च भिन्नक्रमस्तेन दिव्यं चेति योज्यते, दिवि भवं दिव्यं-देवलोकसम्बन्धि, वैक्रियमितियावत्, इदं च यद्यपि करणादिभेदेन सर्वमप्यनेकविधं तथाऽपि रूपलक्षणभेदत्वात्तद्द्वारेणैव शेषावगतेश्च मानुष्यमेवानेकविधमुपदिदर्शयिषुरुत्तरार्द्धमाह-'**माणुस्से**' त्यादि, प्राकृतशैल्याऽत्रानुस्वारलोपात् मानुष्यं मैथुनं '**स्वदारादिकाये**' स्वकलत्रपरकलत्रवेश्यादिशरीरविषये '**स्वककारणादिभिः**' स्वकेन-स्वकरणेन कारणानुमतिभ्यां च विचिन्त्यमानमनेकविधं, भवतीति गम्यत इति गाथार्थः ॥ ४९ ॥

उक्तं यावद्भेदद्वारम्, अधुना यथा जायत इत्युच्यते, तत्र मैथुनव्रतं येन प्रकारेण जायते तदाह—

**दुविहं तिविहेण विउव्वियं तु एगविहतिविह तिरियंमि ।**
**मणुयं चरिमे भंगे पच्चक्खाणं चउत्थवए ॥ ५० ॥**

यावद्भेदद्वारं यथाजायते गा.

अत्र प्रत्याख्यानं 'चतुर्थव्रते' इति तुर्यपादेन सर्वत्र सम्बन्धः, ततश्च द्विविधंत्रिविधेन—न
करोमि न कारयामि मनोवाक्कायैरेवंविधभङ्गकलक्षणेन वैक्रियमैथुनविषयं प्रत्याख्यानं जायते इति
शेषः चतुर्थाणुव्रते, भावार्थश्चायम्—श्रावकस्यानुमतेः सर्वत्राप्रतिषेधात् सामान्येन वैक्रियदेव्यादिसत्कं द्वि-
विधत्रिविधभङ्गकेन मैथुनविरमणं भवति, तिर्यङ्मनुष्यमैथुनविरतिः केन २ भङ्गेनेति चेदुच्यते—
'**एगविहतिविह तिरियंमि मणुयं चरिमभंगे**' त्ति, अत्र सूत्रत्त्वात्तृतीयाविभक्तिलोपेन एकविधत्रिवि-
धेन न करोमि मनोवाक्कायैरेवंविधभङ्गकेन तिरश्चि-तिर्यग्विषयं प्रत्याख्यानं, मनुजं च–मनुष्यविषयं पुनर्विषयविष-
यिणोरभेदोपचारात् '**चरिमे भंगे**' त्ति चरमेण भङ्गेन–एकविधैकविधलक्षणेन, न करोमि कायेनेत्येवंरूपेणेत्यर्थः,
सप्तम्यास्तृतीयार्थत्वात्, तात्पर्यार्थश्चायं–गवादीनां वृषभादिसंयोजनप्रकारेण तिर्यग्विषयमैथुनकारणानुमत्योः प्रायशः
श्रावकेण निषेद्धुमशक्यत्वात् तैरश्चमैथुनप्रत्याख्याने एकविधत्रिविधलक्षणो भङ्ग उक्तः,मानुषे स्वस्वापत्यविवाहादौ कारणा-
नुमतिभावाद्धलवद्व्यापारतया मनोवचननिरोधस्य च दुःशक्यत्वादेकविधैकविधेनेत्युक्तं, मनोवशत्वादिस्वयोग्यतापरस्य
तु परेणापि प्रकारेण प्रत्याख्यानग्रहणसम्भवात् शेषा अप्यष्टौ भङ्गाः पदत्रयेऽप्यनिषिद्धा एष्टव्या इति गाथार्थः ॥ ५० ॥

उक्तं यथा जायत इति द्वारम्, अस्य सम्प्रति दोषद्वारावसरः, दोषाश्चैहिकाः पारत्रिकाश्च, तत्रैहिका मातृभगिनीगमनादयः, पारत्रिका नपुंसकत्वादयः, तान् द्वेधाऽप्येकगाथया प्राह—

गिरिनयरे तिन्नि वयंसियाउ वादो जमलगा वणिसुया य ।
परलोए नपुंसत्तं दोहग्गं चेव दोसा य ॥ ५१ ॥

'**गिरिनगरे**' गिरिनगराभिधानपत्तने '**तिस्रो वयस्याः**' त्रिसंख्या मित्रभावमापन्नाः स्त्रियो द्वौ '**यमलजौ**' युग्मभ्रातरौ '**वणिक्सुता च**' वाणिजकपुत्री, मैथुनानिवृत्तेरैहिकदोषभाजनं संवृत्ता इति गम्यते, परभवे '**नपुंसकत्वं**' षण्ढत्वं '**दौर्भाग्यं**' दुर्भगत्वं च '**दोषाः**' दूषणानि, चकारादन्येऽपि, तदुक्तं–"मेहुणवयभंगंमी आसे पोसे तहेव करकम्मे । विहवा वंझा तिंदू जोणीसूलं रुहिरवाहो ॥ १ ॥" त्ति, इत्यादयोऽपि द्रष्टव्याः, इति गाथाऽक्षरार्थः ॥ ५१ ॥ भावार्थः कथानकेभ्योऽवसेयः, तेषु च प्रथमं तावदिदम्—

इहैव जम्बूद्वीपे भारतवर्षमध्यखण्डालङ्कारभूतसौराष्ट्रविषये गिरिनगरं नाम पत्तनं, तत्र तिस्र इभ्यदुहितरः परस्परप्रीतिभावापन्ना उदग्रयौवनवर्त्तिन्यो जिनमतिप्रियङ्करीधनश्रीनामधेयाः, जिनदत्ताप्रियमित्रधनदत्ताभिधैर्महाश्रेष्ठि-

पुत्रैः परिणीताः, तासु च जिनमतेर्भर्त्ता जिनदत्तो गृहीताणुव्रतः श्रावकः, तत्सङ्गत्या जिनमतिरपि श्राविका, केवलं प्रियङ्करीधनश्रीमैत्र्या नात्यन्तं जिनधर्मस्थिरमतिः, जातश्चैकैकस्तासां पुत्रः, अन्यदा च तिस्रोऽप्युज्जयन्तगिरिं नेमिनाथवन्दनाय गताः, तस्य च रम्यरम्यतरप्रदेशावलोकनेनोत्पन्नाधिककौतुका अपरापरप्रदेशादिदृक्षया विचरन्त्यः प्राप्ताश्चौरैर्गृहीता नीताश्च पारसकूलं, विक्रीता वेश्यानां हस्ते, ताभिश्च शिक्षितो वेश्याजनोचितो वैशिककलाकलापः, जाता अत्यन्तप्रसिद्धा वेश्याः। इतश्च तत्पुत्रा अपि स्वपितृभिरेकोपाध्यायसमीप एव पाठिताः कालक्रमेणोपारूढा यौवनं, समानशीलतया चान्योऽन्यं सख्यवंतः, कारिताः पितृभिर्दारसङ्ग्रहं, जिनदत्तपुत्रश्च पितृसंसर्गादेव श्रावकत्वमनुपालयति, इतरौ च न तथा, अन्यदा चालोचितवन्तस्ते-किमनेन प्रभूतेनापि पितृपर्यायागतेन धनेन ?, नातस्त्यागभोगाभ्यामपि कश्चित्पुरुषस्य श्लाघा, प्रत्युत इतरजनोपालम्भ एवात्र, तथा च लोकप्रसिद्धो दोहकः-" पियरि विढत्तइ दव्वइ, ठिङ्किरिका न करेइ। सइं विढवा सइ विलसणा, विरला जणाणि जणेइ ॥ १ ॥ " तस्माद्वयमपि किमपि देशान्तरं गत्वा निजभुजाभ्यामुपार्ज्य वित्तमुचितत्यागभोगैः सफलयामो मनुष्यजन्मेति परिभाव्य स्वपितुराज्ञया गृहीतदेशान्तरगामिभाण्डा महत्या सामग्र्या नावा समुत्तीर्य समुद्रं

गताः पारसकूलं, दर्शितवन्तस्तत्रत्यस्य लोकस्य स्वभाण्डानि, अत्रान्तरे समागतास्तास्तिस्रोऽपि तत्समीपमुपात्तोदात्तवेषालङ्कारा वेश्याः, कथितं तदग्रे पार्श्ववर्त्तिना लोकेन–यथैतासां स्वयमत्रत्यनृपतिना प्रसाददानमीदृशं कृतमास्ते–ये केचिदत्रोपागच्छन्ति व्यवहारगत्या तैरेतासां षोडशोत्तरं २ शतं दत्त्वैताभिरेव सह विषयसुखमनुभवनीयं, ततो वणिक्पुत्रैः एवमस्त्वित्यभिधायोचिततांबूलादिदानपूर्वकं तद्गृहाणि विज्ञाय प्रेषितास्ताः स्वगृहाणि, स्वयं च भाण्डप्रतिभाण्डक्रयविक्रयादिव्यापारेण दिवसमतिवाह्यास्तं गते चक्रवाकबान्धवे गभस्तिमालिनि प्रवृत्तेऽभिसारिकासार्थपरमानन्दजनके सन्ध्यासमये मन्दमन्दमुन्मिषत्सु परिदृश्यमानेषु तारतारकेषु क्रमेण तिमिरनिकरापूर्यमाणासु समस्ताशासु धृत्वा स्वस्थाने रक्षपालान् षोडशोत्तरं २ शतं द्रम्माणामादाय तासां गृहाणि जग्मुः, ताभिश्च तदागमनप्रतीक्षणाक्षणिकचेतोवृत्तिभिरवलोक्य तान् आगतांश्चक्रेऽभ्युत्थानासनदानाद्युपचारः, स्थिताश्च कियच्चिरमपि परिहासादिविनोदेन, नीताश्च क्रमेण स्वशयनीयस्थानानि, तेषु च जिनदत्तपुत्रः श्रावकः संपुटकं च खटिकां च गृहीत्वा समायातः, स च क्षणमात्रं जिनमत्या सह संभाषणादि विधाय प्रदीपान्तिकवर्त्त्येव संपुटकमुच्छोट्य लेखकं गणितुमुपचक्रमे, साऽपि तदग्र एवोपविष्टा, कियत्याऽपि वेलयाऽवादीत्–आर्यपुत्र ! कुतः

स्वागतं ?, प्रष्टव्योऽसि, तेनोदितं-गिरिनगरात्, ततः सा स्वनगरनामग्रहणादानन्दिता विशेषेणोज्जयन्तादिवार्त्तामापृ
च्छय निजगाद—सन्ति तत्र जिनदत्तप्रियमित्रधनदत्ता महाश्रेष्ठिपुत्राः सपुत्रकाः क्षेमेण?, तेनोदितं—सन्ति, किं तु किं विशे-
षेण तद्वार्त्ता पृच्छ्यते ?, तयोदितं—वयं तिस्रोऽपि तैर्विवाहिता अभूवन्, एकैकपुत्रकं च प्रसूतवत्यः, ततश्चौरैरिहानीय
वेश्याहस्ते विक्रीताः, तेनोक्तं--वयं ते त्रयोऽपि युष्मत्पुत्राः, अहं तावज्जिनदत्तपुत्रो जिनवल्लभः, इतरौ तु प्रियमित्र-
धनदत्तपुत्रौ प्रियावहधनावहनामकाविति, अन्ये त्वाहुः, यथा कुलदेवतया जिनवल्लभस्यार्द्धपथे सवत्सगोरूपमुपदर्शितं,
गोसमीपोपविष्टवत्सपृष्ठे च तेन भवितव्यतावशादमेध्यखरण्टितांहेः प्रोञ्छनं कृतं, ततो वत्सेन स्वमातुः कथितं, तया
च मानुषभाषयोदितं—वत्स ! कियदेतदस्य दुश्चेष्टितं ?, अयं हि पापकर्मा निजमात्रा सममद्य भोगान् भोक्तुमुद्यतो
विद्यते, ततस्तद्वचनश्रवणोपजातशङ्को जिनमातिगृहं प्रविष्टः, स एव सर्वोदन्तं पृष्टवान्, ततस्तया कथिते
स्ववृत्तान्ते मम माता सा त्वमितरे तु मम मित्रयोर्मातरावित्यवोचत्, ततः सा साध्वसेनोत्थाय तस्य ग्रीवायां
२५ विलग्य रोदितुं प्रवृत्ता, सोऽपि तथैव, ततः परस्परं सुखदुःखप्रच्छनेन क्षणमात्रं स्थित्वा जिनवल्लभे-
नोक्तम्—अम्ब ! मया तावन्मनागकार्यं नाचरितं, ताभ्यां तु मम सुहृद्भ्यां स्वस्वजननीपार्श्वगताभ्यां किमपि कृतं

भविष्यतीति न वेद्मि, तद् यामि तज्ज्ञापनायेत्यभिधाय यावद्गतस्तावदुपभुक्ते ते ताभ्यां, तत आहूय द्वावप्येकत्र भणितमनेन—यथैतास्ता अस्मन्मातरस्तिस्रो याश्चौरैस्तदाऽपहृताः, ततोऽतिदूरं विषादमुपगतावेतौ, संबोधितौ जिनवल्लभेन यथा भवत्येवंविधमनिवृत्तविषयाभिलाषाणां प्राणिनां, तत्मात्कार्यनिष्ठा भवामः, किं विषादेन ?, ततो मोचिताः सर्वैरेव प्रभूतवित्तवितरणेन स्वमातरः, आगन्तुं प्रवृत्ताः स्वदेशाभिमुखम्, अन्तरा च पर्यालोचितं स्वजननीभ्यां सह प्रियमित्रधनदत्तपुत्राभ्यां—स्वनगरमनुप्राप्तौ स्वजनवर्गस्य किमुत्तरं दास्यावः ?, तन्न युक्तं स्वदेशगमनमावयोः, ततोऽन्यतोमुखमाहितं प्रवहणं, तन्मातृभ्यां च परमविषादमागताभ्यामतिवाहित आत्मा समुद्रमध्ये, मुक्ते च कलङ्कभीतेनेव जीवितेन, जिनवल्लभस्तु स्वमातरं गृहीत्वा समायातः स्वनगरं, तन्मुखादेव ज्ञातवृत्तान्तैर्बहुभिर्लोकैर्गृहीतान्यणुव्रतानि, सोऽपि तथाविधरथविरान्तिके मात्रा सह प्रव्रज्यामादाय विधिना परिपाल्य गतः सुरलोकम्, अन्ये तु वदन्ति—सर्व एव सजननीकाः प्राप्ताः स्वनगरं विशिष्टसंवेगागतमानसा बभूवुः पञ्चाणुव्रतधारिणः परमश्रावकाः, एवं विज्ञायान्येनापि न कार्योऽतिप्रसङ्गो मैथुने, किन्तु विरतिः कार्येति ॥ द्वितीयकथानकम्—

वयस्यात्रिकदृष्टान्तः

सूरसेनाविषये मथुरा नगरी, तस्यामसाधारणरूपलावण्यादिगुणगणालङ्कारधारिणी समस्तकलाकलापकुशला

कुबेरसेना नाम गणिका, तस्याश्चान्यदा कथञ्चिद्गर्भसम्भवे महती शरीरबाधोदपादि, कथितं वैद्यस्याग्रे, तेन चादिष्टं—यथा युग्मगर्भदोषोऽयं, न तु रोगदोषः, ततस्तदम्बयोदितं--हे वत्से ! प्रसवसमये महती ते बाधा भविष्यत्यत औषधादिना गालय गर्भमेनं, तयोक्तं—को हि नाम जानान एवंविधमतिदारुणं पातकमङ्गीकरोति ?, तस्मादस्तु इत्थमेवायं गर्भो, यद्भवति तद्भवतु, ततश्च कालक्रमेण प्रसूता दारकदारिके, जनन्योक्तं—परित्यजैते, कुबेरसेनाऽब्रवीद—अम्ब ! दशरात्रमनुपाल्य त्यक्ष्यामि, एवमस्त्विति प्रतिपन्ने कुबेरदत्तकुबेरदत्तानामाङ्के मुद्रिके घटयित्वा तयोरेव कण्ठे बद्ध्वा दिव्यमञ्जुषां च सुयन्त्रितां कारयित्वा तन्मध्ये ते गर्भरूपे प्रक्षिप्य दशमदिवसे यमुनायां प्रवाहिते, प्रभातसमये च सौर्यपुरवास्तव्यकाभ्यां महेश्वरदत्तयक्षदत्तनामकाभ्यां श्रेष्ठिकाभ्यां शरीरचिन्तां विधाय यमुनातट एव शौचमाचरद्भ्यां ददृशे सा लोलकल्लोलमालयोह्यमानाऽऽगच्छन्ती मञ्जूषा तटनिकटम्, आगता च गृहीत्वोद्घाटिता यावत्तावदवलोकितं मध्येमञ्जूषं बालकयुग्ममेकं, तयोरनुपमरूपधारको दारकोऽपरा च दारिकेति, ततो महेश्वरदत्तेनाभाणि—भो यक्षदत्त ! सुरूपमेतद्युग्मकं कस्यचित्, केवलमित्थमेवमुक्तं व्यसनपरम्परां मरणं वा प्राप्स्यति अतः संगोप्यतामेतत, ततो यक्षदत्तेनोक्तं—यद्येवं पुत्रो ममार्प्यतां पुत्रिका स्वयमेवोर-

रीक्रियतां, महेश्वरदत्तेन त्वेवमस्त्वित्यभिधाय कुबेरदत्तां स्वयं गृहीत्वा कुबेरदत्तं च तस्यार्पयित्वा स्वगृहमाययौ, कालेन च ते तद्गृहयोः सुखंसुखेन वृद्धिमुपगते, यथौचित्यमेकोपाध्यायसमीपे एव कलाग्रहणं कारिते, जातश्च तयोः परस्परं स्नेहः, क्रमेण चोपारूढौ यौवनं, उचितसमये च श्रेष्ठिभ्यां को ह्यनयोरतिस्नेहवतोर्वियोगं करिष्यतीति पर्यालोच्य कारितं परस्परमेव पाणिग्रहणम्, अन्यदा च द्यूतविनोदेन तिष्ठतोस्तयोः संचारिता ग्रहणके स्वनामाङ्कमुद्रा कुबेरदत्तया, कुबेरदत्तोऽपि तामालोक्य स्वमुद्रया सहैकघटनामचिन्तयत्—कथमेतन्मुद्राद्वयमेकघटनं समाननामन्यासं चिरन्तनमावयोः ?, एकोदरोद्भूतापत्यतयैवावां क्वापि नाभूव; न च ममास्या उपरि कदाचिज्जायाबुद्धि—[ ग्रन्थाग्रम् ४००० ]—स्तद्गत्वा पितरावापृच्छामि, देवगुरुशपथदानपूर्वं च पृष्टौ तौ यथावत्कथितवन्तौ मञ्जूषालाभवृत्तान्तं, हा ! न सुन्दरमाचरितमित्यभिधाय कुबेरदत्तायास्तं वृत्तान्तं प्रकथ्य पितृगृहं च तां प्रस्थाप्य स्वयं मथुरायां व्यवहारबुद्ध्या गतः, तत्र च भवितव्यतावशेन तस्या एव निजमातुः कुबेरसेनायाः कथञ्चिद्गृहं गतः, दृष्टा सा, जातानुरागो भाटीप्रदानपूर्वं तयैव सह विषयसुखमनुभूतवान्, क्रमेण च सैव स्वपरिगृहे धृता, पुत्रश्च जातः। इतश्च कुबेरदत्ता तदैव वैराग्यमूरीकृत्य, सुव्रतागणिनीसमीपे सविस्तरां धर्मदेशनामाकर्ण्य संजातचरणपरिणामा

पप्रच्छ—भगवति ! यन्मया निजभ्रातरि भर्तृबुद्ध्या चेष्टमानया पातकमुपार्जितं तच्छोधनोपायो भवदीयप्रव्रज्या
भवति न वा ?, गणिन्योक्तं—भद्रे ! भवति, यत उक्तमस्मदागमे–" सव्वात्ति य पव्वज्जा, पायच्छित्तं भवंतरक-
डाणं । पावाणं कम्माणं तो एत्थं नत्थि दोसोत्ति ॥ १ ॥ " तत इदमाकर्ण्य प्रवर्द्धमानशुभाध्यवसायया तयोक्तं-
यद्येवमविलम्बितं प्रयच्छ मे भगवति ! स्वकीयदीक्षां, तयाऽपि तद्योग्यतामवगम्य दीक्षिता सा, गृहीतद्विविध-
शिक्षा कालेन षष्ठाष्टमदशमद्वादशादितपोविशेषशोषितशरीरा ब्रह्मचर्यभावनाः पञ्चापि विशेषेण पुनः पुनरा-
वर्त्तयन्ती विशुद्धनवब्रह्मगुप्तिपरिपालनपरा प्रशस्ताध्यवसायस्थानकारोहणक्रमेण संजातावधिज्ञानावरणकर्मक्षयो-
पशमाऽवधिज्ञानमन्ववापत्, तेन ज्ञातः कुबेरदत्तो मात्रा सह विषयाननुसेवमानः, ततस्तत्प्रतिबोधनार्थं गणिनीमापृच्छ्य
जगाम मथुरापुरीं, तद्गृहैकदेश एवानुज्ञाप्यावग्रहं स्थितवती, पित्रोः समक्षं च कदाचित्तं बालकमादाय—वत्स !
त्वं मे पुत्रोऽसि भ्राताऽसि भ्रातृजोऽसि देवरोऽसि, त्वत्पिता मे भ्राता पिता भर्त्ता श्वशुरश्च, तव जनन्यपि मम
माता श्वश्रूः सपत्नी भ्रातृभार्या चेति विरुद्धवचोभिरुल्लापयन्ती क्रीडयति स्म, ततः कुबेरदत्तो बभाण—आर्ये !
किमेवमसमञ्जसं जल्पसि ?, साध्वी प्रोवाच—महानुभाव ! नासमञ्जसं, यदि कौतुकमाभाति तदा शृणु क्षणमात्रमव-

धाय, ततः कथितः सर्वोऽपि जन्मप्रभृति वृत्तान्तः, ततश्चाहो ! दारुणमज्ञानं यद्वशेन मयेदमकृत्यमाचरितामिति परमसंवेगागतहृदयो निर्विण्णकामभोगः प्रव्रजितः, कुबेरसेनाऽपि तत्प्रभृति ब्रह्मचर्यरक्षणपरा विशिष्टश्राविकाऽभूत् । इत्यनिवृत्तिदोषान् विज्ञाय निवृत्तौ यतितव्यमिति ॥ समाप्तं द्वितीयं कथानकम् ॥ अधुना वणिक्सुतोदाहरणं तृतीयमुच्यते—

हस्तिनागपुरे रम्ये, सार्थवाहो महेश्वरः । तत्पत्नी वसुमत्याख्या, गर्भिणी साऽन्यदाऽभवत् ॥ १ ॥ तत्रैव तामसौ मुक्त्वा, स्वयं देशान्तरं गतः । वाणिज्यार्थं क्रमेणैषा, प्रसूता पुत्रिकां ततः ॥ २ ॥ वृद्धिं गता च दिवसैर्न चायातश्च तत्पिता । ज्ञापितं वसुमत्याऽस्य, त्वत्पुत्र्युद्वहनोचिता ॥ ३ ॥ संदिष्टममुनाऽमुष्यै, कन्यां त्वं परिणाययेः । लगिष्यन्ति यतोऽत्रैव, मे दिनानि कियन्त्यपि ॥ ४ ॥ तयाऽपि मथुरापुर्यां, पुत्री सा परिणायिता । आगतः सोऽपि कालेन, तत्र भाव्यनियोगतः ॥ ५ ॥ जामातृगृह एवास्थान्न सम्बन्धं विवेद सः । प्रावृट्कालश्च तत्रास्य, समेतस्तिष्ठतस्तथा ॥ ६ ॥ जातश्च दिवसैः कैश्चित्तस्यालापादिपूर्वकः । दुहित्रा सह सम्बन्धः, परदारानिवृत्ततः ॥ ७ ॥ वर्षावृत्तौ स्वकं धाम, जगामावसरे प्रियाम् । अपृच्छत् क्व त्वया पुत्री, प्रदत्ता ? साऽपि साञ्जसम् ॥ ८ ॥ अवोच-

न्मथुरापुर्यां, तत आनायि तामसौ । स्वभुक्तां यावदद्राक्षीद्गतस्तावद्विलक्षताम् ॥ ९ ॥ साऽपि तं पितरं ज्ञात्वा, लज्ज-
याऽन्तः प्रविश्य च । शीघ्रमुद्बन्धनं कृत्वा, प्राणत्यागमथाचरत् ॥ १० ॥ गाढानुपातज्वलनज्वालाऽऽलीलीढमानसः ।
सूरीणामन्तिके दीक्षां, सद्यो जग्राह तत्पिता ॥ ११ ॥ अन्यद्वा वणिक्सुतोदाहरणमुपदर्श्यते—

एकस्मिन् ग्रामे देवानन्दनामा वणिक् प्रतिवसति स्म, तस्य पत्नी गुणवत्यभिधाना, तत्पुत्री सुन्दरी, सा च ग्रामान्तरवास्तव्येन यशोनन्दनामधेयेन कुलपुत्रकेण परिणीता, क्रमेण चास्या उदपादि नन्दाभिधः पुत्रो, गतो वृद्धिमुपारूढो यौवनं च परिणायितः पितृभ्याम्, अन्यदा च मरणपर्यवसानतया जीवलोकस्य मृतस्तत्पिता यशोनन्दः, सा च सुन्दरी तन्माता जाता दुश्चारिणी, ज्ञाता च नन्दपत्न्या, कथितं च नन्दस्य यथा त्वन्माता न शोभना, न चासौ तद्वचनमनुमन्यते, अन्यदा च रजन्यामेकदेवकुले सा सुन्दरी केनचिद्विटेन सह दत्तसङ्केता तस्यैवागमनं प्रतीक्षमाणा यावत्तिष्ठति स्म तावत्तत्पुत्रो नन्दोऽपि केषाञ्चित्खिड्गप्रायाणां पुरुषाणां मिलितस्तस्यैव देवकुलस्य द्वारभूमिमाजगाम, ते च पुरुषाः कथञ्चित्तन्मध्यप्रविष्टास्तामेकाकिनीं विलोक्य ताम्बूलादिदानपूर्वं प्रार्थितवन्तः, क्रमेण तया सह सर्वेऽपि रमित्वा कियत्याऽपि वेलया बहिर्निर्गत्य तमेव नन्दं प्रवेशितवन्तः, सोऽपि

घोरान्धकारे तामजानानश्चिरं रन्त्वा कथञ्चिदात्मीयवस्त्रबुद्ध्या तदीयाम्बरमेव परिधाय ततो निर्गत्य च स्वगृहमाययौ, प्रभातप्रायायां च रजन्यां स्वजननीवस्त्रसंवीतशरीरः स्वभार्यया पृष्ट उपालब्धश्च—पाप ! किमेतदाचरितं ?, जनन्यैव सह क्वापि नोषितो रात्रौ ?, न ह्यन्यथा वस्त्रपरावृत्तिसंभवः, ततः सोऽपि दत्तोपयोगः सत्यमिदमिति विज्ञाय गाढपश्चात्तापदहनदह्यमानमानसो निर्विण्णकामभोगस्तथाविधाचार्यसमीपे प्रवव्राज । परदारानिवृत्तवृत्तीनां सत्त्वानामेवमिहलोक एव दोषान् विभाव्य विवेकिभिस्तन्निवृत्तैरेवासितव्यमित्युपदेशपरः सर्वकथानकभावार्थ इति गाथार्थः ॥ ५१ ॥ व्याख्यातं दोषद्वारम्, अधुनाऽवसरागतं गुणद्वारमुच्यते—

परपुरिसवज्जणाओ, इह परलोए य लहइ कल्लाणं ।
एत्थ सुभद्दा सीया महासई दोण्णि दिट्ठंता ॥ ५२ ॥

परपुरुषः—स्वभर्त्तुरन्यस्तस्य वर्जनं—रागबुद्ध्या त्यागस्तस्मात्स्त्रीति गम्यते, किमित्याह—' इह ' अत्र भवे ' परलोक च ' अन्यजन्मनि ' लभते ' प्राप्नोति ' कल्याणं ' शिवं, 'अत्र' अस्मिन्नर्थे सुभद्रा शीता च द्वे अपि, कथम्भते ? इत्याह—' महासइ ग्त्ति महासत्यौ ' दोण्णि ' त्ति द्वौ ' दिट्ठंत ' त्ति दृष्टान्तौ निदर्शने इति गाथाऽक्षरार्थः ॥ भावार्थस्तु कथानकाभ्यामवसेयस्ते चेमे—

इहैव भारते क्षेत्रे दक्षिणार्द्धमध्यमखण्डालङ्कारभूतोऽस्त्यङ्गा नाम जनपदः, तत्र चम्पा नाम नगरी जितशत्रुनराधिपस्य राजधानी, तस्यां चोपलब्धजिनाभिहितनिखिलजीवादितत्त्वोऽस्थिमज्जाप्रेमानुरागरक्ततया देवादिभिरपि जिनशासनाक्षोभ्यसत्त्वो दीनानाथादिदानोपभोगयोग्योपार्जितप्रचुरवित्तो जिनदत्तो नाम श्रावकः प्रतिवसति स्म, तस्य चानुरूपादिगुणसमुदया दयादानादिविशिष्टधर्मानुष्ठानानुशालिनी जिनदासी नाम भार्या, तयोश्च जन्मान्तरोपात्तपुण्योदयानुरूपमिहलौकिकं पञ्चप्रकारं विषयसुखमनाबाधितधर्ममार्गमनुभवतोः कालक्रमेणोदपादि सन्निहितसकलगामिभद्रा सुभद्रा नाम कन्या, सा च शुक्लपक्षप्रतिपच्चन्द्रलेखेव प्रतिदिवसोपचीयमाननिखिलदेहावयवा समुपात्तोदात्तकलाकलापा च प्रथमे वयसि वर्त्तमाना कदाचिदवलोकिता तत्रैव प्रयोजनवशादागतेन शाक्यभिक्षूपासकपुत्रेण बुद्धदासेन, विस्मयस्मेरचक्षुश्च चिरं निरीक्ष्य तस्यां संजातगाढानुरागो गृहं गत्वा तद्वरणबुद्ध्या जिनदत्तपार्श्वे निजकपुरुषान् प्रेषयामास, जिनदत्तोऽपि तानुचितप्रतिपत्त्या सन्मान्याप्राक्षीदागमनकार्यं, तेऽपि च कथितवन्तः सर्वं, ततो जिनदत्तोऽवादीत्-उचितमेवेदं, केवलमन्यधार्मिको ह्ययमतो न ददाम्यहमात्मपुत्रिकाममुष्य, ततो गत्वा तैः कथितं श्रेष्ठिवचनं बुद्धदासस्य, सोऽपि तदनुरागविह्वलितमानसो व्यचिन्तयत्-कथं पुनरेषा मया लभ्या ?, हुं

ज्ञातं-करोमि कपटश्रावकत्वं, शिक्षयामि तेषां सामाचारीमिति परिभाव्य गतः साधुसमीपम्, अभिवन्द्य च भणितवान्–भोः! भोः साधवः! अहं भवभयत्रस्तो भवतस्त्राणमाश्रितः स्वधर्मरक्षया यूयं तन्मां रक्षत रक्षत, तैरपि तद्भावसपरिज्ञायोपदिष्टो यतिधर्मः, तेनोक्तं–नाहमेनं कर्तुं समर्थो, गृहस्थावस्थोचितमेव मे किमपि धर्मस्वरूपं वदत, ततस्तैः श्रावकधर्म उपदिष्टो, गृहीतस्तेनापि पूर्वं कपटवृत्त्या पश्चादनवरतश्रवणेन भावसारं, कथितं च गुरुपुरतो यथा–कन्यानिमित्तमेवायं, मया धर्मोऽनुशीलितः। साम्प्रतं भावतोऽप्येष, प्रतिपन्नो यथोदितः ॥ १ ॥ ततः पञ्चाणुव्रतसप्तशिक्षाव्रतरूपं धर्मसङ्गीकृत्य गुरुमूले जातो विशिष्टश्रावकः, कारयामास सततं जिनभवनेषु स्नात्रयात्राद्युत्सवपरम्परां, प्रतिलाभितवान् प्राशुकैषणीयाहारादिना जैनसाधुवर्गं, प्रस्तावानुरूपं प्रवर्त्तते स्मान्येष्वपि साधर्मिकवात्सल्यादिकृत्येषु, ततो जिनदत्तोऽपि कालक्रमेण तं तथापरिणतश्रावकधर्मं विज्ञाय दत्तवान् स्वदुहितरं तस्मै, महाविभूत्या च विशिष्टलग्नादौ कारितवान् पाणिग्रहणं, क्रमेण चासौ कतिचिद्दिनानि तत्रैव तया सह सद्भावसारं कामभोगसुखमनुभवन्नासाञ्चक्रे, अन्यदा च भणितो रहसि श्वशुरको जामात्रा—तात! मुच्यतामियमात्मपुत्री येनागच्छति श्वशुरकुलं, जिनदत्त उवाच–पुत्र! युक्तमेवैतत्कुलस्त्रीणां यत् श्वशुरकुले निव-

अनेन हृत्पूरकेणेवाघूर्णिता न चेतयन्ति कृत्याकृत्यविभागं
सनं, केवलमतिप्रबलो मिथ्यात्वविषयविकारः प्राणिनां, अनेन हृत्पूरकेणेवाघूर्णिता न चेतयन्ति कृत्याकृत्यविभागं
न विदन्ति भाष्याभाष्यस्वरूपं न पर्यालोचयन्ति स्वपरयोर्गुणदोषानिमित्तं, ततश्च यथा कथञ्चित्प्रवर्त्तन्ते
परपरिवादेषु कुर्वन्त्यलीकालजालप्रदानानि प्रच्छादयन्ति प्रकटानपि सतः सुशीलतादिगुणविस्तरान्, एवं च स्थिते
गाढमिथ्यात्वावष्टब्धस्वभावभवत्पित्रादिजनमध्ये दुःखमवस्थानमाकलयामि स्वपुत्र्याः, तेनोक्तं—तात ! पृथक्स्थाने
सुखेन धारयिष्यामीति मा विचित्तो भूः, ततः श्वशुरेणोदितं-यद्येवं कुरु यथासमीहितं, किंत्वाऽऽत्मा रक्षणीयो दुष्ट-
कषायवेतालेभ्यः, पालनीयं महाप्रयत्नेन जिनधर्मप्रातिधनं कुबोधचरटेभ्यो, यतो दुष्प्रापमेतदतीव संसारे,
तथाहि—प्राप्यन्ते पुत्र ! अनेकशो महाजनपूज्याः सौराज्यसम्पदो लभ्यन्ते यथाऽभिलषितपरिपूरिताशा वैमानिकादि-
देवावकाशाः, न पुनरासाद्यते विशिष्टस्वर्गापवर्गसंसर्गहेतुरयं जिनपतिप्रतिपादितो महाधर्म इत्येवमनुशिष्यैनं स्वपुत्रीं
चाहूय-पुत्रि ! गन्तव्यमिदानीं भवत्याः श्वशुरकुले, तत्र च मिथ्यात्वबहलः खलु त्वदीयः श्वशुरकुललोकः, ततश्च
तथा २ चेष्टितव्यं यथा नायाति प्रवचनमालिन्यं नोपहास्यतामुपैति जिनधर्मो नाङ्गीकरोति मिथ्यात्वमेष ते भर्त्ते-
त्यादि शिक्षयित्वा द्वयमप्युचितप्रतिपत्तिकरणपूर्वं व्यसर्जयत्, गतेन च स्वस्थानं बुद्धदासेन पृथगावासेन स्थापिता

सुभद्रा, सा चानुदिवसं जिनभवनगमनपूजाचैत्यवन्दनयत्युपासनप्रतिलाभनास्वाध्यायकरणधर्मध्यानासेवनादिसद्धर्मव्यापारपरायणा 'भर्तृदेवताः कुलस्त्रिय' इति नीतिवाक्यमनुस्मरन्ती च परमान्तःप्रीत्या सर्वस्थानेषु तच्चित्तमनुवर्त्तमाना यावत् दिनानि कानिचिदनैषीत् तावत्तदीयश्वश्रूभ्रातृजायादिवर्गो वैधर्म्यमत्सरेण तद्भर्त्तुः पुरतो भणितुं प्रवृत्तो—यथेयं न सुशीला त्वन्महिला, यतो देववन्दनव्याजेन जिनालयेषु गत्वा तिष्ठति श्वेतभिक्षुभिः सहालापादिपरा चिरं कालं, तेऽपि चागच्छन्त्यनवरतमस्या वेश्मनि भिक्षादिव्याजेन तिष्ठन्ति महतीं वेलां, न चायमतिसंघर्षो विमलशीलशालिनामुचितः, त्वमपि मूढो यो निजकुलक्रमसमागतं बुद्धधर्ममुत्सृज्य भार्याऽनुवृत्त्या श्वेताम्बरधर्ममाश्रितः, ततः स तद्वचनमलीकं मन्यमानोऽभ्यधात्, "अपि चलति मेरुचूला ज्वलति ज्वलनो जलेऽप्यविश्रान्तम्। न त्वस्याः संभाव्यः, शीलभ्रंशो महासत्याः ॥ १ ॥ येऽपि च महाव्रतं धारयन्ति सितवाससोऽतिभवभीताः। तेषामपि यदि शीलं न भवेत् कस्यापरस्य स्यात् ? ॥ २ ॥ देवगृहे यच्च चिरं तिष्ठत्येषा न सोऽप्युपालम्भः। यतयस्तत्र व्याख्यां कुर्वन्ति शृणोति सा च यतः ॥ ३ ॥ आयान्ति यद्गृहममी भिक्षादिनिमित्तमस्तपापचयाः। स्वानुग्रहेच्छया तन्मयैव ते नित्यमाहूताः ॥ ४ ॥ जिनधर्ममपि न भार्यानुवृत्त्याऽहं स्वीकृतवान्, किन्तु तापच्छेदकषशुद्धतामस्यावलोक्ये-

केवलं तच्छिद्रान्वेषणपरो बभूव, अन्यदा च मासक्षमणपारणके समायात
त्यादिवचनैर्निर्लोठितो विलक्षीभूय स्थितः,
एकस्तपस्वी तद्गृहं, तदक्षिण च पवनप्रेरितः प्रविष्टस्तृणावयवो, न चाप्रतिकर्मशरीरतया तमसावपनीतवान्, सुभद्रा
च महाभक्त्या तद्भिक्षादानायोत्थिताऽवलोक्य जलप्लवप्लावितमेकं तदक्षि सूक्ष्मेक्षिकया पश्यन्त्यद्राक्षीन्नयनैकप्रदेशाव-
लग्नं तत्तृणं, मा भून्निष्प्रतिकर्मतनोर्मुनेरेतदक्षिविघातायेति चिन्तयन्त्येव जिह्वाग्रेण यावदपनीतवती तत्तावत्तदीयलला-
टतिलकः संक्रान्तः साधुभालतले, अनाभोगयोगतश्च न लक्षितस्तया निर्गतश्च साधुः दृष्टस्तदीयस्वस्रा ननन्द्रा च
तिलकभूषितललाटपट्टः, तत आहूय बुद्धदासं संदर्श्य च तं मुनिं भणितवत्यौ—किमिदानीमुत्तरं करोषि ?, ततोऽसा-
वचिन्तयत्—किमेतदसंभाव्यमालोक्यते ?, अथवा तत् नास्ति संविधानं यत्संसारे न संभवति, अत एव च नीतावुक्तम्-
“ मात्रा स्वस्रा दुहित्रा वा, न विविक्तासनो भवेत् । बलवानिन्द्रियग्रामः, पण्डितोऽप्यत्र मुह्यति ” ॥ १ ॥ तस्मा-
त्किमसंभाव्यमिति प्रतनुरागस्तदुपरि जातो विपरिणतश्च मनाग् धर्मात्, ज्ञातश्चायमर्थः कथञ्चित्सुभद्रया, चिन्तितं
च—न सुन्दरमापतितमेतद् यन्मन्निमित्तेन भगवच्छासनस्य मालिन्यमजनि, तत्कथमपनेतव्यमिदं?, न चानपनीतेऽस्मिन्ना-
जन्म मम धृतिर्भविष्यति, तत्करोमि साकारानशनेन शासनदेवताप्रसादनाय कायोत्सर्गमितिविचिन्त्य विधायोपवासं

सन्ध्यासमये रचितविशिष्टजिनप्रतिमापूजा स्थिता शासनदेवताऽऽराधनाय कायोत्सर्गेण, गृहीतव्रती च चेतस्यभिग्रहं—यदि ममायमभिलषितार्थो न सेत्स्यति तदा न पारणीयः कायोत्सर्गः, अङ्गीकृतोऽयमेव च मया चरमोऽनशनविधिः, एवं च कृतनिश्चया यावत्कियतीमपि रात्रिं निर्गमितवती तावत्तदीयदृढसत्त्वताऽऽकम्पिता स्वशरीरप्रभाजालेन दशापि दिशः समुद्योतयन्ती समायाता शासनदेवता—श्राविके ! किं ते प्रियं करोमीति वदन्ती, ततोऽसावपि समुत्सारितकायोत्सर्गा व्यजिज्ञपत्—जिनशासनापवादो यथाऽयमपयात्यकारणायातः । कुरु मे तथा प्रसादं सत्यं यदि जिनमते भक्ता ॥ १ ॥ देवता बभाषे—श्राविके ! अत्रार्थे चित्तखेदं मा कार्षीः, तथा करोमि यथा प्रातरेव शासनोन्नतिर्भवति, अद्य रजन्यवसाने चम्पापुर्याश्चतस्रोऽपि प्रतोल्यस्तावन्नोद्घटिष्यन्ति यावत्त्वया चालनीव्यवस्थापितोदकच्छटाभिर्नाच्छोटिताः, न च त्वया यावदन्याः स्त्रियो न गतास्तावत्तत्र गन्तव्यमित्युक्त्वा तिरोदधे देवता, सुभद्राऽपि स्वाध्यायविनोदेन यावद्रात्रिशेषमतिवाहयन्त्यास्ते स्म तावदुचितसमये समुत्थाय प्रतोलीद्वारपालैरुद्घाटयितुमारब्धाः प्रतोल्यो, नोद्घटिताः, मिलितः प्रचुरो लोकः, परम्परया व्यज्ञायि जितशत्रुनरपतिना, समागतः स्वयं, तेनापि न कथञ्चित्पारिता उद्घाटयितुं, ततो धूपकडुच्छुकहस्तः सर्वतः सुगन्धिपुष्पफलविलेपनादिमिश्रं बलिं प्रक्षिप्य समं सकललोकेनोद्घो-

पणां चक्रे—योऽत्र कश्चिद्देवो दानवो वा स सकललोकस्यैवमादृतप्रणामपरस्य भूत्वा प्रसादपरस्तथा करोतु यथोद्घटन्ते प्रतोल्यो, विचरति स्वेच्छया द्विपदचतुष्पदादिवर्गः, ततो गगनमण्डलमध्यवर्त्तिनी शासनदेवता नगर्या उपरि व्यवस्थिताऽब्रवीद्—यथा यदि महासती काचिच्चालनीव्यवस्थापितोदकेन वारत्रयमाच्छोटयिष्यति तदोद्घटिष्यन्ते प्रतोल्यः, ततः सर्वोऽपि लोकः स्वस्वमहेला व्यापारितवान्,न कस्याश्चिच्चालिन्यामुदकमतिष्ठत्, ततश्च बह्वीषु तत्र हलबोले विगुतासु स्त्रीषु सुभद्रा श्वशुरादिलोकमवदत्, यथा—यदि युष्मदनुमतिर्भवति तदाऽहमप्यात्मानं परीक्षयामि, ततः श्वश्रूननन्द्रादिभिरभिहितं—तूष्णीं तिष्ठ, दृष्टं महासतीत्वं त्वदीयं, बुद्धदासेनोक्तम्—को दोषा ?, यद्यपि नोद्घाटयिष्यति तथाऽप्यन्याभिः समा भविष्यति, ततो भर्त्तुरनुमत्या तिस्रो वाराः कृतार्हन्नमस्कारपाठा करे धृत्वा चालनीमुदकं प्रक्षेपितवती, स्थितं च तत्तस्यां, ततः पुरतो वाद्यमानघनातोद्यविस्तरा सकलनगरीलोकेन परिवारिता परमानन्दनिर्भरेण समेता निजकभर्त्रा गता पूर्वप्रतोलीम्, अत्रान्तरे विलोक्यासंभाव्यजलपरिपूर्णचालनीहस्तां महासतीं राजा स्वयमभ्युत्थितः, सम्मुखीभुय विरचिताञ्जलिपुटोऽवदत्—एह्येहि महासति ! विधेहि लोकस्यास्य बन्धमोक्षम्, उद्घाटय प्रतोलीं, साऽपि पञ्चनमस्कारोच्चारणपूर्वं तिस्रो वारा आच्छोटय चालन्युदकेन कपाटे चीत्काररवबधिरितदिगन्तरे झगित्येत्रो-

-घाटितवती, कौतुकागतसिद्धगान्धर्वादिलोकनिवहेन मुमुचे तदुपरि पञ्चवर्णकुसुमवृष्टिः, उद्घुष्टं च गगनाङ्गणवर्त्तिना देवनिवहेन—अहो ! महासत्याः शीलमाहात्म्यं, जयतु च सर्वज्ञशासनं यत्र स्थितानामबलानामप्येवं विस्मापितसुरासुरनरसमूहं चरितम्, आनन्दितश्च सकलनगरीजनसमन्वितो राजा, चिन्तितवांश्च—धन्योऽहं सर्वथा यस्य पुर्यामेवंविधा महासत्यः, तुष्टेन च प्रदाय सर्वाङ्गीणाभरणवस्त्राणि नीता दक्षिणां प्रतोलीं, तामुद्घाट्य पुनः पश्चिमप्रतोलीं, पश्चादुत्तरप्रतोलीं, तस्यां च याऽन्या महासती मया समा सा इमामुद्घाटयिष्यतीत्यभिधाय स्थिता, अद्यापि चोत्तरप्रतोली तथैव पिहिता वर्तते चम्पायामिति जनप्रवादः, ततोऽनुगम्यमाना नागरिकजनप्रवादसमन्वितेन राज्ञा वर्ण्यमाना स्वजनपरिजनाद्यैः पठ्यमाना भट्टादिभिर्गीयमाना नारीजनमङ्गलगीतैर्गता जिनभवनं, कृतवती भावसारं तत्र जिनबिम्बपूजां, याता गुरुसमीपं, विहितवती विनयप्रतिपत्तिं द्वादशावर्त्तवन्दनेन तेषां, तत्रैव चाभिवन्द्य समस्तसङ्घं दीनादिभ्यः प्रयच्छन्ती महादानं जिनशासनमाहात्म्यमेतदिति ख्यापयन्ती पदे २ समाययौ स्वगृहं, प्रणम्य तच्चरणयुगलं गताः स्वस्थानानि नरपतिप्रभृतयो हृष्टतुष्टाः, केवलं मषीकूर्चक एव दत्तः श्वश्रूननन्द्रादिमुखेषु, तद्भर्त्ताप्यागत्योक्तवान्—असहिष्णुजनवचोभिः परिभूता यन्महासति! मया त्वम् । मनसाऽपि क्षमणीयं तत्सर्वं सुरनराराध्ये! ॥ १ ॥

सम्यक्त्वगुणो याहक् तवोज्ज्वलो विमलशीलसंपन्नः । तादृक्कुतोऽन्यनारीजनस्य ? सत्यं सुभद्राऽसि ॥ २ ॥ सुवि-
शुद्धशीलशालिनि ! न केवलं शासनोन्नतिर्विहिता । एवं त्वया ममापि स्थिरत्वमापादितं धर्मे ॥ ३ ॥ इत्यभि-
धाय स्थितवत्यस्मिन्नूचे सुभद्रया—कान्त ! । मत्पित्रा यद्भणितं तत्स्मर मा तरलहृदयो भूः ॥ ४ ॥ एवं तं स्थिराचित्तं
विधाय लोकस्य सम्यगाराध्या । बुभुजे सह निजभर्त्रा धर्मपरा सोत्तमान् भोगान् ॥ ५ ॥ परलोके च
स्वर्गं जगाम तस्मिंश्च दिव्यदेवर्द्धिम् । अनुभूय चिरं यास्यति, सिद्धिपुरीं सा परम्परया ॥ ६ ॥ इति समाप्तं
सुभद्राऽऽख्यानकम् ॥

सम्प्रति सीताकथाया अवसरः, सा च विस्तरेण पद्मचरितादिभ्य एवावसेया, स्थानाशून्यार्थं प्रकृतोपयोगि किञ्चिलिख्यते—

यदा किलाऽयोध्याराजधान्यां दशरथो राजा स्वयं व्रतजिघृक्षया प्राग्वितीर्णवरकेकयीवचनेन लघुपुत्रस्य भरतस्य राज्यं दातुकामो रामं समं लक्ष्मणसीताभ्यां वनं विससर्ज तदा लक्ष्मणस्तत्र स्वेच्छया विचरन् अज्ञातचर्ययैव विंशत्युत्तरशतसङ्ख्यवंशजालीमध्यवर्त्तिनः सूर्यहासाभिधानखड्गविद्यासाधनप्रवृत्तस्य खरदूषणखचरराजतनयस्य

शम्बूकस्य शिरश्छेद, तदीयजननी च चन्द्रनखा रावणभगिनी समतिक्रान्तानि मदीयपुत्रस्य विद्यां साधयतो द्वादश वर्षाणि सिद्धप्राया सेदानीं भविष्यति तत यामि तद्योग्यं किमपि पानभोजनाद्यादाय तत्पार्श्वमिति चिन्तयन्ती तथैव तं प्रदेशमागता, ददर्श भूमौ लुठन्तं शम्बूकमस्तकं, हा ! केन मम पुत्रस्यैवं विलसितामिति चितयन्ती मुमूर्छ क्षणं, लब्धचेतना च प्रलप्य बहुप्रकारं येन मम पुत्रस्येयमवस्था विहिता तं यदीह परिभ्रमन्ती पश्यामि तदा तत्पिशितेन वितरामि कालबलिमिति प्रतिपादयन्ती गगनतलमुत्पतिता ददर्श रामलक्ष्मणौ सीतासमन्वितौ, तद्रूपा-वलोकनाक्षिप्तचित्ता च विसस्मार पुत्रशोकं, विद्याबलविहितदिव्यकन्यारूपा च समागत्य तदन्तिकमनेकप्रकार-चाटुकर्मभिर्युवयोर्मध्यादेकः कोऽपि मामुद्वहत्विति पुनः २ प्रार्थयन्ती ताभ्यां गुर्वदत्तां कन्यामावां नेच्छाव इति प्रतिपायदद्भ्यामस्वीकृता तयोरुपरि गाढप्रद्वेषमुपागता, तद्दृष्टिमार्गाद्दीनवदना तथैवापसृत्याऽऽत्मानं विलिख्य कक्षोरुस्तनादिदेशेषु कररुहैर्गता रुदन्ती स्वभर्तृसमीपं, कथितवती, यथा-विनाश्य मम पुत्रं केनचिदरण्यवर्त्तिना पुरुषद्वयेनैकरामासहायेन पापकर्मणा गृहीतं तत्सिद्धप्रायं सूर्यहासखड्गरत्नं, मां च रुदन्तीमेकाकिनी-मवलोक्यानिच्छन्तीमपि बलान्निजोत्सङ्गे विनिवेश्यानेकविधसकामोक्तिभिः प्रार्थितवन्तौ, तथाऽपि यावन्नेष्टौ मया

तावदहं दशनखक्षतैः प्रापितेदमवस्थान्तरं ताभ्यां, ततो रुष्टः खरदूषणो रावणस्य दूतमनुप्रेष्य सबलवाहनस्तन्मारणार्थमनुप्राप्तो दण्डकारण्यं, दृष्ट्वा च तत्सैन्यमागच्छन्नभसा भयभीतया सीतया कथितं रामलक्ष्मणयोः, रामेणापि निवेशिता कालपृष्ठधनुषि करालदृष्टिः, लक्ष्मणस्त्वाह—भ्रातः ! लक्ष्मण ! सैष कन्याव्यतिकर इति प्रजल्पता किमस्योपरि भवतः समरसंरम्भेण ?, तिष्ठत्वं सीतां रक्षन्, अहमेव त्वत्प्रसादेन निर्जित्यैतत्सैन्यमागच्छामि, केवलं प्रचुरवैरिवेष्टितो यद्यहं सिंहनादं विदध्यां तदा शीघ्रं भवता समागन्तव्यमित्यभिधाय गतो लक्ष्मणकुमारः, कालपृष्ठधनुर्दण्डमारोप्य प्रवृत्तस्तेन सह योद्धुं, अत्रान्तरे खरदूषणप्रहितदूतेनोत्साहितो रावणोऽपि पुष्पकविमानारूढः समागच्छन् भवितव्यतानियोगेन ददर्श सीतां, जातानुरागश्च विद्याबलावलोकितसिंहनादसङ्केतादिश्चकार रामव्यामोहनाय पञ्चाननशब्दं, तच्छ्रवणोपजातगाढकोपश्च रामदेवः—सुन्दरि ! त्वया तावदिहैव जटायुपक्षिद्वितीयया स्थेयं यावदहं प्रतिपक्षसैन्यमपाकृत्यागच्छमीति संस्थाप्य वैदेहीं चचाल तदभिमुखं, रावणस्तु विज्ञाय तं गतं वेगेनागत्यारोपयामास पुष्पकविमाने करुणस्वरं क्रन्दन्तीं, प्रस्थितश्च गगनमार्गेण, सीता तु हा राम ! रक्ष रक्ष मामपहिये-

माणामनेन केनापि, लक्ष्मण! समागच्छ २ शीघ्रं, पश्चादागतोऽपि किं करिष्यसि दूरदेशनीतायां मयि?, जटायो! त्वं च किमुपेक्षसे माममेन नीयमानां?, स्वामिना विपक्षविजयाय गच्छता त्वं द्वितीयो मम दर्शित इत्यादि प्रलपन्ती यावत्कियन्तमपि देशविभागं निनाय तावदुत्थाय जटायुपक्षिणा गाढं चञ्चुप्रहारैः प्रहर्त्तुमारेभे रावणः, तेन कुपितेन चन्द्रहासखड्गप्रहारेण विलूनपक्षद्वयः पातितः पृथिव्यामसौ, स्वयं च स्वीकृत्य जनकतनयां पुष्पकविमानेन गतो लङ्कापुर्यां, इतश्च रामो यावल्लक्ष्मणसमीपं गतस्तावत्तेनोक्तं—सीतामेकाकिनीं मुक्त्वा किंनिमित्तं समागतः?, स आह—सिंहनादं ते श्रुत्वा साहाय्यहेतवे, लक्ष्मणेनोक्तं—हा भ्रातः! छलितस्त्वं केनापि, नूनमपहृता वैदेही, तद्गच्छ तूर्णम्, इत्यभिहितो यावद्व्यावृत्त्य गतस्तं प्रदेशं तावत्तं सीताशून्यमालोक्य कतिचित्पदान्यग्रतो गत्वा कण्ठगत-प्राणं जटायुं दृष्ट्वा नूनमस्मद्वैरेण केनचिदमुं हत्वा नीता सीतेति विचिन्त्य तस्य नमस्कारप्रत्याख्यान-प्रदानपुरस्सरं निर्यामणां कृत्वा सीतामन्वेष्टुं प्रवृत्तः, जटायुश्च तद्दत्तनमस्काराद्यनुभावेन माहेन्द्रकल्पे प्रधान-देवो जातो, रामदेवश्च प्रयत्नविहिततदन्वेषणोऽपि न यावत्तामीक्षांचक्रे तावत्क्षणं मुमूर्च्छ क्षणं विललाप क्षणं विचचार क्षणं वनदेवता उपालेभे, अत्रान्तरे समागतो विनाश्य खरदूषणं लक्ष्मणो विराधिताभिधानखचरद्वि-

तीयस्तं प्रदेशं, ददर्शोन्मत्तमिवेतस्ततो विचरन्तं रामं, बभाण च--भ्रातः ! किमेवमितरलोकेनेव चेष्टितुमारब्धं
भवता ?, योषिज्जनोचितमपहाय शोकं कार्यसारैर्भूयतां, ततस्तद्वचनाश्वासितो मनाग् विगतशोको विराधितमुखं
निरीक्ष्य कोऽयमित्यपृच्छत्,--लक्ष्मणेनोक्तं--तात ! चन्द्रोदरखचरसुतो विराधिताख्यः समागतोऽयं मे। साहाय्यार्थं खरदूष-
णेन सह समरसंरम्भे ॥ १ ॥ खरदूषणे च निहते हतविप्रहतीकृते च तत्सैन्ये । त्वद्दर्शनार्थमागमदयं मया सार्द्ध-
मतिभक्तः ॥ २ ॥ ततो रामेण सीतापहारे जटायुमरणे च निवेदिते लक्ष्मणस्य विराधितेनोक्तं--ममैव दीयतामादेशो
येनाहमेव करोमि सीतावार्त्तोपलम्भं, केवलमिदानीं खरदूषणे विनाशिते यदि तदीयराजधानी पाताललङ्कापुरी
समधिष्ठीयते ततः सुन्दरं भवति, तद्गम्यतां तावत्तत्र, तदनन्तरं गताः सर्वे नभसा तत्र, गृहीता सा नगरी, त्रासित-
स्तदधिपतिः खरदूषणपुत्रः सुन्दनामा गतो रावणसमीपम्, इतश्च किंकिन्ध्यभिधानपुरे साहसगतिनामकः खचर एकः
सुग्रीवरूपधारी कामयते तत्प्रियां तारां, सा च न जानाति तयोर्विशेषमिति मन्त्रिमण्डलस्याग्रे कथयति, तेन द्वावपि
किंकिन्धिपुराद्बहिः क्षिप्तौ, सत्यसुग्रीवश्च युद्धेन न तं जेतुं शक्नोति, ततः कदाचित्कुतोऽप्यवगम्य खरदूषणादिमरण-
वार्त्तां समं निजमन्त्रिणा जम्बवन्तेन समाजगाम रामसमीपं, तत्र कृता प्रतिज्ञा--यदि मद्भार्यां तारामलीकसुग्रीवान्मोचयसि

तदाऽहं त्वत्प्रियायाः सीतायाः सप्ताहाभ्यन्तरे वार्त्तामानयामि, यदि चैतन्न करोमि तदा ज्वालाकलापदुरालोके ज्वलने प्रविशामि, तच्चाकर्ण्य रामदेव एवमस्त्विति प्रतिपाद्य समं लक्ष्मणेन किंकिन्धिपुरे गत्वा बो(यो)धयामास सह साहसगतिना सुग्रीवं न चालक्षि तयोर्युध्यमानयो रामदेवेन कश्चित्साहसगतिः कश्चित्सुग्रीवः, ततस्तस्य पश्यत एव विच्छायितः सुग्रीवोऽनेन कथं कथमपि, ततश्च्युतः समागतो रामान्तिकं, रामेणापि द्वितीयवारं योधयित्वा त्रासिता तस्यालीकसुग्रीवस्य तन्निबन्धनभूता वैतालिनी विद्या, तदपगमे च स्वाभाविकरूपोऽसौ विद्धो बाणेन प्रापितो निधनं, आदेशिनः स्थाने आदेश इव निवेशितस्तत्पदे सुग्रीवः, तदनु रामदेवो गतः स्वस्थानं, सुग्रीवः स्वार्थसिद्धावन्तःपुरप्रविष्टो विस्मृत्य रामोपकारं भोगसुखासक्तचित्तो न चकार सीतावर्त्तोपलम्भाय यत्नम्, अन्येद्युश्च समागत्य सौमित्रिणा रूक्षवचनैरुपालब्धः विलक्षवदनः प्रवृत्तः सर्वतः सीतामन्वेष्टुं, कम्बुद्वीपोपलब्धप्रहारविधुररत्नजटिनः सकाशाद्विज्ञातकियद्व्यतिकरश्च तत्सहित एव समागत्य ददर्श रामस्य रत्नजटिनं, बभाण च—यथाऽयं रत्नजटी सुन्दरपुरस्वामी सीतावार्त्ताभिज्ञो देवपादान्तमानीतो मया तदेनं पृच्छतु देवः, ततो रामदेवेन सहर्षमाभाष्य भणितोऽसौ, यथा--कथय भोः ! सीतावृत्तान्तं, तेनोदितं—श्रूयतां, रावणेन नीयमाना लवणसमुद्रस्योपरिभागवर्त्तिना नभसा नानाविधान् करुणप्रलापान् कुर्वन्ती सीता मया दृष्टा.

युष्मन्नामग्रहणपूर्वकप्रलापैः प्रत्यभिज्ञाता च, तेन सह सङ्ग्रामाङ्गीकरणेनारब्धा मोचयितुं, रावणेन च मम विहितो विद्यापहारः, अपरव्यतिकरं च नाहं जानामि, रामेणोक्तम्--इतः परमहमेव ज्ञास्यामि, केवलं नयत मां तत्र यत्र कापि रावणः, ततो जम्बवन्तेनोक्तं--यद्येवं तर्हि समुत्क्षिप्यतां प्रथममस्मत्प्रत्ययनिमित्तं कोटिशिलां, यतः पुराऽनन्तवीर्यसाधुनाऽतिशायिज्ञानिनेदं कथितमासीत्--य इमामुत्पाटयिष्यति स रावणं हनिष्यति, ततो लक्ष्मणेनोक्तं--दर्शय मे तां, तदनु दर्शिता सा तस्य, उत्क्षिप्ता चानेन जानुनी यावदेषा, समुद्घुष्टं च देवादिभिर्यथा जयति २ अष्टमो वासुदेवः, ततः सर्वेऽपि गताः किंकिन्धिपुरं, विहितकर्त्तव्यनिश्चयाश्चाऽऽनाय्य हनूमन्तं श्रीपुरनगराद्भणितवन्तो रामदेवं--स्वामिन् ! प्रेष्यतामयं सीताप्रवृत्त्युपलम्भाय लङ्कापुरीं प्रति, ततः समर्प्य सीताप्रत्ययनिमित्तं स्वाङ्गुलीयकं रामः प्रेषयामासैनं, प्राप्तश्चानेकवृत्तान्तान् मार्ग एव कुर्वन् क्रमेणासौ सपरिकरस्तां पुरीं, तद्बहिस्ताच्च सालयभिधानाया अङ्गारकजनन्या विद्याकृतप्राकारेण स्वलितबलस्तं पातयित्वा पार्ष्णिप्रहारेण रणोद्यतां च सालीं विनाश्य मुखात्प्रभृतिसकलशरीरद्विधाकरणेन तदीयस्य पत्युर्वज्रमुखस्य छित्त्वा सङ्ग्रामे शीर्षं प्रविवेश लङ्कापुरीं, तन्मध्येप्रविष्टः प्रथमं गतो बिभीषणगृहं,

भाणितवांश्च तन्मुखेन रावणं--विमुञ्च वैदेहीमन्यथा न ते रामाज्जीवितमस्तीति, स्वयं च जगाम रावणोद्यानं; ददर्श तत्र विषवल्लीभिरिव महौषधीं दशास्यनियुक्तात्रिजटाप्रभृतिराक्षसीभिः परिवारितां सीतां, कृतप्रणामः समर्पयामास तस्या रामनामाङ्कं मुद्रारत्नं; ततः संस्थाप्य कथंकथमपि रुदतीमेनां निर्वाप्य प्रियसंदेशैः पूर्णप्रतिज्ञां भोजयित्वा कथञ्चिद्बभाणासौ--समागच्छ महासति ! इदानीं नयामि त्वां निजस्कन्धारोपितां रामसमीपं, सीतयोदितं--वत्स ! नाहं परपुरुषाङ्गस्पर्शमपीच्छामि किं पुन. स्कन्धाधिरोहणं, तद्व्रज त्वं शीघ्रं, किंच--यदि त्वामत्रागतं राक्षसेश्वरो ज्ञास्यति तदाऽपरं किमपि विघ्नं करिष्यति, तस्मादिदं मदीयचूडारत्नमादाय मद्दयितप्रत्यायनार्थं त्वरितमपसरेतः स्थानात्, ततोऽसावङ्गीकृत्य तच्चूडारत्नं श्रुत्वा च तत्संदेशकानुत्थाय ततः स्थानाद्गतः पद्माभिधं दशवदनस्य प्रधानमुद्यानम्; अत्रान्तरे बिभीषणेन विज्ञप्तो रावणः--भ्रातः ! मुच्यतां परकलत्रमियं वैदेही, न खलु परदारपरिग्रहेण राज्ञां काचित्प्रतापवृद्धिः, केवलमयशःकलङ्क एव, किंच--अत्र पवनञ्जयसूनुर्हनूमानागतो विद्यते तेन चैवं भाणितमित्यादि यावदाचष्टे बिभीषणस्तावदागत्य मन्दोदर्या कथितो हनूमद्व्यतिकरः, ततो रुष्टेन रावणेन तद्वधार्थं प्रेषितं निजबलं, तदवलोक्य समागच्छद् उन्मूलयामास तद्वननाथ हनूमानुद्यानतरून्, निराचकार च तत्प्र-

हारविधुरं राक्षससैन्यं, तदनु भञ्जन् प्रतोलीकपाटानि टालयन् प्राकाराट्टालकान् वित्रासयन्ननेकप्रकारान् स्थाने २ राक्षसभटान् उपद्रवन् समस्तामेव नगरीं समागतः पवननन्दनो दशवदनास्थानभूमिं, दृष्ट्वा चैनं रावणो ब्रमाण स्वभटान्—रे रे ! मारयतैनं वानराधमं, तत इन्द्रजिन्मेघवाहनाभ्यां तत्पुत्राभ्यां प्रहर्तुमारेभेऽसौ, हस्तलाघवेन छलित्वा बद्धश्च कथञ्चित् नागपाशैः समर्पितश्चानीय स्वपितुः, तेनादिष्टं—सर्वस्यां नगर्यामित्थं बद्ध एव गृहाद्गृहं भ्रमयित्वा श्मशानभूमौ विनाश्यतामेषः, हनुमतोक्तं—किमहं त्वत्पुत्राभ्यां बद्धो येनैवमादिश्यते त्वया ?, त्वत्पित्राऽपि न बद्धुं शक्योऽहं यतः किं पुनः पुत्राभ्यां ? केवलं त्वत्परीक्षार्थमेव मयाऽऽत्मा बन्धितः, स च त्वं परीक्षितो रूक्षभणनैः, इदानीं पश्य मामाकाशमार्गेण व्रजन्तमित्यभिदधदेव त्रोटयित्वा बृहत्त्रटत्कारेण नागपाशमुत्पतितस्तमालदलश्यामलं नभस्तलं, भग्नं गाढतरचरणप्रहारेण स्तम्भसहस्रसंकुलं विचित्रमणिभूमिकारमणीयं रावणभवनं, प्रकम्प्य पातिता समस्तनगरी पश्यत एव राक्षससमूहस्य, क्षणान्तरेणादृश्यीभूतः संप्राप्तः सपरिवारो हनुमान् किंकिन्धिपुरं, तत्र सुग्रीवेण सादरमुत्थायालिङ्गितः, आत्मना सह नीतो रामसमीपं, विहितप्रणामो रामदर्शितासने निविश्य समर्प्य चूडारत्नं निवेदयामास समस्तमेव सीतोदन्तं रावणादिविलसितं च, रामस्तु सलक्ष्मणस्तच्छ्रुत्वा सुग्रीवादि-

संमतेनाकालविलम्बं चचाल लङ्कापुरीं प्रति हनुमन्नलादिवानरसैन्यसमन्वितः, प्राप्तः क्षणान्तरेण वेलन्धरगिरिशिखरवर्तिवेलन्धरनगरं, तत्र जित्वा समुद्रराजं विधाय तमेवाग्रे गतो लङ्कासन्नत्रिकूटाचलशिखरवर्त्तिहंसद्वीपं, तत्र हंसरथराजं समरे निराकृत्य स्थितः सबलवाहनस्त्वयं, तत्स्थानवर्त्तिनं च विज्ञाय रावणः समं राक्षससैन्येन सङ्ग्रामनिमित्तं प्रस्थितो लङ्कापुरीतः, अत्रान्तरे पादयोर्न्निपत्य नीतिपक्षपातिना भणितं बिभीषणेन—त्यजस्व कोपं कुलकीर्तिनाशनं, भजस्व धर्मं कुलकीर्तिवर्द्धनम् । प्रसीद जीवेम सबान्धवा वयं, प्रदीयतां दाशरथाय मैथिली ॥१॥
तत इन्द्रजितोक्तं—बिभीषण ! त्वं वैरिपक्षं समर्थयसे, बिभीषणेनोक्तं—मैवं वोचो, नीतिरेव पुरस्करणीया महापुरुषैः, ततस्तच्छ्रुत्वा समाकृष्य चन्द्रहासखड्गं दशवदनो हन्तुमारब्धो बिभीषणं, सोऽप्यसहनतया समुत्पाट्य स्तम्भमेकं तं प्रति हन्तुं प्रवृत्तः, तत इन्द्रजित्कुम्भकर्णादिभिः कथञ्चित् धृतौ प्रेषितौ स्वं स्वं स्थानं, तदनु बिभीषणोऽभिमानेन निर्गत्य लङ्कापुर्या गतो रामान्तिकं, सन्मानपूर्वं संवर्गितो रामेण, पश्चादष्ट दिवसान् यावद्विधाय तत्र द्वीपे भामण्डलादिसकलसैन्यमीलकं रामदेवः समं लक्ष्मणकुमारेण विजययात्राप्रशस्तमुहुर्त्तेषु सुग्रीवभामण्डलहनूमदादिसैन्यपरिवारितश्चचाल लङ्काभिमुखं, राक्षसनाथोऽपि विज्ञाय तमागच्छन्तं रणरभसजानितगमनोत्साहो

निर्जगाम स्वबलकलितो लङ्कापुर्याः, अर्द्धपथे द्वयोरपि सैन्ययोरापतितं युद्धं तावद्यावन्महता समरसङ्घट्टेन भामण्डलो मेघवाहनेन सुग्रीव इन्द्रजिता हनूमान् कुम्भकर्णेन पन्नगविद्यया नागपाशैर्बद्धः, तदुन्मोचनार्थं च रामेण भणितो लक्ष्मणः-स्मर्यतां सुलोचनो देवः, ततो लक्ष्मणेन स्मृतमात्रोऽसौ समागत्य सिंहनादविद्यां गारुडविद्यां विद्युद्वदनाभिधानं गजं च लक्ष्मीधरस्य ददौ, रामदेवस्य त्वमोघे दिव्यहलमुशलप्रहरणे, तद्वयोश्च दिव्यशस्त्रपरिपूर्णौ द्वौ रथौ, पावनवारुणाग्नेयशास्त्राणि च युद्धजयहेतूनि समर्पयामास, स्वयं च तदनुमत्या गतः सुरः स्वस्थानं, रामलक्ष्मणौ तु तावेव रथावारुह्याजग्मतुः सङ्ग्रामभूमिं, दृष्ट्वा च गारुडविद्यापारिकरितं गारुडरथं लक्ष्मणस्य नष्टेन्द्रजिदादिनियुक्ता पन्नगविद्या सुग्रीवादीनां, मुत्कलीभूताः समागता रामशिबिरं, पुनश्च तैः प्रारब्धेऽनेकप्रकारं दारुणे महासमरे निराक्रियमाणेषु मार्यमाणेषु च मेघवाहनादिषु राक्षसभटेषु बिभीषणेन सह संलग्ने महारणे रावणस्य तद्वधाय मुक्तायां रावणेन शक्तौ अन्तरा निपत्याङ्गीकृतायां लक्ष्मणेनामोघप्रहरणतया प्रविष्टायां तस्यां तद्वक्षःस्थलं तत्प्रहारगाढवेदनाविधुरशरीरे पतिते लक्ष्मणे स्वभ्रातृताडनावलोकनोपजातकोपेन रामदेवेन निरन्तरशरनिकरवृष्ट्या निरस्त्ररथे नाशयित्वा प्रवेशिते लङ्कापुरीं रावणे पुनर्निश्चेष्टानुजावलोकनसं-

जातशोकाच्च क्षणं मूर्छति क्षणं प्रलपति क्षणं वैकल्यमनुभवति रामदेवे तस्यामेव रात्रावेकविद्याधरेणागत्य रामदेवस्य कथितं–यदि लक्ष्मणस्य जीवितेन प्रयोजनं तदा शीघ्रं साकेतपुरं कमपि गमयित्वा भरतमातुलस्य द्रोणमेघराजस्य पुत्र्या विशल्यायाः स्नानोदकमानाय्याभिषिच्यतामेष येन झगित्येव प्रगुणो जायते; ततस्तत्काल एव हनूमान् भामण्डलादिसहायः प्रेषितस्तत्र, तेन गत्वा भरतनरपतेः संक्षेपेण कथयित्वा तं व्यतिकरं समं तेनैव गत्वा द्रोणमेघगृहं विमोच्य पितुः सकाशाद्विशल्यां कन्यासहस्रपरिवारितां निवेश्य भामण्डलविमाने समानीता शीघ्रं, तत्करस्पर्शे विशल्यीभूतस्तत्क्षणाल्लक्ष्मणः, ततो गोशीर्षचन्दनविलिप्ताङ्गो विशल्यया स्वहस्तेन तत्कालमेव रूढव्रणः सुप्तविबुद्ध इवोत्थितो लक्ष्मणकुमारः समालिङ्गितः सतोषेण रामदेवेन, परिणायितश्च तत्रैव महाविभूत्या विशल्यां, रावणस्तु चरपुरुषेभ्यो विज्ञाय प्रत्युज्जीवितं लक्ष्मणं क्षुभिताचित्तोऽनेकधा भण्यमानोऽपि सीतार्पणकार्ये मन्त्रिजनेन प्रसाध्य बहुरूपिणीं विद्यां निवार्यमाणोऽपि मन्दोदर्या समं त्रिजटया निषिध्यमानोऽपि शकुनैः पुनः संग्रामाय समाजगाम रामसैन्यं, रामोऽपि समं सौमित्रिणा सुग्रीवभामण्डलादिसैन्यसंयुतेन सम्मुखो बभूव, पुनरापतितं द्वयोरपि बलयोर्महायुद्धं, ततो लक्ष्मणेन निरन्तरबाणवृष्ट्या सर्वतो हतप्रसरो विहितो रावणः,

तेन च बहुरूपिणीं विद्यां संस्मृत्य कर्त्तुमारब्धान्यनेकरूपाणि, तेषु च खण्ड्यमानेषु अत्यन्तपीडितेन लक्ष्मणवधाय मुक्तं चक्ररत्नं, तच्च देवतापरिगृहीतं त्रिः प्रदक्षिणीकृत्य लक्ष्मणस्य दक्षिणकरे समारूढं, लक्ष्मणेन चोपारूढकोपेन क्षिप्त्वा तत्सम्मुखं तदेव चक्रं छिन्नं रावणस्य शिरः, अत्रान्तरे निशाचरानीकं कान्दिशीकं पलायमानमालोक्य सुग्रीवविभीषणौ संस्थापयामासतुर्नारायणपद्मशरणसमाश्रयणेन, रामलक्ष्मणौ च प्रविश्य लङ्कापुरीं पुष्पगिरिशिखरवर्त्तिपद्मोद्यानस्थितां विलोक्य सीतां परमानन्दनिर्भरौ स्थित्वा तत्र क्षणं गतौ रावणभवनं, तत्र सन्मान्य राक्षसलोकं निवेश्य यथोचितस्थानेषु परिणीयानेकराजपुत्रिकाः सीताविशल्याप्रमुखस्वस्वान्तःपुरेण समं विचित्रसुखान्यनुभवतोस्तयोरतिक्रान्तानि षट् संवत्सराणि ।

अत्र चान्तरे साकेतपुरवरादपराजितासुमित्राभ्यां चिरकालपुत्रवियोगसंतप्तमानसाभ्यां निजदुःखनिवेदनापूर्वं प्रेपितो नारदः समाजगाम तत्र, तेन च निवेदिते जननीवृत्तान्ते समं बिभीषणसुग्रीवादिभिः पुष्पकविमानाधिरूढौ सीताविशल्याप्रमुखनिजानिजावरोधजनसमन्वितौ प्रचुरविद्याधरसैन्यानुगम्यमानौ रामलक्ष्मणौ समाजग्मतुः साकेतपुरं, तदागमनमवगत्य निर्गतस्तत्संमुखो भरतराजः, परस्परसङ्गमे च सातिशयसमाश्लेषादि-

स्नेहकृत्यावसाने प्रविष्टाः सर्वे परमानन्दनिर्भरा नगरीम्, आनन्दितोऽपराजितासुमित्रादिजननीजनः, कारितं भरतराजेनातिसन्तोषतो महावर्द्धनकं, स्थित्वा च कतिचिद्दिनानि रामलक्ष्मणसमर्पितराज्यो देशभूषणकेवलिसमीपे निष्क्रान्तोऽनेकसामन्तपरिकरितो भरतराजः, पालितानिष्कलङ्कव्रतश्च गतो मोक्षम् ।

इतश्च भरतप्रव्रज्यानन्तरमेव भणितो राज्याभिषेकनिमित्तं विद्याधरादिलोकेन रामदेवो ददर्श लक्ष्मणं, ततस्तथेति प्रतिपद्य रामवचनं तत्सहितेनानेनाभिषिक्तो महाविभूत्या लक्ष्मणकुमारो राज्ये, जातो नारायणाभिधानोऽष्टमवासुदेवो, विशल्या च तस्य पट्टमहादेवीति, तदनन्तरं च सर्वैरेवाभिषिक्तो रामः पद्मनाभाष्टमो बलदेवः सीता च तन्महादेवीति । एवं कृताभिषेकौ द्वावप्यास्थानमण्डपनिविष्टौ सूर्याचन्द्रमसाविव नृपगणपरिवारितौ भातः, ततश्च बिभीषणादीनां प्रदाय राक्षसद्वीपादिस्वस्वस्थानाधिपत्यं विसृज्य तान्निजानिजदेशेषु विहितराज्यसौस्थ्यौ यावन्निगमयतो रामलक्ष्मणौ कियन्तमपि कालं तावदन्यदा रजन्यवसाने दिव्यभवनवर्त्तिन्यां शय्यायामृतुसमयस्नाता सुखप्रसुप्ता सीतादेवी स्वप्ने द्वौ शरभपोतौ भास्वरवदनोद्भासितावत्यन्तरमणीयाकृती सुखेनोदरमनुविशन्तावद्राक्षीत्, आत्मानं च ताभ्यां सहितं विमानात्पतितमपश्यत्, ततो हर्षविषादाभ्यां सममेव स्वीकृता, स्वयमेव विबुद्धा गत्वा रामसमीप-

मकथयत्स्वमं, तेन चादिष्टं प्रधानपुत्रयुगलजन्म, केवलं विमानाद्यत्पतिताऽसि प्रिये! तन्न सुन्दरमतोऽस्यार्थस्य
प्रतिघातार्थं विधीयतां शान्तिकर्मण्यभियोगः, तयोदितं—यथाऽऽदिशति प्राणनाथः, इतश्च तत्समय एव बभूवापन्न-
सत्त्वा सा, रामस्य च सीताया उपरि गाढं प्रेम समालोक्य शेषदेव्यो गुरुमत्सराध्मातान्तःकरणा सीताछिद्रान्वेष-
णपरायणा एकस्मिन् दिने कस्यांचिद्गोष्ठयामुपविष्टां सीतां बभणुः—यथा कीदृशं रावणस्य रूपमासीत् ?, वैदे-
ह्योक्तं—न मया कदाचित्तद्रूपं निरूपितं, केवलं यदा मम समीपमागमदसौ तदाऽधोमुखी तच्चरणयुगलमह-
मालोकितवती, शेषदेवीभिर्भणितं—यद्येवं तदंघ्रियुग्ममेवालिख्योपदर्श्यतां, तदनुसारणेवै शेषतद्रूपमुपलक्षयिष्यामः,
ततः सीतया तच्चित्तदुष्टतामजानन्त्या मुग्धतयैवालेखि वरवर्णकानादाय तत्क्रमद्वयं, गतायां च तस्यां
तत्क्षणादेव प्रयोजनागतस्य रामदेवस्य शेषदेवीभिरुपदर्श्य सीतालिखितं तत्क्रमयुग्मं भणितं रामसंमुखं-
देव! तव वल्लभायाः सीताया अद्याप्येवं रावणे पक्षपातो येन तच्चरणयुगलमालिख्यैवमाराधयति, रामदेवस्तु गाम्भी-
र्यान्न किञ्चित्तासामुत्तरमकृत, न च सीतायास्तमभिप्रायं प्रकाशितवान्, अन्यदा च समागते वसन्तसमये क्रीडा-
निमित्तं महेन्द्रोदयोद्यानमनुप्राप्तो रामदेवः सीतामाललाप·प्रिये! कस्मात्त्वं किञ्चिदलसा विलोक्यसे ?, तयोदितं-

गर्भानुभावोपजातदोहदवशात्, रामेणावाचि-कीदृशो दोहदः ?, तयाऽवाचि सर्वत्र जिनबिम्बपूजाविषयः, ततस्तत्काल्मेवादिष्टो राघवेण प्रतिहारी-मदादेशात् कारय सर्वजिनायतनेषु विशेषपूजा, तया (तेन) तु तथेति प्रतिपद्य तद्वचः कारिते तदादेशे महेन्द्रोदयोद्यानवर्त्तिनो नगरीजनस्य सीतालक्ष्मणसमन्वितेन (रामदेवेन) विलोक्य चिरं विविधक्रीडाः पूजाविशेषदर्शनार्थं यावदागतं जिनमन्दिरे तावदावेदितं निजदक्षिणाक्षिस्पन्दनं सीतया रामदेवस्य, सोऽवोचत्-न प्रिये ! सुन्दरमिदं, सीतयाऽवादि-स्वामिन् ! प्रतिकूलवर्त्ती विधिः किमद्यापि पुनर्जनयिष्यति प्रियविरहदुःखं ?, न तुष्ट एतावता राक्षसद्वीपप्रापणादिदुःखदानेन, रामेणोक्तम्-यद् येन यदा किञ्चिच्छुभमशुभं वा प्रिये ! किल प्राप्यम् । तत्तेन तदाऽवश्यं संप्राप्यत इह न सन्देहः ॥ १ ॥ तन्मा भूः सविषादा, देवि ! त्वमिदं विभाव्य किन्त्वधुना । सविशेषं कुरु धर्मे, समुद्यमं देवपूजादौ ॥ २ ॥ व्रज निजगृहं प्रवर्त्तय दीनाय जनाय दानमनवरतम् । येनानिमित्तमेतत् तव देवि ! निहन्यते सद्यः ॥ ३ ॥ एवमुदिता सखीपरिवृता गता स्वगृहं, कृतो विशेषेण जिनायतनेषु पूजादिनिरोपः, दापयितुमारब्धं दीनादिलोकेभ्यो यथौचित्येन प्रचुरदानं घोषणापूर्व, कारितः शान्तिनिमित्तं स्वदेवदेवीनां पूजोद्यमं निःशेषो नगरीलोकः, रामदेवस्तु तथा सीतां भणित्वा लक्ष्मणनरेन्द्रादिलोकं स्वस्थानमनुप्रेष्य जनचेष्टाद्यव-

लोकनाद्यर्थमेकाक्येव लोकालक्षितस्तस्थौ तत्रैवोद्याने, अत्रान्तरे गते सकल एव राजलोके निराकुलो लोकः परदो-
पग्रहणलम्पटः प्रवृत्तः परस्परं प्रतिपादयितुं—पश्यत रामेणैषा सीता नीताऽपि राक्षसेन्द्रेण । पुनरप्यत्रानीता, गुण-
दोपविचारमविधाय ॥ १ ॥ अपहृत्य यतो नीता, प्रेमासक्तेन राक्षसेन्द्रेण । निजगेहं न च भुक्ता, प्रत्येतु क एव-
मिह विज्ञः ? ॥ २ ॥ यो यदनुरक्तचित्तो यद्वाऽसौ तस्य दोषमप्युच्चैः । गुणमेव समाकलयति, सीताया रामदेव इव
॥ ३ ॥ एतच्चाकर्ण्य चिन्तितं रामदेवेन—यस्याः कृते समुद्रं तीर्त्त्वा क्लेशेन दशमुखो निहतः । पश्यत तस्याः कीदृग्
जनेन संभावना विहिता ? ॥ ४ ॥ अथवा—युक्तमिदं वदति जनो, या पुरपुरुषेण सानुरागेण । नीता निजमावासं,
सा केन न हेतुना भुक्ता ? ॥ ५ ॥ चिन्तयित्वा चैवं नियुज्य चरपुरुषं जानकीशीलविषये जनविचारश्रवणार्थं
गतमात्मना निजगृहं, तत्र समाहूय लक्ष्मणनरेन्द्रादीन् समागतेषु तत्स्थानं हेरिकेषु भणितं रामदेवेन-भो भोः !
पुरुषाः ! कथयत राजसमक्षं सीताविषयं लोकवृत्तान्तं, तैरुक्तं—वक्ति जनो निःशङ्कं—सीता किल रावणेन निजन-
गरीम् । नीत्वा नो भुक्तेति प्रत्येतु क एतदिह विज्ञः ? ॥ १ ॥ श्रुत्वा चैतत् य एवमाचष्टे—तस्य जिह्वां स्वहस्तेन
लुनामीति प्रतिपादयन्नाकृष्य क्षुरिकामतिकुपितः समुत्थितः सौमित्रिः, ततो रामदेवो मा गमस्त्वं कोपमित्थम्, एवं

निर्विचारा न शोभते सतां प्रवृत्तिरित्यभिधाय पुनस्तं गृहीत्वा करे न्यवीविशदासने, भणितवांश्च—प्राणप्रियामपीमां वैदेहीं नात्र धर्तुमिच्छामि । इत्थं जनसंभावितशीलकलङ्कामिह भ्रातः! ॥ १ ॥ लक्ष्मीधर उवाच—लोकः कुटिलप्रकृति, पिशुनो गुणमत्सरी भषणशीलः। एतदपवादमात्रान्मा मुञ्च महासतीं सीताम् ॥ २ ॥ रामो बभाण सत्यं यत्त्वं ब्रूषे परं महानेषः । अयशःकलङ्कपङ्कः सोढुमशक्यो जनविरुद्धः ॥ ३ ॥ ततो निवार्यमाणोऽपि लक्ष्मणादिभिः समाहूय कृतान्तवदनाभिधसेनाधिपतिमादिदेश रामो—गर्भद्वितीयां सीतां नीत्वा परित्यजारण्ये, अत्रान्तरे लक्ष्मीधरो रामदेवस्योपरि रोषमाधाय समुत्थितस्ततः स्थानात् गतो निजमावासं, कृतान्तवदनस्तु यथाऽऽदिशति स्वामी तथा करोमीति प्रतिपाद्य प्रणामपूर्वं रामस्योत्थाय तत्स्थानाद् यानाशालायां रथं प्रगुणीकृत्य पुनः समाजगाम रामसमीपं, रामेणोक्तं—व्रज शीघ्रं, सर्वचैत्यवन्दनाविषयदोहदपूरणव्याजेन नीत्वा सीतामरण्ये मुञ्च, तदादेशानन्तरं कृतप्रणामो गतो जानकीसकाशं, भणितवांश्च—देवि ! समारुह्यतां वेगेनायं रथो येन वन्दयामि त्वां रामादेशेन समग्रचत्यानि, ततोऽसौ तस्य कुटिलस्वभावमजानती परं प्रमोदमुद्वहमाना समारूढा रथं, नेतुमारब्धा निवार्यमाणाऽपि दुर्निमित्तशतैस्तावद्यावद्गङ्गासागरं समुत्तार्य प्रापिता महाटवीं, धृतस्तेन तत्र रथः, समुत्तार्य मुक्त्वा भूमौ सीतापाद-

योर्निपत्य शोकभरनिरुद्धगलसरणिविनिर्यद्गद्गदाक्षरेण कथितो यथाऽवस्थितो रामवृत्तान्तः, तमाकर्ण्य सावष्टम्भमानसया निवेदितं सीतया—भोः कृतान्तवदन ! मद्वचनात् वाच्यो मत्प्राणनाथो यथा—एकपद एव यद्यपि मुक्तस्नेहो ममोपरि त्वमभः । तदपि परीक्षा स्वामिन् !, शुद्धिकृते किं न मे विहिता ? ॥ १ ॥ भणित्वैवं विसर्जितः सरथो, गतोऽसौ निजनगराभिमुखं, सा त्वेकाकिनी महारण्ये तस्मिन्नालापमात्रसहायमप्यपरमपश्यन्ती पपात क्षणं मूर्छया धरणीतले, शीतलवनवातलब्धचेतना च—हा नाथ ! हा वल्लभ ! हा गुणाढ्य !, हा राम ! निर्व्याजदयानिधान ! स्वामिन् ! प्रयच्छाशु कृपां विधाय, स्वदर्शनं मे भयपीडितायाः ॥ १ ॥ इत्यादि प्रलपन्ती दृष्टा पुण्डरीकपुराद्गजबन्धनगतेन राज्ञा वज्रजङ्घेन, सुबहुप्रकारं कोमलवचनैराश्वास्य पृष्टा कथितनिजवृत्तान्ता साधर्मिकत्वेन भागिनीति प्रतिपद्य नीता स्वपुरीम्। इतश्च कृतान्तवदनो महाकष्टेन प्राप्तः साकेतपुरं, कथयामास नारायणादिसमेतस्य रामस्य सीताव्यतिकरं, स तु तमाकर्ण्य महता शोकवेगेन स्वीकृतो मुमूर्च्छ क्षणं, लब्धचेतनश्च—हा निर्घृणेन कथमिह, मया प्रिया पिशुनलोकवचनेन । निष्कास्य निरपराधाऽपि वनचराणां कृता भक्ष्यम् ? ॥ १ ॥ इत्यादि प्रलपन् भणितो नारायणेन-किमेतेन बालजनोचितेन भ्रातः ! शोकेन ?, यद्यस्ति जीवन्ती वैदेही तत्राद्यापि तदा गत्वा समानीयतामत्र,

पश्चाद् यत्तुभ्यं रोचते तत्कुर्याः, ततो गतास्तमेव कृतान्तवदनं पुरस्कृत्य सर्वे गगनमार्गेण तं प्रदेशं, न च तां तत्रावलोकितवन्तः, प्रतिपादितवन्तश्चान्योऽन्यं–भक्षिता सा सिंहेन व्याघ्रेण वा, विलक्षवदनाः समागताः स्वपुरं, कृतवन्तस्तत्र सीतामृतकृत्यं, नगरजनस्तु सीताया रूपादिगुणनिकरमनुस्मरन् प्रवृत्तो रामं निन्दितुं, तथाहि—

एवंविधं न युक्तं शत्रोरपि निर्घृणं समाचरितुम् । यदकृत सीतादेव्यां रामो निर्व्याजभक्तायाम् ॥ १ ॥ जननयनमनोहारि व्यगणि न रूपं न निर्मलं शीलम् । न च वनवासे समसुखदुःखावस्थानमेतस्याः ॥ २ ॥ केवलपररक्तमनाः स्त्रीहत्यां गर्भघातितां चैव । अङ्गीकृत्याऽत्याक्षीदिमामहो निष्कृपो रामः ॥ ३ ॥

सीता तु पुण्डरीकपुरमनुप्राप्ता सुखेन वज्रजङ्घगृहे निवसन्ती क्रमेणासूत पुत्रयुगलं कारितं तज्जन्मनि वज्रजङ्घेन महावर्द्धनकं, उचितसमये द्वयोरप्यनङ्गलवणो मदनाङ्कुश इति कृते नाम्नी, संपद्यमानसमग्रोचितकर्त्तव्ययोश्च प्रवर्द्धमानयोर्यावदजानि कलाग्रहणयोग्यता तयोस्तावत्समागतस्तत्र सकलकलाकलापपारगोऽनवद्यविद्याबलो नभस्तलमार्गेण सिद्धार्थनामा चेल्लकः, अवतीर्णश्च भिक्षानिमित्तं जानकीभवनं, ससंभ्रमोत्थितयाऽभिवन्द्य सीतया प्रतिलाभितः स्वहस्तेनोचितभक्तपानकैः, भुक्तोऽसौ तद्गृह एवैकदेशमनुज्ञाप्य, तदनु सुखासीन-

समागत्य जनकतनयया पृष्टः सुखविहारः, कथयित्वाऽसौ पप्रच्छ तद्वृत्तान्तं, सा च रुदन्ती निवेदितवती पुत्र-
जन्मपर्यन्तं निजोदन्तं, ततस्तत्सिद्धार्थेन निरीक्ष्य तौ तत्पुत्रकौ मा रोदस्त्वं महासति ! ते सर्वं सुन्दरं भविष्यति, यतः
सल्लक्षणयुक्तावेतौ ते पुत्रकौ, समाश्वासिता चैवमसौ धृतवती तं तत्रैव चेल्लकं कतिचिद्दिनानि, स्तोककालेनैव ग्राह-
यामासासौ सकलकलाकलापं तौ कुमारकौ, समुचितोदात्तपूजापुरस्सरं गन्तुमिच्छुर्विमुक्तः सिद्धार्थः, कामिनीजनमनो-
हारि समारूढौ प्रौढतारुण्यं कुमारौ, विज्ञाय वज्रजङ्घोऽनङ्गलवणस्य पाणिग्रहणार्थं च स्वभार्याया लक्ष्मीमत्या दुहितरं शशि-
चूलां समं द्वात्रिंशत्कन्याभिर्वृतवान्, परिणायितवांश्च प्रशस्तदिवसे, मदनाङ्कुशस्य च योग्यां पृथुराजतनयां कनकमाला-
मनुस्मृत्य तद्याचनाय पृथुराजस्य दूतं व्यसर्जयत्, गत्वा दूतेन कथिते प्रयोजने भणितं पृथुराजेन—यस्य कुलं न
ज्ञायते तस्य कथं निजपुत्रीं प्रयच्छामि ?, ततो दूतेन गत्वा प्रतिपादिते वज्रजङ्घस्य तदुपरि समरसरम्भं विज्ञाय
कुमाराभ्यां विज्ञाप्य वज्रजङ्घं स्वयमेवागत्य पृथुराजं निगृह्य संग्रामे तत्पुत्री कनकमाला गृहीता परिणीता च पृथुराज-
दत्ता मदनाङ्कुशेन, तत्प्रभृत्यन्येऽपि स्वपराक्रमाक्रान्ताः कुमाराभ्यां सेवां ग्राहिता बहवो राजानः, समतिक्रान्तेषु
केषुचिद्दिनेषु पृष्टा सीता कुमाराभ्यां—कोऽस्मत्पिता ? इति, ततोऽनुस्मृतप्राचीनव्यतिकरा रुदती जनकतनया निवेदया-

मास मूलत एवारभ्य यथा रामस्य पित्रादेशेन वनगमनं यथा तत्रात्मनोऽपहारो यथा तेन निमित्तेन रावणमारणं यथा पुनः साकेतपुरागमनं यथा च युवयोर्गर्भगतयोर्दोहदपूरणव्याजेनारण्ये मम त्याजनं तथा सर्वमकथयत्, ततो निजमातुर्निष्कारणपराभवकरणकुपितौ गतौ वज्रजङ्घं विज्ञाप्य तेन सह सर्वबलसमन्वितौ रामलक्ष्मणयोरुपरि, समारब्धो महासङ्ग्रामः, क्षणेन च निरस्त्रीकृतौ रामलक्ष्मणौ, ततो हलमुशलप्रहरणव्यग्रहस्तो रामोऽनङ्गलवणस्योपरि लक्ष्मणोऽपि चक्रपाणिर्मदनाङ्कुशस्य धावितः, तानि चामोघान्यपि प्रहरणानि स्वगोत्रे न प्रभवन्तीति ताभ्यां क्षिप्तान्यपि तयोर्नापकारं मनागपि कृतवन्ति, केवलं कुमरप्रदक्षिणाकरणपूर्वं रामलक्ष्मणकरगोचराण्ये-[ ग्रं० ४५०० ] वाभूवन्, ततो विलक्षवदनौ तौ चिन्तितवन्तौ–किं न भवाव आवां बलदेववासुदेवौ ?, अत्रान्तरे कुतोऽप्यवगततदीयसङ्गरव्यतिकरः सह नारदेन समागतस्तयोरेव कुमारयोरध्यापकः सिद्धार्थनामा चेल्लकः, ततः कथितमेताभ्यां रामदेवस्य–त्वत्पुत्रावेवैतौ तावनङ्गलवणमदनाङ्कुशनामानौ ययोर्गर्भगतयोर्भवता वैदेही महारण्ये त्याजिता, यानि चैतान्यमोघप्रहरणानि भवदीयान्येतयोर्नापकारं कृतवन्ति तत्र 'स्वगोत्रे न प्रभवन्त्येतानी'ति न्याय इति मौन्मनीभूः, केवलं लक्ष्मणमप्यमुमर्थं बोधयित्वा परित्यक्तसङ्ग्रामः संभाषस्व कुमारौ, तथा सीताऽपि नारदादवगतवृत्तान्तेन प्रथममेव कुमारयोः

समरसंरम्भमवलोक्य भामण्डलेन पुण्डरीकपुरादत्रानीता कुमारशिबिरवर्तिनी तिष्ठति, तस्मात्सर्वमिदं शीघ्रमात्मीक्रियतामिति, ततो रामदेव एवमुक्तो भूत्वा लक्ष्मणस्य निकटवर्त्ती निवेद्य च तस्य तं वृत्तान्तं समं तेनैव समकालं स्वीकृत आनन्दखेदाभ्यां बाष्पजलक्षालितकपोतलः सुतसमीपमागन्तुं प्रवृत्तः, तौ त्वागच्छन्तौ पितृपितृव्यावालोक्य परित्यक्तरथौ स्नेहनिर्भरं झगित्यागत्य पतितौ तत्पादयोः, रामदेवस्तु गाढमाश्लिष्य तनुजौ रुदित्वा क्षणं विलपितुमारेभे—हा पुत्र! अकार्यमाचरितं मया यद्गर्भगताभ्यां युवाभ्यां सह त्यक्ता त्वन्माता, हा प्रिये! कथं जीविताऽसि तदा क्षुद्रसत्त्वसङ्कुले मुक्ताऽरण्ये,? ततो लक्ष्मण उवाच—भ्रातः! किमेवं शोच्यते ?, न श्रुतं किं त्वया ?—रणे वने शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा। सुप्तं प्रमत्तं विषमस्थितं वा, रक्षन्ति पुण्यानि पुराकृतानि ॥ १ ॥ तन्मुक्त्वा शोकं समागम्यतामितः प्रविश्यतां सम कुमारलोकेन निजनगर्यां, एतच्चावगम्य सीता प्रवरविमानारूढा गता पुण्डरीकपुरं, रामस्तु लक्ष्मणवचनमुपश्रुत्य वज्रजङ्घं करे गृहीत्वा त्वमेव मे परमबान्धवो यद्गृहे वैदेही स्थिता वृद्धिं गतौ चैतौ मत्पुत्रावित्यभिदधत् कुमारौ च वामदक्षिणपार्श्वयोरात्मनः कृत्वा समं लक्ष्मणप्रमुखसमस्तराजलोकेन महाविभूत्या पुष्पकविमानारूढः प्रविवेश नगरीम्। अत्रान्तरे विज्ञप्तं बिभीषणादिभिः-स्वामिन्! आनाय्यतां जनकपुत्री, दुःखमास्ते खलु सा

विदेशवर्त्तिनी, ततो रामदेवो मन्युभरनिरुद्धगलसरणिरवदत्-को नेच्छति वैदेह्या आगमनं?, केवलं विषमस्वभावो लोकः, तं यदि सा कथञ्चित्प्रत्याययितुं शक्नोति तदा तया सह ममैकत्रावस्थानं नान्यथेति, तत एवमस्त्विति प्रतिपन्ने बिभीषणादिभिर्मीलितः सकलो लोको नगरीबहिःप्रदेशे, प्रेषितः सीतानयनाय पुष्पकविमानेन पुण्डरीकपुरं सुग्रीवो, गतः क्षणमात्रेण आनीता तेन स्थिता साकेतपुरबहिर्वर्त्तिनि महेन्द्रोद्याने, अत्रान्तरे समागत्य नारायणेन स्वयं विहितप्रणामेनार्घोत्क्षेपपूर्वमाभाषिता सीता-देवि ! विधाय प्रसादमभ्युपगम्यतां नगरीप्रवेशः, तयोदितं-यावल्लक्ष्मण ! मया नात्मा शोधितस्तावन्नेच्छामि पुरीं प्रवेष्टुं, ततस्तन्निर्बन्धमवबुध्य कथितं रामस्य, समागतः स्वयं तत्र, भणिता च विरचितप्रणतिः सुखासनोपविष्टा प्रियाऽनेन—दयिते ! शक्नोषि कथञ्चित् स्वकलङ्कमपनेतुं ?, साऽब्रवीत्—पञ्च दिव्यानि लोके—तुलारोहण १ ज्वलनप्रवेशो २ विषकवलनं ३ फालग्रहणं ४ शस्त्रधारास्वापश्च ५, तदेतेषु कतमेनात्मानं शोधयामि ?, राम उवाच—ज्वलनेन, ततः प्रतिपन्ने तया खानिता हस्तत्रिशतप्रमाणा समचतुरस्रा महावापी राघवेण, पूरिता खदिरकाष्ठानां, ज्वलितो ज्वालाकलापदुरालोको ज्वलनः, आहूता सीता, भणिता च—खललोकसंभावितकलङ्कपङ्ककलुषं सुवर्णमिव शोधयात्मानमस्मिन् ज्वलितहुतभुजि, साऽपि यथाऽऽदिशति स्वामी तथा करोमीत्यभि-

धाय चलिता विकसितकमलवदना ज्वलनाभिमुखं तुष्टमानसा, ततः समस्तोऽपि लोको हाहारवपुरस्सरं भणितुं प्रवृत्तः—भो भो ! न सुन्दरमिदं रामदेवेन कर्तुमारब्धम्, अतिनिर्घृणं कर्म समादिष्टं सीतायाः, न खल्वस्या मनागपि शीलखण्डनां संभावयामो, मुखराग एव प्रकटयति प्राणिनां मलिनशीलतां, न चास्याः किमपि कुशीलतालक्षणमालोक्यते, अत्रान्तरे भणितं सिद्धार्थेन—रामदेव !—यदि मेरुः पातालं प्रविशति शुष्यति च लवणजलराशिः । तदपि न शीलभ्रंशः संभाव्यो जनकतनयायाः ॥ १ ॥ किंवा प्रविष्टयैव हुताशने शोधित एवात्माऽनया, प्राप्तो यतो लोकमध्ये साधुवादः, निवार्यतामिदानीं, रामेणोक्तं—सिद्धार्थ ! दुर्जनप्रकृतिरेष लोकः, क्षणेन विसंवदति क्षणेन सवदति, तद्यावन्न हुतभुजि निर्वटितोऽस्याः शीलकनकगुणस्तावन्न निवर्त्तयामि, सीताऽपि गत्वा ज्वलनान्तिकं बभाणार्हत्सिद्धादिनमस्कारपूर्वं—भो भो लोकपालाः !—रामं मुक्त्वाऽन्यनरो मनसाऽपि हि यदि मया समभिलषितः। तद्दहतादहनो मां हिमकणशीतोऽन्यथा भवतु॥ १ ॥ इत्यभिधाय यावत्तत्र दत्तवती झम्पां तावदत्रान्तरे जगद्भूषणमुनेः केवलोत्पत्तौ महिमां कर्तुमागतेन शक्रेणादिष्टो हरिणकवेषः—कुरु महासत्याः सीतायाः सान्निध्यं, ततोऽसौ विमलजलापूर्णं कमलकुमुदकुवलयकह्लारशतपत्रसहस्रपत्रोपशोभितां वापीं विधायैकस्मिन् सहस्रपत्रपद्मे समुपावेशयत् सीतां, मुमुचुः सुरसिद्धगान्धर्वादयो गगनगतास्तदुपरि कुसुमवृष्टिं, जुघुषुश्च—अहो ! महा-

सत्याः शीलमाहात्म्यं, प्रहताश्चानेकशः प्रतिशब्दापूरितभुवनाविवरा देवैर्दुन्दुभयः, किं बहुना ?, परितुष्टः सकलो लोकः, पतितावागत्य सीतायाः पादयोर्लवणाङ्कुशौ, अत्रान्तरे प्रलयकालक्षुभिताम्भोराशिगुरुलहरीसमूहमिव निखिललोकप्लावनसमर्थं वापीसमुच्छलज्जलपूरमवलोक्य हा देवि ! महासति ! जनकतनये ! रक्ष रक्षानेनोन्मार्गे प्रवृत्तेन वापीपानीयेन ह्रियमाणममुमशेषलोकमिति जनस्य करुणप्रलापमाकर्ण्य समुपजातदयापरिणतिः सीता देवी शीघ्रमुत्तीर्य द्वाभ्यामपि कराभ्यां पश्चान्मुखं प्रेरयित्वा सलिलं वापीप्रमाणमेव चकार, स्वयं च पुनस्तस्मिन्नेव पद्मासने समुपाविशत्, ततः स्वस्थीभूतो लोकः सीताऽग्रत एव विमलशीलप्रशंसां कुर्वाणो नर्त्तितुमारेभे, रामस्तु–कमलनिषण्णां श्रियमिव विलोक्य सीतां महासतीं तत्र । भणति स्मैकं विप्रियममुं क्षमेथा जनकतनये ! ॥१॥
सीता तु–किं विप्रियं तव प्रिय ! पूर्वार्जितकर्मपरिणतिरियं तु । यन्निर्मलशीलायाः अप्ययशःपङ्क एवं मे ॥ १ ॥
इति भणन्ती समुत्थाय पद्मासनान्निर्गत्य वाप्याः पादयोर्निपत्य रामस्य गता जिनमन्दिरं, वन्दितजिनाबिम्बा च तदेव निमित्तमूरीकृत्य सञ्जातवैराग्यसमच्छलितचरणपरिणामा क्षमयित्वा सकललोकं चकार पञ्चमुष्टिकं लोचं जगाम चार्यिकाप्रतिश्रयं, याचितवती तत्समीपे प्रणामकरणपूर्वं भगवदर्हत्प्रणीतां दीक्षां, तपस्विनीभिस्तु नीता सा जगन्नु-

पणकेवलिसमीपं, दीक्षिता च विधिना रजोहरणादिवेषसमर्पणापुरस्सरं सा तेन, ततस्तमर्थमवगम्य रामदेवः शोका-
पूर्णहृदयोऽनेकविधासमञ्जसप्रलापान् कुर्वाणस्तत्रैवानीतो लक्ष्मणेन, ददर्श व्रतिनीं सीताम्, अभिवन्द्य केवलिनं वन्दिता
भावसारं समं लक्ष्मणादिभिः, कृतां च केवलिना धर्मदेशनामाकर्ण्य प्रतनुशोकाः सवृत्ता राघवादयः, पुनरभिवन्द्य गताः
स्वस्थानं,निष्कलङ्कश्रामण्यमनुशील्य शीताऽनशनविधिना मृत्वा जाताऽच्युतेन्द्रत्वेन। अन्यभवे तु सीता मृणालकुन्दाभि-
धाननगरवास्तव्यपुरोहितपुत्रस्य श्रीभूतिनाम्नः सरस्वतीभार्यायाः पुत्रिका वेगवती नामिका बभूव,तया च कदाचिद्यौवनम-
दमत्तया बहिः कायोत्सर्गव्यवस्थितं साधुं सुदर्शनाभिधानं लोकेन वन्द्यमानमालोक्यालीकमेव लोकस्याग्रे भणितं—
भो भो लोकाः! अयमत्र मया महेलया सह दृष्टस्तत्किमेनमेवं वन्दध्वं ?, ततस्तदाकर्ण्य लोको विपरिणतस्तं साधुं
निन्दितुमारेभे, तपस्वी तु तच्छ्रुत्वा मनसैवाभिग्रहं जग्राह—यावन्ममैष कलङ्को नापगतस्तावन्न मया पारणीयः कायो-
त्सर्गः, अत्रान्तरे च यथासन्निहितदेवतया मुनिपक्षपातेन वेगवत्या उच्छूनीकृतं वदनं, पित्रा च श्रीभूतिना विज्ञात-
साधुव्यतिकरेण संतर्जिता परुषवचनैर्गृहं गता वेगवती, ततोऽसौ समागत्य साधुसमीपं गाढजातानुतापा बभाषे
सकललोकप्रत्यक्षं—भगवन्! निर्दोषस्त्वं, केवलं मया दुस्तुण्डया तवालीकमेवाऽऽलप्रदानं कृतं, तत्क्षमणीयो ममा-

सत्याः शीलमाहात्म्यं, प्रहताश्चानेकशः प्रतिशब्दापूरितभुवनाविवरा देवैर्दुन्दुभयः, किं बहुना ?, परितुष्टः सकलो लोकः, पतितावागत्य सीतायाः पादयोर्लवणाङ्कुशौ, अत्रान्तरे प्रलयकालक्षुभिताम्भोराशिगुरुलहरीसमूहमिव निखिललोकप्लावनसमर्थं वापीसमुच्छलज्जलपूरमवलोक्य हा देवि ! महासति ! जनकतनये ! रक्ष रक्षानेनोन्मार्गे प्रवृत्तेन वापीपानीयेन ह्रियमाणममुमशेषलोकमिति जनस्य करुणप्रलापमाकर्ण्य समुपजातदयापरिणतिः सीता देवी शीघ्रमुत्तीर्य द्वाभ्यामपि कराभ्यां पश्चान्मुखं प्रेरयित्वा सलिलं वापीप्रमाणमेव चकार, स्वयं च पुनस्तस्मिन्नेव पद्मासने समुपाविशत्, ततः स्वस्थीभूतो लोकः सीताऽग्रत एव विमलशीलप्रशंसां कुर्वाणो नर्त्तितुमारेभे, रामस्तु—कमलनिषण्णां श्रियमिव विलोक्य सीतां महासतीं तत्र । भणति स्मैकं विप्रियममुं क्षमेथा जनकतनये ! ॥१॥

सीता तु—किं विप्रियं तव प्रिय ! पूर्वार्जितकर्मपरिणातिरियं तु । यन्निर्मलशीलायाः अप्ययशःपङ्क एवं मे ॥ १ ॥

इति भणन्ती समुत्थाय पद्मासनान्निर्गत्य वाप्याः पादयोर्निपत्य रामस्य गता जिनमन्दिरं, वन्दितजिनाबिम्बा च तदेव निमित्तमूरीकृत्य सञ्जातवैराग्यसमच्छलितचरणपरिणामा क्षमयित्वा सकललोकं चकार पञ्चमुष्टिकं लोचं जगाम चार्यिकाप्रतिश्रयं, याचितवती तत्समीपे प्रणामकरणपूर्वं भगवदर्हत्प्रणीतां दीक्षां, तपस्विनीभिस्तु नीता सा जगच्च-

पणकेवलिसमीपं, दीक्षिता च विधिना रजोहरणादिवेषसमर्पणापुरस्सरं सा तेन, ततस्तमर्थमवगम्य रामदेवः शोका-
पूर्णहृदयोऽनेकविधासमञ्जसप्रलापान् कुर्वाणस्तत्रैवानीतो लक्ष्मणेन, ददर्श व्रतिनीं सीताम्, अभिवन्द्य केवलिनं वन्दिता
भावसारं समं लक्ष्मणादिभिः, कृतां च केवलिना धर्मदेशनामाकर्ण्य प्रतनुशोकाः सवृत्ता राघवादयः, पुनरभिवन्द्य गताः
स्वस्थानं, निष्कलङ्कश्रामण्यमनुशील्य शीताऽनशनविधिना मृत्वा जाताऽच्युतेन्द्रत्वेन। अन्यभवे तु सीता मृणालकुन्दाभि-
मानननगरवास्तव्यपुरोहितपुत्रस्य श्रीभूतिनाम्नः सरस्वतीभार्यायाः पुत्रिका वेगवती नामिका बभूव, तया च कदाचिद्यौवनम-
दमत्तया बहिः कायोत्सर्गेऽव्यवस्थितं साधुं सुदर्शनाभिधानं लोकेन वन्द्यमानमालोक्यालीकमेव लोकस्याग्रे भणितं—
भो भो लाकाः! अयमत्र मया महेलया सह दृष्टस्तत्किमेनमेवं वन्दध्वं ?, ततस्तदाकर्ण्य लोको विपरिणतस्तं साधुं
निन्दितुमारेभे, तपस्वी तु तच्छ्रुत्वा मनसैवाभिग्रहं जग्राह—यावन्ममैष कलङ्को नापगतस्तावन्न मया पारणीयः कायो-
त्सर्गः, अत्रान्तरे च यथासन्निहितदेवतया मुनिपक्षपातेन वेगवत्या उच्छूनीकृतं वदनं, पित्रा च श्रीभूतिना विज्ञात-
साधुव्यतिकरेण संतर्जिता परुषवचनैर्गृहं गता वेगवती, ततोऽसौ समागत्य साधुसमीपं गाढजातानुतापा बभाषे
सकललोकप्रत्यक्षं—भगवन्! निर्दोषस्त्वं, केवलं मया दुस्तुण्डया तवालीकमेवाऽऽलप्रदानं कृतं, तत्क्षमणीयो ममा-

यमेकोऽपराधो भवता, लोकोऽप्येवमेव प्रत्यागतसंवेगया तया प्रत्यायितः, ततः परितुष्टमानसो जनः पुनः सुदर्शनमुनेः पूजापरो बभूव, तत्प्रभृति चैषा सुश्राविका समजनि, कालान्तरे च स्वयंभूनाम्ना नृपेण श्रीभूतिं मारयित्वा बलात्कारेण भुक्ता सा चकार निदानम्—अन्यजन्मनि तव वधायाहं भवेयं, ततोऽनेन भीतेन मुक्ता साध्व्या अरिकन्याख्यायाः समीपे गृहीतपालितव्रता ब्रह्मविमाने देवीत्वेनोत्पद्य स्वायुःक्षये ततश्च्युता निजनिदानानुभावेन हिण्डितसंसारा रावणमरणनिमित्तमेषा सीता समुत्पन्ना, स्वयम्भूजीवश्च रावण इति, प्रसङ्गागतं चैतदुक्तं, प्रकृतं त्वेतावदेव यद् वेगवतीभवे सीतया साधोरालप्रदानं कृतं तेन कर्मविपाकेनायं कलङ्क एवमवाप, ततः पश्चात्तापवशेन यल्लोकसमक्षमात्मनिन्दापूर्वं तपस्विनः पुनर्दोषं निराचकार मं च प्रतिपेदे तेन शुद्धशीलताबलेन शुद्धिं च लेभे । इत्येवं च सुभद्रायाः सीतायाश्चेह परत्र च कल्याणप्राप्तिमवगम्य चतुर्थव्रते यत्नः कार्यः इत्युपदेशापरो गाथाभावार्थः ॥ व्याख्यातं गुणद्वारम्, अधुना यतनोच्यते—

छण्णंगदंसणे फासणे य गोमुत्तगहणकुसुमिणे ।
जयणा सव्वत्थ करे इंदियअवलोयणे च तहा ॥ ५२ ॥

छन्नं—अप्रकटं तच्च तदङ्गं च—शरीरावयवस्तस्य दर्शनम्—अवलोकनं छन्नाङ्गदर्शनं तस्मिन्, तथा स्पर्शनं-छुप्तिश्छन्नाङ्गस्यैव तस्मिन्, 'च' समुच्चये, तथा गवां मूत्रं गोमूत्रं—सुरभिप्रश्रवणं तस्य ग्रहणम्-उपादानं तच्च कुत्सितः स्वप्नः कुस्वप्नश्च-दुःस्वप्नस्तत्तथा तस्मिन्, समाहारत्वादेकवचने, गोमत्रग्रहणे कुस्वप्ने, एतस्मिंश्चतुष्टयेऽपि किमित्याह—' जयणा सव्वत्थ करे गत्ति ' यतनां ' गुरुलाघवालोचनप्रवृत्तिरूपां ' सर्वत्र ' सर्वस्मिन् ' कुर्यात् ' विदध्यात्, एतदुक्तं भवति-पुरुषेण गृहीतचतुर्थाणुव्रतेन स्त्रीणां स्त्रीभिश्च पुरुषाणामङ्गोपाङ्गानि नोपेत्यकरणेन द्रष्टव्यानि स्पृष्टव्यानि वा, दृष्टस्पृष्टेषु च कथञ्चिन्न तेषु रागबुद्धिः कार्या, यच्च गोमूत्रग्रहणं तदपि गोयोनिमर्दनेन न कर्त्तव्यमेव, किन्तु यदा स्वभावेनैव मूत्रयति गौस्तदा तद्ग्राह्यं, आत्यन्तिककार्ये तु गोयोनिमर्दनेऽपि तत्कोमलस्पर्श-सुखाभिषङ्गो न विधेयः, कुस्वप्ने तु स्त्रीसेवादिलक्षणे एवं यतना—प्रथममेव धर्मध्यानपरेण पञ्चनमस्कारमङ्गलपाठपूर्वं ' आदावत्यभ्युदया मध्येशृंगारहास्यदीप्तरसाः । निकषे विषया बैभत्सयकरुणलज्जाभयप्रायाः ॥ १ ॥ यद्यपि निषेव्यमाना मनसः परितुष्टिकारका विषयाः । किम्पाकफलादनवद्भवन्ति पश्चाददतिदुरन्ताः ॥ २ ॥ इत्यादिभावना-जनितवैराग्येण जन्तुना स्वप्तव्यं येन तथाविधकुस्वप्नलाभ एव न भवति, अथ कथञ्चिन्निद्रापारवश्ये मोहोद्रेका-

भवति तदा तत्कालमेवोत्थाय ईर्यापथिकीप्रतिक्रमणपूर्वमष्टोत्तरशतोच्छासप्रमाणः कायोत्सर्गः कार्य इति, न केवलमेषु सर्वेषु यतनां कुर्याद्, 'इन्द्रियावलोकने च तथा' इन्द्रियाणां—स्पर्शनादिकरणानामवलोकनं—दर्शनमिन्द्रियावलोकनं तस्मिंश्च, तथा प्राग्वदेव यतनां कुर्यादिति सम्बन्धः, उक्तं चैतच्छय्यम्भवादिभिः-'अंगपच्चंगसंठाणं, चारुल्लवियपेहियं। इत्थीणं तं न निज्झाए, कामरागविवड्ढणं ॥ १ ॥ गुज्झोरुवयणकक्खोरुअंतरे तह थणंतरे दट्ठुं। साहरइ तओ दिट्ठिं नय बंधइ दिट्ठिए दिट्ठिं ॥२॥" इति गाथार्थः ॥५३॥ गतं यतनाद्वारम्, अतिचारद्वारमस्यैवाह—

**परदारवज्जिणो पंच हुंति तिण्णि उ सदारसंतुट्ठे।**
**इत्थीए तिण्णि पंच व भंगविगप्पेहिं अइयारा ॥ ५४ ॥**

इह व्रते पञ्चातिचारा इत्वरपरिगृहीतागमनापरिगृहीतागमनानङ्गक्रीडापरवीवाहकरणकामभोगतीव्राभिलाषाख्याः, एतद्व्रतप्रतिपत्ता द्विविधः—एकः परदारवर्जकोऽपरः स्वदारसन्तोषी, अथवा नरः स्त्री वा, अनयोश्चैतदतिचारकृतो यो विशेषस्तं दर्शयति—' परदारवर्जिनः ' अन्यकलत्रत्यजनशीलस्य पञ्चातिचारा इति चरमपादान्तात् संबध्यते ' भवन्ति ' जायन्ते, ' त्रयः ' त्रिसङ्ख्या एव तोरेवार्थत्वात् ' स्वदारसन्तुष्टे ' निजकलत्रसन्तोषिणि,

कथमिति चेद्ब्रूमः परदारवर्जी स एव भण्यते यः परदारा मया न भोक्तव्या इति नियमयति, तस्य चेत्वरकालपरपरिगृहीतवेश्यायां गमनमाचरतः कथञ्चित्तस्याः परदारत्वात्स्वबुद्ध्या च तेन वेश्येयमिति पर्यालोचनाद् भङ्गाभङ्गरूपत्वेनेत्वरं—स्तोककालं परिगृहीता-स्वीकृता भाटीप्रदानेन नियतकालं सा तथा, वेश्येत्यर्थः, तस्यां गमनमतिचारः १ तथा अपरिगृहीता—अनाथकुलाङ्गना तस्यां गमनं यत्तदपि तस्या लोके परदारत्वेन रूढत्वात्कामुकाभिप्रायेण च भर्त्रांधभावेनापरदारत्वाद्भङ्गाभङ्गरूपतया तस्यातिचारः २ स्वदारसन्तुष्टस्य तु स्वकलत्रं मुक्त्वाऽन्यस्य वर्जितत्वादेतास्मिन् द्वयेऽपि भङ्ग एवेति भाव्यम्, अग्रेतनास्तु त्रयो द्वयोरपि तुल्या एव, तथाहि-अनङ्गक्रीडा तावन्निष्पन्नप्रयोजनस्याहार्यैश्चर्मादिघटितप्रजननैर्योषितामवाच्यदेशासेवनं कुचकक्षोरुवदनादिषु रमणं वाऽभिधीयते, सा च यद्यपि स्वदारसन्तुष्टेन स्वकलत्रे परदारवर्जिना तु वेश्यास्वकलत्रयोः परकलत्र इव न प्रतिषिद्धा तथाऽपि ताभ्यामत्यन्तपापभीरुतया ब्रह्मचर्यमादातुकामाभ्यामपि वेदोदयासहिष्णुतया यापनामात्रार्थं स्वदारसन्तोषपरदारवर्जने प्रतिपन्ने, तन्मैथुनमात्रेणैव च यापनायाः संभवादर्थतोऽनंगक्रीडाऽपि परिहृतैव ३, एवं परेषां-स्वापत्यव्यतिरिक्तजनानां स्नेहसम्बन्धादिना परिणयनविधानं परविवाहकरणम् ४ तथा काम्येते—अभिलष्येते यौ तौ कामौ—शब्दरूपलक्षणौ भुज्यन्त

इति भोगाः गन्धरसस्पर्शास्तेषु तीव्राभिलाषः-अत्यन्ततदध्यवसायित्वं वाजीकरणादिनाऽनवरतसुरतसुखार्थं मदनोद्दीपनमितियावत्, ॥ एतावपि परमार्थतः प्रत्याख्यातौ एव, अतः कथञ्चित्प्रत्याख्यानप्रवृत्तेर्भङ्गाभङ्गरूपत्वेनातिचारत्वमेषां त्रयाणामपि सिद्धम् । अन्ये त्वनङ्गक्रीडामेवं भावयन्ति–तौ हि स्वदारसन्तोषिपरदारवर्जकौ निधुवनमेव व्रतविषय इति स्वकीयकल्पनया तत्परिहरन्तौ यदा वेश्यादौ परदारेषु च यथाक्रममालिङ्गनादिरूपामनङ्गक्रीडां कुरुतस्तदा व्रतसापेक्षत्वात्तयोरतिचारोऽनङ्गक्रीडा, तथा स्वदारसन्तोषिणा स्वकलत्रादितरेण च स्वकलत्रवेश्याभ्यामन्यत्र मनोवाक्कायैर्मैथुनं न कार्यं न च कारणीयमित्येवं यदा प्रतिपन्नं व्रतं भवति तदा परविवाहकरणस्तत्कारणमर्थतोऽनुष्ठित भवति, तद्व-तीच मन्यते विवाह एवायं मया विधीयते, न मैथुनमिति, ततो व्रतसापेक्षत्वादतिचार इति शेषः, प्रश्नोत्तरविचारः प्रथमपञ्चाशकवृत्तितोऽवसेयः, 'इत्थीए तिन्नि पंच वे' ति स्त्रियास्त्रयः पञ्च वा अतिचारा इत्यत्रापि सम्बन्धः, तत्र त्रयस्तावदेवं–स्वपुरुषसन्तोषपरपुरुषवर्जनयोः स्त्रिया विशेषाभावात् स्वपुरुषव्यतिरेकेणान्येषां सर्वेषामपि परपुरुषत्वेनेष्टत्वादनङ्गक्रीडादयः स्वदारसन्तोषिण इव स्वभार्यायां स्वपुरुषविषयास्त्रय एवातिचाराः, आद्यस्तु यदा स्वकीयपतिः स्वपत्न्या वारकदिने परिगृहीतो भवति तदा सपत्नीवारकमतिक्रम्य तं परिभुञ्जानायां

अतिचारः, द्वितीयस्त्वतिक्रमादिना परपुरुषमभिसरन्त्याः समवसेयो ' भङ्गविकल्पैः ' अतिक्रमादिभङ्गनानात्वैः, प्राग्व्याख्यातानेकविधव्याख्याभङ्गैर्वाऽतिचाराः अतिक्रमा इति गाथार्थः ॥ ५४ ॥ उक्तमतिचारद्वारमधुना भङ्गद्वारमष्टममस्याभिधीयते—

इत्थी पुरिसेण समं, विसयपसंगं करेइ दप्पेण ।
तइया भंगो जायइ अइयारो अन्नहा होइ ॥ ५५ ॥

' स्त्री ' ललना ' पुरुषेण ' नरेण ' समं ' सार्द्धं ' विषयप्रसङ्गं ' मैथुनासेवनं ' करोति ' विदधाति ' दर्पेण ' मदेन व्रतातिचाराभीतत्वेन यदेति यत्तदोर्नित्याभिसम्बन्धाल्लभ्यते ' तदा ' तस्मिन् काले ' भङ्गः ' विनाशः चतुर्थव्रतस्येति शेषः 'जायते' उत्पद्यते, 'अतीचारः' उक्तस्वरूपः 'अन्यथा' अनाभोगादिना सशूकस्य 'भवति' संपद्यत इति गाथार्थः ॥ ५५ ॥ गतं भङ्गद्वारमधुना भावनोच्यते—

अट्ठारसहा बंभं जे समणा धारयंति गुत्तिजुयं ।
बहुसावज्जं नाउं तेसिं पणमामिऽहं निच्चं ॥ ५६ ॥

अष्टादशभिः प्रकारैः पूर्वोक्तैरेवाष्टादशधा 'ब्रह्म' ब्रह्मचर्यं ये 'श्रमणाः' साधवो 'धारयंति' बिभ्रति गुप्तिभिः॰ उक्तस्वरूपनवब्रह्मगुप्तिभिर्युतं—सहितं गुप्तियुतं 'बहुसावद्यं' बहु—प्रभूतं यथा भवत्येवं सावद्यं—सपापं विषयप्रसङ्ग-मिति सामर्थ्याद्गम्यते 'ज्ञात्वा' अवबुध्य, तथा चोक्तं हरिभद्रसूरिणा—"प्राणिनां बाधकं चैतच्छास्त्रे गीतं महर्षिभिः । नलिकातप्तकणकप्रवेशज्ञाततस्तथा ॥ १ ॥" आगमेऽप्युक्तम्—"मूलमेयमहम्मस्स, महादोससमुस्सयं । तम्हा मेहुण-संसग्गिं, निग्गंथा वज्जयंति णं ॥ २ ॥" ति 'तेसिं' ति, तेभ्यः 'प्रणमामि' प्रणिपताम्यहं 'नित्यं' सदेति गाथार्थः ॥ ५६ ॥ उक्तं भावनाद्वारं, तद्भणनाच्च नवभिरपि द्वारैः समर्थितं चतुर्थाणुव्रतं, अधुना पञ्चमस्यावसरः, तदपि यादृशादिभिर्नवभिर्द्वारैर्व्याख्येयमतो 'यथोद्देशं निर्देश' इतिन्यायात्प्रथमं यादृशद्वारेणाह—

मुच्छा परिग्गहो इह अइरित्त असुद्ध तह ममत्तेणं ।
एयस्सउ जाविरई सरूवमेयं तु नायव्वं ॥ ५७ ॥

मूर्च्छा—गार्द्ध्यं परिग्रहणं परिग्रहः—स्वीकार उक्त इति शेषः, क ?—'इह' जिनप्रवचने, तथा चोक्तम्—"जंपि वत्थं व पायं वा, कम्बलं पायपुंछणं । तंपि संजमलज्जट्ठा, धारिंती परिहरंति य ॥ १ ॥ न सो परिग्गहो वुत्तो, नायपुत्तेण

तुर्यव्रते भ-ङ्गभावेन; पंचमे च स्वरूपम् गा. ५५,

॥ १६९ ॥

ताइणा । मुच्छा परिग्गहो वुत्तो, इइ वुत्तं महेसिणा॥ २ ॥ "स च परिग्रहोऽतिरिक्ते—प्रमाणाधिके वस्तुनि, अयमर्थः-
प्रभूतवित्तोपार्जनायामप्यसन्तुष्टतायां, 'असुद्ध' त्ति प्राकृतसूत्रशैल्या 'अशुद्धेन' आधाकर्मादिना परिग्रहः, इदमुक्तं
भवति-उपेत्य करणकारणादिनाऽशुद्धोपायेन गृहाद्युत्पादयतः परिग्रहः, 'तथे' ति समुच्चये ममत्वेन धनधान्यादेः
परिग्रहः, अयमभिप्रायः—निजसत्तया धृतस्य धनधान्यादेरुपरि यन्मम भावो ममत्वं-ममेदमिति परिणतिस्तेनापि परिग्रहः,
एतस्य परिग्रहस्य 'तुः' विशेषणे प्रोक्तरूपस्येति विशेषयति, या 'विरतिः' निवृत्तिः 'स्वरूप' स्वभावः, एतच्चु-
एतदेव 'ज्ञातव्यं' बोध्यमिति गाथार्थः॥ ५७ ॥ उक्तं प्रथमद्वारेणेदम्, अधुना भेदद्वारेण वाच्यं, तच्च यद्यपि
निर्भेदं तथाऽपि विषयद्वारेण भेदवद्, अतस्तन्मुखेनैवास्य भेदानभिधातुमाह—

खेत्तंवत्थुहिरण्णंसुवण्णधणधन्नकुवियपरिमाणं ।
दुपयं चउप्पयंपिय नवहा तु इमं वयं भणियं ॥ ५८ ॥

नवभिः प्रकारैः नवधा 'तुः' एवार्थे नवधैवेदं—परिग्रहपरिमाणलक्षणं पञ्चमं व्रतं 'भणितं' प्रतिपादितं,
तीर्थकरादिभिरिति शेषः, इयं गाथाचतुर्थपादव्याख्या, कथं पुनर्नवधेति चेदत्राह—'क्षेत्रं' सेतुकेतुसेतुकेतुरूपं,

तत्र यन्नद्यादिजलेन पादावर्त्तारघट्टादिभिः सिच्यते तत्सेतु, यत्तु वर्षाकालजलेनैव तत्केतु, यत्तूभयसेकं तत्सेतुकेतु, तद्विषयं परिमाणमपि क्षेत्रमित्येको भेदः, तथा वास्तु खातमुच्छ्रितं खातोच्छ्रितं च, तत्र खातं—भूमिगृहं उच्छ्रितं-धवलगृहं खातोच्छ्रितं-भूमिगृहोपेतमेव धवलगृहं तद्विषयं परिमाणमपि वास्तु द्वितीयो भेदः, हिरण्यं-घटितकनकं तद्विषयं व्रतमपि हिरण्यं तृतीयो भेदः, तथा सुवर्णं च धनं च धान्यं च कुप्यं चेति द्वन्द्वस्तेषां परिमाणं—परिमितिः, परिमाणशब्दस्य प्रत्येक सम्बन्धात् सुवर्णपरिमाणं धनपरिमाणमित्यादि द्रष्टव्यम्, एते चत्वारो भेदाः पूर्वैस्त्रिभिः सह सप्त, यथा क्षेत्रं हिरण्यमिति अनुस्वारोऽलाक्षणिक एव, ततश्च क्षेत्रं च वास्तु चेत्थादिद्वन्द्वे एतेषां परिमाणमिति षष्ठीतत्पुरुषे च परिमाणशब्दस्य प्रत्येकं सम्बन्धात्क्षेत्रपरिमाणमित्यादयः सप्त भेदाः, 'द्विपदं चतुष्पदमपि चे' ति भेदद्वयसहिता नव, एवं नवधैवेदं भणितं, भावना तु सर्वत्र पूर्ववद् दृश्या, सुवर्णं च घटितसुवर्णं, धनं च गणिमधरिममेयपारिच्छेद्यभेदाच्चतुर्विधं, तत्र गणिमं पूगनालिकेरादि गण्यत इतिकृत्वा, धरिमं खण्डगुडादि, तुलाया ध्रियत इतिकृत्वा, मेयं घृतादि मीयते कर्षादिभिरितिकृत्वा, पारीक्ष्यं द्रम्मादि 'परीक्ष्य' परिच्छिद्य गृह्यत इति त्वा, धान्यं च गोधूमशाल्यादि, कुप्यं सुवर्णराजताभ्यामन्यत्ताम्रपात्रादिगृहोपस्करः, द्विपदं दासदास्यादि, च-

तुष्पदं—गवाश्वादीति, 'अपिः' समुच्चये, चः स्वगतानेकभेदसूचकोऽवगन्तव्य इति गाथार्थः ॥ ५८ ॥ उक्तं भेदद्वारमस्याधुना यथा जायत इदं तथोच्यते—

अत्थं अणत्थविसयं संतोसविवज्जियं कुगइमूलं ।
नाउं तप्परिमाणं कुणंति संसारभयभीया ॥ ५९ ॥

'अर्थं' वित्तं 'ज्ञात्वा' विदित्वेति सम्बन्धः, कीदृशम् ?—'अनर्थविषयं' व्यसनगोचरं, किंविशिष्टं पुनः ? इत्याह—सन्तोषः—उत्तरोत्तराभिलाषनिवृत्तिः सन्तुष्टतेतियावत् तेन विशेषेण वर्जितं—रहितं सन्तोषविवर्जितं, भूयः कथम्भूतं ?—कुत्सिता गतयः कुगतयो—नारकतिर्यगाद्यास्तासां मूलं—कारणं कुगतिमूलं, एवंविधमर्थमवगम्य किमित्याह—कुर्वन्ति—विदधति, के ? इत्याह—'संसारभयभीता' भवत्रासत्रस्ताः, किं कुर्वन्तीत्याह—तस्यअर्थस्य परिमितिः—परिमाणं तत्परिमाणं—तदियत्तामतो नवधा परिग्रहपरिमाणमित्थं जायत इति सूचितमिति गाथाक्षरार्थः ॥ अत्र च संसारभयभीताः संतोषविवर्जितमर्थं कुगतिमूलमनर्थविषयं च ज्ञात्वा तत्परिमाणं कुर्वन्तीत्युक्तम्, कथं चैषोऽनर्थविषयः कुगतिमूलं चेत्येतद्दृष्टान्तद्वारेणाभिधीयते—

इहैव जम्बूद्वीपे भारतवर्षमध्यमखण्डमध्ये कोशवर्द्धनं नाम नगरं, तत्र भीमो नाम ब्राह्मणः, तत्पुत्रौ देव-देवशर्मनामानौ बभूवतुः, तौ च जन्मप्रभृत्येव महादारिद्र्यपीडितौ कथंकथमपि पित्रा यौवनमनुप्रापितौ, तौ चान्यदा चिन्तितवन्तौ—यथाऽत्रावयोस्तावद्भोजनमात्रमपि न संपद्यते, तद्यामः किमपि स्थानान्तरं यत्र किञ्चिन्निर्वाहमात्रं संजायते, ततो गतौ तौ पितरमापृच्छ्य कौशाम्बीं, तदा च तस्यां राजपुत्र्याः सौभाग्यसन्दीपनं नामोत्सवनं कृतं, तदुद्यमनके च समवयोविद्यागुणाय समायाताभिनवातिथये ब्राह्मणद्वयाय प्रच्छन्नं मौक्तिकसुवर्णरत्नादि देयम्, उद्यमनकदिने च भवितव्यतायोगेन तस्या नियुक्तपुरुषैस्तदेव ब्राह्मणद्वयं समानवयोरूपादिगुणं विलोक्योद्धूलितजङ्घं राजकुले समानीय विहितोचितकृत्यविस्तरं दर्शितं राजपुत्र्याः, तया च राजतकच्चोलके मौक्तिकादिपदार्थान् गुप्तान् प्रक्षिप्योपरि करसूपादि परिवेश्य प्रत्येक ताभ्यां दत्ते, ताभ्यां तु ते आदाय गतं तडागपाल्यां, गृहीत्वा जलं कृत्वा चरणशौचं विधाय चात्मीयप्रक्रियामुपस्पर्शनादिकां भोक्तुमारब्धं यावत्तावद् दृष्टं मौक्तिकसुवर्णादि, ततोऽनादिभवाभ्यस्तलोभसञ्ज्ञोद्भूतगाढतन्मूर्छापरिणामयोरुभयोरपि प्रवर्द्धते मारणाभिलाषः, देवेन चिन्तितं—देवशर्माणं यदि व्यापादये तदेदं मम सर्वं द्रव्यं संपद्यते, देवशर्मणाऽप्येवं, ततो देवेनाभ्यधायि—यथेदं मौक्तिक-

उत्पत्तिद्वारे देव देवशर्म कथा गा.७९

सुवर्णादि यद्यनावृत्तमेवात्मपार्श्वे धारयिष्यावस्तदा चौरादिः प्रतिग्रहीष्यति, तस्मादिदं निधानीकृत्य क्वचित्प्रदेशेऽन्यत्र तिष्ठावः, ततः प्रतिपन्ने देवशर्मणा तथैव तन्निधानीकृत्य यावच्चलितावन्योऽन्यवधविहिताभिप्रायावन्यप्रदेशाभिमुखौ तावत्तत्रान्तरे दृष्ट एको जीर्णकूपो देवेन, भणितश्च देवशर्मा—वत्से ! निरीक्ष्यतामेष कूपः कियदत्रोदकं ?, ततोऽसौ यावन्निरीक्षितुमारेभे तावत्प्रणुन्नः कूपमध्ये, तेन च पतता गृहीतः सोऽपि शरीरदेशे, निरालम्बनतया पतितौ द्वावपि, मृत्वा जातौ सर्पत्वेन, क्रमेण च परिभ्रमन्तौ समागतौ निधानप्रदेशं, तत्प्रदेशोत्पन्नमूर्च्छौ चारब्धौ योद्धुमुपारूढप्रबलकोपौ च परस्परं युध्यमानावेव प्राप्तौ निधनमुपपन्नौ मूषकत्वेन, तथैव तत्प्रदेशागमनोपारूढ-गाढमूर्छावन्योऽन्यभक्षितसमस्तशरीरदेशौ महावेदनाभिभूतौ मृत्वा समुत्पन्नौ कमलत्वेन, तथैव च कालान्तरेण तत्प्रदे-शमागतौ यूथसहितौ परस्परमारब्धौ योद्धुं, तीव्रकोपतया कथञ्चिन्नोपरमेते यावत्तावत्समायातस्तत्र धनुर्दण्डमारोप्याकर्णा-न्ताकृष्टशरो व्याधः, तं दृष्ट्वा पलायितं दिशोदिशमशेषयूथं, तौ च तीव्रयुद्धाभिनिवेशविवशावलक्षिततदागमनौ हता-वेकशरनिपातेन तेन, मरणसमयसमुपजातमनुष्यभवानिर्वर्त्तनायोग्यतथाविधाध्यवसायमाहात्म्येन चोत्पन्नौ तस्यामेव कौशाम्ब्यां माधवाभिधानब्राह्मणस्य वसन्तिनीभार्यायां यमलपुत्रौ, कृतमुचितसमये तयोर्नामैकस्य रुद्रोऽपरस्य महेश्वरः,

क्रमेण जातावष्टवार्षिकौ, अन्यदा च माधवेनैव सह तन्निधानासन्नप्रदेशवर्त्ति स्वक्षेत्रं व्रजन्तौ—दृष्ट्वा तमेव भूभोगं, जातमूर्च्छावुभावपि । प्रागभ्यासवशेनैव, काचपिच्यपुरस्सरम् ॥ १ ॥ यावद् युद्धेन संलग्नौ, तावत्पित्रा निवारितौ । नीतौ च स्वगृहं प्रीत्या, तिष्ठतः पूर्ववत्पुनः ॥ २ ॥ तं प्रदेशं समायातौ, युद्ध्येते च तथैव तौ एवमुद्वेजितस्ताभ्यां, पिता नित्यमिहान्तरे ॥ ३ ॥ तस्यामेव पुर्यां मनोरमाभिधानोद्याने समवसृतः समुत्पन्नातिशायिज्ञानो विमलयशोनाम सूरिः, तद्वन्दनाय गतो राजा सपौरपरिजनजानपदादिः, प्रस्तुता धर्मकथा भगवता, प्रस्तावे च पृष्टमशोकदत्तश्रेष्ठिना—भगवान् ! अस्ति ममाशोकश्रीनामिकैका पुत्रिका, सा च रमणीययौवनमनुप्राप्ताऽपि संजातरूपलावण्यकलाकौशलादिगुणसमुदायाऽपि विचित्राभरणनेपथ्यालङ्कारालङ्कृताऽपि प्राग्जन्मनोपार्जिताऽतिकटुकदौर्भाग्यकर्मोदयतो न कस्मैचिद्रोचते न कोऽपि तामालापयाति, तत्किं तया पूर्वजन्मनि कृतं यन्माहात्म्येन सैवंविधा संपन्ना; ?, सूरिणोक्तं—भद्र ! शृणु-प्रतिष्ठाने नगरे बभव विमलो नाम महाधनः श्रेष्ठिपुत्रः, तस्य धनश्रीनाम भार्या, सा च प्रकृत्यैव नयविनयविराजिता जितकषायोदया दयादानप्रवृत्तिशालिनी शालीनतादिविशिष्टगुणमन्दिरमत्यन्तभक्ता भर्त्तुः प्राणप्रिया च, केवलं वन्ध्या, ततो भर्त्राऽन्यदा पर्यालोचिता सा—प्रिये ! तवोपरि नाहं परिणिनीषुस्तावत् केवलमि-

दमस्मद्रव्यं यदि मम कदाचित्किञ्चित्प्रतिकूलं भविष्यति तदा राजकुलं प्रवेक्ष्यति तदस्ति कश्चनोपायो द्रविणपरि-
रक्षणे, ? तयोक्तं—प्रिय ! नापरोऽपरस्त्रीपरिणयनं परित्यज्य, तदिदानीमस्मदुपरोधेनाप्यङ्गीक्रियतामिदं, अहमेव
त्वद्योग्यां काञ्चित्कन्यामवलोकयिष्ये, ततस्तदुपरोधेनाभ्युपगते तदीयवचने श्रीप्रभाभिधानां परिणायितोऽसावन्यतर-
श्रेष्ठिकन्यां, कालेन धनश्रिया मारणोपायांश्चिन्तयन्ती ददर्श सा स्वगृहमेव भिक्षानिमित्तमागतामेकां परिव्राजिकां,
दानसन्मानगृहीतां च तामुवाच—' भगवति ! मदीयभर्त्ता विद्वेषपरो धनश्रियं स्वगृहात् । निष्काशयति यथाऽयं
तथाऽचिरात्त्वं विधत्स्वेति ॥ १ ॥ एवं करोमीति प्रतिपन्ने तयाऽन्यदा विमलस्य गच्छतः समासन्नीभूय यथैष शृणोति तथा
पूर्वसङ्केतितनार्याः संमुखमवदत्—भद्रेऽहमुत्सुका यामि, तस्याः पार्श्वे धनश्रियाः । स युवा तत्र दुःखेन, तद्वियोगे च तिष्ठते
॥ १ ॥ विमलोऽपि समाकर्ण्य तद्वचनं नूनं दुष्टशीला धनश्रीस्तत्किं तयेति वितर्क्य गृहं गतो बभाण तां——भद्रे ! करोषि
मद्वचनमेकम् !, तयोदितम्——' आर्यपुत्र ! किमीदृक्षं, त्वयेदं मम कथ्यते ? । मज्जीवितं त्वदायत्तमुक्तमात्रे तु का कथा ?
॥ १ ॥ तेनोक्तं——गच्छ पैतृकगृहं, ततोऽसौ मुद्गरेणैव, तद्वचनेनेव ताडिता । पतित्वा पादयोस्तस्य, रुदन्ती समभाषत
॥ २ ॥ नाथ ! दुश्चरितं किञ्चित्त्वया संभावितं मम । अप्रस्तावेऽपि येनैवमादेशो दत्त ईदृशः ॥ २ ॥

विमलेनापि रहस्यभेदो मा भूदिति चिन्तयता समुत्थाप्य भणिता-धीरा भव, अयमपि ममादेशः कुतो भविष्यति तद्व्रज तावत्, ततो धनश्रिया न युक्तमिदं कर्त्तुं तथाऽप्यलङ्घ्यवचनो भर्त्ता मया च प्रतिपन्नपूर्वमिदमतो यद्भवति तद्भवत्विति चिन्तयन्त्या प्रतिपन्नं तद्वचः, ततो यदाऽहमानयामि तदाऽऽगन्तव्यमित्यभिधाय विसर्जिता तेन सा, दत्ता आप्तस्वपुरुषास्तत्सहायाश्च, भणिताश्च स्वपुरुषाः-यथा धनश्रियं पैत्रिकस्थाने विमुच्य शीघ्रमधौतपादैरेव ततो निवर्त्तितव्यं, ततस्ते प्रतिपन्नतद्वचना धनश्रियं गृहीत्वा गतास्तत्पितृगृहं, मुक्ताऽसौ तत्र, निवृत्तास्तथैव ते, पृष्टा च धनश्रीपितृभ्यां-वत्से ! किमेवं ?, साऽवोचत्-न जानामि, निरपराधैव निष्काशिता भर्त्रा, पितृभ्यामुक्तं-नेदमुचित्तं, परं यावत्सम्यग्वार्त्तामुपलभावहे तावत्तिष्ठ त्वं, ततोऽसौ तेन वचनेन मुद्गरेणेव ताडिता रोदितुं प्रवृत्ता, चिन्तितवती च--अपरीक्ष्यैव यदहं, प्रियेणाप्रियकारिणा । त्यक्ता सीतेव रामेण, हा किं तस्योचितं तु तत् ? ॥ १ ॥ तदेवं-किं करोमि क्व वा यामि, कस्याग्रे कथयामि वा ? । वल्लभादुदिते दुःखे, जातं शरणतो भयम् ॥ २ ॥ अङ्गिनां धर्महीनानां, यद्वा सुप्रापमीदृशम् । संसारेऽनिष्ठसंयोगाभीष्टहानिसमाकुले ॥ ३ ॥ स्वकर्म्मपरिपाकोऽयं, मया सर्वोऽनुभूयते । तदस्योन्मूलनाहेतोर्धर्म एव ममोचितः ॥ ४ ॥ इति संचिन्त्य सा नित्यं, धर्मानुष्ठानसङ्गता । आसाञ्चक्रे क्रमायातसुखदुः

नैमित्तिकः, पृष्टस्तत्पित्रा-किमियं धनश्री-
स्वसमास्थितिः ॥ ५ ॥ अन्यदा च समायातस्तत्र सिद्धादेशनामा
दुष्टशीला सुशीला वा ?, शीलवत्यपि श्वशुरकुलं यास्यति न वा ?, तेनोक्तं—शीलवती श्वशुरकुलं
च यास्यति, अत्रार्थे चायं प्रत्ययः—कतिपयदिनोपरि भर्त्ता चास्या आनयनायाऽऽयास्यति, ततस्तुष्टेन
तत्पित्रा दत्तं पारितोषिकं सिद्धादेशाय, विसृष्टश्चासौ, भणिता च धनश्रीः--पुत्रि ! तिष्ठ सुखेन धर्मपरा,
मा चोन्मनीभूः आयास्यति तवानयनाय स्वभर्त्ता, ततस्तेनाश्वासिता यथाऽऽदिशाति तातस्तथा करोमीत्यभिधाय
विशेषधर्मपरा कानिचिद्दिनानि तत्रैवातिष्ठत् । इतश्च--धनश्रीर्निर्गता गेहाद्विमलस्य यदैव हि । अत्युग्रव्याधिना
ग्रस्ता, तदैव श्रीप्रभा ततः ॥ १ ॥ विचित्रैर्मन्त्रिभिर्मन्त्रैर्वैद्यैर्नानाविधौषधैः । प्रयत्नवद्भिरप्यस्या, व्याधेर्नोपशमः
कृतः ॥ २ ॥ तत्र प्रकर्षमायातेऽनुतापगतया तया । धनश्रीविषयः सर्वो, वृत्तान्तः स्वो निवेदितः ॥ ३ ॥ समि-
त्रबन्धुवर्गाय, विमलाय सविस्तरः । पश्चात्तापपरीतात्मा, ततः सोऽपि व्यचिन्तयत् ॥ ४ ॥ असमीक्षितकारित्वं,
ममाहो ? असमञ्जसम् । येनाविचार्य संत्यक्ता, निर्दोषाऽपि प्रिया मया ॥ ५ ॥ हा प्रिये ! विप्रियं दृष्ट्वा, ममैव
मतिदारुणम् । कथमाहूयमानाऽपि,त्वमेष्यसि मदन्तिकम् ? ॥ ६ ॥ भुजङ्गीनामिव स्त्रीणामहो कौटिल्यवर्त्तिता ।

अहो ! रोषप्रकृष्टत्वमहो ! ईर्ष्याऽतिदारुणा ॥ ७ ॥ अथवा भद्रिकैवैषा, या मृत्युसमयेऽपि मे । स्वकर्म कथयामा-सानुतापगतमानसा ॥ ८ ॥ अत्रान्तरे समायातः, सिद्धादेशो निमित्तवित् । तेन नीरोगताऽमुष्या, आदिष्टा स्वल्पकालिकी ॥ ९ ॥ एतच्च नैमित्तिकवचनमाकर्ण्य तत्पार्श्ववर्त्ती वैद्यस्तदीयमातरमादिष्टवान्--यथा बलात्तैलमादायाभ्यज्यतां जङ्घैकदेशोऽस्याः, आमवातज्वरोऽयं, तया च तथैव विहिते वैद्यवचसि सद्य एव संपन्नो मनाक् तत्र स्थाने गुणः, ततोऽवबुद्धतद्रोगेण वैद्येनोपचर्य विविधोपचारैः स्वल्पदिनैरेव नीरोगीकृतायां श्रीप्रभायामुचितपूजया विधिवत्सन्मान्य नैमित्तिकवैद्यौ विमलो राजकुलादभियाच्य दिनद्वयेन पञ्चाशद्योजनगामिनीं चरिकामारुह्य स्वयं गतः श्वशुरगृहं, दृष्टा च तत्र विचित्रतपश्चरणशोषितशरीरा धनश्री, लज्जाभरमन्थरः स्ववदनं दर्शयितुमशक्नुवन्नभिवाद्य श्वशुरं भणितवांश्च-क्षमणीयो ममैकोऽयमपराधः, पुनर्न करिष्याम्यहमेवं, मुच्यतां चेयं धनश्रीर्येन गृहीत्वैनां व्रजामि स्वभवनं, किञ्चिदुपालम्भसारमाभाषित एष तेन-भो भो जामातृक ! न युक्तमेवमपर्यालोचितकारित्वं भवतो, यतः-"मा होह सुयग्गाही, मा पत्तिय जं न दिट्ठपच्चक्खं । पच्चक्खेऽविहु दिट्ठे जुत्ताजुत्तं वियारेह ॥ १ ॥" किञ्च सुशीलतादिगुणकलापमालोक्यास्या लोकोऽप्येवमुदाहरति--कुदृष्टं कुपरिज्ञातं, कुश्रुतं कुपरीक्षितम् । पुरुषेण न कर्त्तव्यं

विमलेन यथा कृतम् ॥ १ ॥ " इति तत्र प्रेषणयोग्येयं, किन्तु भर्तृदेवता नार्योऽतस्त्वयि स्वयमेतद्ग्रहणायायाते न शक्नुमो वयं निराकर्त्तुमिति प्रतिपाद्य उचितप्रतिपत्तिपूर्वं दिनपञ्चकं धृत्वा विसृष्टोऽसौ धनश्रिया सह समाजगाम स्वनगरं, राजकुल एव समर्पिता चरिका, कारितो धनश्रीसमानयनतुष्टचित्तेन महानुत्सवः, स्वगृहान्निष्काशितुमारब्धा च श्रीप्रभा, निवारितो धनश्रिया, मम स्वसेयं नास्या अपराधगन्धोऽस्ति, ममैव पूर्वकृतकर्म्मविलसितमेतत्, यदुक्तम्–" सर्वः पूर्वकृतानां, प्राप्नोति हि कर्मणां फलविपाकम् । अपराधेषु गुणेषु च निमित्तमात्रं परो भवति ॥१॥ " इति, मोचितश्चात्मा प्रव्रज्यार्थं, न मुक्ता भर्त्रा, भणिता च–तिष्ठ वर्षसप्तकं, भुङ्क्ष्व मयाऽनुरक्तेन सह तावदुदारभोगान्, पश्चात्त्वं चाहं च ग्रहीष्यावश्चरमवयसि प्रव्रज्यां, ततोऽसौ भर्त्तुरनुरोधेन स्थिता गृहवास एव, गतेषु केषुचिद्दिवसेषु भणित्वा भर्त्तारं प्रचुरद्रव्यव्ययेन कारयामास महदेकं जिनायतनं, तत्रानवरतं महाप्रबन्धेन पूजास्नात्रयात्रादिकरणकारणपरायणाया व्यतिक्रान्तानि सप्त वर्षाणि, भूयोऽपि विज्ञप्तो भर्त्ता प्रव्रज्यार्थं, ततोऽसौ जिनभवनाष्टाह्निकामहोत्सवकारणपूर्वकं प्रतिमायोग्याभरणसमकलादिषु प्रभूतद्रविणजातं वितीर्य सम धनश्रिया श्रीप्रभया च जीवानन्दाचार्यसमीपे सर्वविरतिदीक्षां समुपात्तवान्, कालान्तरे च क्षपितप्रभूतक्लिष्ट-

कर्माऽन्त्यसमयसमाराधितपञ्चनमस्कारस्मरणादिविधिर्मरणे विमलो धनश्रीश्च पञ्चमदेवलोकं ब्रह्मलोकनामकमगमत्, श्रीप्रभा तु सौधर्मदेवलोके ललिताङ्गविमान एवोत्पेदे, सावशेषतत्कर्मणा च ततश्च्युता भो अशोकदत्तश्रेष्ठिन् ! भवत एवाशोकश्रीनामिका पुत्रिका जाता, सेयं तत्कर्मविपाकेन दौर्भाग्यमनुभवति, एतच्च श्रुत्वा सा जातिस्मरणोपलब्धपूर्वभवस्ववृत्तान्ता अश्रुपातं कुर्वन्ती विमलयशःसूरेः पादयोर्निपत्य--भगवन् ! स्वदीक्षादानेन ममानुग्रहः क्रियतामिति वदन्ती आचार्येण बभाषे--भद्रे ! तव नाद्यापि व्रतयोग्यताऽस्ति, यतो वर्षपञ्चकादूर्ध्वमपयास्यति तवेदं दौर्भाग्यनिबन्धनं कर्म, भविष्यति प्रबलो भोगफलकर्मोदयः, ततो भुक्तभोगा कियताऽपि कालेन प्राप्स्यसि व्रतयोग्यतामितरथा व्रतभङ्ग एव तवास्मिन् प्रस्तावे, ततोऽसौ यथाऽऽदिशति भगवांस्तथा करोमीत्यभिधाय स्थिता, अत्रान्तरे माधवब्राह्मणोऽपि क्षमातलमिलन्मौलिः प्रणिपत्य विमलयशःसूरेः पादद्वन्द्वं पप्रच्छ—भगवन् ! मदीयपुत्रयो रुद्रमहेश्वरयोः स्वक्षेत्रप्रदेशगतयोरनवरतमेव वैरभाववर्त्तने अन्यत्र तु प्रीत्यवस्थाने किं कारणं ?, ततो भगवांश्चातुर्भाविकमरणकारणमेतयोर्निधानादिवृत्तान्तं सविस्तरमचीकथत्, तं च श्रुत्वा तावपि तत्क्षणादेव संजातजातिस्मरणौ स्वपूर्वभवालोकनेन स्वयमेव विस्मितमानसावाचार्यस्य पादयोर्निपत्य पित्रादिलोकप्रत्यायनार्थं निधानं निरूप्य सुस्थानविनियोगेन

तन्नियोज्य पितरमापृच्छ्य तस्यैवाचार्यस्य समीपे व्रतमङ्गीकृतवन्तौ, विधिना परिपाल्य समाधिमरणेन माहेन्द्रकल्पे देवावुत्पन्नाविति । अतोऽर्थोऽनर्थविषयः सन्तोषविवर्जितः कुगतिमूलश्चेति सिद्धम् । एतत्कथाविस्तरश्च भगिनीवत्सलवदवगन्तव्यः, सन्तोषसमान्वितस्तु दानोपभोगप्रधानोऽर्थः कर्मक्षयहेतुर्यशोहेतुश्चानन्दादिश्रावकाणामिवेति ।

गतं यथा जायत इति द्वारमधुनाऽस्यैव दोषद्वारमाह—

अणियत्ता उण पुरिसा लहंति दुक्खाइं णेगरूवाइं ।
जह चारुदत्तसड्ढो, प०भट्ठो माउलाहिंतो ॥ ६० ॥

निवर्त्तनं निवृत्तं न विद्यते निवृत्तं-परिहारो येषां ते 'अनिवृत्ताः' अकृतनिवृत्तय इत्यर्थः, पुनःशब्दो विशेषणार्थः, किं विशिनष्टि ?, परिग्रहादिति, 'पुरुषाः' नराः 'लभन्ते' प्राप्नुवन्ति 'दुःखानि' असातोदयान् 'अनेकरूपाणि' विचित्रस्वभावानि नरकतिर्यक्षु छेदनादीनि मनुष्येषु तु स्नेहनाशप्रभृतीनि, यदुक्तम्--"जणयसुयाणं च जए जणणीसुण्हाण भाउयाणं च । चडुलस्स धणस्स कए नासइ नेहो खणद्धेणं ॥ १ ॥ अडइ बहुं वहइ भरं सहइ छुहं पावमायरइ धिट्ठो । कुलसीलजाइपच्चयठिइं च लोभदुओ चयइ ॥ २ ॥ धावेइ रोहणं तरइ सायरं वसइ गिरिनिउंजेसु ।

बंधवजणं च मारइ पुरिसो जो होइ धणलुद्धो ॥ ३ ॥" तथाऽन्येनाप्युक्तम्--" द्वेषस्यायतनं धृतेरपचयः क्षान्तेः प्रतीपो विधिर्व्याक्षेपस्य सुहृन्मदस्य भवनं ध्यानस्य कष्टो रिपुः । दुःखस्य प्रभवः सुखस्य निधनं पापस्य वासो निजः, प्राज्ञस्यापि परिग्रहो ग्रह इव क्लेशाय नाशाय च ॥ १ ॥ " को यथा दुःखानि लब्धवान् इत्याह—यथा ' चारुदत्तश्राद्धः ' चारुदत्ताभिधानः श्रावकः, किंविशिष्टः ?—' प्रभ्रष्टः ' च्युतः ' मातुलात् ' मामकादिति गाथाऽक्षरार्थः ॥ ६० ॥ भावार्थः कथानकगम्यः, तच्चेदम्—

आसीच्चम्पाभिधानायां, नगर्यां श्रेष्ठिसत्तमः । भानुर्नाम गुणैर्ख्यातः, सुशीलविनयादिभिः ॥ १ ॥ तस्य प्राणप्रिया भार्या, सुभद्रेति गुणान्विता । बभूव स्वचरित्रेण, पवित्रा पुत्रकाङ्क्षिणी ॥ २ ॥ प्रत्यहं चार्हतां पूजां, कुर्वाणौ स्वजिनालये । चारणश्रमणं श्रेष्ठं, कदाचित्तावपश्यताम् ॥ ३ ॥ नमस्कृत्याऽतिभक्त्या तं, पुत्रकामावपृच्छताम् । श्रावकाविति संचिन्त्य, तौ मुनिः प्रत्यभाषत ॥ ४ ॥ अल्पीयसैव कालेन, भविता युवयोः सुतः । श्रेष्ठो नैगमवंशस्य, भणित्वैवं तिरोऽदधत ॥ ५ ॥ दिवसेष्वथ गच्छत्सु, तयोः पुत्रोऽभवत्प्रियः । चारुदत्तकृताभिख्यः, कलाकौशलकोविदः ॥ ६ ॥ हरिसिंहादिसन्मित्रैः, समेतः सोऽन्यदा गतः । अङ्गोदरगिरेरन्ते, निम्नगां रत्नवालि-

ततस्त-
काम् ॥ ७ ॥ क्रीडन्तस्तत्र ते दृष्ट्वा, स्त्रीपुंसपदपद्धतिम् । सकलत्रो युवा कश्चिदास्तेऽमुत्रेत्यचिन्तयत् ॥ ८ ॥ ततस्त-
दनुसारेण, यावत्किञ्चिदिमे गताः । तावद्धेमन्तधामेव, शैत्येन कदलीगृहम् ॥ ९ ॥ अपश्यंस्तत्प्रविष्टाश्च, पुष्पशय्यां
मनोरमाम् । सकोशं खड्गरत्नं च, तददूरे द्रुमेण च ॥ १० ॥ समं लोहमयैः कीलैः, कीलितं ददृशुर्नरम् । सर्वाङ्ग-
सुन्दरं नव्ये, वर्त्तमानं वयोगुणे ॥ ११ ॥ चारुदत्तोऽथ तानाह, तं विलोक्य तथास्थितम् । भो वयस्याः सजीवोऽयमद्यापि
किल लक्ष्यते ॥१२॥ तदेष मोचनीयः स्यात्, केनोपायेन ? कथ्यताम्। ऊचुस्ते देशकालज्ञः, त्वमेव यदि वेत्सि तम् ॥१३॥
गृहीत्वा निजबुद्ध्यैव, तेषामे-
पश्यन्नितस्ततोऽसावप्यौषधीवलयत्रयम्। नामाङ्कं खड्गरत्नस्य, तस्य कोशे व्यलोकत ॥१४॥ गृहीत्वा निजबुद्ध्यैव, तेषामे-
केन मोचितः। अपरेण च संरूढव्रणोऽसौ तत्क्षणात्कृतः॥१५॥संजीवनीयनाम्ना च, तृतीयवलयेन सः। नष्टनिःशेषसञ्ज्ञोऽपि,
प्रत्यानीतोऽथ चेतनाम् ॥१६॥ ततो निमेषमात्रेण, वक्तुं तेनोपचक्रमे। ममोपकारिणो यूयं, भोः ! तच्छृणुत मे कथाम् ॥१७॥
वैताढ्यदक्षिणश्रेण्यां, नगरं शिवमन्दिरम् । महेन्द्रविक्रमो राजा, तत्र विद्याधराधिपः ॥ १८ ॥ तस्यामितगतिः
पुत्रो, जातोऽहं मे वयस्यकौ । बभूवतुः प्रियौ गौरिमुण्डधूमशिखाभिधौ ॥ १९ ॥ कदाचित्सहितस्ताभ्यां, ह्रीमन्तं
नगमागतः । हिरण्यरोमनामा च, मातुलो मम तापसः ॥ २० ॥ तत्रास्ते तस्य पुत्री च, नवोपारूढयौवना ।

श्रीमवपदवृह चतुर्थेऽ- ध्ययने.



लेखेव शशिनः सौम्या, सञ्ज्ञया सुकुमालिका ॥ २१ ॥ विलोक्य तामहं प्राप्तः, कामबाणशरव्यताम् । संलक्षितो वयस्याभ्यां, नीतः स्वनगरं प्रति ॥ २२ ॥ मत्पितुर्ज्ञापितं चेदं, ताभ्यां तेनापि मत्कृते । वृताऽसौ पाणिसंग्राहं, कारितोऽहं शुभेऽहनि ॥ २३ ॥ ततोऽनुभवतः सार्द्धं, तया भोगसुखं मम । देवलोके सुरस्येव, गतः कालः कियानपि ॥ २४ ॥ सुकुमालिकया सार्द्धं, दृष्टो धूमशिखोऽन्यदा । अकृत्यनिरतो दृष्टो, न चेष्टोऽसौ विरूपकृत् ॥ २५ ॥ प्रमत्तभावतश्चाहं, विचरामि यथा पुरा । सर्वत्राशङ्कितस्तेन, चाद्य बद्धोऽहमत्रगः ॥ २६ ॥ गतं चादाय तां यावत्तावद् यूयं समागताः । मोचितो भवद्भिरतो, भवन्तो मम बान्धवाः ॥ २७ ॥ इत्युक्त्वा चारुदत्तस्य, मित्राण्यापृच्छ्य साञ्जसम् । नामान्वयादि विज्ञाय, यथाऽऽयातमयादसौ ॥ २८ ॥ समित्रश्चारुदत्तस्तु, समायातो निजां पुरीम् । यौवनं समनुप्राप्तो, लीलाया वासमन्दिरम् ॥ २९ ॥ सर्वार्थो मातुलस्तस्य, तत्पुत्री नवयौवना । नाम्ना मित्रवती तस्याः, पितृभ्यां ग्राहितः करम् ॥ ३० ॥ कलास्वासक्तचित्तोऽभून्न भोगसुखसंमुखः । प्रवेशितस्ततो गोष्ठीं, गुरुभ्यां ललितामसौ ॥ ३१ ॥ यथेष्टं विचरन्नेष, तया सममुदारधीः । सुतां कलिङ्गसेनाया, रूपयौवनशालिनीम् ॥ ३२ ॥ वेश्यां वसन्तसेनाख्यां, प्रत्यक्षां कमलामिव । दृष्ट्वा कामवशं यातो, वर्षैर्द्वादशभिस्ततः ॥ ३३ ॥

वृत्तं

तया समं विशालाख्या, कोटी स्वर्णस्य षोडश । अज्ञाता एव कालेन, कामासक्तेन नाशिताः ॥ ३४ ॥ यावत्तेन
ततोऽन्येद्युर्मदिरापानघूर्णितः । कलिङ्गसेनयोत्सृष्टो, विनष्टगृहविस्तरः ॥ ३५ ॥ कथञ्चित्स्वगृहं प्राप्तोऽभ्यु-
त्थितो निजभार्यया । पितुर्मृत्युं शुचं मातुरवबुद्ध्यातिदुःखितः ॥ ३६ ॥ गृहीत्वा पत्न्यलङ्कारं, गतो वाणिज्य-
तृष्णया । उसीरावर्त्तनगरं, साकं मातुलकेन सः ॥ ३७ ॥ तत्र प्रभूतकर्पासं, जग्राह विहिताग्रहः । धनार्जने
पुनस्तामालितिमागच्छतः पथि ॥ ३८ ॥ दग्धो दवानलेनाशु, कर्पासस्तस्य पश्यतः । ततोऽश्वेन गतः प्राचीं, दिश-
मुत्सृज्य मातुलम् ॥ ३९ ॥ विनष्टं तमपि त्यक्त्वा, पद्भ्यामेव प्रयातवान् । पिपासापीडितोऽन्येद्युरुदिते रविमण्डले
॥ ४० ॥ प्रियङ्गुपत्तनं प्राप्तः, पोतवाणिजिकाकुलम् । दृष्टः सुरेन्द्रदत्तेन, तस्मिन् पितृसखेन सः ॥ ४१ ॥ पुत्रवत्प्र-
तिपन्नश्च, भोजनाच्छादनैस्तदा । वार्यमाणोऽन्यदाऽम्भोधिमवतीर्णो धनाशया ॥ ४२ ॥ संप्राप्तो यवनद्वीपं, भ्राम्यंस्त-
न्नगरेषु च । अष्टौ कोटीर्धनस्याशु, समुपार्जितवानसौ ॥ ४३ ॥ स्वपुराभिमुखो भूयश्चालात्रान्तरेऽस्य च । स्फुटितं
यानपात्रेण, दूरीभूतं धनेन च ॥ ४४ ॥ जीवितव्यावशेषेण, फलकं प्राप्य कथं च तत् ( प्राप्तवांस्ततः ) । सप्तरात्रेण
तीर्णोऽब्धिः, प्राप्तं राजपुरस्य च ॥ ४५ ॥ बहिस्तादाश्रमस्थानं, तत्र दृष्टश्च मस्करी । कुशलो रसविद्यासु, नाम्ना

दिनकरप्रभः ॥ ४६ ॥ लग्नस्तत्पृष्ठ एवासौ, स्वीकृतस्तेन पुत्रवत्। कदाचिद्रसलोभेन, नीतः कमपि पर्वतम् ॥ ४७ ॥ तन्नितम्बैकदेशे च, कूटयन्त्रार्गलावृतम्। कृतान्तवदनाकारं, मन्त्रयोगप्रकाशितम् ॥ ४८ ॥ प्रदर्श्य विवरं घोरं, सहात्मना प्रवेश्य च । दर्शयामास तन्मध्ये, कूपं स नरकाकृतिम् ॥ ४९ ॥ पूतिगन्धिं चतुर्हस्तं, घनान्धतमसाऽन्वितम् । समं दैर्घ्यपृथुत्वाभ्यां, त्रिदण्डी तमुवाच च ॥ ५० ॥ पुत्रकावतरामुत्र, येनैकं ते ददाम्यहम् । तुम्बकं रससम्पूर्णं, सोऽपि तृष्णान्धमानसः ॥ ५१ ॥ कृत्वाऽलाबु करे रज्ज्वा, चतुर्नरमितां भुवम् । गतो यावदधोलग्नो, रसादित्साप्रणुन्नधीः ॥ ५२ ॥ आधस्त्यमेखलां तावत्तमोदुर्लक्ष्यमूर्त्तिना । मानुष्यभाषयाऽधरतान्मा विक्ष इति वारितः॥५३॥ केनचिच्चारुदत्तोऽपि, को वारयति मामिह । परिव्राजो गिरायातमित्युवाच भयोज्झितः ॥ ५४ ॥ तेनोचे वणिगस्म्यब्धौ, भिन्नपोतस्त्रिदण्डिना । धनेच्छानुगतः क्षिप्तः, स्वार्थनिष्ठेन पापिना ॥ ५५ ॥ कृत्वा पशूपहारं मां, रसाय स गतः स्वयम् । अधोभागो मम प्रायो, रसेन प्रापितः क्षयम् ॥ ५६ ॥ तदेवमुदधिं तीर्त्वा, यथाऽहमिह दुःस्थितः । चारुदत्त ! गतो नाशं, तथा त्वमपि मा गमः ॥५७॥ समर्पय ममालाबु, येन ते रसपूरितम् । प्रत्यर्पयामि मा स्पृष्टो, रसेन त्वं विनङ्क्ष्यसि ॥ ५८ ॥ ततस्तदर्पितालाबु, कारुण्यात् प्रतिपूर्य सः । प्रायच्छच्चारुदत्तोऽपि, रज्जुं चलितवां-

स्ततः ॥ ५९ ॥ परिव्राजोपरिस्थेनाकृष्यानीतस्तटान्तिकम् । याचितो दुग्धिकं नासावर्पयामास मर्मवित् ॥ ६० ॥ क्रूराभिप्रायतां तस्य, परिव्राजोऽवबुध्य च । चिक्षेप कूप एवैतद्, दुग्धिकं रसपूरितम् ॥ ६१ ॥ परिव्राडपि तं ज्ञात्वा, मुक्त्वाऽलाबुं सरज्जुकम् । तथोत्ससर्ज पतितो, मेखलायामसौ यथा ॥ ६२ ॥ ततो मृत्युभयत्रस्तो, ललाटघटिताञ्जलिः । तीर्थकृद्भ्यो नमस्कृत्य,सागारं व्रतमाददे ॥६३॥ हिंसानृत(वितथ)चौर्येभ्यो, मैथुनात् सपरिग्रहात् । सर्वात्मना निवृत्तोऽस्मि, मनोवाक्कायसंयतः ॥ ६४ ॥ नमस्तेभ्यो महात्मभ्यो, यैस्त्यक्त्वा भोगसम्पदः । कृतो जिनेन्द्रानिर्दिष्टः, सद्धर्मो धर्मवत्सलैः ॥ ६५ ॥ लोभमोहकलिग्रस्ता, निमग्ना दुःखसागरे । अस्माद्विधास्तु यान्त्येवं, विनाशं धनकाङ्क्षिणः ॥ ६६ ॥ शोचन्तं तं विलोक्यैवं, सोऽधःपतितनैगमः । उवाच मा विषण्णो भूस्त्वमेवमतिदुर्मनाः ॥६७॥ येन यादृग्प्रकारेण, कृतानि भवसन्ततौ । शुभाशुभानि कर्माणि, स तानि लभतेतराम् ॥ ६८ ॥ यद्यप्येवं तथाऽप्येक, उपायस्तव निर्गमे । समस्ति यदि शक्नोषि, कर्त्तुमत्रस्तमानसः ॥ ६९ ॥ आगच्छति रसं पातुमिह गोधा दिने दिने । तत्पुच्छदेशसंलग्नो, यदि यासि गतस्तदा ॥ ७० ॥ नो चेत्त्वमपि मन्न्यायात्समासन्नान्तिमक्षणः । श्रुत्वेदं स्वस्थचित्तोऽभूत्तुल्यरात्रिंदिवास्थितिः ॥७१ ॥ इतरोऽपि रसप्रौढिदग्धावयवसंहतिः । परलोकं गतस्तीव्रवेदनादून-

मानसः ॥७२॥ तं विज्ञाय मृतं चारुदत्तोऽपि परमेष्ठिनाम् । नमस्कारपरस्तस्थावश्रौषीदन्यदा ध्वनिम् ॥७३॥ कस्याप्या- गच्छतो भीतरस्ततश्चिन्ताकुलोऽभवत् । किमेतद्धंत हुं गोधा, समेत्येषा रसार्थिनी ॥७४॥ तच्छब्दोऽयमिति ज्ञात्वा, प्रणिपत्य जिनोत्तमान् । अप्रमत्तया तस्थौ,तावत्सा यावदागता॥७५॥निर्गच्छन्ती रसं पीत्वा, गृहीताऽत्रान्तरे दृढम् । कराभ्यां पुच्छ- देशेऽसौ, तया चाकृष्य सङ्कटात्॥७६॥ विवरात्स बहिर्देशं, जनन्या वोपलम्भितः । कराभ्यां मुमुचे गोधा,ततो मूर्छामुपागतः ॥७७॥ पुनः प्रत्यागतप्राणः,परिभ्राम्यन्नितस्ततः।अरण्यमहिषत्रस्त,आरूढो विपुलां शिलाम्॥७८॥रोषात्तमेत्य महिषः,प्रदेशं तज्जिघांसया। शृङ्गाभ्यां ताडयामास, तां शिलां यावदादृतः॥७९॥कुतोऽपि तावदागत्य, गृहीतोऽजगरेण सः। तयोर्भण्डन- मालक्ष्य, समुत्तीर्य शनैस्ततः ॥ ८० ॥ गच्छन्नरण्यमार्गेण, प्रत्यन्तग्राममागतः । वाणिज्याय समेतेन, रुद्रदत्तेन तत्र च ॥ ८१ ॥ स मातुलसखेनाशु, ददृशे पालितस्तथा । भूयः पुनर्नवो जातः, स्वर्णभूमौ चचाल च ॥ ८२ ॥ समं तेनैव लाक्षादि, गृहीत्वा तुच्छभाण्डकम् । इषुवेगवतीं नाम्ना, नदीं गत्वा ततार ताम् ॥ ८३ ॥ गिरिकूटं समुल्लङ्घ्य प्राप्तौ वेत्रवनं ततः । टङ्कणं विषयं यातौ, संगतौ धनतृष्णया ॥ ८४ ॥ संगृह्याजद्वयं तत्र, तदारूढौ प्रजग्मतुः । कृतान्तवदनाकारमजमाग क्रमेण तौ ॥ ८५ ॥ उल्लङ्घिते च भूभागे, रुद्रदत्तः कियत्यपि । शिरस्यञ्जलिमाधायोदित-

त्रानिदमञ्जसा ॥ ८६ ॥ न शक्यममुतो देशादहो ! गन्तुं पदात् पदम् । तस्मात्कुर्वो निहत्याजौ, भस्त्रिके मध्यरोमिके ॥ ८७ ॥ तौ तन्मध्यप्रविष्टौ चोत्क्षिप्तावामिषबुद्धिना । भारुण्डद्वितयेनावां, यावः स्वर्णभुवं सुखम् ॥ ८८ ॥ चारुदत्तोऽभ्यधादेवं, हा न युक्तमिदं यतः । आभ्यामुत्तारितावावां, दुर्गकान्तारतोऽमुतः ॥ ८९ ॥ तदेतन्निर्घृणं कर्म, कृतज्ञत्वं विहाय कः । कुर्यात् ? किंचेह हिंसातो, योऽर्थो मा भूत्स नः कुले ॥ ९० ॥ विहस्योवाच रुद्रस्तु, न त्वदीयावजाविमौ । यन्मह्यं रोचते किंचित्तत्स्वयोः करवाण्यहम् ॥ ९१ ॥ इत्युदित्वा झगित्येव, जघान निजवाहनम् । द्वितीयश्चारुदत्तस्य, चकितो मुखमैक्षत ॥ ९२ ॥ ततोऽसौ तमुवाचैवमहो वत्स ! त्वया पुरा । हिंसा प्रवर्त्तिता कापि, त्वं तेन प्राप्स्यसे वधम् ॥ ९३ ॥ मनोवाक्काययोगैर्यो, जीवः कर्माकरोत्पुरा । शुभाशुभं भवेत्तेन, तद्भोग्यं नात्र संशयः ॥ ९४ ॥ तदेवं न समर्थोऽस्मि, त्रातुं त्वां किन्तु मद्वचः । शृणु भावेन यद् दुःखी, पुनस्त्वं न भवे भवेः ॥ ९५ ॥ मृत्युदुःखार्त्तजन्तूनां, मनोवाक्कायचेष्टितैः । पीडा मया न कार्येति, गृहाण प्रथमं व्रतम् ॥ ९६ ॥ उत्पद्यते वधो यस्माज्जीवानां जीवितैषिणाम् । पीडा वा तन्न वक्तव्यं, ममेत्यस्त्वपरं व्रतम् ॥ ९७ ॥ न हर्त्तव्यं परं द्रव्यं, सचित्ताचित्तमिश्रभित् । मयेति प्रतिपद्यस्व, त्वं तृतीयमपि व्रतम् ॥ ९८ ॥ नरतिर्यक्सुरस्त्रीणां, मनोवाक्काययन्त्रितः ।

मैथुनाद्विरतोऽस्मीति, चतुर्थं व्रतमाचर ॥ ९९ ॥ अभ्यन्तरस्तथा बाह्यो, न कर्त्तव्यः परिग्रहः । त्रिविधेन मयेत्येवं, पञ्चमं स्वीकुरु व्रतम् ॥ १०० ॥ इत्थं व्रतानि पञ्चापि, त्वं चेत्सम्यक् करिष्यसि । जिनोदितानि दिव्यर्द्धिर्लप्स्यसेऽन्यभवे तदा ॥ १०१ ॥ नच मां रुद्रदत्तोऽयं, हन्तीतिमनसा कुरु । स्वकृतान्येव कर्माणि, निघ्नन्तीति विचिन्तय ॥ १०२ ॥ अन्यच्छरीरमन्योऽहं, भोक्ता स्वकृतकर्मणः । नित्योऽहमिदमध्रौव्यं, प्रतिपद्यस्व भावत ॥ १०३ ॥ क्रोधादिभावचौराणां, भङ्क्त्वा प्रसरमादरात् । ज्ञानादिरत्नसङ्घातं, परिपालय सन्ततम् ॥ १०४ ॥ अर्हदादिनमस्कारं, परावर्त्तय चेतसि । इत्युक्तः प्रणतो भूत्वा, सर्वमङ्गीचकार सः ॥ १०५ ॥ अत्रान्तरे समागत्य, रुद्रदत्तो जघान तम् । सकृपं चारुदत्तेन, वार्यमाणोऽपि सत्वरम् ॥ १०६ ॥ तत्कृत्ती भस्त्रिके कृत्वा चारुदत्तं सशस्त्रिकम् । एकस्यां संप्रवेश्याशु, परस्यां प्राविशत् स्वयम् ॥ ७ ॥ ततो भारण्डपक्षिभ्यां, कुतोऽप्यामिषवाञ्छया । विनिपत्य समुत्क्षिप्तौ, तत्क्षणात् व्योममण्डले ॥ ८ ॥ चारुदत्तो धृतो येन, समं तस्यान्यपक्षिणा । आकाशे युध्यमानस्यापतद्भस्त्री सरोजले ॥ ९ ॥ शस्त्र्या विपाट्य तां सोऽपि, गर्भादिव विनिर्गतः । उत्तीर्णः सरसोऽपश्यद्द्वीपं रत्नाविराजितम् ॥ १० ॥ तत्राविशङ्कितो भ्राम्यन्मन्दमारुतकम्पितम् । ददर्श गिरिकूटाग्रे, वीरं चन्द्रकरो-

चारणश्रमणस्येदमिति संभाव्य वन्दितुम् । तं साधुमगमत्तूर्णमारुरोह च तं गिरिम् ॥ १२ ॥
उज्वलम् ॥ ११ ॥ चारणश्रमणस्येदमिति संभाव्य वन्दितुम् । तं साधुमगमत्तूर्णमारुरोह च तं गिरिम् ॥ १२ ॥
आतापयन्तमद्राक्षीदूर्ध्वबाहुं महौजसम् । चारणश्रमणं तत्र, ज्वलन्तमिव पावकम् ॥ १३ ॥ विनयेन तमभ्येत्य,
मुनीन्द्रं परया मुदा । ववन्दे पारितोत्सर्गो, धर्मलाभं मुनिर्ददौ ॥ १४ ॥ बभाषे च कुतस्त्वं भो !, चारुदत्त ! समागतः ? ।
चम्पायां यस्त्वया बद्धो, मोचितः खचरोऽस्मि सः ॥ १५ ॥ तत्काल एव संप्राप्तस्त्वकान्तोऽष्टापदं प्रति । प्रणष्टे प्रतिशत्रौ
मे, गतोऽहं स्वं पुरं ततः ॥ १६ ॥ कियताऽप्यत्र कालेन, व्रतादानाभिलाषिणा । स्वराज्ये स्थापितः पित्रा, स्वयं च जगृहे
व्रतम् ॥ १७ ॥ हिरण्यस्वर्णकुम्भाख्यचारणश्रमणान्तिके । अभ्युद्यतविहारी चोपात्ताशिक्षो बभूव सः ॥ १८ ॥ राज्यं पालयतः
स्थित्या, सर्वान्तःपुरशोभने । जाते भार्ये च मे वर्ये, जयसेनामनोरमे ॥ १९ ॥ मनोरमायामुत्पन्नं, तदा पुत्रद्वयं मम ।
एकः सिंहयशोनामा, वराहग्रीवकोऽपरः ॥ २० ॥ पुत्री गन्धर्वसेना च, गान्धर्वेऽतिविचक्षणा । जज्ञे विजयसेनायाः,
सौभाग्यादिगुणोत्तरा ॥ २१ ॥ अन्यदा सह विद्याभिर्दत्त्वा राज्यं स्वपुत्रयोः । चारणव्रतिनोरन्तेऽहं तयोराददे व्रतम् ॥ २२ ॥
द्वीपोऽयं कुम्भकण्ठाख्यो, लवणाम्भोधिमध्यगः । कर्कोटको गिरिश्चात्र, यस्मिन्नातापयाम्यहम् ॥ २३ ॥ देवविद्या
धरान् मुक्त्वा, चारणश्रमणांस्तथा । नान्योऽत्र शक्त आगन्तुं, कथं त्वं तु समागतः ? ॥ २४ ॥ इत्युक्त्वा विरते साधौ,

चारुदत्तोऽपि मूलत. । स्वां कथां कथयामास, तत्रागमननिष्ठिताम् ॥ २५ ॥ अत्रान्तरे समायातौ, विद्याधरनरोत्तमौ । रूपेण सदृशं साधोर्द्योतयन्तौ नभोऽङ्गणम् ॥ २६ ॥ चारुदत्तेन तौ दृष्ट्वा, वन्दमानौ मुनीश्वरम् । अस्यामितगतेः पुत्राविति चेतसि चिन्तितम् ॥ २७ ॥ कुलप्रसूतिसंसिद्ध विनयेन तमप्यमू । वन्दित्वोचितभूभागे, उपविष्टौ मुनिर्जगौ ॥ २८ ॥ भो ! भो ! स चारुदत्तोऽयमित्युक्तावादरेण तौ । ऊचतुः स्वागतं तेन, पितुर्जीवितदायिनः ॥ २९ ॥ इतश्च नभसाऽऽयान्तं, विमानं मुनिसंनिधौ । ददृशुः सर्व एवामी, दिव्यसङ्गीतनिस्वनम् ॥ ३० ॥ ततोऽवतीर्य दिव्यात्मा, व्यालोलमणिकुण्डलः । सुपर्वा चारुदत्तस्य, ववन्दे चरणद्वयम् ॥ ३१ ॥ साधुं तदनु वन्दित्वा, चारुदत्तस्य सम्मुखः । उपविष्ट उपालब्धः, खचराभ्यामेवमञ्जसा ॥ ३२ ॥ देवेभ्यो विधयः सर्वे, प्रवर्त्तन्तेऽत्र निश्चितम् । तत्किं साधुं व्यतिक्रम्य, वन्दितः श्रावकस्त्वया ? ॥ ३३ ॥ सोऽभ्यधादयमस्माकं, धर्माचार्यो यतोऽमुतः । धर्मं धर्मफलं देवं, गुरुं च ज्ञातवानहम् ॥ ३४ ॥ कथमेवमिति प्रोक्ते, खचराभ्यां सुरोऽवदत् । वाराणस्यां पुराऽभूतां, सुभद्रासुलसाभिधे ॥ ३५ ॥ द्वे परिव्राजके वेदवेदाङ्गादिविशारदे । अन्यदा याज्ञवल्क्येन, विवादे सुलसा जिता ॥ ३६ ॥ तत्प्रभृत्येव सा तस्य, शुश्रूषानिरताऽभवत् ।

अत्यन्तसंस्तवाच्चैषा [ ग्रन्थाग्रम्—५००० ] नैकान्तेऽपि निवार्यते ॥ ३७ ॥ कालो गच्छति चान्योऽन्यं, तयोः कामातुरत्वतः । संजातमैथुनासक्तिस्तारुण्यमदमत्तयोः ॥ ३८ ॥ नगरादतिदूरे च, क्रीडतोराश्रमास्पदे । जातः पुत्रोऽन्यदा तं च, छायायां पिप्पलस्य तौ ॥३९॥ परित्यज्य ततो नष्टौ, स च पिप्पलपिप्पकम् । कथञ्चित्पतितं वक्त्रे, भक्षयन्नवलोकितः ॥ ४० ॥ भद्रया सुलसास्वस्रा, ज्ञातवृत्तान्तया तया । चित्तखेदं विधायोच्चैर्नीतो बालः स्वमन्दिरम् ॥ ४१ ॥ नामप्रदानकाले च, कालाद्यौचित्यविज्ञया । यथार्थं नाम चक्रेऽस्य, पिप्पलाद इति स्फुटम् ॥ ४२ ॥ तस्याः प्रतिश्रये तेन, पेठे सर्वकलान्वितः । षडङ्गसहितो वेदो, जातो वादी महानसौ ॥ ४३ ॥ सुलसायाज्ञवल्क्याभ्यां, समं वादोऽन्यदाऽजनि । तस्य तौ विजितौ तेन, बहुलोकस्य पश्यतः ॥ ४४ ॥ भद्रया कथितं चास्य, यथा पुत्रस्त्वमेतयोः । पितृ (नृ) मेधादिमहायज्ञान्, प्रद्विष्टः प्रणिनाय सः ॥ ४५॥ ततोऽसौ पितृमेधेन, मातृमेधेन चावधीत्। पितरौ तस्य शिष्यश्च, वाग्बलिर्नाम विश्रुतः ॥ ४६ ॥ स तेन तस्य कृत्वाऽसौ, पशूनां सततं वधम् । जगाम नरकं घोरमुद्धृतः स ततः पुनः ॥ ४७ ॥ मिथिलायामजत्वेनोदपादि पशुमेधतः । पञ्चकृत्वः क्षयं नीतो, ब्राह्मणैर्जनकाध्वरे ॥ ४८ ॥ ततोऽपि षष्ठवेलायां, छगलष्टङ्कनेऽभवभूत् । वाहार्थं चारुदत्तस्य, रुद्रदत्तोऽगृहीदमुम् ॥ ४९ ॥ अन्ये-

ततः सुखेन तैः सार्द्धं, भूयः शुभविपाकतः । त्रिवर्गाभिरतस्यास्य, कालशेषोऽप्यगच्छत ॥ ६३ ॥ तदेवं चारुद-त्तोऽयं, च्युतः सर्वार्थमातुलात् । परिग्रहानिवृत्तात्मा, लेभे दुःखं यथा घनम् ॥ ६४ ॥ असन्तुष्टास्तथाऽन्येऽपि, लभन्ते दुःखमङ्गिनः । परिग्रहाग्रहस्त्याज्यो, विदित्वैवं विवेकिभिः ॥ ६५ ॥ समाप्तं चारुदत्ताख्यानकम् । भणितं दोषद्वारमधुनाऽस्यैव गुणद्वारमाह—

जे इह परिमाणकडा, संतोसपरा दढवया धीरा ।
ते जिणदासो व सया हवंति सुहभाइणो लोए ॥ ५९ ॥

'ये' इत्यनिर्दिष्टनामानः, अनेन च प्राग्गाथातः पुरुषा अभिसंबध्यन्ते, 'इह' अस्मिन् लोके 'परिमाणकड'त्ति कृतपरिमाणाः प्रस्तावाद्विहितपरिग्रहपरिमितयः सन्तोषः-इच्छानिरोधः स परः-प्रकृष्टो येषां तस्मिन् वा पराः-तन्निष्ठाः सन्तोषपराः, दृढं व्रतं येषां ते दृढव्रताः-यथावस्थितगृहीतनियमपालकाः, कुतो हेतोः ? इत्याशङ्कायां विशेषणद्वारेण हेतुमाह—'धीराः' सात्त्विका यत इति शेषः, ते किमित्याह—जिनदास इव 'सदा' सर्वदा 'भवन्ति' जायन्ते 'सुखभागिनः' शर्मभाजः 'लोके' जगति, न चेदं स्वमनीषिकयोच्यते, यत उक्तमन्यैरपि—"सर्वाः संपत्तय-

स्तस्य, सन्तुष्टं यस्य मानसम् । उपानद्गूढपादस्य, ननु चर्मावृतैव भूः ॥ १ ॥ जह २ अप्पो लोभो जह २ अप्पो परिग्गहारंभो। तह तह सुहं पवड्ढइ धम्मस्स य होइ संसिद्धी ॥ २ ॥ ” इति गाथाऽक्षरार्थः ॥ भावार्थः कथानकेनोच्यते—

पाटलिपुत्रे नगरे जिनदासः श्रावकोऽभवत् ख्यातः । सम्यग्दृष्टिः पञ्चाणुव्रतधारी गुणसमृद्धः ॥१॥ तस्यान्यदा च हट्टे तडागखनने नृपेण विनियुक्तैः । कर्मकरैरानीताः स्वर्णमया लोहसदृशकुशाः ॥ २ ॥ परिमाणस्यातिक्रमभयेन जगृहे न तेन ते विदुषा । उपनीतास्तदनु च तैर्विपणौ खलु लोभनन्दस्य ॥ ३ ॥ तेनापि लोहमूल्येन गृहीताः स्वर्णलोभतो भूयः । भणिता अन्येऽप्येवंप्राया अत्रैव विक्रेयाः ॥ ४ ॥ अज्ञानदोषतस्ते हेममयानपि च लोहमूल्येन । विक्रीणान्ति प्रतिदिनमितरो लोभेन गृह्णाति ॥ ५ ॥ अन्येद्युस्तत्सुहृदः प्रकरणमभवद्गृहे किमपि तेन । आकार्य बलान्नीतोऽनिच्छन्नपि भोजनार्थमसौ ॥ ६ ॥ भणितः पुत्रो व्रजता स्त्रीकर्त्तव्या अनेन मूल्येन । यद्यायान्ति कुशास्ते न च मर्म प्रकटितं तस्य ॥ ७ ॥ लोहमया इति बुद्ध्या न च तन्मूल्येन तेन त उपात्ताः । मुग्धतया कर्मकरैर्नीता अन्येषु हट्टेषु ॥ ८ ॥ भवितव्यतावशेन च तेष्वेको निपतितः कथञ्चिदपि ।·पाषाणोपरि दृष्टो व्यपगताकिट्टः सुवर्णमयः ॥ ९ ॥ तन्निकटवर्त्तिभिर्दण्डपाशकैस्ते नरास्ततो भणिताः । कैते लब्धाः क धृताः कस्य वितीर्णाः कियन्तो

वा ? ॥ १० ॥ एवं पृष्टाः कथयामासुस्ते सरसि खन्यमानेऽमी । लब्धा मृदा विलिप्ता लोहधिया रहसि विधृताश्च ॥११॥ जिनदासस्य च हट्टेऽवतारिताः स्वीकृता न तेनैते । क्रीताश्च लोहमूल्येन लोभनन्देन ते केऽपि ॥ १२ ॥ सविशेष-मूल्यतोषितहृदया अनुदिवसमेव तद्विपणौ । विक्रीणीमः शेषा अद्यापि च केऽपि तिष्ठन्ति ॥ १३ ॥ श्रुत्वैवं तैः कथितं नृपतेराह्वायितश्च तेनासौ । जिनदास एव पूर्वं पृष्टः किं स्वीकृता नैते ? ॥ १४ ॥ तेनोदितं परिग्रहपरिमाणं मम समरित तद्भङ्गः । मा भूदिति न गृहीताः कनकमया इति विदित्वाऽपि ॥ १५ ॥ तुष्टेन ततो राज्ञा संपूज्य प्रेषितः स्वभवनं सः । पश्चाच्च लोभनन्दानयनाय प्रेषिताः पुरुषाः ॥ १६ ॥ इतश्च—कृत्वा भोजनमेषोऽप्यायातो यावदुत्सुकः स्वगृहम् । व्यज्ञासीदगृहीतास्तांस्ततश्चिन्तयामास ॥ १७॥ अभविष्यतां ममांह्री यदि नैतौ वैरिणौ तदा-ऽयास्यम् । मित्रगृहं कथमेतद्विचिन्त्य पादौ निजौ तेन ॥ १८ ॥ आहत्य कुठारेण छिन्नावत्रान्तरे नृपतिपुरुषाः । आगत्य ग्रीवायां प्रगृह्य निन्युर्नृपतिपार्श्वम् ॥ १९ ॥ राज्ञाऽप्यपहृत्य धनं निःशेषं चौरनिग्रहेणैषः । निग्रहितस्तदेवं ज्ञात्वा लोभं समुत्सृजत ॥ २० ॥ त्यक्तलोभस्तु जिनदासवत्पूज्यो भवतीति गुणं विज्ञाय परिग्रहपरिमाणे यतितव्यमिति गुणद्वारोपदर्शकगाथाभावार्थः ॥ यतनाद्वारमिदानीमभिधीयते—

संभरइ वारवारं, मुक्कलतरगं व गेण्हइस्सामि ।
एवं वयं पुणोऽविय मणेण नय चिंतए एवं ॥ ६० ॥

गृहीतपरिग्रहपरिमाणस्य श्रावकस्येयं यतना–यदुत 'संस्मरति' चिन्तयति 'वारं २' भूयो भूयः एतावन्मात्रं परिग्रहपरिमाणमेतावन्तं कालं यावन्मया गृहीतमित्येवं, तथा कथञ्चित्संक्षिप्ते गृहीते चतुर्मासादिनियमे न प्रचुर-व्यवहाराद्याकाङ्क्षया 'मुत्कलतरकं' प्रचुरतरकमेव वाशब्दस्यैवकारार्थत्वाद् 'ग्रहीष्यामि' उपादास्ये, एतत्समा-प्त्युत्तरकालमिति शेषः, 'एतत्' परिग्रहपरिमाणलक्षणं 'व्रतं' नियमं 'पुनः' भूयोऽपि चशब्दो यतना-प्रकारान्तरसमुच्चये 'मनसा' चेतसा 'न च' नैव 'चिन्तयेत्' ध्यायेत् 'एवं' अमुना प्रकारेणेति गाथार्थः ॥

व्याख्यातं यतनाद्वारमधुनाऽतिचारद्वारमस्यैवोच्यते—

खेत्ताइहिरण्णाईधणाइदुपयाइकुप्पमाणकमे ।
जोयणपयाणबंधणकारणभावेहि नो कुणइ ॥ ६१ ॥

क्षेत्रादिहिरण्यादिधनादिद्विपदादिकुप्यमानक्रमानिति, क्षेत्रमादिर्यस्येत्येवं सर्वपदेष्वात्मीयादिशब्देन बहु-

व्रीहिं कृत्वा सर्वपदानां कुप्यान्तानां द्वन्द्वे सति मानक्रमशब्देन षष्ठीसमासे च प्रत्येकं सम्बन्धो विधेयो, यथा क्षेत्रादेर्मानक्रमो हिरण्यादेर्मानक्रम इत्यादि, मानक्रमश्च प्रमाणातिक्रमो भण्यते, ' तं नो करोती ' ति चरमपादान्ते क्रिया, गृहीतक्षेत्रादिपरिमाणः श्रावक इति सामर्थ्याद् गम्यं, कैर्न करोतीत्याह—योजनप्रदानबन्धनकारणभावैः, अत्र योजनादिपदानि पञ्च कृतद्वन्द्वानि तृतीयान्तानि, यथासङ्ख्येन चैषां सम्बन्धः, तेन क्षेत्रादिप्रमाणातिक्रमं योजनेन ' नो करोति ' न विधत्ते इत्याद्यवगम्यमिति गाथासमुदायार्थः । अवयवार्थश्चायं—क्षेत्रं—सस्योत्पत्तिभूमिः तच्च सेतुकेतूभयभेदात्त्रिधा पूर्वोक्तम्, आदिशब्दाद्वास्तुग्रहो, वास्तु च-अगारं ग्रामनगरादि च तत्रागारं त्रिप्रकारं प्रागुदितमेव, एतयोश्च क्षेत्रवास्तुनोः प्रमाणस्य योजनेन—क्षेत्रान्तरादिमीलनेनातिक्रमोऽतिचारो भवति, तथाहि-किलैकमेव क्षेत्रं वास्तु वेत्यभिग्रहवतोऽधिकतरतदभिलाषे सति व्रतभङ्गभयात्प्राक्तनक्षेत्रादिप्रत्यासन्नं तद् गृहीत्वा पूर्वेण सह तस्यैकत्वकरणार्थं वृत्त्याद्यपनयनेन तत्तत्र योजयतो व्रतसापेक्षत्वात्कथञ्चिद्विरतिबाधनाच्चातिचार इति, तथा हिरण्यं-रजतमादिशब्दात्सुवर्णं तत्परिमाणस्य प्रदानेन—वितरणेनातिक्रमो भवति, यथा केनापि चतुर्मासाद्यवधिना हिरण्यादिपरिमाणं विहितं, तत्र च तेन तुष्टराजादेः सकाशात्तदधिकं तल्लब्धं, तच्चान्यस्मै व्रत-

भङ्गभयात्प्रददाति, पूर्णेऽवाधे ग्रहीष्यामीति भावनयेति व्रतसापेक्षत्वादतिचारः, तथा धनं—गणिमधरिममेयपरिच्छेद्य-भेदाच्चतुर्विधं पूर्वं व्याख्यातमेव, आदिशब्दात् धान्यं-व्रीह्यादि एतत्प्रमाणस्य बन्धनतोऽतिक्रमो भवति, तथाहि-किल कृतधनादिपरिमाणस्य कोऽपि लभ्यमन्यद्वा धनादि ददाति, तच्च व्रतभङ्गभयाच्चतुर्मासादिपरतो गृहगतधना-दिविक्रये वा कृते ग्रहीष्यामीति भावनया बन्धनेन—नियन्त्रणेन रज्ज्वादिसंयमनेन सत्यङ्कारदानादिरूपेण वा स्वी-कृत्य तद्गेह एव तत्स्थापयतोऽतिचारः, तथा द्विपदं—पुत्रकलत्रदासीदासकर्मकरशुकसारिकादिरूपम्, आदिशब्दा-द्गवादिचतुष्पदपरिग्रहः, तेषां यत्परिमाणं तस्य कारणेन—गर्भाधानविधापनेनातिक्रमोऽतिचारो भवति, यथा किल केनापि संवत्सराद्यवधिना द्विपदचतुष्पदानां परिमाणं कृतं, तेषां च संवत्सरमध्य एव प्रसवेऽधिकद्विपदादिभावाद् व्रतभङ्गः स्यादिति तद्भयात्कियत्यपि काले गते गर्भग्रहणं कारयतो गर्भस्थद्विपदादिभावेन बहिर्गततदभावेन च कथञ्चिद् व्रतभङ्गादतिचारः, तथा कुप्यम्—आसनशयनादिगृहोपस्करस्तस्य यन्मानं तस्य भावेन—तत्पर्यायान्तररूपे-णातिक्रमो भवति, यथा किल केनापि दश करोटकानीति कुप्यस्य परिमाणं कृतं, ततस्तेषां कथञ्चिद् द्विगुणत्वे सति व्रतभङ्गभयात्तेषां द्वयेन द्वयेनैकैकं महत्तरं कारयतः पर्यायान्तरकरणे सङ्ख्यापूरणात् स्वाभा-

विकसंख्याबाधनाच्चातिचारः, अन्ये त्वाहुः—भावेन—तदर्थित्वलक्षणेन विवक्षितकालावधेः परतोऽहमेतद्ग्रहीष्याम्यतो नान्यस्मै देयमिति पराप्रदेयतया व्यवस्थापयत इति, एते चातिचारा मूलसूत्र एवमभिधीयन्ते 'खेत्तवत्थुपमाणाइक्कमे हिरण्णसुवण्णपरिमाणाइक्कमे' इत्यादि, यथाश्रुतत्वेन चैषामभ्युपगमे भङ्गातिचारयोर्न विशेषः स्यादिति · तद्विशेषोपदर्शनार्थमाचार्येण योजनप्रदानेत्यादिभावना दर्शिता, एतद्भावनोपदर्शनादेवान्येषां सहसाभ्याख्यानादीनामतिचाराणामनुपदर्शितभावनानामपि भावनोत्प्रेक्षणीया, सा च यथाबोधं केषाञ्चिद्दर्शितैवास्माभिः, यच्च क्षेत्रादिपरिग्रहस्य नवविधत्वेन तत्सङ्ख्यातिचारप्राप्तौ पञ्चसङ्ख्यत्वमुक्तं तत्सजातीयत्वेन शेषभेदानामत्रैवान्तर्भावात्, शिष्यहितत्वेन च प्रायः सर्वत्र मध्यगतेर्विवक्षितत्वात्पञ्चकसङ्ख्ययैवातिचारपरिगणनमतश्चतुःषडादिसङ्ख्याऽतिचाराणां गणनमुपपन्नमिति गाथार्थः ॥ ६१ ॥ गतमतिचारद्वारमधुना भङ्गद्वारमुच्यते—

जइ जाणंतो गेण्हइ अहियं धण्णाइ तो भवे भंगो ।
अइसंकिलिट्ठचित्तस्स तस्स परिणामविरहाओ ॥ ६२ ॥

'यदि' चेत् 'जानानः' अवबुध्यमानः 'गृह्णाति' आदत्ते 'अधिकं' अर्गलम्, अङ्गीकृतपरिमाणा-

दिति गम्यते, किं तत् ? इत्याह—धान्यादि—धान्यधनद्विपदादि ‘ ततः ’ तस्मात्, किं ?—‘ भवेत् ’ जायेत ‘ भङ्गः ’ सर्वाभावरूपः, कस्य ? इत्याह—‘तस्य’ आभोगेन स्वीकृतपरिमाणातिरिक्तग्राहिणः, इदं चानन्तरपदादुपरिवर्त्त्यपि अत्र योज्यते अर्थानुगुण्यात्, किंविशिष्टस्येत्याह—अतिशयेन सङ्क्लिष्टं चित्तं यस्य स तथा तस्य—अतिरौद्राध्यवसायिचेतसः, कस्मात् ?—‘ परिणामाविरहात् ’ व्रतपरिणत्यभावादिति गाथार्थः ॥ ६२ ॥ भावनाद्वारमधुना——

चत्तकलत्तपुत्तसुहिसयणसबंधवमित्तवग्गया, खेत्तसुवण्णदविणधणधण्णविवज्जियसयलसंगया ।
देहाहारवत्थपत्ताइसु दुरुज्झियममत्तया; चिंतसु सुविहियावि तं सावय ! मोक्खपहंमि पत्तया ॥६३॥

शृणोति—आकर्णयति संप्राप्तदर्शनादिगुणो यतिभ्यः सकाशात्सामाचारीमिति श्रावकस्तस्य सम्बोधनं हे श्रावक—हे श्राद्ध ! ‘त्वं’ भवान् ‘चिन्तयस्व’ परिभावय, कान् ?-‘सुविहितान्’ शोभनं विहितं येषां ते तथा तान्, सदनुष्ठानान् यतीनित्यर्थः, किंभूतान् ?—मोक्षस्य पन्था मोक्षपथस्तस्मिन् मोक्षपथे ‘ प्राप्तान् ’ लग्नान्, सम्यग्ज्ञानदर्शनचारित्ररूपमुक्तिमार्गे समासक्तानिति भावना, पुनः किंविशिष्टान् ? इत्याह—त्यक्तकलत्रपुत्रसुहृत्स्वजनसबान्धवमित्रवर्गान् ’ अत्र सह बान्धवैःबन्धुभिर्वर्त्तन्ते इति सबान्धवः स चासौ मित्रवर्गश्चेति कर्मधारयं कृत्वा कलत्रादिपदानां

सर्वेषामपि द्वन्द्वः कार्यः, पश्चाच्च त्यक्तशब्देनान्यपदार्थो बहुव्रीहिः, एषां चायं विशेषः—कलत्रं—भार्या पुत्रः—तनयः
सुहृत्—स्नेहविषयपात्रे प्रतिकूलकारिण्यपि न दौर्मनस्यकारी स्वजनः—एकजात्यादिसम्बद्धः प्रतिपन्नको वा बान्धवो—
भ्रात्रादिः मित्रं—सहपांशुक्रीडितादिः, अनेन सचित्तद्विपदस्वरूपपरिग्रहपरित्यागोऽभिहितो, न चैतावतैव क्षेत्रा-
दिसद्भावे निष्परिग्रहत्वमुपजायत इत्युपदर्शनाय विशेषणान्तरमाह—' क्षेत्रसुवर्णद्रविणधनधान्यविवर्जितसकल-
सङ्गान् ' क्षेत्रं—सस्योत्पत्तिस्थानं सुवर्णं—हेम द्रविणं—द्रम्मरूपकादि द्रव्यं धनं—गवादि धान्यं—शाल्यादि एतेषां
द्वन्द्वे एतान्येव विवर्जितः—त्यक्तः सकलः—सर्वसङ्गहेतुत्वात् सङ्गः—अभिष्वङ्गहेतुर्यैस्ते तथा तान्, एतेन त्वपदचतु-
ष्पदपरिहारः प्रतिपादितः, सत्यपि च कलत्रक्षेत्राद्यभावे देहादौ मूर्छासद्भावात् सपरिग्रह एवेत्यतो विशेषणान्तरमाह-
' देहाहारवस्त्रपात्रादिषु दूरोज्झितममत्वान् ' देहः—शरीरं आहारो—भोजनं वस्त्रं-वासः पात्रं—भाजनम् आदिशब्दात्कम्बल-
पादप्रोञ्छनदण्डकादिनिःशेषधर्मोपकरणग्रहः, ' सुविहियावि ' त्ति अपिशब्दोऽत्र योज्यते तत आस्तामन्येष्वधिक-
रणेषु गृहादिकेष्वपि धर्मोपकरणेषु दूरम्—अतिशयेनोज्झितं—त्यक्तं ममत्वं—न मे इति बुद्धिर्यैस्ते तथा तान्, एवं-
३१ विधान् सुविहितान् ' चिन्तयस्वे ' त्यनुमन्यस्व, अनुमत्या चैतत्सूचितं—यद्यपि श्रावको विषयसुखपिपासाद्या-

कुलितचित्तवृत्तिः सकलसङ्गपरित्यागं कर्तुमसमर्थस्तथाऽप्येवंविधसाधुपरिभावनया जनिततद्बहुमानातिशयोच्छलितजीववीर्यः कुर्यादपीलापुत्रन्यायेनेति द्विपद्यर्थः । भणितं भावनाद्वारं, तद्भणनाच्च समाप्तं नवभिरपि द्वारैः पञ्चमाणुव्रतं, तत्समाप्तौ गतानि पञ्चाणुव्रतानि, अधुना गुणव्रतानामवसरः, तानि च त्रीण्यपि प्रत्येकमेतैरेव नवद्वारैर्व्याख्येयानि, अत आदौ प्रथमं दिग्व्रतनामकं गुणव्रतमाद्यद्वारेणाह–

तत्तायगोलकप्पो, अप्पा अणिवारिओ वहं कुणई ।
इइ जा दिसासु विरई, गुणव्वयं तमिह नायव्वं ॥ ६६ ॥

'तप्तायोगोलकल्पः' वह्निप्रतप्तलोहपिण्डतुल्यः 'आत्मा' जीवः 'अनिवारितः' अप्रतिषिद्धः, दिशापरिमाणेनानियन्त्रितदिग्विभाग इत्यर्थः 'वधं' विनाशं जीवानामिति गम्यते 'करोति' विदधाति, तप्तायोगोलकल्पत्वं च जीवस्य प्रमत्ततया यथा तथा हिंसाहेतुत्वाद् अनिवृत्तिरेव प्रवृत्तिरितिवचनाद्वा, यदुक्तं–"तो बंधमणिच्छंतो कुज्जा सावज्जजोगविणिवित्तिं । अविसयअणिवित्तीएऽसुहभावा दढयरं स भवे ॥ १ ॥" ततः कर्मबन्धमनिच्छन् कुर्यात् सावद्ययोगविनिवृत्तिम्, अविषयः–स्वयम्भूरमणादिस्तस्मिन्नप्यनिवृत्त्या–विरत्यकरणेनाशुभभावात्–क्लिष्टाध्यवसायाद्

दृढतरं स बन्धो भवेद्, अतोऽनिवृत्तिरेव प्रवृत्तिरिति सिद्धं, इतिहेतोः, यद्वा इत्येवं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया या दिशासु—आशासु विरतिः—गमनं प्रति विरमणं गुणव्रतमाद्यमिति शेषः, तदिह ज्ञातव्यमिति, कोऽर्थः?—दिग्व्रतनामकमाद्यगुणव्रतमत्र व्रतविचारेऽवगन्तव्यं स्वरूपेणेति गाथार्थः ॥ भेदद्वारमधुना—

पुव्वावरउत्तरदाहिणेण उड्ढं अहे य परिमाणं ।
छच्चेव तस्स भेया गुणवयस्सेह नायव्वा ॥ ६७ ॥

इह दिग्व्रताभिधानगुणव्रतस्य दिक्षट्कसम्बन्धेन षड् भेदा उच्यन्ते, तथा चाह—पूर्वापरोत्तरदक्षिणेनोर्ध्वमधश्च परिमाणं, तत्र प्राग्दिग्भागः पूर्वः, पश्चिमदिग्भागोऽपरः, उदग्दिग्भाग उत्तरो, याम्यदिग्भागो दक्षिणः, समाहारद्वन्द्वश्चात्र, ततः पूर्वादिदिग्भागेनैतावन्मया गन्तव्यं, एवं यत्परिमाणं तच्चतुर्दिगपेक्षया चतुर्विधं जातं, न केवलं पूर्वादिदिग्भागेन परिमाणं, तथोर्ध्वमधश्च—उपर्यधस्ताच्च 'परिमाणं' परिमितिः, अनेन च द्वयेन सह षोढा, नामग्राहं चैते भेदा एवं वाच्याः—पूर्वदिकपरिमाणं अपरदिक्परिमाणं उत्तरदिक्परिमाणं दक्षिणदिक्परिमाणं ऊर्ध्वदिक्परिमाणमधोदिक्परिमाणमिति, अत एवाह—'षट् चैव तस्य भेदाः' षडिति सङ्ख्या चशब्दोऽनुक्तसमुच्चयार्थः

तेनान्यचतुर्विदिक्प्रक्षेपेण दश वा भेदास्तस्य, कस्येत्याह–' गुणव्रतस्य ' गुणाय व्रतं गुणव्रतं, प्राणातिपाताणुव्रतादिपालनाय वृत्तिकल्पं तस्य ' इह ' अत्र भेदप्रक्रमे ' ज्ञातव्याः ' बोद्धव्या इति गाथार्थः ॥ यथा जायत इदं तथाऽधुनोच्यते—

परिमियखेत्ताउ बहिं जीवाणं अभयदाणबुद्धीए ।
दिसिवयगहपरिणामो उप्पज्जइ तिव्वसड्डस्स ॥ ६८ ॥

परिमितक्षेत्रात्–पूर्वादिदिक्षु दशस्वपि प्रत्येकमेतावन्ति योजनानि मया गन्तव्यमित्येवं परिच्छिन्नभूदेशलक्षणाद् ' बहिः ' बाह्यस्थाने ' जीवानां ' जन्तूनां ' अभयप्रदानबुद्ध्या ' जीवितरक्षावितरणधिया ' दिग्व्रतग्रहपरिणामः ' पूर्वादिदिग्गमनविरत्यादानपरिणतिः ' उत्पद्यते ' जायते ' तीव्रश्रद्धस्य ' उत्कटप्रधानभावस्येति गाथार्थः ॥ दोषद्वारमधुना प्रतिपाद्यते——

दिसि परिमाणं न कुणंति कहवि मोहेण मोहिया पावा ।
तिमिसगुहाए जह कोणिओ हु निहणं नरा जंति ॥ ६९ ॥

॥ १८८ ॥

दिशि—दिशाविषये परिमाणं—परिमितत्वं ' न कुर्वन्ति ' नो विदधति ' कथमपि ' केनापि प्रकारेण, ' पापाः ' गुरुकर्माणः कीदृशाः सन्तः ? इत्याह—' मोहेन ' अज्ञानेन ' मोहिताः ' मूढीकृताः, पुनः कथम्भूताः ? —' पापाः ' गुरुकर्माणः ' तिमिसगुहायां ' तिमिसाभिधानवैताढ्यकन्दरायां ' यथा कोणिकः ' अशोकचन्द्र इवेत्यर्थः, ' हुः ' अवधारणे ' निधनं ' विनाशं ' नराः ' पुरुषाः ' यान्त्येव ' व्रजन्त्येवेत्यक्षरार्थः ॥ समुदायार्थयोजना तु स चाग्रे योक्ष्यते, यत्तच्छेपेणेत्थं कार्या—ये नरा मोहमोहिताः पापाः दिक्परिमाणं न कुर्वन्ति ते तिमिसगुहायां कोणिकवन्निधनं यान्तीति गाथासङ्क्षेपार्थः । व्यासार्थस्तु कथानकगम्यः, तच्चेदम्——

चम्पानगर्यां श्रेणिकराजपुत्रोऽशोकचन्द्रापरनामा कोणिकनरपतिर्बभूव, स च यथा श्रेणिकराजे प्राग्भवाबद्धवैरस्तद्भार्याया एव चेल्लणायाः सुतत्वेनोत्पेदे, यथा च प्रवर्द्धमानो वैमात्रिककालादिकुमारदशकं प्रत्येकं राज्यैकादशांशैप(शार्प)णेन सहायीकृत्य स्वपितरं श्रेणिकं बद्धा राज्यं स्वीकृतवान्, यथा च विषभक्षणेन पितर्युपरते तच्छोकेनैव राजगृहनगरं परित्यज्य चम्पापुरीं राजधानीं चकार, यथा च स्वसहोदरहल्लविहल्लव्यतिकरात् सम स्वमातामहचेटकराजेन सङ्ग्राममङ्गीकृत्य कालादिषूपरतेषु संगृहीतसमस्ततद्बलो बहोः कालात् महाकष्टेन वैशालीं नगरीं जग्राह, यथा च चेट-

कराजस्य देवलोकगमने सर्वत्राप्रतिस्खलिताज्ञैश्वर्यो महाराजो भूत्वा भूयश्चम्पानगर्यामाजगाम, तथा सविस्तरं सप्रसङ्गं च मूलावश्यकटीकादितोऽवसेयं, इह तु प्रस्तुतगाथार्थघटनाय किञ्चिदेव कथ्यते, तस्य महामहीपतेरसाधारणपराक्रमाक्रान्तसमस्तसामन्तचक्रस्य चक्रस्वस्तिकादिसल्लक्षणक्षूणपाणिपादाद्यवयवस्य प्राग्भवोपात्तप्रधानपुण्योदयसम्पाद्यमानासमानसकलराज्याङ्गस्य समं पद्मावतीप्रमुखान्तःपुरेण जीवलोकसारं पञ्चप्रकारं विषयसुखमनुभवतोऽतिचक्रमुः कियन्तोऽपि वत्सराः, अन्येद्युश्च द्युसदःशतसहस्रकोटिसंततोपसेव्यमानपादपङ्कजः पादपङ्कजसंस्पर्शपवित्रितसकलेलातलः सकलेलातलप्रतीतबालकालप्रभृतिमेरुपृष्ठकम्पाद्यनेकाकारचारुचरितः चारुचरितवर्णनासमयशक्रसमुदाहृतयदीयसत्त्वाधिकत्वगुणश्रवणसमुत्पन्नरोषातिरेकसङ्गमकविरचिताविचित्रषाण्मासिकोपसर्गवर्गाप्रतिहतप्रवृद्धनिरर्गलशुभध्यानानलनिर्दग्धकर्मेन्धनः तस्यामेव चम्पापुर्यां श्रीमन्महावीरतीर्थकरः समवसृतः, उद्यानपालकादिविदिततदागमनवृत्तान्तः कोणिको निश्चक्राम महाविभूत्या वन्दनार्थं, प्राप्तः समवसरणदेशं, परित्यक्तच्छत्रचामरादिराज्यालङ्कारः प्रदक्षिणात्रयविधानपूर्वं भक्तिभरावनम्रमस्तको विधिवदभिवन्द्य भगवत्पादारविन्दद्वन्द्वं उचितभूप्रदेशे समुपविवेश, प्रारब्धायां च भगवता धर्मदेशनायामुपदर्शिते धर्माधर्मफलविभागे प्रस्तावोचितं पप्रच्छ कोणिकः-भगवन् ! यत्त्वया

धर्मफलमुपवर्णयता देवादिवर्णनं कृतं, तत्र चक्रिणोऽपि धर्ममाहात्म्येन भवन्तीति कथितं, ते चानिवृत्तकामभोगा एव यदि म्रियन्ते तदा क्कोत्पद्यन्ते ?, भगवानुवाच—सप्तमनरकपृथिव्यां, कोणिको जगाद—अहं क यास्यामि ?, परमेश्वरोऽब्रवीत्—त्वं षष्ठपृथिव्यां, राजा बभाण—किमिति ?, तीर्थकरो बभाषे—त्वं चक्रवर्त्ती न भवसि, नृपतिनाऽभ्यधायि—ननु कोऽयंऽ नियमः ?, किं चक्रवर्त्तिन एव सप्तमपृथिव्यामुत्पद्यन्ते अथवा चक्रवर्त्तिनः सप्तमपृथिव्यामेव जायन्ते ? यद्वा चक्रिणस्तस्यां भवन्त्येव ?, तीर्थाधिपतिरुवाच—अमुक्तकामा अमी सप्तमीमेव गच्छन्ति, मुक्तकामास्तु देवलोकं मोक्षं चेति नियमः, पृथ्वीपतिरवोचत्—अहं कथं न चक्री ?, स्वाम्यभिदधौ—य एवोत्पन्नचतुर्दशमहारत्नः पूर्वादिदिग्विजयक्रमेण प्रसाधितषट्खण्डभरतक्षेत्रः स एव चक्री, त्वं तु न तथा, ततस्तत्प्रभृत्येव स्वकल्पनया कृत्रिमरत्नान्युत्पाद्य कथञ्चिद्वैताढ्यादर्वाग्वर्त्ति खण्डत्रयं वशीकृत्य परभागवर्त्तिखण्डत्रितयविजयाय तिमिसगुहामयासीत्, तस्यां च किरिमालकं गुहापालकमादिदेश—यथा भो ! भो ! किरिमालक ! अहमशोकचन्द्रनामा चक्रवर्त्ती वैताढ्यपरभागवर्त्तिखण्डत्रयाजिगीषया तिमिसगुहामुद्घाटयामि तदुद्घाटयेमामिति आदिष्टोऽसावभाणीत्—भो ! भो ! अस्यामवसर्पिण्यां द्वादश चक्रिणो भरताद्या ब्रह्मदत्तपर्यन्ताः, ते च

सर्वेऽप्यतिक्रान्ताः, ततः कोणिकोऽभणत्—अहं त्रयोदशश्चक्री, किरिमालिकः प्राह—भो ! भो ! मा विनाशभाग् भूः, गच्छ स्वस्थानं, किमनेनाशक्यानुष्ठानेन भवतः प्रयोजनं ?, ततोऽसौ निवार्यमाणोऽप्येवं किरमालकेन यावद्भूयो भूयः स्वाग्रहं न मुमोच तावत्कुपितेनानेनाहत्य चपेटया कपोलदेशे नीतः पञ्चत्वं, गतः षष्ठपृथ्वीं तमःप्रभाख्यां, एवं चाकृतदिक्परिमाणानां विज्ञायेहलोक एव दोषं तत्परिमाणकरण एव बुधैर्यत्नो विधेय इति गाथाभावार्थः ॥ गुणद्वारस्येदानीमवसरोऽतस्तन्निगद्यते—

जह चंडकोसिओ खलु निरुद्धदिट्ठीमणोवईकाओ ।
तह अन्नोऽवि सउन्नो सवसुहाणं इहाभागी ॥ ७० ॥

' यथा ' येन प्रकारेण ' चण्डकोशिकः ' चण्डकोशिकाभिधानतापसजीवसर्पः ' खलु ' निश्चये वाक्यालङ्कारे वा निरुद्धा—निवारिता दृष्टिमनोवचःकायाः—नयनमानसवचनदेहा अवलोकनचिन्तनभणनाहिण्डनानि प्रतीत्य येन स निरुद्धदृष्टिमनोवचःकायः, अत्र च प्राकृतलक्षणेन ' दिट्ठी ' त्ति दीर्घत्वं, यद्वा ' निरुद्धदिट्ठी '-त्येतदेव विशेषणपदं, मनोवचःकाय इति च प्राकृतत्वेन विभक्तिवचनव्यत्ययाभ्यां मनोवचःकायैः सुखभाक्

संवृत्त इति साध्याहारं योज्यं, ' तथा ' तेन प्रकारेण ' अन्योऽपि ' अपरोऽपि ' सपुण्यः ' पुण्योदयवान् ' सर्व-
सुखानां समस्तसौख्यानामिह--जगति आभागी--भागी भाजनं भवति, गृहीतदिक्परिमाणः श्रावक इति गम्यते,
इति गाथाक्षरार्थः, समुदायार्थस्त्वेवं--यथा चण्डकौशिको निरुद्धदृष्टिमनोवचःकायो यद्वा निरुद्धदृष्टिर्मनोवचःकायैः
सर्वसुखानां भागीभूतस्तथाऽन्योऽपि सपुण्य इति गाथासङ्क्षेपार्थः, विस्तरार्थस्तु कथानकज्ञेयस्तच्चेदम्--

एकस्मिन् गच्छे क्षपको वर्षाकाले मासोपवासपारणकदिवसे क्षुल्लकेन सह भिक्षाचर्यायां प्रविष्टः कथञ्चिद-
नुपयोगतो मण्डूकिकां पादेनाक्रान्तमात्रां प्राणेभ्यः पृथक्कृतवान्, ततः क्षुल्लकेनोदितः--क्षपकर्षे ! त्वया मण्डूकिका
व्यापादिता, क्षपक इतस्ततस्तत्स्थानवर्तिनीरन्या अपि मतमण्डूकिकास्तस्योपदर्श्य रे रे दुष्टशैक्ष ! किमेता अपि
मया व्यापादिताः ? इति जजल्प, क्षुल्लकस्तु क्षुत्क्षाम एषः नायं समयोऽस्य प्रतिप्रेरणायां, प्रस्तावान्तरे स्मरयिष्या-
मीति विचिन्त्य तदा मौनमेवशिश्रियद्, इतरस्तु भिक्षामादाय स्वोपाश्रये गुर्वालोचनादिपूर्वं भोजनादिव्यापारावसाने
सायंतनावश्यकवेलायां यावदालोच्योपवेष्टुमारेभे तावत् काल एष स्मरणाया इति विचिन्त्य क्षुल्लकः--क्षपक ! मण्डूकि-

कामालोचयेति स्मरयामास, सोऽप्यहं मध्येसाधूपहासितोऽनेन तद्दर्शयाम्यमुष्य दुर्विनयफलमिति संक्रुद्धमानसः समादाय स्वोपवेशनपीठं प्रधावितो यावत्तस्योपरि तावदन्तराल एवापातितः स्तम्भे मृतो मर्माघातेनोदपादि विराधितश्रामण्यो ज्योतिष्केषु, स्वायुःक्षये ततश्च्युतोऽत्रैव भरतक्षेत्रे कनकखलाभिधानतापसाश्रमे पञ्चशतसङ्ख्यतापसाधिपतिभार्यायास्तापस्या उदरे उत्पेदे, जातश्चोचितसमये, गतो वृद्धिं कालक्रमेण, स्वभावतश्चण्डः कौशिककुलश्चेति चण्डकौशिकनामा लोके प्रसिद्धिमगमत्, अन्यदा च परलोकान्तरिते पितरि स एव कुलपतिः संवृत्तो, वनखण्डमूर्छया न ददाति तापसवर्गस्य फलपुष्पकन्दाद्यादातुं, ततो गतोऽन्यवनमसौ, अपरेद्युश्च नातिदूरे श्वेतव्या नगर्या राजकुमारकाश्चण्डकौशिकस्य प्रयोजनान्तरेणाटवीं गतस्य समागत्याश्रमं भङ्क्त्वा वनखण्डं बीजपूरकादिफलानि गृहीतवन्तः, ततो गोपालदारकैः कथिते चण्डकोशिकोऽतिरोषपूरितः परशुहस्तः प्रधावितस्तद्वधाय, सर्वेऽपि प्रपलायिता दिशोदिशम्, एषोऽपि वेगेनागच्छन् प्रस्खलितः कथञ्चित् पपात भूमौ तेनैव कुठारेण विदारितमस्तको जगाम यममदिरं, जज्ञे तत्रैव दृष्टिविषसर्पत्वेन, तापसा अपि तं मृतमाकर्ण्य भूयोऽपि समाजग्मुस्तमेवाश्रमं, सर्पस्तु कतिपयादिनैरुपरूढप्रौढविषशक्तिः पूर्वाभ्यासेन तत्रैव वने गाढं मोहमुपगतः परिभ्रमन् सर्वतो यत् किमपि चटककपोतादि पश्यति

तद्दिपापूर्णलोचनाभ्यामवलोक्य भस्मसात्करोति, ततस्ते तापसाः केचित्तेन दग्धाः केचिद्वनं दृष्ट्वा(च नंष्ट्वा)गताः, इत्थं
चासौ द्वादशयोजनप्रमाणं क्षेत्रमुद्वास्य प्रतिदिनमुभयसन्ध्यं पर्यट्य उटजमण्डपिकाबिले तिष्ठन् सुखमास्ते स्म, इतश्च—
भगवान् महावीरश्छद्मस्थकाले प्रथमं वर्षाकालं शूलपाणियक्षायतने विधाय लोकेन निवार्यमाणोऽपि
तमाश्रममुपेत्य समीपे तदीयमण्डपिकायाः कायोत्सर्गेण तस्थौ, तद्गन्धेन निर्गतो बिलाद्बहिः, दृष्ट्वा भगवन्तं मदी-
यमण्डपिकाऽभ्यर्णवर्त्त्येष कश्चिन्निर्भयस्तिष्ठतीति चिन्तयन्नत्यन्तं क्रुद्धस्तद्दिधक्षया विलोक्य सूर्यं यथा २ निभा-
लयामास भगवत्संमुखं तथाऽनिर्विषीभूते विलोचने, ततो दंष्ट्राभिर्दष्ट्वा विषवेगविघूर्णितो मा ममैवोपरि पतिष्यतीति
बुद्ध्या दूरमपसृत्य यावदीक्षाञ्चक्रे तावद्दंशस्थाने गोक्षीरधवलमाकलय्य रुधिरपूरमाकर्ण्य च भगवदुक्तम् 'उपशाम्य
भो चण्डकौशिक! उपशाम्येति वचनमीहापोहामार्गणतः समुद्भूतजातिस्मरणः क्षपकभवाद्यनुभूतकोपफलं परि-
भाव्य भगवत्समीपे विरचितानशनप्रतिपत्तिर्बिलप्रक्षिप्तवदनः सकलसत्त्वक्षामणाध्यवसायी विहितकषायजयोऽ-
र्द्धमासं तस्थौ, भगवानपि मा कश्चिदेनमुपद्रोष्यतीतिबुद्ध्या तत्रैव तथैवासाञ्चक्रे, लोकोऽपि स्वामिनः
सुखदुःखवार्त्तानिरूपणार्थं वृक्षाद्यन्तरितो यावत्तथैव तच्चेष्टामैक्षिष्ट तावदेवमकृत चेतसि—नूनमेष लोचनविषो दंद-

शूकः कथञ्चित्तेनैवोपशमं ग्राहितः, कथमन्यथाऽक्षतमूर्तिरेवमेषोऽत्र संतिष्ठते ?, ततो निकटीभूतो विषधरं तथास्थितं वीक्ष्य काष्ठलेष्ट्वादिप्रक्षेपैः परीक्ष्यैकान्तोपशान्तं दुग्धघृतादिभिरभ्यर्चयामास, तद्गन्धेन च कीटिकादिभिरनिशमेव भक्ष्यमाणः सम्यगधिषह्य तां वेदनां पञ्चदशे दिने मृतः सहस्रारकल्पे महर्धिकसुरत्वेन समुत्पन्नः, तदेवमसौ दृग्विषो भुजङ्गमो निरुद्धदृष्टिमनोवाक्कायो यथेह लोके पूजायाः परत्र च देवलोकसुखानामाभागी संपन्नः, एवं प्रतिपन्नदिक्परिमाणः श्रावकोऽपि निरुद्धात्मा सकलसुखभागी जायत इति मत्वाऽत्र यतितव्यमित्युपदेशगर्भो गाथाभावार्थः ॥ यतनेदानीं प्रक्रम्यते—

फलसंपत्तीवि धुवा जीवाणं तहवि जत्थ उवघाओ ।
पंचिंदियमाईणं तत्थ न गच्छंति ते कहवि ॥ ७१ ॥

'फलसम्प्राप्तिः' कार्यनिष्पत्तिः अपिः संभावने 'ध्रुवा' निश्चिता, ध्रुवमिति वा पाठः, 'जीवानां' प्राणिनां प्रक्रमात्स्वीकृतदिक्परिमाणानां यद्यपीति गम्यते, अथवा 'जीवानां' पञ्चेन्द्रियादीनामित्यत्र संबध्यते, 'तथाऽपि' एवमपि 'यत्र' क्षेत्रे 'उपघातः' उपपीडा पञ्चेन्द्रियादीनां मकारोऽलाक्षणिकः पञ्चेद्रियाद्येकेन्द्रियान्तानां पश्चानु-

पूर्व्यां ' तत्र ' तस्मिन् परिमितक्षेत्राभ्यन्तरेऽपीति भावः ' न गच्छन्ति ' नो यान्ति जीवाः ' कथमपि ' केनापि
प्रकारेणेत्यवयवार्थः, समुदायार्थस्त्वेवम्–यद्यपि विहितदिक्परिमाणानां जीवानां परिमितक्षेत्राभ्यन्तरेऽपि क्वचिदभिल-
पितफलप्राप्तिरवश्यंभाविनी संभाव्यते तथाऽपि यत्रोपघातः पञ्चेन्द्रियादीनां तत्र ते व्रतातिक्रमाभावेऽपि न गच्छन्तीति
यतना, यथा मण्डूकिकाटोलकीटिकाद्याकुलमार्गे, अन्यथा दिक्परिमाणकरणस्य किं फलं स्याद् ?, जीवोपमर्दस्य तन्म-
ध्येऽपि भावादिति तात्पर्यं, पञ्चेन्द्रियादीनामित्यत्र चादौ पञ्चेन्द्रियग्रहणं पञ्चेन्द्रियातिपातस्य प्रभूतप्रायश्चित्तविषयत्वेन
महादोषख्यापनार्थम्, अन्यथैकेन्द्रियादीनामिति पूर्वानुपूर्व्यैव निर्दिशेदिति गाथार्थः ॥ अतिचारद्वारमितः प्रस्तूयते——

उड्ढं अहे य तिरियं अतिकमं तहय खेत्तवुड्ढिं च ।
सइअंतरद्धमेत्थं वज्जेज्जा पंच अइयारे ॥ ७२ ॥

' ऊर्ध्वं ' पर्वतशिखरादौ ' अधः ' कूपादौ ' चः ' समुच्चये ' तिर्यक् ' पूर्वादौ ' अतिक्रमं ' उल्लङ्घ-
नम्, अङ्गीकृतयोजनादिपरिमाणस्येति गम्यते, वर्जयेदिति पश्चिमपादात्क्रियाऽभिसंबध्यते, तथा क्षेत्रस्य–प्राच्यादि-
३३ दिग्गृहीतयोजनादिलक्षणस्य वृद्धिः–वर्द्धनमपरदिग्गृहीतक्षेत्रप्रमाणप्रक्षेपेण दीर्घीकरणं क्षेत्रवृद्धिरतां च वर्जयेत्,

अत्र तथाशब्दः प्रकारे, तस्य चैवं भावना—यथोर्ध्वाधस्तिर्यगतिक्रममतिचारतया प्रतीतं वर्जयेत् तथा क्षेत्रवृद्धिं च, चः प्राक्तनपदापेक्षया समुच्चये, तथा चेति चकारोऽग्रे योज्यः, स्मरणं स्मृतिः—उपयोगस्तस्या अन्तर्द्धानमन्तर्द्धा-भ्रंशः स्मृत्यन्तर्द्धा तां च 'अत्र' अस्मिन्नतिचारप्रक्रमे 'वर्जयेत्' त्यजेत् 'पञ्चातिचारान्' पञ्चसङ्ख्यदिग्व्रतातिक्रमभेदान्, एतेषां चाद्यत्रयस्यातिक्रमादिभिरतिचारत्वमन्यथाप्रवृत्तौ तु भङ्ग-रूपतैव, क्षेत्रवृद्धिस्तु केनचिच्छ्रावकेण पूर्वापरदिशोः प्रत्येकं योजनशतं गमनपरिमाणं कृतं, स चोत्पन्नप्रयोजन एकस्यां दिशि नवतिं व्यवस्थाप्यान्यस्यां तु दशोत्तरं योजनशतं करोति, तदभिप्रायेण द्विधाऽपि योजनशतद्वय-परिमाणस्याव्याहतत्वात्, एवमेकत्र क्षेत्रं वर्द्धयतो व्रतसापेक्षत्वादतिचारः, स्मृत्यन्तर्द्धा च केनचित्किल पूर्वस्यां दिशि योजनशतरूपं परिमाणं कृतमासीद्, गमनकाले च कथञ्चिद्व्याकुलत्वप्रमादित्वमत्यपाटवादिना न स्पष्टतया स्मरति—किं शतं परिमाणं कृतमुत पञ्चाशत्?, तस्य चैवं पञ्चाशतमतिक्रामतोऽतिचारः शतमतिक्रमतो भङ्गः, सापेक्षत्वान्निरपेक्षत्वाच्चेति गाथार्थः ॥ वृद्धसम्प्रदायश्चायम्—ऊर्ध्वं यत्परिमाणं कृतं तस्योपरि गिरिशिखरे तरु-शिखरे वा मर्कटः पक्षी वा वस्त्रमाभरणं वा गृहीत्वा व्रजेत्तत्र तस्य न कल्पते गन्तुं, यदा तु तत्ततः स्वयमेव पति-

तमन्येन वाऽऽनीतं तदा कल्पते ग्रहीतुं, एतत्पुनः उज्जयन्तादिषु भवेद्, एवमधः कूपादिषु विभाषा, तथा यत्तिर्यक्परिमाणं गृहीतं तत्त्रिविधेन करणेन नातिक्रमितव्यं, क्षेत्रवृद्धिश्च न कार्या, कथम् ?, असौ पूर्वेण भाण्डं गृहीत्वा गतो यावत्तत्परिमाणं, ततः परतो भाण्डमर्घं लभते इतिकृत्वाऽपरेण यानि योजनानि तानि पूर्वदिक्परिमाणे प्रक्षिपति, यद्यनाभोगात्परिमाणमतिक्रान्तो भवेत्तदा निवर्त्तितव्यं, ज्ञाते वा न गन्तव्यमन्यो वा न विसर्जनीयः, अनाज्ञया कोऽपि गतो भवेत्तदा यत्तेन लब्धं स्वयं विस्मृत्य वा गतेन यत् तन्न गृह्यत इति ॥ उत्क्रमतिचारद्वारं, सम्प्रति भङ्गद्वारमावेद्यते—

दुविहं तिविहेण गुणव्वयं तु घेत्तूण पेसए अन्नं ।
तल्लाभं वा गेण्हइ तस्स धुवं होइ इह भंगो ॥ ७२ ॥

'द्विविधं' योजनविंशतेः परतः स्वयं न गच्छामि नान्यं प्रेषयामीत्येवं 'त्रिविधेन' मनसा वाचा कायेन 'गुणव्रतं' प्रस्तावाद् दिक्परिमाणं 'गृहीत्वा' आदाय 'प्रेषयति, प्रस्थापयति 'अन्यं' अपरं, प्रयोजनोत्पत्ताविति गम्यते, प्रेक्षावतां निष्फलवृत्तेरसंभवात्, न केवलमन्यं प्रेषयति 'तल्लाभं वा गृह्णाति' तस्मिन्-दिक्-

परिमाणातिक्रमे लाभस्तल्लाभस्तं, वाशब्दः पक्षान्तरसमुच्चये, 'गृह्णाति' आदत्ते, जानान उपेत्यकरणेन 'तस्य' गृहीतदिक्परिमाणस्य 'ध्रुवं' निश्चितं 'भवति' संपद्यते 'इह' प्रस्तुतव्रते लोके वा 'भङ्गः' सर्वविनाशरूप इति गाथार्थः ॥ भावनाद्वारमेतर्हि कथ्यते—

इरियासमियाएँ परिब्भमंति भूमण्डलं निरारंभा ।
सव्वजगज्जीवहिया ते धन्ना साहुणो निच्चं ॥ ७४ ॥

ईरणमीर्या तस्यां सम्यगयनं समितिरीर्यासमितिः—अव्याक्षिप्तचेतसो युगमात्रान्तरन्यस्तलोचनस्य निरवद्यमार्गेण गमनं तयेर्यासमित्या, समिता इति गम्यते, 'ये परिभ्रमन्ति' यत्तदोर्नित्याभिसम्बन्धाद् ये पर्यटन्ति, किं तत् ? इत्याह—'भूमण्डलं' महीवलयं, कीदृशाः ?—'निरारम्भाः' आरम्भेभ्यो निर्गताः निरारम्भाः—आरम्भविवर्जिताः, यत एवैवमत एव 'सर्वजगज्जीवहिताः' सर्वे च ते जगज्जीवाश्च सर्वजगज्जीवास्तेभ्यो हिताः, निःशेषचतुर्दशरज्ज्वात्मकलोकवर्त्तिप्राणिवत्सलाः 'ते' एवंगुणयुक्ताः 'धन्याः' धर्मधनलब्धृत्वात्पुण्यभाजः 'साधवः' तपस्विनः 'नित्यं' सदेति गाथार्थः ॥ भणितं प्रथमगुणव्रतमिदानीं द्वितीयं नवभेदमभिधातव्यं, तत्रापि प्रथमद्वारेण तावदाह—

उवभोगपरीभोगो विणिवित्ती तं गुणव्वयं बीयं ।
आहाराईविलयाद्धियाइ चित्तं जओ भणियं ॥ ७५ ॥

सकृद् भुज्यत इत्युपभोगोऽन्तर्भोगो वा, पुनः पुनर्भुज्यत इति परिभोगो बहिर्भोगो वा, अनयोर्द्वन्द्वैकवद्भाव उपभोगपरिभोगं तस्मिन्नुपभोगपरिभोगे विविधा निवृत्तिः विनिवृत्तिः—अनेकधा परिणामकरणं येति गम्यं तच्छब्दसम्बन्धात् तद्गुणव्रतं 'द्वितीयं' उपभोगपरिभोगव्रतं, तच्चानेकरूपमेव, कुतः ? इत्याह—'आहारादिविलयाद्वीपादि' अशनताम्बूलप्रभृतिस्त्रीहास्तिप्रमुखं चित्रं 'यतो भणितं' यतो—यस्मात्तीर्थिकरगणधरैः उपभोग्याहारादिपरिभोग्यविलयाद्वीपादिपरिमाणव्रतं प्रस्तावाद्गम्यते 'चित्रं' अनेकरूपं 'भणितं' उक्तम्, एकमाहाराद्यपरं विलयाद्विपादि, तथा चोक्तम्—"उवभोगे विगईओ तंबोलाहारपुप्फफलमाई । परिभोगे वत्थसुवण्णगाइयं इत्थिहत्थाइं ॥ १ ॥", स्त्रीहस्त्यादीति गाथार्थः ॥ भेदद्वार इयं गाथा—

महुमज्जमंसपंचुंबराइविरइं करिज्ज बीयंमि ।
असणविलेवणवत्थाइयाण परिमाणकरणेण ॥ ७६ ॥

मधु माक्षिकादिभेदं मद्यं काष्ठपिष्टनिष्पन्नं मांसं जलचरजादि चर्मादि वा त्रिभेदं पञ्चानामुदुम्बराणां समाहारः पञ्चोदुम्बरी,के पञ्चोदुम्बराः ?, उच्यन्ते, वटोदुम्बराश्वत्थकदुम्बरिकाप्लक्षाः, सर्वेषामेषामुदुम्बरसमानजातीयत्वात्, मध्वादिपदानां च द्वन्द्वं कृत्वाऽऽदिशब्देन बहुव्रीहिः, अनेन च नवनीतघोलवटकरात्रिभोजनादयो ग्राह्याः, ततो विरतिशब्देन षष्ठीतत्पुरुषे मधुमद्यमांसपञ्चोदुम्बर्या विरतिं 'कुर्यात्' विदध्यात् 'द्वितीये' उपभोगपरिभोगपरिमाणव्रते, केन ? इत्याह—अशनविलेपनवस्त्रादिकानां परिमाणकरणेन, अशनम्—ओदनादि विलेपनं—कुङ्कुमादि वस्त्रं—चीवरम्, आदिशब्दात्पानककुसुमाभरणादिग्रहः, कुतः ? इति चेद् ब्रूमः, अशनविलेपनयोरुपभोगरूपयोर्वस्त्रस्य च परिभोगरूपस्योपादानाद् एषां परिमितिः परिमाणम्-इयत्ता तस्य करणं-विधानं तेन, अयमत्र भावार्थः—यो हि उपभोगपरिभोगयोः परिमाणमादत्ते—सयेदमेतावच्च भोक्तव्यं परिभोक्तव्यं वा तेन मद्यादिनिवृत्तिः प्रथमं कार्या, मध्वादिप्रवृत्तेर्बहुपापत्वेनोपभोगपरिभोगपरिमाणसाध्यनिर्जराविघातदक्षत्वात्, तथा चोक्तम्—"चउरिंदियजीवाणं देहवसारुहिरमीसिअं अहमं । महु एयं भक्खणविक्कएहिं पावं विवज्जेह ॥ १ ॥ कुलबलमइगरुयत्तणसाहुकाराइं विहव ओड्डुणयं । विरुवयवायविहीलणजणयं मज्जं परिच्चयह ॥ २ ॥ मंसं पंचिंदियवहाविणिम्मियं तह पयंडपावफलं ।

सुक्करसरुहिरकलमलदुगंधियं मुंच भयजणयं ॥ ३ ॥ वडउंबरिकाउंबरपिप्पलपिप्परिफलाण मज्झंमि । जीवा हवंति खद्धा खद्धा य कुणंति वयभंगं ॥ ४ ॥ खद्धाः-प्रचुराः खादिताश्च ॥ नवणीयं तज्जोणियतव्वण्णुप्पण्णसत्तसंमीसं । अप्परिणयं विवज्जह होई एयंपि भवजणयं ॥ ५ ॥ पल्लंकलट्टसागा मुग्गगयं चामगोरसुम्मीसं । संसज्जए उ नियमा, तंपि य नियमा हु दोसाय ॥ ६ ॥ निच्चं हुंति दरिद्दा निच्चुस्सववज्जिया सिरिविहूणा । कुलबलरूवविहूणा निसिभोयणउज्जया जे उ ॥ ७ ॥ साहारणा उ मूला, गज्जर लोणो विगंधि दव्वं वा । थोहरि कुमारि अद्दय विरुहाइ अणेगहा जीवा ॥ ८ ॥ तस्मात्-फलफलि पत्ते पुप्फे, कट्ठे बहुबीय विगइवग्गे य । सच्चित्ताणंते दव्ववग्गमाणं च उवभोगे ॥ ९ ॥ रंधण कंडण पीसण दलणं पयणं व एवमाईणं । निच्चं परिमाणकरणं अविरइबंधो जओ गरुओ ॥ १० ॥ भेदभावना च मधुविरतिरित्यादिरूपेण कार्येति गाथार्थः ॥

अत्र च मद्यपानमांसभक्षणरात्रिभोजनानां परिदृश्यमानघनापायत्वात्सूत्रगाथायामसूचिते अपि श्रावकजनानुग्रहाय कथानके कथ्येते—कश्चिद् ऋषिस्तपस्तेपे, भीत इन्द्रः सुरस्त्रियः । क्षोभाय प्रेषयामास, तस्यागत्य च तास्तकम् ॥ १ ॥ विनयेन समाराध्य, वरदाभिमुखं स्थितम् । जगुर्मद्यं तथा हिंसां, सेवस्वाब्रह्म चेच्छया ॥ २ ॥

स एवं गदितस्ताभिर्द्वयोर्नरकहेतुताम् । आलोच्य मद्यरूपं तु, शुद्धकारणपूर्वकम् ॥ ३ ॥ मद्यं प्रपद्य तद्योगान्नष्टधर्मस्थितिर्मदात् । विदंशार्थमजं हत्वा, सर्वमेव चकार सः ॥ ४ ॥ ततश्च भ्रष्टसामर्थ्यः, स मृत्वा दुर्गतिं गतः । इत्थं दोषाकरो मद्यं, विज्ञेयं धर्मचारिभिः ॥ ५ ॥ ” अत्थि इह भरहवासे उज्जेणीनाम पुरवरी रम्मा । सुरभवणभवणआरामकूववावीनिवाणेहिं ॥ १ ॥ तत्थासि सावया तिण्णि ताण पढमो हु जन्नदत्तोत्ति । बीओ य विण्हुमित्तो तइओ जिणदासनामोत्ति ॥ २ ॥ अह—जयसिरिविजयसिरीए अवराइयनामिया उ ताणं च । जाया तिण्हवि धूया, कमेण अण्णोऽण्णपीइजुया ॥ ३ ॥ ताओ य बालभावे विवड्ढमाणीओ जिणवरमयंमि । अणुरत्तमाणसाओ जिणिंदपूयाइ निरयाओ ॥ ४ ॥ तासिं च सही माहणदुहिया अण्णावि आसि अइइट्ठा । नामेणं वसुमित्ता अपरिणया नवर जिणधम्मे ॥ ५ ॥ आसाढचउम्मासगादिणंमि अह सा समुट्ठिए सहसा । कमलायरबंधुंमी समागया ताण पासंमि ॥६॥ भणिया य ताहि गच्छसु, सह्वाणं अज्ज पियसहि ! तुमम्हं । जिणभवणेसुं पूया कायव्वा चिट्ठई जेण ॥ ७ ॥ तह साहुणीण पासेऽणुव्वयगहणं च तीएँ तो वुत्तं । किं तत्थ अम्ह गमणं न जुज्जए? ताहि पडिभणियं ॥८॥ कल्लाणि ! कोऽवरोहो तुमंपि आगच्छ अत्थि जइ इच्छा । सावि तओ ताहिं समं जिणिंदभवणं समणुपत्ता ॥ ९ ॥ ताओ

ऋषिदृष्टान्तो मद्ये वसुमित्रा दृष्टान्तो मिश्राभोजने.

जिणाण पूयं अट्ठपयारंपि काउमुवउत्ता । थुइथोत्तेहिं संथुणिय विहिया चियवंदणा पच्छा ॥ १० ॥ साहुणिपा-
संमि गया पच्चक्खाणं करिंति वंदित्ता । उवविट्ठा धम्मकहं तओ य निसुणंति भावेण ॥ ११ ॥ एत्थंतरंमि
परिणयधम्मकहा कम्मखयउवसमेणं । भणइ तहिं वसुमित्ता मज्झवि धम्मो इमो होउ ॥ १२ ॥ भयवइ !
एत्तो पभिई तो भणिया साहुणीए सा एवं । कहिओ न होइ धम्मो मणपरिणामं विणा सुयणु ! ॥ १३ ॥ ता जइ
तुह जिणधम्मो रमिओ चित्तंमि एस मइ कहिओ । ता पडिवज्जसु अरिहंत देवयं साहुणो गुरुणो ॥ १४ ॥
अब्भुट्ठिऊण तो सा, विणएणं अंजलिं करिय सीसे । पडिवज्जइ जं भणियं परिहरइ य मंसनिसिभत्ते ॥ १५ ॥
जयसिरिमाईयाओ पडिवज्जियऽणुव्वयाइं पंचावि । वंदणपुव्वं सगिहं चलियाओ सावि ताहि समं ॥ १६ ॥ नीह-
रिऊणं तत्तो पत्ता पिउभवणमण्णया तीसे । ससुरकुलाओ मोयावणत्थमेत्थागओ पुरिसो ॥ १७ ॥ आभासियाओं
सवयंसियाओं अणुमण्णिया तओ ताहिं । वद्धणउरंमि पत्ता ससुरकुले तत्थ चिट्ठइ य ॥ १८ ॥ नियमम-
णुपालयंती अण्णदिणे पभणिया ससुरएणं । पुत्ति ! न कुलकमो अम्ह एस निसिभत्तचाओ जं ॥ १९ ॥
मंसस्सवि परिहारो न जुज्जए जेण वेयविहियं खु । जमणुट्ठाणं तं चिय वच्छे ! अम्हाण कुलधम्मो

॥ २० ॥ वसुमित्ताए भणियं हिंसा वेए विवज्जिया ताय! । हिंसाए विणा न य मंसभक्खणं जायइ जियाणं ॥ २१ ॥ जेसिंपि न सयंकरणं तेसिंपि करावणं हवइ नियमा । मंसासणंमि हिंसाएँ अणुमइं को व वारेइ ? ॥ २२ ॥ रयणीभोयणचाओ कुलक्कमो नऽम्ह जं च तमलीयं । जम्हा तुम्ह न पियरो निसाएँ पिंडं पडिच्छंति ॥ २३ ॥ इय वुत्ते रुसिऊणं ससुरो पडिभणइ आ महापावे ! । इय दुव्वियड्ढयाए मएवि सह कुणसि तं वायं ॥ २४ ॥ ता किं उत्तरपडिउत्तरेहिं जइ सासुरेण ते कज्जं । ता मुंच वायमेयं अण्णह कज्जं न चेव तए ॥ २५ ॥ तो तीएँ चिंतियं जइ एवं चिय जामि पेइयं सहसा । ता कुललंछण गरुई, तम्होवायंतरेण इमे ॥ २६ ॥ तत्थेव नेमि इय चिंतिऊण पडिभणइ ताय ! जइ एवं । तुब्भेऽवि एह तहियं जत्थ निवित्ती मए गहिया ॥ २७ ॥ तुम्ह समक्ख एयं जेण विवज्जेमि मण्णिए तेण । सासू ससुरो सुण्हा, चलिया उज्जेणिहुत्तं ते ॥ २८ ॥ वसुमित्ता-भत्तारेण चिंतियं विरसभूइणा एवं । जुत्तमिणं भणइ इमा ता जंतु इतोऽवि कहवि गुणो ॥ २९ ॥ जीयहरणंमि गामे संपत्ताऽईपओससमयंमि । माहवदिएण दिट्ठुं नीयाइं निययगेहंमि ॥ ३० ॥ काराविऊण मज्जणमह तेसिं चेव भोयणनिमित्तं । आढत्ते ओयणमाइ रसवईवित्थरे तत्थ ॥ ३१ ॥ भवियव्वयावसेणं कढिज्जमाणंमि तीमणे

सहसा । नीवेहिंतो सप्पो, पहाविओ उदुंरस्सुवरिं ॥ ३२ ॥ फिडिओ कहिंपि पडिओ, खंडाखंडिं कओ य डोएण । एत्थंतरंमि माहवभट्टेणं पाहुणा भणिया ॥ ३३ ॥ एह उववसिह भुंजह वसुमित्ता सच्चरित्ति नो एइ । भोत्तुं सासू ससुरा तओ ठिया परियणो जिमिओ ॥ ३४ ॥ अह विसभावियतीमणभोयणकरणेण तो स पंचत्तं । पत्तो पगे य दिट्ठं थालीए तीएँ अहिखण्डं ॥ ३५ ॥ सासूससुराण तओ वसुमित्ता उवरि जाओ बहुमाणो । जीयहरणाओ पच्छा विणिग्गया दसपुरं पत्ता ॥ ४६ ॥ तम्मि पुरि बउलदत्तोत्ति माहणो तस्स गेहमोइण्णो । तत्थवि जाया रयणी भोयणकज्जंमि आढत्तो ॥ ३७ ॥ इओ य—आइच्चसम्मनामो, पुत्तो य अहेसि बउलदत्तस्स । नियगिह-नियत्तकुलपुत्तयस्स महिलाएँ अणुरत्तो ॥ ३८ ॥ तं जाणिऊण कुलपुत्तओ य तस्सेव जणणिजणयाणं । साहइ एयं न य तेहि वारिओ तो मणे कुविओ ॥ ३९ ॥ तच्छिद्दमण्णिसंतो मंसाणयणे य तेहि आइट्ठो । भवियव्व-यावसेणं दट्ठुं तं रहसि तीएँ समं ॥ ४० ॥ वेहाणसेण बद्धो, ऊरूमंसं च तस्स गहिऊण । तंजणणीये समप्पिय सयं पणट्ठो गहिय महिलं ॥ ४१ ॥ पक्कं पाहुणग कयं तयं च तीए अयाणमाणाए । वसुमित्ता य न भुंजइ निसिभोयणमंसकयविरई ॥ ४२ ॥ तीए अभुंजंतीए सासूससुरावि पुत्तमिव थक्का । बउलेणावि नियपुत्तो,

गवेसिओ ।दिट्ठ तयवत्थो ॥ ४३ ॥ तं वइयरं वियाणिय ससुरेण पसंसिया उ वसुमित्ता। पुत्ति ! सउण्णाऽसि तुमं पत्तो जीए इमो धम्मो ॥ ४४ ॥ अम्हेहिवि एसो च्चिय पडिवण्णो पुत्ति ! जयणुभावेणं । जाया जीवियरक्खा माणुसमंसं च नो भुत्तं ॥ ४५ ॥ ता वच्चामो सगिहं राईभत्ते तहेव मंसे य । जावज्जीवं अम्हवि नियमो एत्तो पभिइ पुत्ति! ॥ ४६ ॥ इय भणिऊण नियत्ता, पत्ता गेहंमि तत्थ भत्तावि । वसुमित्ताए जाओ, सुसावगो धम्मकम्मरओ ॥ ४७ ॥ एवं च ताण परिणयधम्माणं जाव जंति कइवि दिणा । तावण्णया कयाइवि, सासू ससुरो य वसुमित्ता ॥ ४७ ॥ तिण्णिवि समाहिमरणं काउं देवत्तणं समणुपत्ता । सोहम्मदेवलोए, तओ चुया एत्थ भरहंमि ॥ ४९ ॥ नयरंमि वसंतपुरे, ससुरजिओ विजयवम्मरायस्स । देविइ असोयसिरीए नंदणो आसि सिरिवम्मो ॥ ५० ॥ धणयत्तसिट्ठिणो धणसिरीइ भज्जाएँ तंमि चेव पुरे । वसुमित्ताविहु जाया, सिरिदेवी नामतो धूया ॥ ५१ ॥ अह तम्मि चेव दिवसे, चोद्दस धूयाउ तंमि नयरंमि । अन्नाओवि जायाओ, सुरूवलावण्णजुत्ताओ ॥ ५२ ॥ ताणं मज्झे सासूजीवो चविऊण देवलोयाओ । देवजसानामेणं, धूयत्तेणं समुववण्णो ॥ ५३ ॥ सेट्ठी वद्धावणयं, कारावइ ताण जम्मदियहंमि । अट्ठण्हं वरिसाणं, उवरि

कलाणं च संगहणं ॥ ५४ ॥ गहियकलाओ ताओ, सव्वाओऽवि जोवणंमि चडियाओ । नवरं देवजसाए संजा-
ओ कोढरोगोत्ति ॥ ५५ ॥ आउत्ता किरियातो, तीसे विज्जेहि सेट्ठिवयणेण । न य कोऽवि गुणो जाओ ता चिंतइ
दुक्खिया एसा ॥ ५६ ॥ [ तो साहिया सहीणं मिदंसणंपिहु अत्थ फासाइ सिरिदेवीण्हाणजलोवभोगिफासंपि । संपइ
कालंपि जइ, कहवि अहं तादु जइ मज्झ ॥५६॥] सिरिदेविसंतिएणं, ण्हाणुदएणं च ण्हावियाएँ तओ । नेमित्तियव-
यणेणं, पउणत्तं जायमचिरेण ॥ ५७ ॥ जाओ स एव रोगो सिरिवम्मस्सावि रायपुत्तस्स । पिउणा तस्स कएणं
दवाविओ पडहओ तत्थ ॥ ५८ ॥ छित्तो देवजसाए भणियं चाऽऽगच्छऊ इहं कुमरो । थोवेणवि कालेणं पउणं
जेणं तयं करिमो ॥ ५९ ॥ पाडहिएणं जाणाविओ य वुत्तं तमेरिसं राया । पेसविओ य कुमारो, रण्णा गेहंमि
सेट्ठिस्स ॥ ६० ॥ उवरंगे पक्खिविउं उव्वणट्टएण निच्चमेव इमो । उव्वट्टिउमारद्धो सिरिदेवीसंतएणेव ॥६१॥ चोद्द-
सादिणंमि जाओ, पउणो पत्तो य नियगिहं दिट्ठो । पहरिसभरआऊरिज्जमाणहियएण नरवइणा ॥ ६२ ॥ तुट्ठेण
३४ तओ परिणावियाओ सो चेव ताओ कण्णाओ । ताहिं समं सो भोगे भुंजइ दोगुंदुगुव्व सुरो ॥ ६३ ॥ सुण्हावयभं-
गकरावणेण कुट्ठो य तेसिमुप्पणो । देवजसासिरिवम्माण पुव्वभवसासुससुराणं ॥ ६४ ॥ अण्णया य–सिरिवम्मो

च्चिय राया, संवुत्तो पणयसयलसामंतो । पुव्वकयसुकयसंभारजणियमणवंछियपयत्थो ॥ ६५ ॥ कालंतरेण आराहिऊण विहिमरणमेस देवत्तं । पत्तो तत्तो य चुओ कमेण मोक्खं गमिस्सइ य ॥ ६६ ॥ वसुमित्ताए एवं, चरियं संखेवओ समक्खायं । वित्थरओ भयणीवच्छलाओ सविसेसमवि गम्मं ॥ ७१ ॥ एवं निसिभोयणमंसविरमणे जाणिउं महापुण्णं । निसिभोयणमंसाई सव्वपयत्तेण वज्जेह ॥ ७२ ॥ अवसितं यावद्भेदद्वारमितो यथा जायत इति निवेदयितुमाह–

दुविहतिविहाइ मंसाइयाण एगविहतिविह सेसेसु ।
निरवज्जाहाराई अहम्मवित्तीपरिच्चाओ ॥ ७७ ॥

द्विविधत्रिविधादिना भङ्गकेन–न करोमि न कारयामि मनसा वाचा कायेनेत्यादिलक्षणेन 'मांसादीनां' क्रव्यमधुप्रभृतीनां, निवृत्तिरिति प्रकृतं, तृतीयाविभक्तिश्च प्राकृतत्वाल्लुप्ता द्रष्टव्या, एवमग्रपदेऽपि, 'एकविधं त्रिविधेन' न करोमि मनसा वाचा कायेनेत्येवंरूपेण विरतिः 'शेषेषु' विकृत्यादिषु, कार्येति गम्यं, अयमत्र भावार्थः–यो मांसनिवृत्तिं करोति स उत्कर्षतो द्विविधत्रिविधभङ्गकेन करोति, तदभावे द्विविधद्विविधादिभङ्गकैरपि, विकृत्यादिनियमं त्वेकविधात्रिविधेन,

प्रायेणैतद्रूङ्गविपयत्वादस्य, तथा येनोपभोगपरिभोगपरिमाणं ग्राह्यं तेन निरवद्याहारादि ग्राह्यं, सचित्तादिपरिहारेण निरवद्यो-निर्दोषः स चासावाहारश्च—अशनं निरवद्याहारस्तद् (आदौ यस्य) आदिशब्दादल्पसावद्यादि, न केवलमिदं कार्यं, तथा तेनाधर्मवृत्तिपरित्यागश्च कार्यः, अधर्मवृत्तिर्नामाङ्गारकर्मवनकर्मादिलक्षणा पापजीविका तस्याः परित्यागः—अकरणं, यदुक्तम्—" निरवज्जाहारेणं निज्जीवेणं परित्तमीसेणं । अप्पा संधारेज्जा कम्मं च चए स सावज्जं ॥१॥ "कर्म च—व्यापारं त्यजेत् स सावद्यं—सावद्याग्न्यारम्भादिसमन्विताङ्गारकर्मादि, तदुक्तम्—" इंगाले १ वण२साडी ३भाडी४फोडीसु५वज्जए कम्मं । वाणिज्जं चेव य दंत ६ लक्ख ७ रस ८ केस ९ विस १० विसयं ॥ १ ॥ एवं खु जंतपीलणकम्मं ११ निल्लंछणं च १२ दवदाणं १३ । सरदहतलायसोसं १४ असईपोसं च वज्जेज्जा १५ ॥ २ ॥ " एतदर्थस्तु वृद्धसंप्रदायादवसेयः, स चायम्—अङ्गारकर्मेति—अङ्गारान् कृत्वा विक्रीणीते, तत्र षण्णां जीवनिकायानां वधः स्यात्, ततस्तन्न कल्पते १, वनकर्म—यद्वनं क्रीणाति, ततस्तच्छित्त्वा विक्रीय मूल्येन जीवति, एवं पत्रादीन्यपि प्रतिषिद्धानि भवन्ति २, शकटीकर्म यच्छाकटिकत्वेन जीवति, तत्र गवादीनां बन्धवधादयो दोषाः स्युः ३, भाटीकर्म—यत्स्वकीयेन तन्त्रेण भाटकेन परकीयं भाण्डं वहति अन्येषां वा शकटबलीवर्दादीनर्पयतीति ४स्फोटीकर्म—उड्डत्वं यद्वा हलेन भूमेः

स्फोटनं ५ दन्तवाणिज्यं यत्पूर्वमेव पुलीन्द्राणां मूल्यं ददाति दन्तान् मे यूयं दद्यातेति, ततस्ते हस्तिनो घ्नन्ति, अचिरादसौ वाणिजक एष्यतीतिकृत्वा, एवं कर्मकराणां शङ्खमूल्यं ददाति, पूर्वानीतांस्तु क्रीणाति ६, लाक्षावाणिज्यमप्येवमेव, दोषस्तु तत्र कृमयो भवन्ति ७, रसवाणिज्यं—कल्पपालत्वं, तत्र च सुरादावनेके दोषा मारणाक्रोशवधादयः ८, केशवाणिज्यं, यद्दास्यादीन् गृहीत्वाऽन्यत्र विक्रीणीते, अत्राप्यनेके दोषाः परवशित्वादयः ९, विषवाणिज्यं—विषविक्रयः, स च न कल्पते यतस्तेन बहूनां जीवानां विराधना स्याद् १०, यन्त्रपीडनकर्म--तिलेक्षुयन्त्रादिना तिलादिपीडनं ११, निर्लाञ्छनकर्म--गवादीनां वर्द्धितककरणं १२, दवाग्निकर्म यद्वनदवं ददाति क्षेत्ररक्षणनिमित्तं यथोत्तरापथे, दग्धे हि तत्र तरुणतृणमुत्तिष्ठति, तत्र च सत्त्वशतसहस्राणां वधः स्यात् १३ सरोह्रदतडागपरिशोषणं यत्सरःप्रभृतीनि शोषयति तत्र च धान्यमुप्यते १४ असतीपोषणं--यद्योनिपोषका दासीः पोषयन्ति तत्सम्बन्धिनीं च भाटिं गृह्णन्ति, यथा गोल्लविषय इति १५, दिग्मात्रप्रदर्शनं चैतद्बहुसावद्यानां कर्मणामेवंजातीयानां, न पुनः परिगणनमिति गाथार्थः॥साम्प्रतं चतुर्थद्वारमभिधीयते—

भोगुवभोगेहिंतो अनियत्ताणं तु हुंति दुक्खाइं ।
सेडुयओ य सुबंधू, जह निच्चंमंडिया भट्टी ॥ ७८ ॥

'भोगोपभोगेभ्यः' सकृद्भोग्यपुनःपुनर्भोग्याहारवस्त्रादिरूपेभ्यः 'अनिवृत्तानां' अनुपरतानां 'तुः' पूरणेऽवधारणे वा 'भवन्ति' जायन्ते 'दुःखानि' शारीरमानसासातोदयरूपाणि, अत्रार्थे दृष्टान्तत्रयमाह—'सेडुवकश्च सुबन्धुर्यथा नित्यमण्डिता भट्टी' यथा सेटुबकब्राह्मणः सुबन्धुर्मन्त्री नित्यमण्डिता भट्टिनी चेति गाथासमासार्थः ॥ व्यासार्थस्तु कथानकेभ्योऽवसेयः, तानि चामूनि—

प्रधाननगरग्रामगोकुलादिसमाकुलः । वत्सो जनपदः ख्यातोऽस्त्यनेकश्रीनिकेतनम् ॥ १ ॥ लसत्पुण्यजनाकीर्णा, तत्रैलविलपूरिव । कौशाम्बी नाम्ना नगरी, गरीयःसम्पदः पदम् ॥ २ ॥ नम [ ग्रन्थाग्रम् ५५०० ] त्सामन्तसङ्घातमौलिमालार्चितक्रमः । शतानीको नृपस्तत्र, प्रतापाक्रान्तवैरिकः ॥ ३ ॥ तस्यामेव महापुर्यामासीत्सेडुवको द्विजः । ज्ञानविज्ञानविकलो, दारिद्र्योपद्रवोद्द्रुतः ॥ ४ ॥ अन्यदा स्वगृहिण्याऽसौ, गर्भिण्या भणितो यथा । प्रयोजनं घृतेनेह, भविताऽतस्तदानय ॥ ५ ॥ तेनावाचि न मे किञ्चित्तादृशं विद्यते प्रिये ! । विज्ञानं यादृशेनाहमानयामि घृतादिकम् ॥ ६ ॥ भट्टिन्योक्तं महीनाथं, गत्वाऽवलग सन्ततम् । पुष्पव्यग्रकरो येन, वृत्तिं काञ्चित् करोत्यसौ ॥ ७ ॥ यतः—" इक्षुक्षेत्रं समुद्रश्च, योनिपोषणमेव च । प्रसादो भूभुजां चैव, सद्यो घ्नन्ति दरि-

द्रताम् ॥ ८ ॥" एवमस्त्विति तेनाशु, प्रतिपद्य फलादिभिः । राजाऽवलगितुं भक्त्या, प्रारेभे प्रतिवासरम्
॥ ९ ॥ क्षीणे लाभान्तरायेऽथ, राज्ञा तुष्टेन स द्विजः । प्रोचे तुष्टोऽस्मि ते भट्ट!, ब्रूहि त्वं यत्प्रदीयताम् ॥ १० ॥
अन्ये तु सूरयः प्राहुस्तस्यावलगतो नृपम् । यावत्कालोऽतिचक्राम, कियानप्यतिभक्तितः ॥ ११ ॥ तावत्प्र-
द्योतनृपतिरुज्जयिन्याः समागतः । महता सैन्यवृन्देन, शतानीकजिघृक्षया ॥ १२ ॥ शतानीकस्तु तं ज्ञात्वा,
रोधसज्जां पुरीं निजाम् । विधाय स्थितवानश्वविग्रहावहितः स्वयम् ॥ १३ ॥ यवसेन्धनपानीयग्राहिणोऽपि
प्रमादिनः । उपद्रवन्नवस्कन्दबलेनारिगतान् बलान् ॥ १४ ॥ प्रचुरैरपि दिनैरेवं ( दिनैः प्रचुरैरप्येवं ) ग्रहीतुं न
शशाक ताम् । प्रद्योतो नगरीं यावत्तावदुच्चलितोऽन्यदा ॥ १५ ॥ अत्रान्तरे—पुष्पावचयकार्येण, पुष्पवाट्यां समागतः ।
ददर्श चलितं सैन्यं, तत् स्वां सेटुबकः पुरीम् ॥ १६ ॥ ततो निवेदयामास, शतानीकमहीपतेः । लग्नः स पृष्ठतस्त-
स्योपद्रय बलमागतः ॥ १७ ॥ अश्वादिग्रहतुष्टोऽसौ, पारितोषिकदित्सया । राजा सेडुबकं प्राह, ब्रूहि किं ते प्रदीयताम् ?
॥ १८ ॥ तेनाभ्यधायि राजेन्द्र!, पृष्ट्वाऽहं भट्टिनीं निजाम् । गदिष्यामि भणित्वेदं, भट्टिन्यन्तमगादसौ ॥ १९ ॥
गत्वाऽब्रवीत्प्रसन्नोऽद्य, भूभृद् भट्टिनि ! मेऽधिकम् । ब्रवीति दीयते किं ते?, वद किं प्रार्थये ततः ? ॥ २० ॥ स प्राहा-

ग्रासने राज्ञो, भट्ट ! याचस्व भोजनम् ! दीनारदक्षिणां चैव, तथैकान्तं दिने दिने ॥ २१ ॥ गत्वाऽथ प्रार्थितस्तेन,
तथैव नृपतिर्मुदा । ऋजुतां तस्य विज्ञाय, राज्ञाऽपि प्रत्यपद्यत ॥ २२ ॥ ततः प्रभृति तत्सर्वं, कुर्वाणं वीक्ष्य भूभु-
जम्। चिन्तयामासुरन्येऽपि, भूपतेः पार्श्ववर्त्तिनः ॥ २३ ॥ महाप्रसादमेतस्य, कुरुते प्रत्यहं नृपः। यतोऽतो वयमप्येनं,
पूजयामः प्रयत्नतः ॥ २४ ॥ इति संचिन्त्य तैः सर्वैः, स प्रीत्या भोज्यते द्विजः । स्वगृहे ग्राह्यते नित्यं, दक्षिणां
च प्रयत्नतः ॥ २५ ॥ ततोऽसौ तादृशाल्लाभादचिरेण महर्द्धिकः । समभूत्पुत्रपौत्रादिसन्तत्या प्रससार च ॥ २६ ॥
केवलं दक्षिणालोभाद्भुञ्जानस्य गृहे गृहे । वमनं कुर्वतश्चास्य, त्वग्दोषोऽभूद्भयानकः ॥ २७ ॥ शीर्णघ्राणो व्रणाघातः,
प्रस्रवत्पूयगन्धतः । मक्षिकावेष्टितः कष्टामवस्थां प्राप्तवांस्ततः ॥ २८ ॥ तथाऽपि पूर्ववद्राज्ञो, बुभुजेऽग्रासने स्थितः ।
कुष्ठी वर्त्तेऽहमित्येवं, शशङ्के न मनागपि ॥ २९ ॥ उपेक्षितश्च स व्याधिः, क्रमेण ववृधेऽधिकम् । संपर्को दुर्जनस्येव,
तस्य पीडाविधायकः ॥ ३० ॥ दृष्ट्वा तं तादृशं राजा, विज्ञप्तो मन्त्रिभिर्भयात् । देव ! व्याधिरयं बाढं, संचरिष्णुरियं
श्रुतिः ॥ ३१ ॥ यतः—एकत्र भोजनात्स्पर्शादेकशय्याऽऽसनादितः । सङ्क्रान्तिर्जायते व्याधेरिति शास्त्रेऽपि भाष्यते
॥ ३२ ॥ अतो निवार्यतामेष, भुञ्जानोऽग्रासने द्विजः । तत्स्थानेऽस्य सुताः सन्तः, स्थाप्यन्तां नीरुजस्त्वया ॥ ३३ ॥

ततश्च—एवमस्त्विति भूभर्त्रा, प्रतिपन्ने स मन्त्रिभिः । प्रोक्तोऽद्यप्रभृति पुत्रैर्भोक्तव्यं राजमन्दिरे ॥ ३४ ॥ ततस्तेन स्वपुत्राणामनुजज्ञे तदाज्ञया । स्वनियोगः स्वयं गेहे, संतस्थे दुर्मना मनाक् ॥ ३५ ॥ कालेनोत्कटतां याते, तत्र व्याधौ ह्रिया सुतैः । तैस्तस्य कारयाञ्चक्रे, बहिर्गेहात् कुटीरकम् ॥ ३६ ॥ ततो वधूजनोऽप्येतं, दृष्ट्वा निष्ठीवति क्षणात् । नाज्ञां च कुरुते कश्चिल्लपतोऽपि मुहुर्मुहुः ॥ ३७ ॥ भोजनाद्यपि दूरस्थैश्चण्डालस्येव नीरसम् । क्षिप्यते कर्परे तस्यावृतघ्राणैर्जुगुप्सया ॥ ३८ ॥ तद् दृष्ट्वा चिन्तितं तेन, मत्प्रभावाद्य ईदृशीम् । आरूढाः पदवीं पश्य, तेषां कीदृग्विचेष्टितम् ? ॥ ३९ ॥ अथवा—यासामेव पिबन्त्यम्बु, नदीनां वृषभास्तृषा । तासामेव तटीर्घ्नन्ति, कृतघ्नाः शृङ्गकोटिभिः ॥ ४० ॥ यस्य पत्रपुटे भुक्त्वा, छायायां शेरते मुहुः । मूलं खनन्ति तस्यैव, पलाशस्य पुलिन्द्रकाः ॥ ४१ ॥ यत्प्रभावादवाप्ता श्रीः, कुमुदैर्मुदितैरिव । सैवोपहस्यते चान्द्री, चन्द्रिका स्वरुचा निशि ॥ ४२ ॥ एवमेतेऽपि पापिष्ठाः, मच्छ्रिया वृद्धिमागताः । मामेवाभिभवन्त्येवं, धिक् पुत्रान् दुर्जनानिव ॥ ४३ ॥ अतोऽवज्ञाफलं तूर्णं, मूर्ध्न्येषां पातयाम्यहम् । इति क्रोधात् समालोच्य, प्रोक्ताः पुत्रा द्विजन्मना ॥ ४४ ॥ भो भो पुत्राः ! वयं बाढमुद्विग्नाः प्राणितव्यतः । कृत्वाऽतः स्वकुलाचारं, वाञ्छामो मर्त्तुमञ्जसा ॥ ४५ ॥ तच्छ्रुत्वाऽतो झटित्येष, म्रियते चारु

जायते । इति प्रहृष्टचित्तास्ते, प्रोचुः किं कुर्म उच्यताम् ॥ ४६ ॥ स प्राहास्मत्कुले पुत्राः, ? क्रमोऽयं यन्मुमूर्षुभिः । मन्त्रो-
क्षितः पशुर्देयः, स्वबन्धुभ्यो हितैषिणा ॥ ४७ ॥ ततोऽतिबलवान् बस्तः, सुप्रमाणः सुदर्शनः । आनीयतां
कुटीरेऽस्मिन्, कुलक्रमविधित्सया ॥ ४८ ॥ येन तं संस्कृतं मन्त्रैः, खादयित्वा स्वबान्धवान् । हितार्थं विधिना
दध्मश्चित्तं कार्ये निराकुलाः ॥ ४९ ॥ तैरप्यज्ञाततद्भावैर्मुग्धत्त्वात्तत्कुटीरके । बबन्धे तादृशो बस्तो, वचनानन्तरं
मुदा ॥ ५० ॥ ततोऽसौ ब्राह्मणस्तस्मै, पशवे स्वं शरीरकम् । उद्वर्त्य व्याधिसङ्क्रान्त्यै, नित्यमुद्वर्त्तनीं ददौ
॥ ५१ ॥ तांश्चाश्नन्नचिरेणैव, कुष्ठी छागोऽप्यभूदलम् । यदा तदा स्वपुत्रेभ्यो, हत्वा भोज्यार्थमर्पितः ॥ ५२ ॥
तैरप्यज्ञाततच्चेष्टैस्तत्र भुक्ते पशौ पुनः । उवाच साम्प्रतं पुत्राः !, तीर्थे त्यक्ष्यामि जीवितम् ॥ ५३ ॥ येन तत्र मृत-
स्यान्यजन्मन्यपूतिनिन्दितम् । ईदृग् न जायते भूयो, वपुर्मे व्याधिपीडितम् ॥ ५४ ॥ इति ब्रुवंस्ततस्तूर्णं, निर्गत्य मुदितो
द्विजः । विवेशोर्ध्वमुखोऽरण्यं, भीषणाकारदर्शनम् ॥ ५५ ॥ तत्रासौ तृषितोऽत्यर्थं, जलमन्वेष्टुमादरात् । इतश्चेतश्च बभ्रामाद-
भ्रभूधरगह्वरम् ॥ ५६ ॥ ततः कथञ्चिदेतेन, भ्रमता दैवयोगतः । ददृशेऽने(दृष्टं नै) कद्रुमाकीर्णप्रदेशे लघु पल्वलम् ॥ ५७ ॥ तीरवृ-
क्षावलेः पत्रैः, फलैः पुष्पैश्च सन्ततम् । पतद्भिः कल्कवज्जातं, यत्राम्बु ग्रीष्मतापतः ॥ ५८ ॥ तद् दृष्ट्वा ( पीत्वा ) हृदयं तस्य,

समुच्छश्वास तत्क्षणात् । इन्द्रियाणि च जातानि,स्वार्थग्रहपटून्यलम्॥५९॥ततश्च तेन विश्रम्य,कल्काकारं जलं मुदा । आरेभे पातुमश्रान्तं, पिपासाविगमार्थिना ॥६०॥ ततश्च--यथा यथा पपावेष, तज्जलं कलुषाकृति । तथा तथाऽस्य संजज्ञे, विरेकः कृमिभिः सह ॥ ६१ ॥ एवं कतिपयैरेव, वासरैस्तच्छरीरकम् । चक्रे रसायनेनेव, नीरुक् तेनाम्बुनाऽधिकम् ॥ ६२ ॥ या न चिन्तायितुं शक्या, न कर्त्तुं नापि भाषितुम् । साऽप्यवस्था भवत्युच्चैर्विधावभिमुखे सति ॥ ६३ ॥ दृष्ट्वा तत्तादृशं तस्य, नीरुक्त्वं संभवातिगम् । आपत्स्वपि गतैः सद्भिः, कथं मोहो विधीयते ? ॥ ६४ ॥ अथ तेन स्वदेहस्य, तादृशीं वीक्ष्य सम्पदम् । चिन्तितं दर्शयाम्येनां, स्वलोकाय वपुःश्रियम् ॥ ६५ ॥ किं तया सारयाऽप्यत्र, जातया संपदा नृणाम् । यां न पश्यन्ति लोकाः स्वे, प्रमोदोत्फुल्ललोचनाः ? ॥ ६६ ॥ यादृशी वा भवेत्तेषामवस्था पापकारिणाम् । पश्यामि तादृशीं गत्वा, संचिन्त्येत्थं ययौ पुरम् ॥ ६७ ॥ पृष्टः पुरं विशन् लोकैः, प्रत्यभिज्ञाय स द्विजः । केन कुष्ठं तवापास्तं, तादृशं भीमदर्शनम् ? ॥ ६८ ॥ सोऽब्रवीद्देवता भक्त्या, मयाऽवलगिता वने । तया कुष्ठमपास्याहमीदृशो जनितोऽचिरात् ॥ ६९ ॥ ततश्चाहो ! द्विजो धन्यः, प्रसन्ना यस्य देवता । स्तूयमानो जनैरित्थं, प्रविवेश स्वमन्दिरम् ॥ ७० ॥ दृष्ट्वाऽसौ तत्र कुष्ठेन, शाटिताङ्गान् निजाङ्गजान् ।

प्रोवाच मदवज्ञाया, भवद्भिर्वेद्यतां फलम् ॥ ७१ ॥ ते ऊचुस्तात ! किं न्वेतत्त्वयाऽस्मान् प्रत्यनुष्ठितम् ? । स प्राह मां विना कस्य, शक्तिः स्यादीदृशी भुवि ? ॥ ७२ ॥ आः पाप ! किं त्वयेदृक्षं, विरुद्धं धर्मलोकयोः । निस्त्रिंशेन समाचीर्णमित्यूचुस्ते पुनः सुताः ॥ ७३ ॥ स प्राह यत्तु युष्माभिर्जनके मय्यनुष्ठितम् । तत्किं सयुक्तिकं? को वा, स्वदोषानीक्षते जनः ? ॥७४॥ महतोऽपि स्वदोषान् नो, परदोषांस्त्वणूनपि । पश्यत्यपूर्वमन्धत्वमहो लोकस्य दृश्यते ॥ ७५ ॥ तमेवं तैः समं विप्रं, रटन्तं वीक्ष्य सन्ततम् । अपरोऽपि जनोऽजस्रं, प्रारेभे तत्र निन्दितुम् ॥ ७६ ॥ ततोऽपवादभीतोऽसौ, पुरं राजगृहं गतः । जीविकार्थं निरालम्बो, द्वारपालमाशिश्रियत् ॥ ७७ ॥ उत्पन्नकेवलज्ञानः, पूज्यमानः सुरासुरैः । अत्रान्तरे जिनो वीरः, पुरे तत्र समाययौ ॥ ७८ ॥ ततो दौवारिकेणासावुक्तो भद्राहमीक्षितुम् । भगवन्तं व्रजिष्यामि, त्वया त्वत्रोपाविश्यताम् ॥ ७९ ॥ न चेतः क्वापि गन्तव्यं, तावद्यावत्समागतः । नाहमत्रेति संभाष्य, ययौ तेन जिनान्तिकम् ॥ ८० ॥ एवमस्त्विति तेनापि, प्रतिपद्य द्विजन्मना । द्वारदुर्गानिवेद्यानि, भुञ्जानेनासितं चि(व)रम् ॥ ८१ ॥ ततो लाम्पट्यतस्तस्माद्बहुशो बलिभोजनात् । पिपासाऽभूद् भृशं ग्रीष्मकालत्वाच्चातिबाधिका ॥ ८२ ॥ दौवारिकभयाच्चान्यं, मुक्त्वा पानाय नागमत् । ध्यात-

वान् केवलं धन्याः, जलजन्तव ईदृशम् ॥ ८३ ॥ ईदृग्ध्यानं समापूर्य, पिपासावेगतो रटन् । तिर्यगायुर्नियम्यासौ, वराकोऽगात्परासुताम् ॥ ८४ ॥ ततोऽत्रैव पुरे वाप्यां, दर्दुरोऽजन्यसौ क्षणात् । इदं मत्वा कथं युक्तः, कर्त्तुं जातिमदो नृणाम् ? ॥८५॥ अत्रान्तरे पुनस्तत्र, महावीरः समाययौ । वन्दनार्थं जनास्तस्य, पुरद्वारेण निर्गताः ॥ ८६ ॥ तेषां च निर्यतां श्रुत्वा, तत्कथाश्रयमारवम् । चिन्तितं दर्दुरेणाहो, श्रुतपूर्वो ध्वनिर्मम ॥ ८७ ॥ क्व पुनः स्याच्छ्रुतपूर्वो, मयेहापोहमीदृशम् । सञ्ज्ञित्वात् कुर्वतस्तस्य, जातिस्मरणमुद्ययौ ॥ ८८ ॥ अहो ! मां द्वारि संस्थाप्य, द्वारपालो यदन्तिकम् । आसीद्गतः स एष स्यादागतो भगवानिति ॥ ८९ ॥ अतो यथा व्रजन्त्येते, लोकास्तं प्रणिनंसवः । तथाऽहमपि यामीति, निरगात्तं विवान्दिषुः ॥ ९० ॥ उत्प्लुत्योत्प्लुत्य तत्पार्श्वं, यावदायातुमुद्यतः । तावच्छ्रेणिकसैन्याश्वखुरेणाक्रम्य चूर्णितः ॥ ९१ ॥ ततोऽसौ दर्दुरो मृत्वा, विशुद्धाध्यवसायतः । दर्दुराङ्केषु देवेषु, प्रादुरासीत् महासुरः ॥ ९२ ॥ उक्तञ्च—" तित्थयरवंदणत्थं चलिओ भावेण पावए सग्गं । जह दद्दुरदेवेणं पत्तं वेमाणियसुरत्तं ॥ ९३ ॥ " गीर्वाणश्रेणिमध्यस्थस्तत्रेन्द्रः श्रेणिकं प्रति । प्रोवाच न ह्ययं भक्तः, भ्रंस्यते केनचिज्जिने ॥ ९४ ॥ तदश्रद्दधदत्रासौ, तत्परीक्षार्थमागतः । कुष्ठिरूपधरो देवस्तद्दृष्टेर्मोहकारकः ॥ ९५ ॥ समवसृतिमध्यस्थवीरनाथस्य भक्तितः । गोशीर्षचन्द्रनेनांह्री, आलिलेप तथा यथा ॥ ९६ ॥ श्रेणिको लक्षयामास, तत्पादनिकटस्थितः ।

पापोऽयं पश्य
रसिकासेकमाधत्ते, पापोऽसौ स्वामिपादयोः ॥ ९७ ॥ ततोऽसो चिन्तयामास, रोषापूरितमानसः । पापोऽयं पश्य
रसिकासेकमाधत्ते, पापोऽसौ स्वामिपादयोः ॥ ९७ ॥ ततोऽसो चिन्तयामास, रोषापूरितमानसः । तं त्रिलोकपतिं पापः, पूयेन
कीदृक्षमकार्यं कुरुतेतराम् ? ॥ ९८ ॥ यः पूज्यः सर्वदेवानां, नरेन्द्राणां च भक्तितः । तं त्रिलोकपतिं पापः, पूयेन
परिषिञ्चति ॥ ९९ ॥ निहन्म्येनमतो दुष्टं, स्वाम्यवज्ञाविधायकम् । न युक्तमथवा कर्त्तुमिदं भगवदन्तिके ॥ १०० ॥
यतः शाम्यन्ति सर्वाणि, भगवत्यागते किल । पूर्वोत्पन्नानि वैराणि, न भवन्ति पराणि तु ॥ १०१ ॥ अतस्तावदितः
स्थानादुत्तिष्ठत्वेष कुष्ठिकः । येनास्य दर्शयाम्यद्य, फलं दुर्विनयस्य हि ॥ २ ॥ श्रीमद्वीरजिनेन्द्रेण, प्रस्तावेऽत्र क्षुतं
कृतम् । तच्छ्रुत्वा कुष्ठिना तेन, म्रियस्वेत्युदितं वचः ॥ ३ ॥ श्रेणिकेन क्षुते प्रोक्तं, सुचिरं जीव भूपते ! । अभयेन
क्षुते तूक्तं, जीव वा त्वं म्रियस्व वा ॥ ४ ॥ कालसौकरिकेणाथ, क्षुतेऽवाचि वचस्विना । मा जीव मा म्रियस्वेति,
कालसौकरिकाधुना ॥ ५ ॥ स्वामिसंमुखमाकर्ण्य, म्रियस्वेति वचो नृपः । तस्मै चुकोप बलवद्दन्तदष्टोष्ठपल्लवः ॥ ६ ॥
साञ्ज्ञताश्वाक्षिसङ्कोचा(ङ्कता)त्, स्वपुमांसो महीभुजा । गृहीतैनमतः स्थानादुत्थितं हन्त कुष्ठिनम् ॥ ७॥ अथो कथाऽ-
वसानेऽसौ, कुष्ठी नत्वा मुनीश्वरम् । प्रतस्थे पृष्ठतो लग्नाः, पुमांसस्तेऽपि धर्षितुम् ॥ ८ ॥ तान् दृष्ट्वा पृष्ठतो लग्नान्,
जिघृक्षून् पुरुषानसौ । उत्पपात नभः कुष्ठी, दिव्यरूपं विधाय सः ॥ ९ ॥ तैर्विलक्षैः समागत्य, श्रेणिकाय निवे-

दितम् । राजन् ! स कुष्ठिनो रूपं, परित्यज्य नभोऽगमत् ॥ १० ॥ तच्छ्रुत्वा पश्य कीदृक्षमाश्चर्यमिति विश्रुतः । पप्रच्छ मुनिपं भपः, स्वामिन् ! कोऽसौ ? निवेद्यताम् ॥ ११ ॥ ततश्च—योऽसौ यथा च देवत्वं, प्राप्तो येन च हेतुना । तादृग्रूपधरस्तत्र, चकार रसिकाभ्रमम् ॥ १२ ॥ सर्वं निवेदयामास, मुनीशो नृपतेः पुरः । अतीतानागतज्ञाता, संप्रश्नविषयीकृतः ॥ १३ ॥ भूयोऽप्युवाच राजेन्द्रो, ज्ञातं तावदिदं मया । स्वामिन्नाशीर्वचस्तावत्, किं निमित्तं त्वदादसौ ॥ १४ ॥ अर्हन्नुवाच संसारे, निःसारे किमु तिष्ठसि ? । मोक्षं व्रजेति बुद्ध्याऽसौ, मां म्रियस्वेत्यभाषत ॥ १५ ॥ सौख्यं ते जीवतो भूप !, मृतस्य नरके गतिः । तेन त्वामुक्तवानेष, जीवेति वचनं हितम् ॥ १६ ॥ अभयस्त्विह धर्मादीन्, जीवन् स्वीकुरुते मृतः । सुरेषूत्पत्स्यते तेन, प्रोक्तो जीव म्रियस्व वा ॥ १७ ॥ कालसौकरिकस्त्वत्र, तिष्ठन् पापं चिनोत्यलम् । नारकः स्यान्मृतस्तेन, निषिद्धो द्वितयादपि ॥ १८ ॥ अतः श्रुत्वाऽऽत्मनः पातं, नरके प्राह भूपतिः । युष्मादृशेष्वपीशेषु, कथं मे नरके गतिः ? ॥ १९ ॥ व्याजहार जिनो भूप !, बद्धायुर्नरके भवान् । प्रागेव तेन तेऽवश्यं, गतिस्तत्र भविष्यति ॥ २० ॥ अवश्यंभाविनो भावाः, न च शक्या महीपतेः ! । अन्यथा कर्तुमस्माभिरन्यैर्वाऽमरनायकैः ॥ २१ ॥

केवलं–भविताऽसि त्वमन्यस्यामर्हत्पङ्क्तौ जिनोत्तमः । महापद्माभिधो राजन्!, माऽतस्त्वमधृतिं कृथाः ॥ २२ ॥ तच्छ्रुत्वा प्रमदोत्कर्षप्रफुल्लनयनाम्बुजः । प्रणम्य श्रेणिको भूपः, प्रोवाचेदं विचक्षणः ॥ २३ ॥ किं कश्चिदस्त्युपायोऽत्र, स्वामिन्! येन न गम्यते । नरकेऽस्माभिरत्यन्तं, भीषणाकारधारिणि ॥ २४ ॥ भगवान् प्राह भो भूप!, कपिलां ब्राह्मणीं यदि । भिक्षां दापयसि प्रीत्या, तपस्विभ्यः कथञ्चन ॥ २५ ॥ कालसौकरिकं चापि, शूनां त्याजयितुं यदि । ईशिषे स्यात्ततो मोक्षस्तेऽन्यथा नेति चिन्त्यताम् ॥ २६ ॥ इत्यस्तसंशयो राजा, प्रणम्य परमेश्वरम् । स्थिरधीः शासने जैने, चचाल स्वगृहं प्रति ॥ २७ ॥ प्रस्तावेऽत्र स गीर्वाणो, दर्दुराङ्कः परीक्षितुम् । सम्यक्त्वविभ्रमं राज्ञः, पुरतः कृतवानिमम् ॥ २८ ॥ एकत्र दर्शितः साधुरकार्यं विदधत् पुरः । तथा यथा मनोऽन्यस्य, दृष्ट्वा धर्मात् पृथग्भवेत् ॥ २९ ॥ भूपस्तु निश्चलो धर्मे, भावयन् कर्मचित्रताम् । निवार्य प्रत्युत प्रीत्या, तमलक्ष्यं ययौ पुरम् ॥ ३० ॥ भूयोऽपि गर्भिणी साध्वी, दर्शिता तेन तामपि । सङ्गोप्य शासनस्योच्चैररक्षल्लाघवान्तरम् ॥ ३१ ॥ एवं यदा न राजेन्द्रः, कथञ्चिदपि चाल्यते । प्रत्यक्षीभूय देवेन, तदैवं किल भाषितम् ॥ ३२ ॥ भो भोः! श्रेणिक! यादृक्षस्त्वमिन्द्रेण परीक्षितः । तादृक्ष एव जैनेन्द्रशासनेऽसि सुनिश्चलः ॥ ३३ ॥ तद्गृहाण विभो! हारं,

गोलकाद्वितयं तथा । क्रीडार्थमिति गीर्वाणो, ब्रुवंस्तस्मै तदर्पयत् ॥ ३४ ॥ त्रुटितं च तथा हारं, योऽमुं सन्धास्यते पुमान् । न जीविष्यत्यसावेवमुक्त्वा सोऽन्तर्दधे सुरः ॥ ३५ ॥ नृपेणापि गृहं गत्वा, भणिता कापिला किल । देहि भिक्षां तपस्विभ्यस्तुभ्यं रामीप्सितं धनम् ॥ ३६ ॥ कालसौकरिकोऽप्येवं, प्रोचे भूमिभृता भृशम् । शूनां त्यज धनं येन, प्रचुरं ते ददाम्यहम् ॥ ३७ ॥ अभव्यत्वान्न तत्ताभ्यां, प्रत्यपद्यत भूपतेः । वचनं नाथ-वाऽपुण्यैरमृतं लभ्यतेऽशितुम् ॥ ३८ ॥ इदं प्रासङ्गिकं सर्वं, कथितं प्रस्तुतं पुनः । दुःखं सेटुबकः प्राप्त, उपभोगाकृतप्रमः ॥ ३९ ॥ ज्ञात्वा सेटुबकस्यैवं, चरितं बहुविस्तरम् । अत्यासक्तिमुपभोगे, मा कृतात्यन्तदुःखदाम् ॥ १४० ॥ अथ सुबन्धुकथानकं चैतत्—

पाटलिपुत्रे नगरे गुरुतरप्रतापदहनसंशोष्यमाणशत्रुसीमन्तिनीसमदरसस्योदायिमहाराजस्य मरणानन्तरमुपविष्टे नापितनन्दराजे तदन्वयपर्यन्ताधायिना चाणिक्येनोपस्थापितस्य चन्द्रगुप्तराजस्य राज्यचिन्तानियोगवाहिना महामन्त्रिणा तेनैव चाणिक्येन नवमनन्दसम्बन्धी महत्तमः सुबन्धुनामा निष्कासितः, स च भवितव्यतावशेन देवभूयंगते चन्द्रगुप्ते तत्पुत्र एव बिन्दुसारे प्रतिपालयति राज्यसम्पदं वृद्धीभूते च चाणक्यमन्त्रिणि तच्छिद्रान्वे-

पणपरो भूयोऽपि कथञ्चिल्लब्धप्रसरोऽन्यदा रहसि बिन्दुसारनरपतिं व्यजिज्ञपद्; यथा—देव! वयं भवदीयराज्ये यद्यप्यवगीता एव तथाऽपि यदत्यन्तविरुद्धं तन्न शक्नुमः सोढुमित्यतोऽभिदध्महे-तव मातुश्चाणक्येन यद् अत्यन्तनिर्घृणं कर्मानुष्ठितं तत्कथयितुमपि न शक्यते, राज्ञाऽभाणि—किं तत्?, सुबन्धुरभिदधौ-उदरविदारणं, ततस्तद्वचनमतिकर्कशमश्रद्दधानेन राज्ञा पृष्टा स्वधात्री, तया चाज्ञातभावार्थया पौर्वापर्यमविचार्य एवमेतदिति समर्थितं सुबन्धुवचनं, ततो रुष्टो राजा चाणक्यस्यावसरसमयसमेतस्य न निरीक्षितं संमुखम्, अपमानेन विज्ञातनृपतिभावो गत्वा गृहं चाणिक्यः परिभावितवांश्चेतसि—नूनं सुबन्धुविलसितमिदं, तदिदानीमपि तथा करोमि यथाऽनुभवति स्वदौर्जन्यफलमसाविति विभाव्य विरचय्य मध्येऽपवरकं मञ्जूषां व्यवस्थाप्य तदन्तः समुद्गकं आपूर्य सांयोगिकवासैः तन्मध्ये च प्रक्षिप्य लिखितं भूर्यखण्डं धर्मस्थानेषु च विनियोज्य स्वधनमात्मना गोकरीषमध्ये प्रतिपद्यानशनमिङ्गिनीमरणेन तस्थौ, द्वितीयदिने चोपलब्धतदीयानशनकरणादिवृत्तान्तया समागत्य धात्र्योपालब्धो राजा, यथा किमिदमाचेष्टितं पितामहतुल्ये महामन्त्रिणि चाणक्ये भवता?, नृपेण प्रत्यपादि—मदीयमातुरुदरविदारकस्य मातः! मा ग्रहीर्नामापि तस्य, तयोचे—मैवं वोचः, त्वद्रक्षार्थमेवार्येणैतदाचेष्टितं, यतस्तव पिता चन्द्रगुप्तो बहुशत्रुः मा विषादिभिर्विनाशं प्रापदितिबुद्ध्या-

ऽऽर्यचाणक्येन सदैव विषमिश्रभोजनेन धृतो, भवति च गर्भगते त्वन्मातुः कदाचित्त्वत्पित्रैव सह भोक्तुमुपविष्टायाः स्वभोजनमध्याच्चाणक्यमनापृच्छ्यैव त्वत्पित्रा कवलो दत्तः, तन्माहात्म्याच्च भुञ्जानैव विषवेगघूर्णिता दृष्टा चाणक्येन, भणितं च—आः ! वृषल किमिदमनुष्ठितं ?, न केवलमियं व्यापादिता, गर्भोऽपि विनाशितोऽस्याः, तदिदानीमेवं कालोचितं यदस्या विनाशेनापि गर्भरक्षणमित्युक्त्वा क्षुरिकया विपाद्य तदुदरमाचकर्ष भवन्तं, तवापि च तालुदेशे मक्षिकापदमात्रेण विषरसेन विश्रान्तेन शीर्षे बिंदुर्जनितः, अत एव बिन्दुसार इति नाम जातं, ततोऽसौ तद्वचनोपजातपश्चात्तापो हा ! न सुन्दरमाचरितं परमोपकारिणि मयाऽऽर्यचाणक्ये, तदिदानीमपि सन्मान्य समानयाम्येनमित्यभिदधदेव गतश्चाणक्यसमीपं राजा बभाषे च सस्नेहं, न च प्रत्युत्तरमदाच्चाणक्यः, ततोऽत्रान्तरे विदितधात्रीवृत्तान्तेन मायाप्रधानेन सुबन्धुनाऽवाचि--देव ! महात्मैष आर्यचाणक्यः प्रतिपन्नानशन इङ्गिनीमरणमङ्गीकृत्य स्थित आस्ते, नेदानीं प्रत्युत्तरं गृहगमनं वा करिष्यति, वयमेवात्र धिक्कारहता ये एवंविधमहापुरुषाणां पौर्वापर्यमपर्यालोच्यैव श्रुतमात्रग्राहितया कलङ्कितामारोपयामः, सर्वथा सर्वावस्थासु पूज्या एव महात्मान इति कालोचितसपर्यया पर्युपास्महे, किमनेन महाराज ! महेलाजनोचितेन परिदेवनेनास्माकमित्यभिधाय पुष्पधूपादिव्यग्रहस्तः पूजां कर्त्तुमारेभे, नरेन्द्रश्च

स्थित्वा कियतीमपि वेलां प्रस्थितः स्वस्थानं, सुबन्धुश्च क्षणमात्रेण विजनमाकलय्य करीषोपरि प्रक्षिप्य धूपाङ्गारं गतः स्वगृहं, क्रमप्रवर्द्धमानेन च कारीषवह्निनाऽऽश्लिष्टदेहश्चाणक्यो मृत्वोत्पेदे देवत्वेन, गतेषु केषुचिद्दिनेषु विज्ञप्य राजानं सुबन्धुः प्रविवेश चाणिक्यगृहं दृष्टवांश्च तत्र तालितमपवरकं, नूनमेष साररिक्थस्थानमिति विचिन्तयन् यावत् तमुद्घाटयामास तावद्ददर्श तदन्तर्मञ्जूषां, हृष्टचित्तेनोद्घाटिता सा, दृष्टस्तन्मध्ये समुद्गकः, तमप्युद्घाटय यावत्पश्यति तावदवलोकयामास सुगन्धीन् वासान्, दत्त्वा नाशाग्रे किमेतावता यत्नेनामी धृता इति चिन्तयन् सूक्ष्मेक्षिकया यावदीक्षाञ्चक्रे तावद् दृष्टिपथमवततारास्य तन्मध्यवर्त्ति लिखितं भर्यखण्डं, वाचितं च—"आघ्राय य इमान् वासान्, ब्रह्मचर्यादिसेवया। नासिष्यते व्रतीवाशु, स यास्यति यमान्तिकम् ॥ १ ॥" ततोऽसौ मरणभयभीतो लिखितपरीक्षानिमित्तं पुरुषमेकं तान् गन्धानाघ्राय्य स्नानादिपूर्वं स्त्रीसेवां कारयामास, तं च तद्गन्धव्याकुलितचेतनं क्षणमात्रेण परासुतामापन्नं विलोक्य चिन्तितवान्—अहो ! दारुणता चाणक्यस्य येन स्वयं म्रियमाणेनोपायतो वयं मारिताः, तदनन्तरं च स्वप्राणरिरक्षिषया विधाप्य निजतुण्डमुण्डमुण्डनकं तस्थौ यतिवत्त्यक्त्वा स्नानादि समस्तभोगाङ्गम् ॥ समाप्तं सुबन्धुकथानकं, भट्टिनीसंविधानकं चेदम्—

एकस्मिन् प्रत्यन्तग्रामे ब्राह्मणस्यैकस्य भार्या नवे वयसि वर्त्तमाना स्वभर्त्तारं कनकचूडकाद्यलङ्कारं ययाचे, तेन च सुवर्णकारस्य सुवर्णमर्पयित्वा कारितो यथोद्दिष्टो भूषणविशेषः, समानीतो गृहं, प्रशस्तदिवसे पिनद्धः स्वकरादौ, भणिता च भट्टिनी, यथा—प्रत्यन्तग्राम एष म्लेच्छादयोऽत्रापतन्ति, तस्मान्न यदा कदाचिदेतस्य परिधानं कार्यं, किन्तु विशिष्टतिथ्यादावेव, शेषकालं तु गर्त्तादिगतो धार्यः, तयोदितं—किमेवमाकुलः ?, प्रथममेवैतस्य कारितस्यैतदेव फल यदनारतं परिभोगो, यदा च धाट्यादिभयं भविष्यति तदा विमुच्य गोपयिष्यामि, एवं च भर्तृवचनमवगणय्य यद्दिवसात्प्रभृति परिहितमाभरणं तद्दिनाद्रात्र्यादावपि न मुमोच, अन्यदा चाज्ञातैवाकस्मात्कुतोऽप्यागता म्लेच्छधाटी, तया लुण्टितुमारब्धे ग्रामे केचिल्लुण्टाकास्तस्यैव ब्राह्मणस्य गृहमनुप्रविष्टाः, भट्टिन्या च मांसोपचितहस्तया न पारितमुत्तारयितुमाभरणं, दृष्ट्वा तच्चैरौत्सुक्येन हस्तच्छेदं विधाय गृहीतं, नीतं च स्वधाम, जाता च सा दुःखभागिनी॥ एवं चानिवृत्ता उपभोगपरिभोगयोः प्राणिनोऽसातोदयभाजो भवन्तीति विज्ञायैतत्परिमाणकरणे यत्न आस्थेय इति गाथाभावार्थः ॥ अत्र च सेडुबकसुबन्धुकथानके आहारपुष्पाद्युपभोगविषये नित्यमण्डितभट्टिन्युदाहरणं च परिभोगविषयमिति विभागख्यापनार्थमुदाहरणत्रयमिति ॥ ये पुनरिह कृतपरिमाणास्तेषां गुणोपदर्शनायाह—

पोग्गलपरिमाणं चिंतिऊण भोगेहि जे विरज्जंति ।
सिवजम्मे जह जंबू, वंदिज्जंते बहुजणेणं ॥ ७९ ॥

'पुद्गलपरिणामं' पूरणगलनधर्मकस्कन्धपरिणतिं 'चिन्तयित्वा' पर्यालोच्य, यथा य एव पुद्गला अत्राशुभवर्णा विरूपास्ते एव संस्कारवशाच्छुभवर्णादिभाजो जायन्ते; यथा खातिकोदकं कुथितकलेवरादिपूतिगन्ध्यतिकलुषस्वभावमपि सुबुद्धिमन्त्रिणा विशिष्टसंस्कारवशान्मनोहारिवर्णगन्धरसस्पर्शं सम्पादितं, ये चात्र शोभनरूपादिमन्तस्तेऽपि पदार्थान्तरसंसर्गवशाद्विरूपगन्धादिमत्त्वमवाप्नुवन्ति, यथा मोदकप्रियकुमारस्य प्रधानभोजनाङ्गरागादयः शरीरसंपर्कवशाद्दुर्गन्धतादित्वमापन्नाः, इत्यादिरूपं पुद्गलपरिणामं चिन्तयित्वा 'भोगेभ्यः' कामेभ्यो ये 'विरज्यन्ते' उद्विजन्ति, लघुकर्माणः पुरुषा इति शेषः, यत्तदोर्नित्याभिसम्बन्धात् ते किमित्याह—'वन्द्यन्ते' स्तूयन्ते 'बहुजनेन' प्रभूतलोकेनेति तुर्यपादेन सम्बन्धः, को यथा ?—'शिवजन्मनि यथा जम्बूः' शिवाख्यभवे जम्बूस्वामीव—अपश्चिमकेवलीवेति गाथासङ्क्षेपार्थः ॥ व्यासार्थस्तु कथानकगम्यः, तच्चेदम्—

जम्बूद्वीपाभिधे द्वीपे, वैताढ्याद्रिद्विधाकृतम् । विद्यते भरतक्षेत्रं, शशाङ्कशकलाकृति ॥ १ ॥ तन्मध्यखण्ड-

विख्यातो, देशोऽस्ति मगधाभिधः । अनेकनगरग्रामगोकुलारामराजितः ॥ २ ॥ यत्र च—ग्रामाः सरोभिराभान्ति, सरांसि नलिनीवनैः । नलिन्यः पद्मसङ्घातैः, पद्मानि भ्रमरोत्करैः ॥३॥ तत्रास्ति प्रकटं लोके, पुरं राजगृहाभिधम् । तडागदीर्घिकाऽऽरामकूपवापीमनोहरम् ॥४॥ यत्रापणा विराजन्ते, वेलोद्देशा इवाम्बुधेः । मुक्ताविद्रुमरत्नौघशङ्खशुक्त्यादिराशिभिः ॥५॥ हतारिमत्तमातङ्गमानम्लानिविधायकः । तत्रासीच्छ्रेणिको राजा, बिभ्रत् केशरिणस्तुलाम् ॥ ६ ॥ यत्र प्रणतसामन्ते, नीत्या पालयति क्षितिम् । कषायस्त्रिफलास्वेव, क्षारता लवणे तथा ॥ ७ ॥ सच्छिद्रत्वं च मुक्तासु, गणिते भागहारकः । ग्रीष्मदिनेषु सन्तापो, न प्रजास्वभवन् अमी ॥ ८ ॥ सकलान्तःपुरसारा तस्यासीच्चेल्लणाभिधा पत्नी । निरुपमरूपादिगुणा जिनशासनबद्धदृढभक्तिः ॥ ९ ॥ भुञ्जानस्य तया सार्द्धं, काम्यकामाननुत्तरान् । रम्भयेव हरेस्तस्य, गतः कालः कियानपि ॥ १० ॥ अन्यदा केवलालोकलोकालोकविलोककः । समायातो महावीरः, सुरासुरनमस्कृतः ॥ ११ ॥ तस्यागमनमाकर्ण्य, श्रेणिको नरनायकः । वन्दनार्थं समागन्तुं, प्रवृत्तोऽर्द्धपथस्य च ॥ १२ ॥ अवतीर्णो दृष्टिपथं प्रसन्नचन्द्राभिधानराजमुनिः । कायोत्सर्गावस्थितदेहो नगरस्य बाह्यभुवि ॥ १३ ॥ भक्त्या तदन्तिकं गत्वा, दत्त्वा तिस्रः प्रदक्षिणाः । प्रणेमे श्रेणिकेनासौ, नो बभाषे च तेन सः ॥ १४ ॥ ततश्च-मुक्त्येक-

दत्तचित्तोऽयं, लोकयात्रापराङ्मुखः । सर्वसङ्गविनिर्मुक्तो, महाध्याने विवर्त्तते ॥ १५ ॥ तेनैव वादयत्येषः, प्रणमन्तं न मामपि । अचिरेणेदृशध्यानो, मोक्षं संसाधयिष्यति ॥ १६ ॥ प्रथमैषेव कर्त्तव्या, यदिवाऽद्य जिनान्तिके । पृच्छेति चिन्तयन् राजा, जगाम समवसृतिम् ॥ १७ ॥ या च कीदृशी—प्राकारत्रयरत्नमयूखा, बद्धसुरेन्द्रधनुःशतरेखा । देवकिरीटमणिद्युतिविद्युद्दामविनाशितसन्तमसद्युत् ॥ १८ ॥ दुन्दुभिरवघनगर्जिविशिष्टा, पूरितलोकसमूहहृदिष्टा । भव्यशिखण्डिविधापितनृत्या, प्रावृडिव प्रतिभात्यनुवृत्ता ॥ १९ ॥ अथ तत्र प्रविश्यासौ, ववंदे भक्तिनिर्भरः । जिनं प्रदक्षिणीकृत्य, महावीरमकल्मषम् ॥ २० ॥ इन्द्रादिषु यथौचित्यं, कर्त्तव्यं प्रविधाय च । निषण्णः स्वोचितस्थानेऽप्राक्षीद्धर्म्मकथान्तरे ॥ २१ ॥ स्वामिन् ! प्रसन्नचन्द्राख्यो, मुनिर्यत्र विलोकितः । ध्याने मया वर्त्तमानस्तद् ध्यानं कस्य साधकम् ? ॥ २२ ॥ जगन्नाथोऽवदद्राजन् !, सप्तमपृथिवीगतेः । नृपतिश्चिन्तयामास, तच्छ्रुत्वा निजचेतसि ॥२३॥ हा ! किमेवं जिनो ब्रूते, निःसङ्गस्य तपस्विनः । सप्तम्याः किं भुवो ध्यानं, साधकं भवति क्वचित् ? ॥ २४ ॥ यद्वाऽन्यथैव नाथेन, निर्दिष्टं मयका पुनः । अन्यथा श्रुतमित्येव, चिन्तयत्येव भूभुजि ॥ २५ ॥ क्षणमात्रेण संजज्ञे, नभस्तारकितं यथा । गच्छद्भिर्देवसङ्घातविमानैर्द्युतिभासुरैः ॥ २६ ॥ ध्वानपूरितरोदस्यस्तदा

दध्वान दुन्दुभिः । उल्ललास सुराणां च, घनो जयजयारवः ॥ २७ ॥ ततो भूयोऽपि पप्रच्छ, विनयावनतमस्तकः । जिनेन्द्रं श्रेणिको नाथ !, किमेतज्जातमद्भुतम् ? ॥ २८ ॥ देवा यत्र प्रयान्त्येते, कृतदुन्दुभिनिःस्वनाः । भगवान्भ्यधान्नृप !, प्रसन्नेन्दुमहामुनेः ! ॥ २९ ॥ केवलज्ञानमुत्पन्नं, पूजार्थं तत्र यान्त्यमी । स प्राह यन्मया पूर्वं, श्रुतं मिथ्यैव किन्तु तत् ? ॥ ३० ॥ त्रैलोक्याधिपतिर्ब्रूते, न मिथ्या किन्तु तत्क्षणे । रौद्रध्यानममुष्यासीद्, राजोवाच, पुनर्जिनम् ॥ ३१ ॥ महदाश्चर्यमाभाति, ममैतज्जिनपुङ्गव ! । कथं तत्तादृशं ध्यानं ?, कथं वा ज्ञानमीदृशम् ? ॥ ३२ ॥ किं वा निबन्धनं तत्र, ध्याने जातं महामुनेः ? । तीर्थनाथोऽब्रवीद्राजन् !, किमाश्चर्यमिदं तव ? ॥ ३३ ॥ येनैकस्मिन् दिवसे सङ्ख्यातीता भवन्ति कर्मवशात् । बाह्यनिमित्तापेक्षाः शुभाशुभा जीवपरिणामाः ॥ ३४ ॥ पृष्टं निबन्धनं यच्च, ध्याने तच्छृणु पार्थिव ! । यदा त्वं वन्दनार्थं नो, निर्गतो नगरान्नृप ! ॥ ३५ ॥ सुमुखो दुर्मुखश्चान्यस्तदैवागात् त्वदग्रतः । अवोचत् सुमुखस्तत्र, दृष्ट्वा तं मुनिसत्तमम् ॥ ३६ ॥ अहो ! धन्यः सपुण्योऽयं, यस्त्यक्त्वा राज्यमुत्तमम् । घोरं तपश्चचारैवं, संसारसुखनिःस्पृहः ॥ ३७ ॥ दुर्मुखस्त्वाह धन्यत्वं, कुत एतस्य विद्यते ? । असञ्जातबलं बालं, प्राव्राजीत् प्रविहाय यः ॥ ३८ ॥ स सम्प्रति सुतस्तस्य, वैरिभिः परिभूयते । अशक्तो विग्रहे तेषां, च्यावितो

साधुश्चिन्तितवानिदम्
राज्यसम्पदः ॥ ३९ ॥ एतत्तस्य वचः श्रुत्वा, कषायवशवर्त्तिताम् । यातः प्रसन्नचन्द्राख्यः, साधुश्चिन्तितवानिदम्
॥ ४० ॥ मम पुत्रस्य को राज्यं, गृह्णाति मयि जीवति ? । त्रोटयामि शिरस्तस्य, य एवं कुरुते मम ॥ ४१ ॥ एवं
विचिन्तयन्नेव, धर्मध्यानं विमुच्य सः । रौद्रध्यानमनुप्राप्तः, कोपलुप्तविवेकधीः ॥ ४२ ॥ येन—भक्ष्यमभक्ष्यं पेयमपेयं,
कृत्यमकृत्यं चार्यमचार्यम् । धर्ममधर्मं सातमसातं, क्रोधवशो जीवो नहि वेत्ति ॥ ४३ ॥ अपिच—प्रज्वलितकोपवह्निः
क्षणेन चरणेन्धनं दहति जीवः । कष्टानुष्ठानशतैर्यदर्जितं प्रचुरकालेन ॥ ४४ ॥ ततोऽसौ चेतसैवाशु, शत्रुभिः
सह सङ्गरम् । प्रारेभे कर्त्तुमत्यन्तं, विस्मृतात्मा प्रकोपतः ॥ ४५ ॥ सर्वायुधक्षयो जातो, यावदेतस्य
तत्र च । तावत्प्रसारितः पाणिः, शिरस्त्राणजिघृक्षया ॥ ४६ ॥ न चासौ तत्समापन्नः, केवलं लुञ्चितं शिरः ।
परपर्शावेशविवशः, प्रत्यावृत्तस्ततः पुनः ॥ ४७ ॥ हा ! हा ! दुष्ठु ! मयाऽचिन्ति, क्रोधान्धीकृतचेतसा । मिथ्या-
दुष्कृतमेतस्य, संस्कृतात्मा ददाम्यहम् ॥ ४८ ॥ को वाऽत्र कस्य तनयः, पिता भ्राताऽथ वैरिकः ? । नारकादि-
चतूरूपभवावर्त्तेऽटतः सदा ॥ ४९ ॥ यतः—सर्वेऽपि पितरो जाताः, सर्वेऽपि मम पुत्रिकाः । सर्वेऽपि वैरिणो लोके,
३१ सर्वेऽपि प्रियबान्धवाः ॥ ५० ॥ कस्योपरि विधीयेते, रागद्वेषौ मनस्विना ? । तदेवमनवस्थायिस्वभावे दारुणे भवे

॥ ५१ ॥ एवं विचिन्तयन्नेवापूर्वं करणमाश्रितः । आरूढः क्षपकश्रेणिं, लेभे केवलसंविदम् ॥ ५२ ॥ तदेवं भूप ! भवता, यदाऽयं प्रविलोकितः । तदा दुर्मुखदुर्वाक्यप्रकोपवशगोऽभवत् ॥ ५३ ॥ तेनैव सप्तममहीयोग्यध्यानो मयोदितः । पूर्वमेष इदानीं तु, वैराग्योत्पन्नकेवलः ॥ ५४ ॥ अत एव—गुर्वी चित्तक्रियैवात्र, मनोवाक्कायकर्मसु । यया सप्तमभूप्राप्तिर्मोक्षलाभोऽथवा भवेत् ॥ ५५ ॥ एवं विज्ञातभावार्थः, पुनः प्राह नराधिपः । सुरासुरौघसंपूज्यं, केवलं भगवन्निदम् ॥ ५६ ॥ एतस्मिन् भरतक्षेत्रे, व्यवच्छेदं क्व यास्यति ? । समये तत्र चायातो, वन्दनार्थं जगद्गुरोः ॥ ५७ ॥ एकः सुरो महातेजाश्चतुर्देवीसमन्वितः । विद्युन्मालीति विख्यातो, दर्शयित्वा जिनस्तकम् ॥ ५८ ॥ अवादीत् केवलस्यात्र, व्यवच्छेदो भविष्यति । उवाच श्रेणिको भूयः, कथं देवस्य केवलम् ? ॥ ५९ ॥ तीर्थनाथोऽवदद्राजन् !, एष सप्तमवासरे । च्युत्वा भविष्यति नरः, स च प्राप्स्यति केवलम् ॥ ६० ॥ नृपतिः प्राह यद्येवं, कथमेतस्य वीक्ष्यते । ईदृग्द्युतिर्यतो देवाश्च्युतकाले क्षीणतेजसः ॥ ६१ ॥ उवाच तीर्थकृत्पूर्वमस्यासीद् या द्युतिः परा । तस्या असङ्ख्यभागोऽपि, नेदानीं नृप ! विद्यते ॥ ६२ ॥ जगाद श्रेणिको भूयः, किमेतेनान्यजन्मनि । मुनीन्द्र ! सुकृतं चक्रे, येनास्य द्युतिरीदृशी ? ॥ ६३ ॥ जगद्गुरुणा भणितम्-आसीत् इहैव मगधाजनपदे सुग्रामाभिधानग्रामे

आर्जवनामा राष्ट्रकूटः कुलपुत्रकः, तस्य रेवती भार्या, तया च सह विषयसुखमनुभवतः कालक्रमेणोदपादि अस्य पुत्रद्वयं, प्रथमो भवदत्तो द्वितीयो भवदेवः, प्राप्तौ च परिपाट्या यौवनम्, अन्यदा समागतास्तत्र सुस्थिताचार्याः, तद्वन्दनानिमित्तं निर्जगाम सुग्रामवासी लोकः, तन्मध्ये भवदत्तभवदेवावपि गतौ, दृष्ट्वा भगवन्तमाचार्यं वन्दितवन्तौ भावसारं, तेनाप्यानन्दितौ दुष्टाष्टकर्मेन्धनानलेन धर्मलाभेन, निविष्टौ गुरुचरणनिकटवर्त्तिनि भूपृष्ठे, शेषलोकोऽप्यभिवन्द्य गुरुमुपविष्टो यथास्थाने, अत्रान्तरे प्रारब्धा सूरिणा धर्मदेशना, तद्यथा—संप्राप्य मानुषत्वादिसामग्रीमतिदुर्लभाम् । भो भव्याः ! धर्म एवेह, करणीयो हितैषिभिः ॥ १ ॥ स च प्राणिवधालीकादत्ताब्रह्मविवर्जनात् । तथा परिग्रहत्यागाज्जायते नान्यथा पुनः ॥ २ ॥ य एतं कुरुते धर्मं, सर्वाशंसाविवर्जितम् । स्वर्गमोक्षसुखं तस्य, वर्त्तते करपल्लवे ॥ ३ ॥ यस्तु प्राणिवहत्यादिपापेषु सततं रतः । दुःखं नरकतिर्यक्षु, प्राप्यं तेन पुनः पुनः ॥ ४ ॥ एतदाकर्ण्य प्रतिबुद्धो भवदत्तो जग्राह प्रव्रज्यां, विजहार च सह गुरुभिः, अन्यदाऽऽचार्या विज्ञप्ता एकेन साधुना, यथा—युष्मदनुज्ञया वाञ्छामः स्वजनवर्गान्तिकमभिगन्तुं, मा कदाचिन्मामवलोक्य तत्रातिस्नेहसंबद्धो मम कनीयान् भ्राता प्रविव्रजिष्यति, ततो विसर्जितो बहुश्रुतसाधुसमेतोऽसौ गुरुणा, दृष्ट्वा जातिवर्गं समागतः

स्तोकदिनैरेव, आलोचितं च गुरूणां, यथा—तद्योग्या पितृभ्यां कन्या वरिता तेन स न प्रव्रजितः, इदं चाकर्ण्य भणितं भवदत्तसाधुना-नन्वेषोऽपि किल स्नेहो भण्यते ? यत्र त्वामपि भ्रातरं धर्मसारथिं प्रभूतकालात् समालोक्य न स प्रवव्राज, तच्च श्रुत्वा सोऽपि मुनिर्भवदत्तसम्मुखं निजगाद, यथा भवतोऽपि विद्यत एवैकः कनिष्ठो भ्राता, त्वयि तत्र गते तमपि द्रक्ष्यामः प्रव्रजन्तं, भवदत्तो न्यवेदयद्—यदि भगवन्तः सूरयस्तमुद्देशं गमिष्यन्ति तदा स मां दृष्ट्वा कदाचिद्यदि न प्रव्रजिष्यति तदा त्वमपि द्रक्ष्यसीत्येवमुक्तिप्रत्युक्तिषु जातासु कालान्तरे ग्रामानुग्रामेण विहरमाणाः सूरय आजग्मुर्मगधाजनपदवर्त्तिनं सुग्रामासन्नमेकं ग्रामं, ततो विज्ञप्ताः सूरयो भवदत्तसाधुना, यथा भगवन् ! भवदनुमत्येच्छामि स्वज्ञातीन् द्रष्टुं, ततः सूरिभिः सुसाधुसमान्वितः प्रेषितोऽसौ, प्राप्तः सुग्रामम्, इतश्च भवदेवः तत्र समये नागदत्तलक्ष्मीवत्योर्दुहित्रा नागिलया सार्द्धं विवाहमङ्गलनिमित्तमुपारूढो विवाहवेदिमण्डपं, स्वकरेण गृहीतवधूकरोऽतिभ्रमितो मण्डलानि, अत्रान्तरे प्रविष्टो भवदत्तसाधुरेतद्गृहं, ततस्तं दृष्ट्वा परितुष्टाः सर्वे तत्स्वजनबान्धवाः, कृतमुचितकरणीयं, वन्दितोऽसौ समं द्वितीयसाधुना, श्रुतं चैतद्भवदेवेन यथा समागतो भवदत्तसाधुर्ज्येष्ठो मत्सहोदरः, ततो मुक्त्वा विवाहमङ्गलशेषकर्त्तव्यं निवार्यमाणोऽपि स्वश्वशुरकुललोकेन धार्यमाणोऽपि समवयोवयस्यैर्निषि-

ध्यमानोऽपि रमणीयरमणीजनैरेषोऽहमागतो मा त्वरिष्ठा इति ब्रुवन्नेव दुर्वारभ्रातृस्नेहोत्कण्ठाविसंस्थुलितमानसः समाजगाम भ्रातृसमीपं, ववन्दे सादरं सह द्वितीयसाधुना एनं, साधुभ्यां दत्तो धर्मलाभोऽस्य, भणितं च मिलितबन्धुजनसंमुखं यथा व्यावृत्ता भवन्तो व्रजामस्तावद्वयमिदानीं, पुनः समयान्तरे समेष्यामो, गृहस्थैरुक्तं—तिष्ठत क्षणं, पश्यत भ्रातुर्विवाहोत्सवं, किमौत्सुक्यं भवतां ?, साधुभ्यामभाणि—न कल्पतेऽस्माकमेवं, ततो निर्बन्धेनापि कृतेन यावत्तत्र न स्थितौ तावत्प्रतिलाभितौ विपुलेनाशनपानखाद्यभेदेनाहारेण, समर्पितं च भक्ष्यभाजनं भवदत्तेन भवदेवकरे, प्रवृत्तौ गन्तुं मुनी, स्तोकभूभागादभिवन्द्य निववृतेऽशेषलोकः, भवदेवश्च कथं भ्रात्राऽहमविसर्जितो निवर्त्ते इति प्रतिप्रवेशपतितो गन्तुमारेभे, ददर्श च निवर्त्तनानिमित्तं वप्रपुष्करिणीवनखण्डादि, बभाण च अत्र क्रीडिता इह मज्जिता अस्मिन् पर्यटिताश्चेति, साधुश्च शून्यहुङ्कारः स्मरामि सर्वमिति ब्रुवंस्तावद्गतो यावत्प्राप्तो गुर्वन्तिकं, ततो दृष्ट्वा भवदेवं युवानं अभिनवोदूढनेपथ्यालङ्कृतं भवदत्तसाधुना सह समायातं भणितुं प्रवृत्ताश्चपलत्वेन क्षुल्लकाः, यथा—सत्यापितं स्वोक्तं ज्येष्ठार्यैर्यथा मम भ्राताऽर्द्धोदूढोऽपि प्रव्रजिष्यति यद्यहं भणिष्यामि, तत उपदर्शितः सूरीणां, तैरवाचि—किंनिमित्तमेष आययौ ?, भवदत्तेनावादि—प्रव्रज्यार्थं, ततः पृष्टोऽसौ, किं सत्यमेतत् ?, तेनाचिन्ति—इतः प्राणप्रिया

बाला, नवयौवनवर्त्तिनी। इतः सहोदरभ्रातुर्वाचाभङ्गोऽतिदुष्करः॥ १ ॥ इतोऽप्यभिनवोदूढाप्रियया विरहो महान्। इतोऽपि लघुता भ्रातुः, श्रेयः किं ? यत्करोम्यहम् ॥ २ ॥ तथाप्येतदेव प्राप्तकालं यन्मदीयभ्राता भणति, मा भूत् साधुजनपुरतो मत्सहोदरस्यान्यथावादित्वं, एवमालोच्य भणितमनेन, एवमिति, ततस्तन्मुहूर्त्त एव प्रव्राजितो गुरुणा, विहृतश्चान्यत्र, ज्ञापितः सकलां साधुसामाचारीं, करोति भ्रातुरुपरोधेन प्रव्रज्यां, हृदयेन त्वभिनवपरिणीतां तामेव निजजायां सर्वदाऽनुस्मरन्नास्ते; एवं च व्रजति काले सूत्रपौरुष्यां पठतोऽस्यान्यदा समागतमिदं सूत्रम्—" न सा महं नोऽवि अहंपि तीसे " तत आशङ्कितमनेन स्वचेतसि—अलीकमेतद्, यतः " सा महं अहंपि तीसे " इत्थंकारमेव च घोषयितुं प्रवृत्तो, वारितः साधुभिर्न तस्थौ, भवदत्तश्च कालक्रमेण कृतसंलेखन आयुःक्षयेण मृत्वा समुत्पन्नः सौधर्मकल्पे देवत्वेन, तत्रोपरते भवदेवो दयितादर्शनतृष्णापरिगतचित्तो विमुक्तगुरुविनयः शिथिलितयत्याचारो मदनशरैर्व्यथितुमारब्धः, एवं च तस्य गलितं धर्मोपदेशेन पलायितं सद्बोधेन विनष्टं विवेकरत्नेन आगतं कुलाभिमानेन प्रयातं दाक्षिण्येन प्रचलितं पौरुषेण दूरीभूतं शीलेन निःस्यूतं व्रतधारणाभिप्रायेण, किं बहुना ? ' अग्रस्थामिव चेतसः पुरइव व्यालम्बमानां दृशोर्जल्पन्तीमिव रुन्धतीमिव मनाङ्‌ मन्दं हसन्तीमिव । निद्रामुद्रितलोचनोऽपि सततं तामेव

पश्यत्यसौ, जातानल्पविकल्पकल्पनवशान्मार्गेषु गेहेषु च ॥ १ ॥ ततश्च प्रज्ञाप्यमानोऽपि सूरिणाऽनुशिष्यमाणोऽप्युपाध्यायेन शिक्ष्यमाणोऽपि साधुलोकेनावगण्य सर्वेषां वचनम् अपर्यालोच्यायातिमपरिभाव्य हिताहितं सर्वथा यद्भवति तद्भवत्विति विचिन्त्य संचलितो निजग्रामाभिमुखं, प्राप्तश्च स्थितस्तदुद्याने जिनायतने, इतश्च—तस्य जाया नागिला तत्रैव समये समागता गृहीतधूपकुसुमगन्धादिपूजोपकरणा तदेव जिनभवनं सममेकया ब्राह्मण्या कटीव्यवस्थितबालकया, वन्दितः साधुबुद्ध्या भवदेवः, पृष्टश्चानेन यथा—जानीथो युवामत्रार्जवराष्ट्रकूटगृहवार्त्तां ?, नागिलयोक्तं—जानीवः, मुनिनोदितं—कीदृशीम् ?, तयाऽवाचि—तस्य द्वौ पुत्रावभूतां, तौ प्रव्रजितौ, तत्पित्रोश्च लोकान्तरितयोः प्रभूतः कालः, इदमाकर्ण्य मनाग् विमनाः संवृत्तोऽसौ, ततस्तया प्रत्यपादि—साधो ! किं विमनस्कतां करोषि ?, किं भवतस्तौ ते किमपि ?, सोऽब्रवीद्—अहं तयोस्तनयो भवदेवनामा ज्येष्ठभ्रातुर्भवदत्तस्योपरोधेन प्रव्रज्यां गृहीतवान्, इदानीं च स मम भ्राता परलोकं गतः इत्यहं स्वपित्रोर्जायायाश्च स्मृत्वा स्नेहसारमिहोपेयिवान्, श्रुत्वा चेदमचिन्ति नागिलया—स एष मदीयो भर्त्ता प्रव्रज्यां मुमुक्षुरिव लक्ष्यते, मया च यावज्जीवमेव पुरुषनिवृत्तिः कृता, प्रव्रजितुकामा चाहमिदानीं, तत्किमत्र कर्त्तव्यम् ?,

अथवाऽवगच्छामि तावदेतस्याभिलषितनिश्चयामिति संप्रधार्य भूयोऽप्युवाच इयं--कस्य गृहे त्वया परिणीतं ?, स आह--नागदत्तस्य, यतस्तत्पुत्रिकैव नागिला मयोदूढा, तत्कथ्यतां तद्गृहकुशलवार्त्ताऽपि, तयोदितं--कुशलं तत्र, तेनाभाणि--किं पटी नागिला शरीरेण करोति च (कथां) कदाचिन्मदागमनादिसंबद्धां ?, नागिलया न्यगादि--यदैव भवान् प्रव्रजितस्तत्प्रभृत्येव सा साध्वीसमीपं यातुमारब्धा, तत्र च शुश्राव धर्मं प्रतिपेदेऽणुव्रतादीनि चक्रे यावज्जीविकीमब्रह्मनिवृत्तिं सम्प्रति प्रविव्रजिषुः सा तिष्ठति, त्वया च प्रतिपालितं प्रभूतकालं श्रामण्यं तप्तमनेकप्रकारं तपः, तदिदानीमेकान्ताध्रुवस्य निःसारस्यास्य जीवलोकस्य कारणेनैतेषां च मुखमात्ररसिककिंपाकफलतुल्यविपाकपरिणतीनामितरजनबहुमतानां विवेकिलोकतिरस्कृतानां विषयाणां निमित्तं भवशतसहस्रदुर्लभमेकान्तिकात्यन्तिकसकलसुखसन्दोहदायिजिनोपदिष्टविशिष्टसर्वविरतिरत्नमनर्घ्यमुपहत्य विचित्रमोहप्रकृतिप्रकटतरतरुनिकरनिरुद्धसद्विवेकचक्षुःप्रसरे प्रसरदनवरतजरामरणरोगशोकाद्यातङ्कदर्पितक्रूरश्वापदप्रचुरे प्रचुरतरखललोकप्रयुक्तदुर्वाक्यतीक्ष्णकण्टकाकुले कुलकोटिजन्मपरम्पराऽतिगुपिलवीरुधदुःखसञ्चारे संसारमहाकान्तारे नात्मा पातयितव्यः, किञ्च--

चिन्तितमात्रैरपि यैर्नरके निपतन्ति देहिनः सद्यः। कस्तेषु रतिं कुरुते विपाककटुकेषु विषयेषु ? ॥ १ ॥ येषां

भोगेषु तृष्णा, चेतसि संपद्यते शरीरवताम् । सा दुःखसहस्रकरी संसारविवृद्धिजननीव ॥ २ ॥ वरमशितं तालपुटं घोरविषैः क्रीडितं वरं सर्पैः । वरमुषितं सह रिपुभिः न तु विहिता कामकाम्याऽपि ॥ ३ ॥ यस्मात्तालपुटाद्याः जन्मैकं नाशयन्ति जीवानाम् । कामेच्छा तु भवान्तरशतेष्वपि प्राणिनं हन्ति ॥ ४ ॥ एवं विपाककटुतामालोच्य मुने ! त्वयाऽपि विषयाणाम् । तद्वाञ्छाऽपि न कार्या जिनशासनशुद्धबोधेन ॥५॥ इत्थं तयाऽनुशिष्टो विचिन्तयामास सोऽपि निजचित्ते । पश्य किमेतज्जातं ? न गुरुगृहं नापि पितृभवनम् ॥ ६ ॥ भवत्वेवं, तथाऽपि तावन्निजजायया च यावज्जीवन्त्या सह करोमि दर्शनमिति विचिन्त्योक्तमनेन—दर्शय तावन्नागिलाम्, अग्रे यत्सा भणिष्यति तत्करिष्यामि, ततस्तयोक्तम्—अहमेव सा, ततोऽसौ मनाग् विलक्षीभूतो लज्जासाध्वसाभ्यां सममेवालङ्कृतस्तन्मुखावलोकनपूर्वमितरततो निरीक्षमाणो मौनमाश्रितो भूयोऽप्याभाषितोऽनया, यथा—किमेवं ग्रीष्ममध्यन्दिनललाटन्तपतपनमण्डलोपतापितोषरप्रदेशप्रवृत्तमृगतृष्णिकाविप्रलब्ध इव मरुमार्गपथिको गाढोपारूढभोगतृष्णातरलितहृदयः शून्यचक्षुःक्षेपं दिक्षु विधत्से ?, न खलु विशिष्टधर्माराधनमन्तरेण प्राणिनामभिलषितार्थसंसिद्धिः कदाचिदपि जायते, तद्व्रज गुर्वन्तिकं गृहीतप्रायश्चित्तो भूयोऽपि सज्जीकुरु संयमशरीरं, मैवमेव निरर्थकतां नैषीश्चि-

रपरिपालितं चारित्रं, यतो भग्नचरणपरिणामाः प्राणिनो ब्राह्मणसुत इव भवन्ति बहुदुःखभाजनं, भवदेवेनोक्तं-कोऽयं ब्राह्मणसुतः ?, साऽब्रवीत्, श्रूयताम्—इहैव भारते क्षेत्रे लाटदेशालङ्कारभूतमस्ति भृगुकच्छपत्तनं, तत्राजन्म दारिद्र्योपद्रुतः कुरूपताप्राप्तप्रथमरेखो रेवादित्यनामा ब्राह्मणो बभूव, तस्याऽऽपदभिधाना देवब्राह्मणप्रसादप्राप्ता यज्ञ-पत्नी भट्टिनी,-सा चौष्ठबहिर्निर्गतदशना परिपिङ्गतारविषमाक्षी । लम्बोदरवक्रमुखी वामनका कृष्णवर्णा च ॥ १ ॥ तादृश्यप्यविनीता, कलहकरी वञ्चनैकचित्ता च । नित्योद्वेगविधात्री परिवादपरा भषणशीला ॥ २ ॥ ईदृश्या अपि तस्याः जनिताः पुत्र्यः क्रमेण पञ्चदश । सर्वलघुश्चैकसुतो रेवादित्येन विप्रेण ॥ ३ ॥ न चैतावतः कुटु-म्बस्य निर्वाहमेष 'ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्य' मित्यादिगायत्रीमात्रविद्यो याचनामात्रलब्धार्थेन कर्त्तुं शक्नोति, अतस्तयैव भट्टिन्या सहानीय विक्रीणाति दारुभारकान् वहत्युदकघटानीश्वरगृहेषु करोति कण्ड-नपीषणकचवरोज्झनाद्यनेकनिन्द्यकर्माणि भ्राम्यति भिक्षाम्, इत्थं प्रवर्त्तमानस्यास्यातिचक्राम प्रभूतः कालो, मरणपर्यवसानतया जीवलोकस्य कदाचिदुपरता भट्टिनी, तद्वियोगदहनदंदह्यमानमानसश्च भूतापहृतहृदय इव सन्निपातविचेतनीकृत इव किंकर्त्तव्यतामूढः स्थितः कानिचिद्दिनानि, अन्येद्युश्चिन्तितमनेन—यस्य धर्मा-

र्थकामानामेकोऽपि न हि विद्यते । अजागलस्तनेनेव, जन्मना तस्य को गुणः ? ॥ १ ॥ तदिदानीं मे सकलजन्तु-निकृष्टस्य प्रियप्रणयिनीविप्रयुक्तस्यापुण्यचडामणेर्मरणमेव श्रेयः, अथवाऽकृतसुकृतानां मरणेनापि किं ?, तस्मात्तावद्विदधामि नानाविधतीर्थावलोकनं, तेषु च पुण्यस्थानेषु स्नातो विधूतपापो यदि मरणमाराधयामि तथाऽपि न दोष इति विचिन्त्य यथाप्राप्ति प्रदाय कन्याफललिप्सया ब्राह्मणदारकेभ्यः स्वपुत्रिकाः समं तेन लघुना तनयेन चलितस्तीर्थयात्रायां, लघुकर्मतया च कथञ्चित्तथाविधभवितव्यतावशेन जातं तस्य कदाचित्कचित्साधुभिः सह दर्शनं, श्रुतस्तत्समीपे धर्मः परिणतो भावसारं, गृहीता दीक्षा सहैव पुत्रेण, पालयत्युद्यतविहारेण, गच्छत्सु दिनेषु क्षुल्लकोऽपि प्राप्तो यौवनं कर्त्तुमारब्धो विचित्रविकारान्, याचितुं प्रवृत्तो यतिजनानुचितानेकवस्तूनि, पुत्रस्नेहाच्च यतनया संपादयति तत्पिता, तथाहि—यदा वक्ति—आर्य ! न शक्नोमि प्रथमालिकया विनाऽऽसितुं, तदा तामप्यानीय ददात्याचार्यानुज्ञया, यदा ग्रीष्मकाले ब्रवीति—न पारयामि रविकरनिकरप्रतापमधिषोढुं, तदा सूरीननुज्ञाप्य कारयत्युपानत्परिभोगं शिरसि च कल्पं, एवं च मन्दपरिणामतया प्रतिदिवसोपचीयमानविविधेच्छानिर्वर्त्तनेनानुवर्त्यमानोऽपि पित्रा पितृसङ्क्लेशभीत्या धार्यमाणोऽपि साधुभिर्मदनशरधोरणीविध्यमानमानसो निर्लज्जतामवलम्ब्य

बभाषे पितरम्--आर्य ! नाहमलमविरतिकां विना स्थातुं, ततोऽसौ तत्पिता न योग्योऽयं चारित्ररत्नमहालाभस्य अनुचितः सम्यग्ज्ञाननिधानस्य अभाजनं सुगतेः पात्रं दुर्गतेः?, किं बहुना, भाव्यमनेनैहिकामुष्मिकानेकदुःखदन्दोलिनिकेतनेन, तस्माद् व्युत्सृजाम्येनमिति विचिन्तयन्नब्रवीत्--न त्वया नः किञ्चित्प्रयोजनं, व्रजात्मयोगेन तत्र यत्र कुत्रापि प्रतिभाति भवतो, व्युत्सृष्टस्त्वमस्मत्परिग्रहात्, इत्याद्यभिधाय साधुजनसमक्षं निष्काशितः स्वगच्छात्, ततः परित्यक्तसाधुलिङ्गोऽसावपि भोगाङ्गोपार्जनार्थं करोत्यनेकनिन्द्यकर्माणि, न च वराटिकामात्रमपि क्वापि प्राप्नोति, केवलं भिक्षया दिनावसानसंपाद्यमानोदरपूरणामात्राहारो महता क्लेशेन निनाय कियन्तमपि कालं, अन्यदा दष्टः सर्पेण आर्त्तवशेनोत्पेदे महिषत्वेन, सोऽपि तत्पिता तदीयवैराग्येण विशेषेण परिपाल्य निष्कलङ्कं श्रामण्यं विध्याराधितमरणः समुत्पन्नो देवलोके देवत्वेन, सञ्जातावधिज्ञानविज्ञाततद्वृत्तान्तो ददर्श महिषभववर्तिनमेनं महाभाराक्रान्तं कुट्यमानं लगुडादिभिः, ततः सञ्जातकरुणः सुतस्नेहेन समागत्य मर्त्यलोकं विकृत्य दैशिकवणिग्रूपं समुपदर्श्य विचित्रभाण्डापूरितविकटशकटसमूहं प्रभूतार्थप्रदानेन मोचयामास तं तत्स्वामिनः, ततोऽतिभारशकटे नियोज्यैनं देवशक्त्या तद्वहनासामर्थ्यपतितं च विलोक्यानेकतोत्रक-

यथा ' क्षान्त ! न शक्नोमि प्रथमा-
शालगुडादिप्रहारजर्जरितं कुर्वन्नेकतोऽन्यतो जनकरूपेण प्रतिपादयामास, यथा ' क्षान्त ! न शक्नोमि प्रथमा-
लिकां विनाऽऽसितुमित्यादि यावन्नाहमलमविरतिकां विना स्थातुं' ततोऽस्य पुनः पुनस्तामेव वचनरचनामाकर्णयतोऽ
भूदिदं चेतसि—यथा श्रुतपूर्वा मयेयं वर्णावली, रूपं चैतद्दृष्टपूर्वमिव ममाभाति, एवमीहापोहमार्गणगवेषणं कुर्वतस्त-
दावरणीयकर्मक्षयोपशमेन जातं जातिस्मरणं, ततो विज्ञातपूर्वभववृत्तान्तो गतः संवेगं, स विरक्तः संसारवासस्य,
अत्रान्तरे प्रकटित आत्मा देवेन कृता धर्मदेशना परिणता भावसारं प्रतिपन्नाणुव्रतः कृतभक्तप्रत्याख्यानः शुभ-
ध्यानोपगतः पञ्चनमस्कारपरायणः स्थित्वा दिनद्वयं तृतीयदिवसे मृतो जातः सौधर्मदेवलोके देवत्वेन महिषः, सुरस्तु
गतः स्वस्थानम् । एवं च ज्ञात्वा दुरन्तविषया विवर्जनीया जिनमतकुशलेन, अपिच—परत्रामुत्र च प्राप, यथाऽसौ
विप्रपुत्रकः । दुखं तथा व्रतभ्रष्टो, मा प्रापस्त्वमपीदृशम् ॥ १ ॥ इत्थं संबोधितो नागिलया भवदेवसाधुर्गतः
परमवैराग्यं, अत्रान्तरे नागिलयैव सह समागताया ब्राह्मण्याः सुतेन भणिता जननी, यथा—मातः ! मम
वमनं भवितुकाममालक्ष्यते तदानय शीघ्रं किमपि भाजनं येन तत्र वमित्वाऽतिमिष्टं पायसं पुनर्भोक्ष्ये,
ब्राह्मण्योदितं—वत्स ! नैतदुचितं, यतोऽतिमिष्टमपि यद्वान्तं न तत्परिभुज्यतेऽशुचित्वात्, तच्च श्रुत्वा भव-

देवेन चिन्तितं–सुष्ठूक्तं ब्राह्मण्या–यद्वान्तं न तत्परिभुज्यते, मयाऽपि वान्ता विषयास्तदिदानीं कथं पुनरभिलषामीति विचिन्त्य प्रत्यागतसंवेगः सती प्रेरणा भवत्या सुष्ठु प्रतिबोधितोऽहं त्वयेति प्रतिपादयन् दत्त्वा मिथ्यादुष्कृतं नागिलाया गतो गुरुसमीपं तत्रालोचितप्रातिक्रान्तो भावसारं चारित्वा चिरं तपोऽनशननमस्कारादिविधिना कालमासे कालं विरच्य सौधर्मदेवलोके शक्रसामानिको देवो जातः। इतश्च तदीयपूर्वभवभ्राता भवदत्तजीवदेवः स्थितिक्षये च्युत इहैव जम्बूद्वीपे पुष्कलावतीविजये पुण्डरीकिण्यां नगर्यां वज्रदत्तचक्रवर्त्तिनः प्राणप्रियाया यशोधरामहादेव्याः क्रियमाणेष्वनेकदेवतानां विविधोपयाचितशतेषु विचित्रमन्त्रतन्त्राद्युपायेषु विरच्यमानेषु प्रचुरबलिकर्मसु अपुत्रायाः पुत्रत्वेनोत्पेदे, गर्भगते च तस्मिन् मातुः समुद्रमज्जनकदोहदोत्पादे तत्पित्रा वज्रदत्तचक्रवर्त्तिना समुद्रप्रख्यसीतामहानदीनयनपुरःसरं तन्मज्जनककारणेनापनीतो दोहदो, निर्वृत्तमानसा च क्रमेणोचितसमये प्रसूता सुकुमारपाणिपादं दारकं, मासपरिपूर्त्तौ च तस्य दोहदानुरूपं कृतं सागरदत्त इति नाम, धात्रीपञ्चकप्रतिचर्यमाणश्च प्राप्तो देहोपचयेन कलाकलापेन च वृद्धिम् उपारूढो यौवनं पूर्वभवाभ्यासेन जननीजनकजिनधर्मकुशलत्वेन च जातो जिनशासनभावितमतिः, परिणायितश्च पितृभ्यामुदाररूपयौवन-

विज्ञानकलाकलापशालिनी, महासामन्तकन्याः समं ताभिः कदाचित्प्रहेलिकाप्रश्नोत्तरादिविनोदेन कदाचिज्जिनभवनेषु विशिष्टयात्रास्नात्रादिविधापनेन कदाचिन्मुनिजनोपदिश्यमानसद्धर्मरहस्यश्रवणेन कदाचित्सकलजीवलोकसारविषयसुखनिषेवणेन निनाय सुखेनानेकवर्षकोटिलक्षान्, अन्यदा च सर्वसत्त्वानन्दकारकः समाजगाम प्रथमघनसमयो, यत्र—निपतदतुच्छनिरन्तरधाराजलपूरपूरितपृथिव्याम् । निम्नोन्नता विभागा लक्ष्यन्ते नैव पथिकजनैः ॥ १ ॥ हरगलगवलच्छायैर्जलदैराच्छादितं तथा गगनम् । उदयास्तमयौ लोकैर्यथा न तरणेः प्रतीयेते ॥ २ ॥ निनाथमिवेलातलमशेषमनुताप्य मद्वियोगेऽसौ । क नु यास्यतीति मेघो गर्जति तज्जेतुमिव निदाघम् ॥ ३ ॥ क्षणदृष्टनष्टरागास्तडिल्लताः खलजनस्य मैत्र्य इव । न तथा प्रकाशतोपं जनयन्ति यथा समुद्वेगम् ॥ ४ ॥ एवंविधघनसमयेऽतिक्रान्ते च क्रमेण संप्राप्तः । कमलवनबन्धुभूतो विकाशिकाशः शरत्कालः ॥ ५ ॥ यस्मिन्नुत्फुल्लकुवलयाक्षी विकाशितसत्कुमुदहासिनी जाता । अनुरागाद्धामिवधूः प्रियमिव लब्ध्वा शरत्समयम् ॥ ६ ॥ उच्छलितविमलतारकदशनोज्ज्वलकिरणपूरितदशाशम् । हसितं शारदलक्ष्म्या सद्यो निजदयितसङ्ग इव ॥ ७ ॥ ईदृक्षशरत्समये सागरदत्तो निजप्रियायुक्तः । प्रासादशिखरवर्त्ती क्रीड-

न्नवलोकयाञ्चक्रे ॥ ८ ॥ विद्रुमवर्णं क्वचिदपि शिखिकण्ठसमप्रभं क्वचित्क्वापि । उत्तप्तसुवर्णनिभं कुत्रापि शशाङ्कबिम्बसमम् ॥ ९ ॥ इत्थं विचित्रवर्णकरमणीयमदभ्रमाभ्रसङ्घातम् । क्षणमात्रेण विलीनं ज्ञात्वा तं चिन्तयामास ॥ १० ॥ यथाऽयं मेघसङ्घातो, दृष्टनष्टो नभोऽङ्गणे । तथा सांसारिका भावाः, सर्वेऽमी क्षणनश्वराः ॥ ११ ॥ तदेषु नोचिता कर्तुं, क्वचिदास्था विवेकिभिः । किन्तु निःशेषसद्धर्मकर्मण्येव शिवप्रदे ॥ १२ ॥ एवं चिन्तयतोऽस्य विलोक्य वैराग्यविच्छायवदनकमलमुक्तं सप्रणयं प्रणयनीभिः—प्रियतम ! किमेवं मुहूर्तमात्रेणैवोद्विग्न इव विरक्त इव निर्विण्ण इव मुनिरिव कृतमौनव्रतो लक्ष्यसे ?, सागरदत्तेनाभाणि—विलोक्य शारदं मेघमुत्थितं गगनाङ्गणे । क्षणेन विलयं यान्तं, भीतोऽहं भवविस्तरात् ॥ १ ॥ यतः—देहः स्वजनसम्बन्धो, यौवनं राज्यसम्पदः । पश्यतामेव संसारे, ध्वंसमायान्ति देहिनाम् ॥ २ ॥ तदनेन शरीरेण, क्षणनश्वरधर्मणा । जिनदीक्षां गृहीत्वा चेत्क्रियते निर्मलं तपः ॥ ३ ॥ तदैव जन्मसाफल्यं, मन्येऽहमिति तद्वचः । श्रुत्वा ता आहुरेवं चेद्विलम्बः क्रियते किमु ? ॥ ४ ॥ विज्ञाय यतो धीराः पटुपवनविधूतजलधिजलतरलम् । जीवितमनिधनशिवसुखकृताभिलाषाश्चरन्ति तपः ॥ ५ ॥ सागरदत्तः प्राह—यद्येवं तर्हि विमोच्य पितरौ कुर्म एवं, ततो गतो मातृपितृसमीपं, महाकष्टेन मोचयित्वाऽऽत्मानममृत-

सागरदत्तस्य वैराग्यं

सागरसूरिसमीपे जग्राह सह प्रियाभिर्दीक्षां, स्वल्पकालेनैवोपात्तद्विविधशिक्षोऽशेषश्रुतोदधिपारप्राप्तो निर्मलोल्लासितावधिज्ञानो निवेशितो गुरुणा निजपदे, व्याजहार शिष्यगणसंपरिवृतः प्रतिबोधयन् भव्यलोकसङ्घातं, इतश्च—भवदेवसाधुजीवो देवायुष्कं सौधर्मकल्पे स्वोचितमनुभूय स्थितिक्षयेण ततश्च्युतः पुष्कलावतीविजये वीतशोकायां नगर्यां पद्मरथस्य राज्ञो वनमालाया महादेव्या गर्भेऽवततार, तदनुभावाच्च सा दानपरा सत्त्वेषु सुप्रसादा परिजने विनीता गुरुषु अनुकूला यतिषु दयापरा जीवेष्वाधिकलावण्योपचयेनात्यन्तविराजमानदेहाभोगा समजनि, कदाचिच्च परिपूर्णदिनेषु विजाता तनूजं, निवेदितं तज्जन्म प्रियंवदाभिधानचेट्या राज्ञः, तेन च परितोषवशोपजायमानरोमाञ्चकञ्चुकोद्गाढमवतार्य स्वाङ्गलग्नाभरणजातं दत्तमस्यै, प्रारब्धं च महाविभूत्या वर्द्धापनकं, तत्र चाक्षतपात्र[ग्रं० ६०००]-वस्त्राभरणमाल्यादिव्यग्रहस्तः समागन्तुं प्रवृत्तः पुरजनो, हर्षभरनिर्भरो गीतनृत्तादिचेष्टाः कर्त्तुमारब्धो विलासिनीसार्थः, अपिच—दीयमानघनदानसमूहं, मुच्यमानबहुबन्धनगेहम् । तोष्यमाणविविधार्थिविशेषं, रच्यमानगुरुदेवसुतोपम् ॥ १ ॥ एवंविधवर्द्धनकं नृपतिर्द्वादश दिनान्यनुविधाप्य । गर्भस्थितेऽत्र शिवमजनि तेन शिवनाम तस्य ददौ ॥ २ ॥ क्रमेण च प्रवर्द्धमानो देहोपचयेन समुपात्तनिःशेषकलाकलापः प्राप्तस्तारुण्यं सह वयस्यैराभि-

रममाणस्य प्रीत्या जगाम कियानपि कालः, अन्यदा सकलसुरासुरमनुष्यविद्याधरादिलोकप्रवर्त्तितविविधोत्सवः समायातो वसन्तसमयो, यत्र—कोकिलकुलकलरवगीतजनितजननिवहमानसानन्दा । सहकारमञ्जरीरेणुरञ्जिता भाति मधुलक्ष्मीः ॥ १ ॥ तस्मिंश्च शिवकुमारो निजमित्रवृन्दसमन्वितः क्रीडानिमित्तं ययौ चन्द्रकिरणोद्यानं, तत्र चापश्यत् कनककेतो राज्ञः प्रियङ्गुश्यामाया महादेव्याः कनकवतीदुहितरं, या च—निःशेषाङ्गोपाङ्गप्रतिष्ठितप्रवरलक्षणशरीरा । अपहरति मनो नूनं विलोकिता मुनिजनस्यापि ॥ १ ॥ तस्या दर्शनमात्रेणैव शिवकुमारः स्मरशरप्रहारजर्जरितमानसो विचिन्तयामास—यथा यथाऽसौ प्रविलोक्यमाना, विवेश मे मानसमस्तदोषा । तथा तथा चापनिवेशितेषुः, करोत्यनङ्गो निखिलाङ्गबाधाम् ॥ १ ॥ अत्रान्तरे तयाऽप्यपरापरतरुविलोकनकुतूहलेन परिचरणमाचरन्त्या चन्दनलतागृहान्तारितो मूर्त्तिमानिव मकरध्वजो ददृशेऽसौ, तदनन्तरं कुसुमकेतुरोपपञ्चकोपघातविवशीकृता साऽपि लक्षिता सखीजनेन कथंकथमपि नीता गृहं ज्ञापितश्चायं वृत्तान्तस्तज्जनन्याः तया च स्वभर्त्तुः, ततः क्रमेण द्वयोरपि गाढानुरागजायमानसङ्गमाभिलाषयोः कनककेतुना गत्वा पद्मरथसमीपं प्रदाय स्वसुतां शिवकुमारस्य प्रशस्ततिथिकरणलग्नमुहूर्त्तेषु कारितं महा-

विभूत्या पाणिग्रहणं, तया सह विषयसुखमनुभवता परिणीता अन्या अप्युदग्रयौवना निरुपमरूपलावण्यादिगुणगणो-
पेता अनेका महासामन्तदुहितरः, ताभिः सहानेकप्रकारजीवलोकसारक्रीडाविकारपरायणस्यान्यदा समाजगाम
श्रमणसमूहसमन्वितस्तन्नगर्यामेव सागरदत्तसूरिः, आवासितो लक्ष्मीनन्दनाभिधानोद्याने, प्रारब्धं च तत्र तेन मास-
क्षपणं, इतश्च तस्यामेव नगर्यामासीत् निजविभवपरितुलितवैश्रमणः कामसमृद्धो नाम सार्थवाहः, तस्यान्यदा भोज-
नसमये समुदपादीयं चिन्ता, यदुत—अस्मत्सदृशाः केचन दूरपरित्यक्तमरणसंत्रासाः । अजरामरा इवोच्चैः कुर्वन्ति
धनार्जनं मूढाः ॥ १ ॥ अगणितशीतोष्णभयास्तरन्ति जलधिं धनाशया पुरुषाः । प्रविशन्ति च भटसङ्कटसङ्ग्रामेऽ-
त्यन्तभयजनके ॥ २ ॥ किं बहुना? दुष्करतरमिह यत्तत् सर्वमेव विभवार्थी । विदधाति भवति चासौ प्रहीणलाभा-
न्तरायस्य ॥ ३ ॥ अपिच—एवं कष्टोपार्जितमपि यदि तद्भवति साधुलोकस्य । उपकाराय द्रव्यं तद् भवेत्सफलमेवै-
तत् ॥ ४ ॥ यतः—किं प्रचुरयाऽपि लक्ष्म्या तया न या यतिजनोपयोग्या स्यात् । कृपणप्राणप्रियया संसारविवृद्धि-
कारिण्या ॥ ५ ॥ एवं च चिन्तयतोऽस्य भवितव्यतानियोगेन समाजगाम मासोपवासपारणार्थं सागरदत्तमुनिवरो
गृहद्वारं, दृष्टः प्रमोदोत्फुल्ललोचनेनासौ, अनेनाभ्युत्थायाभिवन्द्य च प्रतिलाभितः प्रवर्द्धमानशुभाध्यवसायेन प्रासु-

कैषणीयाहारप्रकारैः, अत्रान्तरे भक्तिसमागतैर्गगनतलवर्त्तिभिर्देवादिभिः कृता सहिरण्या गन्धोदकपुष्पवृष्टिः, मिलितस्तत्र सकलो नगरीलोकः, शिवकुमारोऽपि जनादवगततद्वृत्तान्तः समागतस्तत्र, विलोक्य यतीश्वरं पूर्वभवानुवेधेन तदुपरि समुत्पन्नस्नेहातिशयो ववन्दे भावसारं, मुनिस्तु दत्त्वा धर्मलाभं गृहीताहारो गतस्तदेवोद्यानं, शिवकुमारप्रभृतिलोकश्च मुहुः श्रेष्ठिप्रशंसां मुहुः साधुस्तुतिं विदधानो गत्वा स्वस्थानानि पुनः पारणकावसाने सागरदत्ताचार्यस्य वन्दनाय ययौ, प्रदक्षिणात्रयकरणपूर्वं प्रणम्य भगवत्पादारविन्दद्वयमुपाविवेश च स्वोचितभूप्रदेशे, सूरिणा तु धर्मलाभपुरःसरं संभाष्यैनमारब्धा धर्मदेशना, यथा—भो ! भो ! जन्मजरामृत्युरोगोपद्रुतदेहिनाम् । शरणं नास्ति संसारे, मुक्त्वैकं जिनशासनम् ॥ १ ॥ एतदाराधनापूर्वं, दग्ध्वा कर्मवनं यतः । विलङ्घ्य भवकान्तारं, प्राप्ता मोक्षं महाधियः ॥ २ ॥ अपिच—यथा जीवदयाऽमुत्र, प्रोक्ता जीवादिविस्तरम् । प्ररूप्य सदुपायेन, तथा नान्यत्र कुत्रचित् ॥ ३ ॥ अत एवैतच्छासनव्यवस्थिताः—न खलु न खलु सन्तः सत्त्ववन्तोऽल्पवीर्यान्, निजसुखलवलोभाद्देहिनो दुःखयन्ति । मदमलिनकपोलस्तुच्छमेरण्डदण्डं, श्रयति किमु करीन्द्रो गण्डकण्डूयनाय ? ॥ ४ ॥ एतदाकर्ण्य शिवकुमारश्चिन्तयामास—सत्यमिदमुपदिष्टं भगवता, केवलं परिपूर्णं जिनाज्ञाकरणमन्तरेण न

जीवदया निर्वाहयितुं पार्यते, न च गृहस्थावस्थायां संपूर्णजिनाज्ञा संपादयितुं शक्या, तत्पितरौ मोचयित्वा करोमि
व्रतोपादानं, किञ्च—न तथा मम पित्रोरप्युपरि स्नेहा यथा सकृद् दृष्टेऽप्यत्राचार्ये, अतो व्रतग्रहणे ममैतत्सेवा निर्विघ्ना
संपत्स्यते, अपिच—एतावतो महास्नेहानुबन्धनिबन्धनस्य ममैतद्दर्शने नयनमनःसुखसन्दोहानुभवस्य किं कारण-
मिति प्रष्टव्यो भगवानिति पर्यालोच्य कथाविच्छेदे विज्ञप्तं शिवकुमारेण—भगवन् ! किं कारणमतितृष्णोऽहं
युष्मद्दर्शनस्य ? यतश्चिरकालवियुक्तसहोदरमिवावलोक्य भवन्तं प्रवर्द्धमानस्नेहामृतेन सिच्यमानस्येव मम मनः
परमानन्दसन्दोहमनुभवति, भगवता च विहितावधिज्ञानोपयोगेन विज्ञाय कथितः पूर्वभववृत्तान्तः,
ततोऽस्येहापोहमार्गणपरायणस्योदपादि जातिस्मरणं, ततः संजातयथाऽवस्थितावबोधो बभाण सूरिं—प्रभो !
एवमेतद् यथाऽऽदिष्टं पूज्यपादैः, तदिदानीमापृच्छ्य पितरौ मोचयित्वा तत्पार्श्वादात्मानं करोमि
भवत्समीपे जिनदीक्षाग्रहणेन जन्मसाफल्यं, आचार्येणोक्तं—देवानुप्रिय ! मा प्रतिबन्धं विधासीः, ततो
वन्दित्वा गुरुं प्रविष्टो नगरीं, बभाषे च जननीजनकौ, यथा—श्रुतो मयाऽद्य सागरदत्तगुरुसमीपे जिनेन्द्रदेशितो
धर्मः, ततो विरक्तं मे विडम्बनामात्रसारस्य किंपाकफलतुल्यपरिणतेर्नारकादिभवासातोपचयहेतोर्विषयस्योपरि

चेतः, अतो विसर्जयत मां येन सागरदत्तसमीपे भवभयप्रणाशिनीं स्वीकरोमि प्रव्रज्यां, तच्छ्रुत्वा मूर्छया छिन्नमूलस्तम्भाविव द्रुमौ निपेततुर्भुवः पीठे तौ शोकाकुलमानसौ—कथञ्चिच्चेतनां लब्ध्वा, प्राहतुस्तनुजं प्रति । द्वितीयवारं नो वत्से !, श्रावणीयमिदं वचः ॥ २ ॥ ततस्तदाग्रहं ज्ञात्वा, मौनमादाय संस्थितः । सर्वसावद्यसंत्यागसुस्थितस्त्यक्तभोजनः ॥ ३ ॥ ततो जननीजनकाभ्यां भणितोऽपि यदा न भुङ्क्ते न चान्यस्य कस्यचिद्वचनं विदधाति तदाऽऽह्वायितो दृढधर्मनामा तीर्थकरशासनानुरक्तः परमश्रावकः श्रेष्ठिपुत्रः, समागतश्च भणितो, यथा—वत्स ! शिवकुमार आवाभ्यां प्रव्रज्याग्रहणनिरुद्धो मौनमाश्रित्य स्थितो भोक्तुमपि नेच्छति, अनेन च शोकावेगेन निर्मूलमुन्मूल्यत इवास्मन्मनः, तदन्तःपुरे भवनोदरे वा यत्र तत्र स्थितं शिवकुमारमाभाष्य भोजय केनापि प्रकारेण, तेनोक्तम्—एवं करोमि, ततो गतोऽसावन्तःपुरव्यवस्थितस्य तस्य समीपं, विधाय नैषेधिकीं प्रतिक्रम्येर्यापथिकीं दत्त्वा द्वादशावर्त्तवन्दनकमनुजानीत मामिति ब्रुवाणः प्रमृज्योचितभूमिमासीनः शिवकुमारान्तिके, तेन चिन्तितम्—अहो ! असाविभ्यपुत्रः साधुविनयं मम प्रयुज्योपविष्टस्तत्पृच्छाम्येनं, ततः पृष्टोऽसौ, तेनाप्युक्तं—भावसाधुर्भवांस्तेन मयाऽयं तव विनयः प्रयुक्तः, पुनर्भणितं च—यथा किं निमित्तं त्वया भोजनं परिहृतं ?, शिवकुमारेणोक्तं—मया त्यक्तो

यावज्जीवं गृहे वासो गृहीता च भावप्रव्रज्या, दृढधर्मेणोक्तं—कुमार ! युक्तमिदं, केवलमाहारत्यागो नोचितो, यतः आहारमूलं शरीरं शरीरमूलो धर्मो धर्ममूला च मोक्षसुखप्राप्तिः तदङ्गीक्रियतामाहारः, तेनोक्तं—यदि यतिजनयोग्यः संपद्यते तदाऽङ्गीक्रियते, दृढधर्मेणोक्तं—अहं सम्पादयिष्यामि भावसाधोर्भवतस्तं, यतः कुशलोऽहमाहारकल्प्याकल्प्यविचारे, ततः प्रतिपन्नमनेन, केवलं यावज्जीवं मया षष्ठभक्तेनाशितव्यं, तदन्ते चाचाम्लेन पारणीयं, ततोऽसौ संपादितवानस्यैवंविधं षष्ठात् षष्ठादाहारं, तत्पित्रोश्चाकथयद् यथा—भोजितः कुमारः, ततस्तुष्टाभ्यां कारितो नगर्यां प्रधानोत्सवः, उपवासदिवसेषु च करोति जीवादिपदार्थ-विचारसारामसौ देशनां, एवं च तिष्ठतोऽस्य कुर्वन्त्यनेकप्रकारान् क्षोभणोपायान् सकलत्रादिलोकाः, न च क्षुभितोऽसौ महासत्त्वः, ततः षष्ठात्षष्ठाज्जघन्येन, सोवीरोदनपारणः । यापयामास वर्षाणि, स द्वादश तपश्चरन् ॥ १ ॥ ब्रह्मचारी गृहस्थोऽपि, विधायाराधनामसौ । मृत्वाऽन्यदा ब्रह्मलोके, विद्युन्माली सुरोऽभवत् ॥ २ ॥ तस्मिं-श्चतुर्देवीपरिवृतो देवलोकोचितं सुखमनुभवन्निनाय दश सागरोपमाणि, सम्प्रति च सप्तदिनामवशिष्टमायुरुपभुज्यैष वृषभदत्तश्रेष्ठिनो धारिणीभार्याया धर्मघोषसूरिसमीपोपविष्टस्य सिद्धपुत्रस्य जम्बूद्वीपनिबन्धनं जम्बूवृक्षपृच्छावसाने

विहितपुत्रजन्मप्रश्नायाः सिद्धपुत्रादिष्ट एव सिंहस्वप्नसूचितो जम्बूनामा तनूजो भूत्वा प्राप्तयौवनो महेभ्यकन्यका अष्टौ परिणीय ताश्च कर्षकादिदृष्टान्तानुपदर्शयन्तीस्तत्प्रत्युत्तरकरिकलेवराद्युदाहरणैः प्रतिबोध्य प्रभवराजपुत्रं च पञ्चशतसङ्ख्यचौरपरिकरितं प्रज्ञाप्य भगवतः सुधर्मस्वामिगणधरस्य पार्श्वे गृहीत्वा प्रव्रज्यां क्षपकश्रेणिसमारोहणपूर्वं केवलज्ञानमुत्पाद्य सिद्धिं यास्यतीति, न चात ऊर्ध्वं कश्चित्केवलज्ञानमुत्पादयिष्यति, अतो भणितं मया, यथा— एतस्मिन् सुरे व्यवच्छेत्स्यति केवलम् । यच्च परिहीयमाणद्युतयो देवाश्च्यवनसमये भवन्ति, अयं तु निजतेजसा सूर्यद्वादशकमपि परिभवतीति पृष्टं तत्र शिवजन्मविरचितमहातपश्चरणफलमेतत्, एतच्च भगवतो महावीरस्य श्रेणिकाग्रे निवेदयतः श्रुत्वा वचनं जम्बूद्वीपाधिपो जम्बूवृक्षविहितनिवासोऽनादृताभिधानो देवः अहो ! ममोत्तमं कुलमिति त्रिपद्यास्फालनपूर्वं जम्बूवृक्षहस्तोऽनेकयक्षयक्षिणीपरिवारो नर्त्तितुमारेभे, ततः श्रेणिकेनोक्तं— कोऽयं किंनिमित्तं च नृत्यति ?, भगवानुवाच—श्रेणिक ! शृणु—अत्रैव नगरे बभूव मूर्त्तिमतिर्नामेभ्यः, तत्पुत्रौ वृषभदत्तजिनदत्तावभूतां, तयोश्च जिनदत्तोऽतिव्यसनी वृषभदत्तश्च शिष्टः, ततः पित्रा स एव गृहस्वामी विहितः, इतरश्च निष्काशितः सकलजनसमक्षं स्वगृहात्, ततोऽसौ द्यूतादिप्रसक्तः कदाचिद् द्यूतशालायां द्यूतकारैः समं रममाण-

कचिद्विसंवादे हतः क्षुरिकयैकेन द्यूतकारेण मर्मदेशे, ज्ञातो वृषभदत्तेन नेतुमारब्धः प्रतिजागरणाय स्वगृहं, न च गतोऽसौ, ततस्तत्रैव दत्तानशनो नमस्काराद्याराधनाकारणपूर्वं निर्यामित उदपादि जम्बूद्वीपस्वामी यक्षनिकायेऽनादृतनामा यक्षः, अयं चात्मीयभ्रातृजस्य जम्बूस्वामिनो भाविनीं कल्याणमालिकां निशम्य हर्षातिरेकादेवं नृत्यति, पुनः श्रेणिक उवाच–भगवन् ! विद्युन्मालिदेवस्य प्राग्जन्मगुरुर्जन्मान्तरभ्राता सागरदत्ताचार्यो व्रतमनुपाल्य क गतः ?, स्वामिना निरदेशि–उत्पाद्य विमलकेवलमवबोध्य विशिष्टभव्यसङ्घातम् । सिद्धिपुरीं सम्प्राप्तो व्यपगतकर्मा महात्माऽसौ ॥ १ ॥ प्रकृतोपयोगिशिवभवसम्बन्धेनात्र लेशतः कथितम् । चरितं जम्बूनाम्नस्तच्चरिताद्विस्तरो ज्ञेयः ॥ २ ॥ उक्तमुपभोगपरिभोगपरिमाणकरणे गुणद्वारम्, अधुनाऽस्यैव यतनाद्वारमुच्यते—

जत्थ बहूणं घाओ जीवाणं होइ भुज्जमाणंमि ।
तं वत्थुं वज्जेज्जा अइप्पसंगं च सेसेसु ॥ ८० ॥

१८ ' यत्र ' यस्मिन् वस्तुनीत्याद्यर्थसम्बन्धाद्गम्यते ' बहूनां ' प्रचुराणां ' घातः ' विनाशः ' जीवानां ' प्राणिनां ' भवति ' जायते ' भुज्यमाने ' आसेव्यमाने ' तद्वस्तु ' तं पदार्थं ' वर्जयेत् ' परिहरेत्, ' अतिप्रसङ्गं च ' अति-

शयासक्तिं च 'शेषेषु' अन्येषु, एतदुक्तं भवति—यत्र वस्तुनि त्रससंसक्तफलादौ भुज्यमाने प्रभूतसत्त्वव्यापत्तिस्तद्वस्त्वेव परिहार्यं, शेषे त्वसंसक्तेऽल्पपापे पुष्पफलादौ नात्यासक्तिः कार्येति गाथार्थः ॥ अतिचारद्वारमिदानीम्—

सचित्तं पडिबद्धं अपउलदुप्पउलियं च आहारं ।
तुच्छोसहीण भक्खणमिह वज्जे पंच अइयारे ॥ ८१ ॥

इह गृहीतोपभोगपरिभोगव्रतः श्रावक उत्सर्गेण निरवद्यमेवाहारमभ्यवहरति, तदप्राप्तौ कृतादिदोषदुष्टमपि निश्चेतनं, तदसंभवे तु बहुबीजानन्तकादिरहितं सचित्तमपि, यस्तु प्रथममेव साचित्तमनाभोगादिभिरभ्यवहरति तदपेक्षयाऽमी अतिचाराः संभाव्यन्त इत्यत उच्यते—'सचित्तं' सचेतनं मूलकन्दादि, तथा 'प्रतिबद्धं' संबद्धं स्वयमचेतनमेव चेतनावद्वृक्षे गुन्दादि पक्कफलादि वा, तथा 'अपउल' त्ति अपक्कम(कं स)चित्तं यन्मूलत एवाग्निना न संस्कृतं 'दुप्पउलियं च' त्ति दुष्पक्कं च—अर्द्धस्विन्नं, आहारमिति सर्वत्र योज्यते, तेन साचित्तमाहारं सचित्तप्रतिबद्धमाहारमित्यादि, तुच्छाः—असारा औषधयस्तुच्छौषधयो यासां बहुतरभक्षणेऽपि स्तोकैव तृप्तिः यथा चवलकवल्लफलीप्रभृतयः तासां तुच्छौषधीनां 'भक्षणं' अभ्यवहरणं 'इह' व्रते 'वर्जे-

येत ’ त्यजेत् ‘ पञ्चातिचारान् ’ पञ्चसङ्ख्यव्रतविराधनाविशेषान्, अत्र कश्चिदाह—यद्युत्सर्गतः सचित्तवर्जकः श्रावको भवति तदा सचित्ताहारेण तस्य भङ्ग एव भविष्यति, कथमतिचारत्वमत्र ?, उच्यते, यस्तु प्रथममेवेत्यादि-नैवास्य प्रतिविहितत्वात्, तथाहि—योऽनाभोगसहसाकाराभ्यामतिक्रमादिभिर्वा सचित्ते प्रवर्त्तते तस्य तद्वर्जकस्या-प्यतिचारत्वं, सचित्तप्रतिबद्धाहारस्य त्वन्यथाऽप्यतिचारत्वं संभाव्यते, यदाऽस्थिकं त्यक्ष्यामि कटाहं तु भक्षयिष्या-मीतिबुद्ध्या पक्वखर्जूरादिफलं मुखे प्रक्षिपति तदाऽऽभोगेनापि व्रतसापेक्षत्वात्सचित्तप्रतिबद्धाहारातिचारः, अपरस्त्वाह-अपक्वौषध्यः सचेतना अचेतना वा ?, यदि सचेतना तदा सचित्तमित्यादिपदेनैवोक्तार्थत्वात्पुनर्वचनम-सङ्गतं, अथाचेतनास्तदा कोऽतिचारो ?, निरवद्यत्वात्तद्भक्षणस्येति, अत्रोच्यते, सत्यमेतत्, किन्त्वाद्यावतिचारौ सचेतनकन्दफलादिविषयौ इतरे तु शाल्यौ(ल्याद्यौ)षधिविषया इति विषयकृतो भेदः, अत एव मूलसूत्रे ‘अप्पउलिओस-हिभक्खणया ’ इत्याद्युक्तं, अतिचारत्वभावना त्वनाभोगादिना कार्या, यद्वा कणिक्कादेरपक्वतया संभवत्सचित्तावय-वस्य पिष्टत्वादिनाऽचेतनमिदमितिबुद्ध्या भक्षणं व्रतसापेक्षत्वादतिचारः, दुष्पक्वौषधिभक्षणं तु पृथुकादेर्दुष्पक्वतया संभ-वत्सचेतनावयवस्य पक्वत्वादचेतनमितिबुद्ध्या भुञ्जानस्यातिचारो, ननु तुच्छौषधयोऽपक्वा दुष्पक्वाः सम्यक्पक्वा वा ?

यद्याद्यपक्षौ तदा तृतीयतुर्याभ्यामेवास्योक्तत्वात्पुनरुक्तत्वदोषः, अथ सम्यक् पक्वास्तदा निरवद्यत्वादेतद्भक्षणस्य नातिचारत्वम्, सत्यं, किन्तु यथाऽऽद्यद्वयोत्तरद्वययोस्तुल्येऽपि सचित्तत्वेऽनौषध्यौषधिकृतो विशेषः एवमत्र सचेतनत्वौषधित्वाभ्यां समत्वेऽप्यतुच्छतुच्छत्वकृतो विशेषः, तत्र च कोमलमुद्गादिफलीफलिकाखादकोदाहरणप्रतीतविशिष्टतृप्त्यकारकत्वेन तुच्छाः सचेतना एवानाभोगातिक्रमादिना भुञ्जानस्य तुच्छौषधिभक्षणमतिचारः, अथवाऽत्यन्तावद्यभीरुतयाऽचित्ताहारताऽभ्युपगता, तत्र च यत्तृप्तिकारकं तदचेतनीकृत्यापि भक्षयतु, सचेतनस्यैव वर्जनीयत्वाभ्युपगमात्, यत्पुनस्तृप्तिसम्पादनासमर्था अप्यौषधीर्लौल्येनाचेतनीकृत्य भुङ्क्ते तत्तुच्छौषधिभक्षणमतिचारः, तत्र भावतो विरतेर्विराधितत्वाद् द्रव्यतस्तु पालितत्वाद्, एवं रात्रिभोजनमांसादिव्रतेष्वप्यनाभोगातिक्रमादिभिरतिचारा भावनीयाः, यद्वाऽशनेऽनन्तकायसम्मिश्रं पाने मद्यादिपानं खाद्ये वृन्ताकादि स्वाद्ये त्रससंसक्तताम्बूलपत्रादि गृहीतोपभोगपरिभोगव्रतेन श्रावकेण त्याज्यमतस्तदासेवनेऽप्यनाभोगातिक्रमादिना कस्यचित्केचनातिचारा वाच्याः, विचित्रत्वाद्व्रतस्य, गाथोक्तसचित्तादिपदानामुपलक्षणत्वादिति गाथाऽर्थः ॥ अतिगतमतिचारद्वारं, भङ्गद्वारस्येतोऽवसरस्तत्रेयं गाथा——

दुविहं तिविहेण गुणवयं तु घेत्तण देइ उवएसं ।
अहियं वा परिभुंजइ जाणंतो तो भवे भंगो ॥ ८२ ॥

'द्विविधं त्रिविधेन' न करोमि न कारयामि मनसा वाचा कायेनेत्येवंभङ्गकेन 'गुणव्रतं' प्रस्तावादुपभोगपरिभोगपरिमाणलक्षणं, तुशब्दो भङ्गकान्तरगृहीतस्याप्यस्योपदेशदानादिना भङ्ग इति विशेषणार्थः, 'घेत्तूणं 'ति गृहीत्वा उपादाय 'ददाति' वितरति 'उपदेशं' तद्विषयं, यथा कुरुतेदं यूयं, 'अधिकं वा' अर्गलं वा गृहीतप्रमाणापेक्षया 'परिभुङ्क्ते' अभ्यवहरति 'जानानः' अवबुध्यमानः 'तो 'त्ति ततः 'भवेद्भङ्गः' जायेत व्रतविनाशः, एतदुक्तं भवति—द्विविधत्रिविधभङ्गकेन रात्रिभोजनमांसभक्षणादिनियममादाय यो जानान एवान्यस्मै रात्रौ भुङ्क्ष्व पिशितं वा खादेत्याद्युपदेशं ददाति स्वयं वा गृहीतप्रमाणातिरिक्तं भुङ्क्ते तस्यैतद्व्रतभङ्ग एव, आकुट्टिप्रवृत्तत्वादिति गाथार्थः ॥ भावनाद्वारमिदानीम्—

मलमइलजुण्णवत्थो परिभोगविवज्जिओ जियाणंगो ।
कइया परीसहच्चमूं अहियासंतो हु विहरिस्सं ॥ ८३ ॥

मलेन मलिनं मलमलिनं-मालिन्योपहितं जीर्णं च-पुरातनं वस्त्रं-वासो यस्य स मलमलिनजीर्णवस्त्रः परिभोगेन-स्त्र्यादिविषयसेवालक्षणेन विशेषेण-मनोवाकायैः कृतकारितानुमतिलक्षणैर्वर्जितो-रहितः परिभोगविवर्जितः, यद्वा परिभोगो विवर्जितो येनेति बहुव्रीहिः, न चात्र क्तान्तस्य पूर्वनिपातः प्रेर्यः, अग्न्याहितादिषु दर्शनात्, तथा जितः-पराभूतोऽनङ्गः-कामो येन स जितानङ्गः, विशेषणद्वारेण परिभोगविवर्जितत्वे हेतुरेषः, भावना चैवं-परिभोगवर्जितः कुतः ?, यतो जितानङ्गः, यद्वा परिभोगविवर्जित इत्यनेन मदनकामरहितत्वमुक्तं, जितानङ्ग इत्यनेन त्विच्छाकामत्यागः, एवंभूतः सन् 'कदा' कस्मिन् काले कर्मनिर्जरार्थं परिषोढव्याः परीषहाः-क्षुत्पिपासादयो द्वाविंशतिः, यदुक्तम्-"खुहा पिवासा सीउण्हं, दंसाचेलाऽरइत्थिओ। चरिया निसीहिया सेज्जा, अक्कोस वह जायणा ॥ १ ॥ अलाभ रोग तणफासा, मल सक्कारपरीसहा। पण्णा अण्णाण सम्मत्तं, इय बावीस परीसहा ॥ २ ॥" एत एवातिदुर्जयत्वात् चमूः-सेना परीषहचमूस्ताम् 'अहियासंतो' त्ति अधिषहमानस्तयाऽभज्यमान इति भावार्थः 'दुः' पूरणे विहरिष्यामि' विचरिष्यामि, सुसाधुक्रियायुक्तो गुरुभिः सह संयमानुष्ठानपरायणः क्षुधादिपरीषहाव्यावितसत्त्वः कदा चर्या करिष्यामीति भावनेति गाथार्थः ॥ उक्तं नवमं द्वारं, तत्प्रतिपादनाच्चोपभोगपरिभोगाख्यं

द्वितीयं गुणव्रतं, साम्प्रतमनर्थदण्डाख्यतृतीयगुणव्रतस्य प्रस्तावः, तदप्येतैरेव नवद्वारैर्वाच्यम्, अतः प्रथमेन तावदाह—

धम्मिंदियसयणट्ठा जं कज्जं तं तु होइ अट्ठाए ।
विवरीयं तु अणट्ठा तव्विरइ गुणव्वयं तइयं ॥ ८४ ॥

इहार्थदण्डप्ररूपणायां तद्विपर्ययरूपोऽनर्थदण्डः सुखावसेयो भवतीतिबुद्ध्या पूर्वार्द्धेनार्थदण्डं प्ररूप्य शेषेणानर्थदण्डातिदेशपूर्वं प्रस्तुतगुणव्रतस्वरूपमाह—धर्मेन्द्रियस्वजनशब्दानां कृतद्वन्द्वानामर्थशब्देन बहुव्रीहिः, ततोऽर्थशब्दो द्वन्द्वात्परस्थः प्रत्येकं संबध्यते, धर्मार्थमिन्द्रियार्थं स्वजनार्थमिति, तत्र धर्मो—जिनबिम्बचैत्यालयादिकारणादिरूपः पुण्यव्यापारः प्राणिसार्थदुर्गतिपातवारणसुगतिस्थापनाभ्यां तदर्थं—तत्प्रयोजनं, इन्द्रियाणि—स्पर्शनादीनि, तत्तुष्टिनिमित्तं स्पर्शादिविषया अपीन्द्रियशब्देन विवक्षिताः, विषयविषयिणोरभेदोपचारात्, तत्प्रयोजनमिन्द्रियार्थं, स्त्रीभोजनताम्बूलाद्यर्थमिति तात्पर्यं, स्वो जनः स्वजनः—पितृमातृभ्रात्रादिस्तन्निमित्तं स्वजनार्थं, पित्रादिपुष्ट्यादिकृते इति हृदयं, ' जं कज्जं ' ति यत्कार्यं दलानयनपृथ्वीखननकृषिवाणिज्यराजसेवाकरणादि शक्यानुष्ठानरूपं विधीयत

इति शेषः 'तं तु होइ अट्ठाए' तद् 'भवति' जायतेऽर्थाय—सार्थकं—सप्रयोजनमर्थदण्ड इत्यर्थः, 'विवरीयं तु'-त्ति विपरीतं यत्त्रयाणामेकमपि न साधयति, तुः पुनरर्थे अनर्थाय—निष्प्रयोजनमनर्थदण्ड इति योऽर्थः, तृणलता-छेदनकृकलाशमारणादिवत् 'तव्विरइ गुणव्वयं तइयं' ति तस्य अनर्थदण्डस्य विरमणं विरतिः—परिहारः, किम् ? गुणव्रतम्—अनर्थदण्डव्रतनामकं तृतीयं 'तिण्णि गुणव्वयाणि, तंजहा—दिसिव्वय' मित्यादिसूत्रक्रमप्रामाण्यात् तृतीयस्थानवर्त्ति स्वरूपतो ज्ञेयमिति शेष इति गाथार्थः ॥ इतोऽस्यैव भेदद्वारगाथा—

पावोवएस १ हिंसप्पयाण २ अवझाण ३ गुरुपमायरियं ४ ।
भेया अणत्थदंडस्स हुंति चउरो जिणक्खाया ॥ ८५ ॥

पापोपदेशं हिंस्रप्रदानं अपध्यानगुरुप्रमादाचरितामिति अपध्यानं च गुरुप्रमादश्च तयोराचरितम्—आचरणम् अपध्यानगुरुप्रमादाचरितं, पापोपदेशश्च हिंस्रप्रदानं च अपध्यानगुरुप्रमादाचरितं चेति पुनर्द्वन्द्वस्तस्य च स्वपद-प्रधानत्वादाचरितशब्दस्य प्रत्येकसम्बन्धनादपध्यानाचरितगुरुप्रमादाचरितलक्षणभेदद्वयाक्षेपाद्, 'भेदाः' विकल्पाः 'अनर्थदण्डस्य' अप्रयोजनप्राणातिपातादिव्यापारस्य 'भवन्ति' जायन्ते 'चत्वारः'

चतुःसङ्ख्याः ' जिनाख्याताः ' सर्वज्ञोदिता इति गाथासङ्क्षेपार्थः, विशेषार्थस्त्वयं—पापोपदेशो नाम निष्कारणमाभीरादिलोकस्य कथञ्चिज्जल्पसंभवे वाह्यन्तां शकटानि दम्यन्तां गोरथका आरभ्यन्तां कृषिकर्माणि प्रवर्त्यन्तां विवाहाद्युत्सवा इत्यादिरूपप्रेरणं, हिंस्रप्रदानं विषाग्निशस्त्रादिवितरणम्, अपध्यानाचरितं चार्त्तरौद्र-चिन्तानुगतं, यथा—जायन्तां मम लक्ष्म्यः संपद्यन्तामभीष्टशब्दाद्याः । म्रियतां वैरिकवर्गो भद्रं वा यन्मृतोऽयमिह ॥ १ ॥ गुरुप्रमादाचरितं तु गुडघृततैलादिदुःस्थगनादिकरणं मद्यद्यूतव्यसनविषयलाम्पट्यकषायवशवर्त्तितादि वा, एतेषु च निदर्शनानि सिद्धान्तसिद्धान्यप्यत्र सूत्रे नोपात्तानि विस्तरभीत्या, अस्माभिस्तु स्थानाशून्यार्थं लिख्यन्ते, तत्र पापोपदेशे यथाऽरिमर्दनराजेन तडागः खानितः, तत्र च जलं नावस्थितिं धत्ते अनेकेष्वप्युपायेषु विधीयमानेषु, अन्यदा कोरण्टकनामा कपालभिक्षुर्नैमित्तिको राजसभामुपस्थितः, राज्ञा चासौ पृष्टः—यथा केन विधि-नाऽस्मत्कारितसरसि पानीयस्थैर्यं संपत्स्यते ?, तेनोदितं—यदि कपिलकेशो विषमदन्तो वक्रनासो बृहत्कर्णश्च ब्राह्म-णोऽत्र दीयते तत उदकमत्रावतिष्ठते, नृपेण च तदर्थिना तथाविधपुरुषानयनाय नियुक्ताः स्वभृत्याः, न च तैस्तादृशः कोऽपि प्राप्तः, समागत्य निवेदितं नरेन्द्राय, गदितं चैकेन—देव ! यथोक्तगुणोऽयमेव विद्यते, ततः स

एव तत्स्थानयोग्यः, आदिष्टो नरपतिना, नीतो नियुक्तकैर्निहतस्तत्र, ततः—पापोपदेशवीक्षितदोषः प्रत्यक्षमेव
कश्चिदपि । निजगाद जनस्याग्रे वैराग्यसमागतस्वान्तः ॥ १ ॥ यथा—हितं न वाच्यं त्वहितं न
वाच्यं, हिताहितं नैव च भाषणीयम् । कोरण्टको नाम कपालभिक्षुर्हितोपदेशाद्दिवरं प्रविष्टः ॥ २ ॥
हिंस्रप्रदाने विषे तावदुदाहरणम्—एकस्याश्चौरपल्ल्याः तस्करा विनिर्गत्य क्वचित्स्थाने धाटीं पातितवन्तः,
ततः प्रभूतं गोधनं गृहीत्वा स्वस्थानमागन्तुं प्रवृत्ताः, अन्तराले चास्तंगमनवेलायां प्राप्ता ग्राममेकं, तत्र
केचिद्ग्राममध्यं मद्यमण्डकादिनिमित्तं गताः, केचिच्च बहिरेव लावकादिव्यापत्तिं कृत्वा मांसं
प्रगुणितवन्तः, तदा च तेषामित्थं मनःपरिणामोऽभवद्—यदि मध्यगता मार्यन्ते तदाऽस्माकमेव केवलानामिदं
गोधनं भवति, मध्यगतानामप्ययमेव सङ्कल्पोऽभवद्—यदि द्वारवर्त्तिनो विनाश्यन्ते तदाऽस्माकमेवेद गोधनं जायते,
तत उभयैरपि परस्परमारणाध्यवसायेन स्वस्वपार्श्ववर्त्तिमद्यमण्डकमांसेष्वर्द्धार्द्धमात्रेषु विषं प्रक्षिप्य रात्रौ गोष्ठी कृता,
समर्पितं च स्वस्वपदार्थार्द्धं विषसंयोजितं परस्परं, तदास्वादनेन च प्राप्ता मरणं, तन्मध्ये च कैश्चिद्रात्रिभोजन-
निवृत्तिः कृताऽभूत् ते तत्र न मृताः, गोधनस्य च तस्य स्वामिनो बभूवुः, सञ्जातधर्मप्रत्ययाश्च विशेषेण व्रताद्युद्यता

भूत्वा सुगतिभाजनं संवृत्ता इति। अत्रौ तु दृष्टान्तः—श्रावस्त्यां नगर्यां जितशत्रुपुत्रः स्कन्दकाभिधानः कुमारो बभूव, तद्भगिनी पुरन्दरयशाः, सा च कुम्भकारकटनगरस्वामिना दण्डकिना राज्ञा परिणीता, कदाचिच्च जितशत्रुसमीपं समुपागतः पालकनामा पुरोहितो नास्तिकवादी, नास्तिकमार्गप्ररूपणां कुर्वाणः स्कन्दकुमारेण सार्वज्ञमतावदातबुद्धिना निष्पृष्टप्रश्नव्याकरणः कृतः प्रद्विष्टो बभूव, निष्काशितो जितशत्रुणा, भवितव्यतावशेन गतो दण्डकिपार्श्वे, स्कन्दकस्त्वन्यदा मुनिसुव्रतस्वाम्यन्तिके सञ्जातवैराग्यो राजपुत्रपञ्चशतपरिवारः प्रतिपेदे दीक्षां, क्रमेण गृहीतद्विविधाशिक्षो गीतार्थो निवेशितः सूरिपदे, तान्येव पञ्च शतानि राजपुत्राणां संपन्ना शिष्यसम्पत्, विज्ञप्तोऽन्येद्युः स्वामी स्कन्दकाचार्यैः—यथा भगवन्! व्रजामि युष्मदनुज्ञया पुरन्दरयशःप्रभृतिप्रतिबोधनाय कुम्भकारकटनगरं, भगवताऽपि मुनिसुव्रतस्वामिना निरदेशि—प्राणान्तिकस्तत्रोपसर्गः, तेनोक्तं—किमाराधनाफलो विराधनाफलो वा ?, तीर्थकरेणोदितं—त्वां मुक्त्वा शेषाणामाराधनाफलः, ततश्चालितोऽसौ तत्र स्वामिनमभिनम्य, पालकेनापि कथञ्चित्तदागमनमवबुध्यानागतमेव साधुयोग्योद्यानभूमौ निखातानि नानाविधायुधानि, प्राप्ताश्च क्रमेण विकालवेलायां तत्र सूरयः, पुरन्दरयशाश्च तदागमनमवबुध्यानन्दभरनिर्भरा तां शर्वरीमनेकमनोरथशतैरतिवाह्य प्रभातसमये समं राज्ञा गता वन्दनार्थं, विधि-

वदभिवन्द्य च दत्तवती कम्बलरत्नमाचार्याणां, सूरिभिरपि तद्विपाद्य कृतानि निषद्यापादप्रोञ्छनानि, राजा पुरन्दरयशाः पौरलोकश्च सूरिसमीप एव धर्मदेशनाश्रवणेनातिवाह्य कियतीमपि कालवेलां गताः स्वस्थानं, तत्र च रहो व्यवस्थितस्य राज्ञो विज्ञप्तं पालकेन–देव ! श्रमणकाभास एष स्कन्दको व्रतपराभग्नः सममभीभिः साधुवेषविश्वसनीयै राजपुत्रैः पुरन्दरयशोदेवीसङ्केतितो भवद्ग्रहणार्थमायातः, यदि न प्रत्येषि तदाऽवलोकयैतदावासभूमौ निखातशस्त्रसमूहं, ततो भूपालेन तद्वचनमंससाव्यमवधारयता प्रत्ययितनरव्यापारणेन सत्यापिते शस्त्रसमूहे कोपवशात् पालक एवादिष्टः–यथैतेषां भ्रष्टाचाराणामुचितनिग्रहेण त्वमेव निग्रहं कुरु, ततो भूमिपतेरेतद्वचनं लब्ध्वा स पापात्मा रात्रावेवानाय्य मनुष्यपीलनयन्त्राणि पीलितुमारेभे व्रतिनः, आचार्यस्तु सोऽयं भगवत्तीर्थकरादिष्टः प्राणान्तिक उपसर्ग उपस्थितो भवतामिति सम्यग्भावेन सह्यताम् " अक्कोसहणणमारणधम्मब्भंसाण बालसुलभाणं । लाभं मण्णइ धीरो जहुत्तराणं अलाभंमि ॥ १ ॥ " इति सिद्धान्तार्थमनुस्मरद्भिर्भवद्भिरिति प्रतिपाद्य स्वसाधून् कारयामास आलोचनाव्रतोच्चारक्षामणादिविधिं, किं बहुना ?, संपादयामास तेषां भावसमाधिं, ततस्तेन पील्यमानानाममीषां प्रवर्द्धमानविशुद्धाध्यवसायसमुपारूढक्षपकश्रेणिक्षपितघातिकर्मणामुदपादि केवलं, तत्क्षणमेव समुल्लसति जीववीर्यो-

...सकलसाधुपर्यन्ते च लघुक्षुल्लकपीलनोद्यतं पालकं बभाण
तिरेकसमासादितशैलेश्यवस्थानां च समजनि निर्वाणगमनं, केवलं संहननादिबलोपेतैरेतैः सम्यक् सोढस्त्वदुपसर्गः,
सूरिः—यथैते भवता मत्साधवः पञ्चशतसङ्ख्याः पीलिताः, तदेष तिष्ठतु तावन्मामेव प्रथमं पीलय
अयं च बालः पील्यमानः किमपि करिष्यतीति न जानामि, यथा महद्दुःखमस्य भवति तथा मया
येन न पश्याम्यहमेतद्दुःखं, ततोऽसाववगणय्य सूरिवचनं कोपमुपागताः सूरयः पश्य दुष्टात्मनाऽनेन मदीय-
कर्त्तव्यमिति बुद्ध्या क्षुल्लकमेव पीलयामास, ततः किञ्चित्फलं तदाऽहमागामिभवे भवेयं न
मेकमपि वचनं न कृतं तदस्ति यदि मदनुचीर्णतपसः राजाप्ययमेवंप्राय एव य एवंविधानां पापकर्मणामवकाशं
केवलमेतद्वधाय, किन्तु राज्ञोऽपि सपौरपरिजनस्य, यतो प्रतिवसति, एवं च कृतनिदानस्तेन पीलितो
ददाति, लोकोऽपीदृश एव य एवं कुसङ्गतिपरायणस्य नरपतेर्नगरे प्रभाते च तदीयरजोहरणं शकुनिकया रुधि-
मृत्वाऽग्निकुमारेषूत्पन्नः, क्षुल्लकस्तु शेषसाधुवदाराधकः संवृत्तः, दृष्टं तया, हा
रदिग्धं करभ्रान्त्या समुत्क्षिप्य नीयमानं भवितव्यतावशेन निपतितं पुरन्दरयशोदेवीभवने तदग्रतो;
३१ न कुशलं मदीयभ्रातुरिति विचिन्तयन्ती यावदीक्षाञ्चक्रे तावदसावप्यग्निकुमारो भवप्रत्ययविभङ्गविज्ञातपूर्ववृत्तान्तो

विकृत्य संवर्त्तकमहावातमष्टादशयोजनमध्यवर्त्तितृणकाष्ठकचवरद्विपदचतुष्पदादि नगरमध्ये प्रक्षिप्य प्रदाय प्रतोलीर्ज्वालयामास ज्वलनं, पुरन्दरयशा अपि मम भगवान् मुनिसुव्रतस्वामी शरणमिति जल्पन्ती समुच्चिक्षिपे देवतया, नीता तीर्थकरसमीपं, गृहीत्वा प्रव्रज्यां क्रमेण प्राप्ता सुरलोकम्, इतरोऽपि ददाह तदशेषं नगरं, जातं च तत्र महादण्डकारण्यमिति । तदेवमस्य सर्वद्विपदचतुष्पदादिविषयमग्निदानं तद्धिंस्रप्रदानमनर्थदण्डः, अयं च न कर्त्तव्य एव, बहुपापकारणत्वात्, तथा चान्यैरप्युक्तम्—" नादेयानि न देयानि, पञ्च द्रव्याणि पण्डितैः । अग्निर्विषं तथा शस्त्रं, मद्यं मांसं च पञ्चमम् ॥ १ ॥ " इति, अपध्यानाचरितम्—आर्त्तरौद्ररूपं प्राग् निवेदितं, तत्रार्त्तस्वरूपं—राज्योपभोगशयनासनवाहनेषु, स्त्रीगन्धमाल्यमणिरत्नविभूषणेषु । इच्छाभिलाषमतिमात्रमुपैति मोहाद्, ध्यानं तदार्त्तमिति संप्रवदन्ति तज्ज्ञाः ॥ १ ॥ तत्र कथानकम्—महिषीरक्षणं कुर्वन्, लोकस्य लभते पयः । एको माहिषिकः क्वापि, ग्रामे प्रचुरमाहिषे ॥ १ ॥ लब्ध्वा स्ववारकेऽन्येद्युर्दुग्धपूर्णमसौ घटम् । विधाय पादयोरन्तश्चिन्तयामास चेतसि ॥ २ ॥ अस्माद्दधि घृतं तक्रं, प्रचुरं मे भविष्यति । विक्रीतदधितक्राभ्यां, शोत्स्यते दिवसव्ययः ॥ ३ ॥ अपरापरवारैश्च, सर्पिषि प्रचुरे कृते । विक्रीते रूपकाँल्लप्स्ये, तैर्ग्रहीष्ये

च सक्तौ [बलीवर्दौ] ॥ ४ ॥ ततो हलादिसामग्रीं, विधाय सकलामपि । विधास्ये कर्षणं तस्माद्धान्यं संपत्स्यते बहु ॥ ५ ॥ तद्विक्रयेण संजातविचित्रद्रव्यविस्तरः । युक्तः सहायसम्पत्त्या, कारिष्ये दारसङ्ग्रहम् ॥ ६ ॥ विचित्रचित्रविन्यासं, कारयित्वा गृहं महत् । भोक्ष्ये भोगानहं पश्चात्, सर्वतोऽपि निराकुलः ॥ ७ ॥ तृप्तिर्नैकया मे स्यान्नार्ययाऽतो द्वितीयकाम् । परिणेष्यामि कालेन, पुत्रौ ताभ्यां भविष्यतः ॥ ८ ॥ एकाऽतिवल्लभाऽन्या च, न तथा पुत्रकावपि । एवंप्रायौ तयोः स्यातां, ततः खट्वागतस्य मे ॥ ९ ॥ गवां दोहनवेलायां, स्वबालं मेऽर्पयिष्यति । यदाभीष्टा तदा बाढमुपादास्ये तमंजसा ॥ १० ॥ अपरस्यास्तनूजं तु, किञ्चिद्दर्शितविप्रियम् । पार्ष्णिना प्रेरयिष्यामि, चिन्तयन्नेव सेदृशम् ॥ ११ ॥ आशापिशाचिकावेशाविवशो दक्षिणेतरम् । पादमुत्क्षिप्य चिक्षेप, पार्ष्णिं दुग्धघटं प्रति ॥ १२ ॥ तत्प्रहारेण भग्नोऽसौ, क्षीरं भूमौ जगाम तत् । ज्ञात्वैवमार्त्तचिन्ता भो!, नैव कार्या विवेकिभिः ॥ १३ ॥ रौद्रापध्यानाचरिते तु प्रसन्नचन्द्रो राजमुनिर्दुर्मुखवचनश्रवणसमुपजातकोपो मनसैव सङ्ग्रामं कुर्वाणो निदर्शनं, स च प्रागेव शिवकथानकप्रस्तावे निदर्शितः, रौद्रध्यानलक्षणं चेदम्—संछेदनैर्दहनभञ्जनमारणैश्च, बन्धप्रहारदमनैर्विनिकृन्तनैश्च । यो याति रागमुपयाति च नानुकम्पां, ध्यानं तु रौद्रमिति तत्प्रवदन्ति तज्ज्ञाः ॥ १ ॥ गुरुप्रमादा-

चरितं तु घृतादेर्दुःस्थगनादि मद्यादिव्यसनविषयलाम्पट्यादि च प्राग् व्याख्यातं, तत्र दुःस्थगनादौ मक्षिकादिजीवव्यापत्तिर्निरर्थिका प्रतीतैव, मद्यादिव्यसने च मद्योदाहरणं प्राक् ' कश्चिद्दृषिस्तपस्तेपे ' इत्याद्युक्तमेव, द्यूतव्यसने तु पाण्डवा राज्यं हारितवन्तः । विषयलाम्पट्ये तु क्वचित्सन्निवेशे कश्चिद्वणिकपुत्रो वेल्लहलनामा ऐश्वर्यादिमदावलिप्तमानसः कदाचित् कुन्दकलिकया वेश्यया सह सङ्गतिमकरोत्, न चैवं विज्ञातवान् यथा—तदेव संस्पर्शसुखं, सैव चान्ते विडम्बना। तासु चान्यासु च स्त्रीष्वथ च वेश्यासु को गुणः ?॥१॥ तया च विविधहावभावादिवशीकृतो विसस्मार स्वकुटुम्बं, चखाद निःशेषमेव गृहसारं, तत्याजाम्नायिकं हितचिन्तकं परिवारं, विज्ञाय च कुन्दकलिकाया माता गृहीतसर्वस्वमेनं निष्काशयामास स्वगृहाद्, गतः पितृगृहं यावत्पश्यति सकलमेव प्रलीनाशेषमानुषं पतितमगारं, ततो गुरुविषादापूरितहृदयो व्यचिन्तयत्, यथा—पश्य दुर्वारविषयव्यसनसागरावमग्नेन मयोपेक्षितानि मानुषाणि, नाशितं द्रव्यजातं, संत्यक्तो वेश्मव्यवहारः, किं बहुना ?, भाजनीकृतोऽयमात्मा समस्तदुःखनिबन्धनभूताया द्रमकतायाः, तदिदानीं किं करोमि ?, अथवा यथाकथञ्चिदुपार्जयामि पुनः कियदपि द्रविणं, तद्रहितानां ग्रासाच्छादनमात्रमपि न संपद्यते यस्मात्, ततोऽनेकदुष्कर्मभिः पुनरपि मीलिताः कियन्तोऽपि रूपकाः, अन्येद्युश्च संस्मृत्य पूर्वललि-

तानि विकालवेलायां कृतस्नानाङ्गरागः परिहितप्रधानवस्त्रस्ताम्बूलादिसामग्रीसमेतश्चलितः स्वगृहाभिमुखं, दृष्टः
कुन्दकलिकाजनन्या, नीतो निजगृहं, स्वीकृता रूपकाः, भणिता निजपुत्री—वत्से ! स एष तव प्राणप्रियो वेल्लहलो
वहोः कालादवलोकितो मयेत्यानीतस्त्वत्समीपं, तदष तथोपचरणीयो यथा न संस्मरति निजगृहस्य, तयाऽप्याति-
संभ्रममुपदर्शयन्त्या विधाय चरणक्षालनादिक्रियां निवेशितो निजखट्वायां, इतश्च पूर्वमेव स्वीकृताऽऽसीत्तया राज-
पुत्रस्यैकस्य भाटी, भवितव्यतावशेन स चायातस्तदैव, ददर्श पर्यङ्कोपविष्टममुं, ततः स्वपुरुषैर्ग्राहयित्वा तं स्वहस्तेना-
कृष्य क्षुरिकां लुलावास्य केशपाशं चिच्छेद कर्णा जग्राह नाशां सोष्ठपुटां, ततो गलेग्राहं निष्काश्य तत्स्थानाच्चि-
क्षेपाशुचिस्थान इति । एवं विडम्बनामिह भवेऽपि विज्ञाय विषयलाम्पट्यात् । कः कुर्यात् स्वहितैषी कामेष्वत्य-
न्तमासक्तिम् ? ॥ १ ॥ कषायप्रमादे च महानर्थहेतौ कियन्त्युदाहरणानि लिख्यन्ते ?, येषां कषायाणामेवं सिद्धान्ते
दुरन्तता प्रतिपादिता "कोहो य माणो य अणिग्गहीया, माया य लोभा य पवड्ढमाणा । चत्तारि एए कसिणा
कसाया, सिंचंति मूलाइं पुणोभवस्स ॥ १ ॥" तथाऽन्यैरप्युक्तम्—"कोऽन्यः कृतघ्नोऽस्त्यखिलेऽपि लोके, यथा
कषायाः कलुषस्वभावाः । य एव तान् लालयति प्रयत्नात्, क्षिपन्त्यगाधे व्यसने तमेव ॥ १ ॥ रामेण भूः क्षत्रि-

यवर्गवर्जिता, सुभमराजेन च निर्द्विजीकृता। तस्मात्कषाया भवगर्त्तपाते, ह्यनन्तके प्राणिनमानयन्ति ॥ २ ॥" अत एवेदमुपदिष्टं महात्मभिः—"गुणसेणअग्गिसम्माणं, सेणियकोणियाण य। गंगदत्तस्स वुत्तंतं, सोच्चा खंतिं समायरे ॥ ३ ॥" एते च दृष्टान्ता ग्रन्थान्तरेभ्य एवावसेयाः। यथा जायत इति द्वारमाह—

दट्ठूणं दोसजालं अणत्थदंडंमि न य गुणो कोइ।
तव्विरई होइ दढं विवेगजुत्तस्स सत्तस्स ॥ ८६ ॥

'दृष्ट्वा' विलोक्य 'दोषजालं' अनर्थसमूहं, क? इत्याह—'अनर्थदण्डे' निष्प्रयोजनपापोपदेशादिव्यापारे, 'न च' नैव 'गुणः' अर्थसिद्धिलक्षणः कोऽपि, तस्मादिति च ज्ञात्वेत्यध्याहारः, किमित्याह—'तद्विरतिः' अनर्थदण्डपरिहृतिः 'भवति' जायते 'दृढं' अत्यर्थं, कस्य?—'विवेकयुक्तस्य' सगुणापगुणवस्तुविचारणासमेतस्य 'सत्त्वस्य' प्राणिनः, अयमर्थः—यो ह्यनर्थदण्डे दोषं पश्यति गुणं च तस्मान्न किञ्चिदुपलभते तस्य विवेकिनो जीवस्यानर्थदण्डविरतिकरणे चित्तमुत्सहते एवेत्यतः स्वोत्साहानुरूप्येण प्रवृत्तिमतोऽस्यैषा जायत इति गाथार्थः ॥ दोषद्वारमिदानीम्—

रागद्दोसवसट्टा दुद्दंतुम्मत्तजायवकुमारा ।
खलियारिऊण य मुणिं निरत्थयं त गया निहणं ॥ ८७ ॥

' रागद्वेषवशार्त्ताः ' रागश्च—अभिष्वङ्गलक्षणः द्वेषश्च—अप्रीतिरूपो रागद्वेषौ तयोर्वशः—आयत्तता तेनार्त्ताः-व्याकुला रागद्वेषवशार्त्ता दुर्दान्ताः—अशिक्षिताः सन्तः—उन्मत्ताः—मदिरामदविह्वलिता दुर्दान्तोन्मत्तास्ते च ते यादवकुमाराश्च—दशारवंशजदुर्ललिता दुर्दान्तोन्मत्तयादवकुमाराः, ते किमित्याह—' खलीकृत्य ' उपद्रूय ' मुनिं ' व्रतिनं द्वैपायनाख्यं, कथं ?-' निरर्थकं ' निष्प्रयोजनं, तेशब्दस्य योजना दर्शितैव, ' गताः ' प्राप्ताः ' निधनं ' पर्यवसानमिति गाथाऽक्षरार्थः । भावार्थस्तु कथानकगम्यः, तच्चेदम्—

देवनिर्मितायां द्वारवत्यभिधानमहापुर्यां दशारचक्रलघुभ्रातृवसुदेवतनयौ वासुदेवबलदेवावभूतां, तयोश्च राज्यलक्ष्मीसुखमनुभवतोः कदाचिद्दशदशारज्येष्ठसमुद्रविजयराजाङ्गजो गजतुरगरथसुभटबलकलितजरासन्धाभिधानप्रतिवासुदेवानीकसत्कमुकुटबद्धभूपाललक्षलीलाविहितबालकालविजय आयुधशालाव्यवस्थितपाञ्चजन्यशार्ङ्गपरिवादनारोपणजनितचित्तचमत्कारदेवकीतनूजान्दोलनार्थप्रसारितनिजभुजाकम्पनाशक्यताप्रकाशितस्वसामर्थ्यापनीत—

राज्यहरणचिन्तो वासुदेवादिविधिप्रार्थनाऽभ्युपगतविवाहभोज्यार्थव्यवस्थापितानेकशशकशूकरकुरङ्गादिजीवसङ्घातसमसमयविहितार्त्तस्वरश्रवणसंजातमहाकारुण्यसंवेगसंत्यक्तसमस्तसंसारकृत्योऽत्यन्तानुरक्तरूपलावण्यादिगुणकलापोपेतश्रीमदुग्रसेनदुहितृराजीमतीपरित्यागाङ्गीकृतसर्वसावद्यनिवृत्तिप्रतिज्ञावज्ञातमातापित्रादिशोकसन्तापो वर्षशतत्रयप्रमाणकुमारकालानन्तरोज्जयन्तागिरिशिखरसंपन्नदीक्षाज्ञाननिर्वाणलक्षणकल्याणकत्रिकाक्षिप्तचतुर्निकायदेवदेवीसमूहविराचितसपर्यो व्रतग्रहणसमयोत्तरकालातिवाहितचतुष्पञ्चाशद्दिनोपजातविमलकेवलज्ञानावलोकोऽष्टादशसहस्रसङ्ख्यविख्यातश्रमणसङ्घपरिवृतो विहृत्यान्यस्थानानि पुनः पुनर्द्वारवत्यां कृतविहारः समवससार श्रीनेमिनाथो द्वाविंशतीर्थकरः, समागताः सुरेन्द्रादयो देवसार्थाः, कृतं भक्तिभरप्रेरितैस्तैः समवसरणं, मिलितो यादवनरेन्द्रप्रमुखो नगरीजनः, अकारि भगवता धर्मकथा, तदनन्तरं च विनयविरचिताञ्जलिपुटः पप्रच्छ कृष्णो भगवन्तं–स्वामिन् ! कियच्चिरं ममायुः, द्वारवती चेयं महर्द्धिसमन्विता कियन्तं कालं स्थितीमती भविष्यति? कुतो वोभयस्यापि विनाशः ?, तीर्थनाथेनोक्तं–तव जीवितं द्वादश वर्षाणि, द्वारवत्यप्येतावत्कालस्थितिकैव, यत्तु पृष्टं कुत उभयस्यापि विनाशस्तत्रोत्तरं भवतो जराकुमारात्क्षयो द्वारवत्यास्तु मदिरारसास्वादसंपादित-

मद्यैर्यादवकुमारैः खलीकृताद् द्वैपायनादिति, एतच्चाकर्ण्य गुरुविषादविषावेगघूर्णमानमानसो वासुदेव आश्वासितो भगवता सद्धर्मदेशनाऽमृतवृष्ट्या, प्रविष्टः प्रणम्य भगवन्तं निजपुरीं कृष्णः समं बलदे- वादियादववृन्देन, ज्ञापितं नगरीलोकस्य पटहोद्घोषणपूर्वं, यथा—भो ! भो ! गिरिनिकुञ्जेषु नीत्वा परि· त्याज्याः सर्वैरेव लोकैरपरिशेषा मद्यविशेषाः, यतस्तद्द्वारको द्वारवत्याः प्रतिपादितः प्रलयस्तीर्थनाथेन, ततस्त- च्छ्रवणानन्तरमेव शकटशतैरतिवाह्य मद्यकुम्भिकाशतसहस्राणि स्फोटितानि नीत्वा पर्वतकन्दरेषु, द्वीपायनर्षिस्त्वा- त्मनः सकाशाद्भगवदादिष्टं नगरीविनाशमाकर्ण्य न वसिमे स्थातव्यं मयेत्यभिसन्धिना जातो विविक्तवनवासी, जराकुमारोऽपि हा ! कष्टमिदं यन्मया निजभ्रातुः कनीयसो वधोऽनुष्ठेयः, तत्तत्र गच्छामि यत्र मे नामापि न ज्ञायत इत्यभिप्रायवान् प्रविवेश कोशाम्बवनं, तत्र चावसरे बलदेवस्य भ्राता सारथिः सिद्धार्थनामा बलदेवं व्यजिज्ञपत्— यथा मुञ्च मां येन स्वीकरोमि प्रव्रज्यां, ततो विदध्या व्यसनगतस्य मे बोधिमित्यभिधाय मुक्तो रामेण स्वीकृत्य पारमेश्वरीं दीक्षामासेव्योग्रं तपश्चरणमायुःक्षये समाराधितमरणो देवभूयं गतः, इतश्चातिक्रान्ते मासषट्के कादम्बरीगुहावर्त्तिन्यां सुजातायां पूर्वत्यक्तायां मदिरायां समागते कामिजनमनोहारिणि वसन्तसमये भवि-

तव्यतावशेन क्रीडार्थं निर्गताः प्रद्युम्नशम्बादयो यादवकुमाराः, तन्मध्यात् शम्बसत्कः कथञ्चिदेको मनुष्यो गतो गिरिनिकुञ्जं, ददर्श तत्र पिपासामिभूतः पानीयान्वेषणपरायणो लोकैः पूर्वं परित्यक्तं तत्रत्यानेकपुष्प-फलादिसंपातसुजातं मद्यं, पपौ स्वेच्छया, प्रभूतवेलया घूर्णमानः समाजगाम शेषकुमारसमीपं, पृष्टस्तैः-किमेतत्कृतं त्वया ? क्व वा स्थित एतावतीं वेलां ?, तेनोक्तम्--अमृतोपममपीतपूर्वं मद्यं मयाऽद्य पीतमिहैव नातिनिकटवर्त्तिनि शिखरिगह्वरे, ततस्तेऽपि तद्दर्शितमार्गा गतास्तं प्रदेशं दृष्टवन्तः सुरां पीतवन्तश्च चिरकालमुक्तत्वादत्युत्कण्ठया, बाढं विह्वलितचेतनाः ते च ततो रम्यगिरिपारिसरेषु पर्यटन्तो ध्यानाव-स्थितं ददृशुर्द्वीपायनमुनिं, समालोक्य भणितं चैकेन तन्मध्यवर्त्तिना--भो ! भो ! स एष योऽस्मन्नगरीं विनाशयिष्यति, ततो मदप्रमादवशगैस्तैः पादप्रहारपाषाणक्षेपणादिभिरभिहतोऽसौ, भणितश्च--त्वमस्मत्पुरीं विनाशयिष्यसि ?, ततोऽसावेवमुत्प्रास्यमानो हन्यमानश्चानेकधा गतः कोपं, मयैषा सभवनप्राकारद्विपद-चतुष्पदा विनाशयितव्येति निदानं कृत्वा स्थितोऽनशनेन, ज्ञातवृत्तान्तौ बलदेववासुदेवौ भीतभीतौ समं नगर-वृद्धलोकैः समाययतुस्तदुपशमनाय, भणितवन्तौ च—भगवन् ! महर्षे ! महातपस्वी भवान् तदेतैर्मूर्खैरजानानैर्गर्भ-

रूपैर्यत् कदर्थितस्तदस्माकं क्षमस्व, क्षान्तिपरा हि मुनयो भवन्ति, तत्प्रसीदतु भवान्, मुनिरुवाच—अस्माकमन-
पराधानामेतत्कदर्थनमेतैः कृतं तद्दर्शयाम्यस्य दुर्विनयस्याचिरात्फलममीषां निष्कारणवैरिणां सकलजनविनाशकर-
णेन, वासुदेवेनोक्तं--मैवं वोचः तपस्विन् !, यदि श्वा दशति तत्किं सोऽपि दष्टव्यः ?, किञ्च--यद्यमीभिरपकृतं
तत्किमशेषनगर्या अपि विनाशनाय निदानकरणमुचितं ?, तत् प्रसादबुद्धिमाधाय भवद्भिः क्षम्यतामयमेकोऽपराधोऽ-
स्माकं, द्वैपायनोऽब्रवीत्--त्वं हि सुखी न जानासि परदुःखमहमेतैः पापिष्ठैरनेकधोत्प्रास्योत्प्रास्याभिहतः, तत्कि-
मेते एव ममापकारिणो नापरो नगरीलोकः ?, तद्गच्छतु भवान् स्वस्थानं, मया त्वेषामेवोत्प्रासना सत्या कर्त्तव्या न
तु क्षमणीय एषोऽपराधो, न भूयो भूयस्त्वया किमपि वक्तव्योऽहं, ततो निवारितोऽपि तेन कृष्णोऽवश्यंभाविभावो
नान्यथा कर्तुं सुरासुरैः सेन्द्रैरपि पार्यत इति करोतु यदस्मै रोचते त्वं कियतीः प्रार्थनाः करिष्यसीति निषिध्य-
मानोऽपि बलदेवेन स्वार्थपरतया तं यावत् पुनः पुनर्विज्ञपयाति तावदनेनोक्तं--किमेवं पुनः पुनः प्रलप्यते भवता ?,
युवां महापुरुषौ मुक्त्वाऽन्यस्य कीटकस्यापि न मया मोक्षो विधेयः, ततो विशेषेण विलक्षीभूतोऽसौ
समं बलभद्रादिलोकेन गतो नगरीं, समादिदेश च पुरीजनमशेषं, यथा—उपवासादिरतः शान्तिकर्म-

परायणः सर्वोऽपि तिष्ठतु येन प्रतिहन्यतेऽसौ, ततो विशेषेण धर्मकर्मपरायणो लोको बभूव, द्वैपायनस्तु मृत्वोत्पेदेऽग्निकुमारेषु, ततो दत्तोपयोगो भवप्रत्ययविभङ्गेन विज्ञातपूर्वभवविहितनिदान आगतो नगरीम्, अपश्यच्च भयेन तपोनियमशान्तिकर्मोद्यतमशेषलोकं, तत आत्मानमुपदर्श्य गतः स्वालयं, जनः पुनस्तमनवलोकयन्नस्मदीयतपोविधानादिना प्रतिहतोऽसाविति विचिन्तयन् अतिक्रान्तप्रायेषु द्वादशवर्षेषु प्रमादी संवृत्तः, ततोऽसौ लब्धावकाशो विचिन्त्य तं प्रमत्तं संवर्त्तकवातेन महता बहिःस्थितमपि द्विपदादि प्रक्षिपन्नन्तः पिधाय निःशेषद्वाराणि प्रदीपयामास सर्वतोदिक्कं पुरीं, उत्थितोऽतिबहलतया श्रोत्रविवरं स्फोटयन्निव हा स्वामिन्! रक्ष रक्ष प्राणभिक्षां प्रयच्छेत्यादिरूपो जनस्य करुणः प्रलापः, अत्रान्तरेऽप्रतिविधेयव्यसनोपनिपातोपस्थानदुःस्थौ जनार्दनसीरिणौ गतौ मातापित्रोरन्तिकं, प्रगुणीकृत्य रथमारोपयामासतुर्देवकीरोहिणीसहितं वसुदेवं, यावन्न चलति स्थानाद्रथस्तावत्तुरङ्गस्थाने स्वयमेव भूत्वाऽऽकृष्य स्वप्राणेनानीतः प्रतोलीं यावत्, पार्ष्णिप्रहारेण पातयित्वा कपाटपुटं यावन्निष्काशयितुं प्रववृताते तावदाकाशस्थेन द्वीपायनसुरेण नात्र युवां मुक्त्वाऽन्यस्य कौलेयकस्यापि मोक्ष इति पूर्वमेव प्रतिपन्नं मयाऽतो गच्छतं युवाम्, अनयोः पुनरत्रैव मृत्युरिति भणित्वा पश्यतोरेवानयोरतिप्रबलशोका-

वेगविनिर्यदश्रुप्लवप्लवमाननयनयोर्ज्वलयितुमारब्धो रथः, ततो भणितं वसुदेवादिभिः—वत्सौ! व्रजतं युवाम्, अस्मत्कृते
मा विनाशमन्वभूतां भवन्तौ, सर्वथा दुर्वाराऽऽपन्निवारणासमर्थाभ्यां न स्थेयमस्मत्पार्श्वे भवद्भ्यां, युवयोर्विद्यमानयोः
पुनः संभाव्या यादववंशोन्नतिः, ततो मुशलपाणिना गदितः कृष्णो, यथा—सत्यमेतदादिशन्ति पूज्याः, इत ऊर्ध्व-
मत्र तिष्ठतोरावयोरेतेषामपि मरणे महदसमाधानमत एतत्कार्यमेव कालोचितं कृत्वा याव आवां, ततो दत्तं
वसुदेवादीनामनशनं स्मारितं भगवता नेमिनाथेनादिष्टमणुव्रतादि कारितमर्हदादिपरमेष्ठिपञ्चकनमस्कारोच्चारणं
विधापिता सकलसत्त्वक्षामणा क्षणमात्रेण भस्मीभूतो वसुदेवदेवकीरोहिणीभिः समं रथो, देवलोकमनुप्राप्ता वसुदे-
वादयः, तौ त्वनाख्येयदुःखदोदूयमानमानसौ महता कष्टेन गतौ ततः कोशाम्बीकवनं, तत्रावोचन्नीलाम्बरं हरिः—
भ्रातः! न शक्तोऽस्म्यहमितः पदमपि गन्तुं, बाढं गाढपिपासया शुष्यति मे वदनं, तिमिरवल्लरीभिरग्रतः
प्रसर्पन्तीभिर्बाध्यते नयनयुगलं, गलितामृतकलानिस्स्यन्दं संपद्यते गलकरन्ध्रं, वाग्व्यापारासमर्थतया जडतामुपयाति
रसना, ततो नातिदूरवर्त्तिवटच्छायायामुपवेश्य हृषीकेशं यावज्जलमादायागच्छामि तावदप्रमत्तेन भवता स्थेयमि-
४० त्यनुशिक्ष्यैनं निक्षेपक एष क्षिप्तो भवतीनां मया रक्षणीयस्तावन्मद्भ्राता यावदायाम्यहमत्रेत्यालप्य वनदेवता जगाम

सलिलार्थं सीरपाणिः, केशवोऽपि मनाक् शीतलच्छायायां व्यवस्थितः शिशिरवनमारुताप्यायितशरीर आच्छाद्यात्मानं पीतवर्णोत्तरीयवस्त्रेण सर्वतो वामजानुन उपरि विधायेतरपादं सिषेवे निद्रासुखं, अत्रान्तरे तत्प्रदेशनिकटवर्त्तिना-ऽऽगत्य कुतोऽपि जराकुमारेण कनकपृष्ठहरिण एष तिष्ठति तद् व्यापादयाम्येनमिति बुद्ध्या दूरवर्त्तिनैव क्षिप्त्वाऽतितीक्ष्णशरं विद्धश्चरणतले, ततः कोऽयमज्ञातचर्ययैव मामेवं विश्रब्धसुप्तं जघान ?, न खलु पौरुषाभिमानिनः सुप्तप्रमत्तादिषु प्रहरन्ति, मयाऽपि षष्ट्यधिकत्रिशतसङ्ख्यसंग्रामेषु न कश्चिदज्ञातकुलशीलस्वरूपः पुरुषो विनाशित इत्यादि प्रतिपादयन् मुखमुद्घाट्य यावदीक्षाञ्चक्रे चक्रपाणिस्तावज्जराकुमारस्तदाकर्ण्य सखेदमाः किमेतन्मया व्यधायि ? न भवत्येष स्वर्णपृष्ठसारङ्गः, केवलमेतद्बुद्धिविप्रलब्धेन तरुनिकरावच्छादितमूर्त्तिना मया मनुष्य एव कश्चिदेष बाणेनाजघ्ने, तद्गच्छामि तावदेतदन्तिकं पश्यामि कोऽयमित्यादि चिन्तयन् समागतो विष्णुसमीपं, जातं परस्परदर्शनं, कथितं जराकुमारेण स्वकुलमात्मनो वनप्रवेशकारणं च, ततो वासुदेवेन प्रसार्य बाहू एह्येह्यालिङ्ग निर्वापय चिरकालभवद्विरहदहनदंदह्यमानमेतन्मदीयमङ्गं स्वसङ्गमजलेन, यद्रक्षानिमित्तं च द्वादश वर्षाणि सकलसंसारसुखविमुखेन स्थितं वनवासदुःखमनुभवता सोऽहं हरिर्विधात्रा संयोजितो भवतः, ततोऽसौ बाष्पभरभार्यमाणलोचनः

समागत्य तदन्तिकं पतित्वा पादयोः प्रलपितुमारेभे यावत्तावदूचे चक्रपाणिना—भ्रातः! मा प्रलापीर्यतः—" अन्यथा स्यान्महामेरुरन्यथा स्याद्दिनोद्गमः। अन्यथा स्यात्त्रिलोकीयं, नान्यथा जिनभाषितम् ॥ १ ॥ " तद्यावदद्यापि बलदेवो नायाति तावत्प्रयाहि पाण्डुमथुराभिमुखं, मा मद्विनाशवीक्षणोत्पन्नकोपः सोऽपि भ्रातृवधमनुष्ठास्यति, गृहाण चेदं मदीयं कौस्तुभरत्नं, दर्शनीयं प्रत्ययहेतोः पाण्डवानां, कथनीयं च मामकं मिथ्यादुष्कृतमित्यभिधाय संप्रेष्य चैनं स्वयं नमो भगवते यादवकुलावतंसभूताय श्रीमदरिष्टनेमये नमः सर्वसिद्धेभ्यो नमोऽतीतानागतवर्त्तमानार्हद्भ्यः, हा न सुन्दरं कृतं पापेन द्वैपायनेन, यदि नाम खलीकृतोऽसौ कुमारैस्तथाऽपि न निःशेषलोकक्षयकरणेनेदृशमनार्यचेष्टितमस्योचितं, भविष्यति ममापि कोऽप्यवसरो ज्ञास्याम्येतच्चेष्टितस्य माहात्म्यमित्यादि विचित्रध्यानमापूरयन्नेव क्षणेन प्राप्तः परासुतां, आयातोऽत्रावसरे सलिलपरिपूर्णपद्मिनीपत्रपुटकपाणिः सीरपाणिः, दृष्ट्वा मृतं मोहमुपागतः, लब्धचेतनश्च यथा स विललाप यथा च प्रणष्टविवेकः षण्मासान् यावत् स्कन्धाधिरोपितमवहदेनं यथा च सिद्धार्थदेवेन प्रतिबोधितो व्रतमादाय ब्रह्मलोककल्पं गत इत्यादि तथा सर्वं सविस्तरं वक्ष्यमाणकुरङ्गकथानकादवगन्तव्यम् ॥ इह च ते कुमारा मद्यप्रमादरूपादनर्थदण्डाद् विनष्टास्तस्मादनर्थदण्डविरतिर्विधेयेति द्वारगाथाभावार्थः ॥

सम्प्रति गुणद्वारम्—

जे पुण अणत्थदंडं न कुणंति कयंपि कहवि निंदंति ।
ते अंगरक्खसड्ढो व्व सावया सुहनिही हुंति ॥ ८८ ॥

ये पुनरनर्थदण्डं निष्कार्यं शस्त्रप्रदानादि 'न कुर्वन्ति' नो विदधति, 'कृतमपि' रचितमपि 'कथमपि' अनुपयोगादेः 'निन्दन्ति' जुगुप्सन्ते ते 'अङ्गरक्षणश्राद्ध इव' शरीररक्षानियुक्तकश्रावक इव 'श्रावकाः' ( ग्रं० ६५०० ) श्रमणोपासकाः 'सुखनिधयः' सद्द्यौदयनिधानानि 'भवन्ति' जायन्त इति गाथाऽक्षरार्थः ॥ भावार्थः कथानकगम्यः, तच्चेदम्–

पृथिवीप्रतिष्ठितनगरे गुरुप्रतापप्रसाधितप्रचुरमण्डलोऽरिदमनो राजा, तस्य जिनपालचन्द्रपालनामानौ सम्यग्मिथ्यादृष्टौ(ष्टी) अङ्गरक्षकावभूतां, तयोश्च खड्गव्यग्रकरयोः सततमेव राज्ञः शरीरेऽप्रमत्ततया रक्षाविधानमाचरतोरतिक्रान्तः कियानपि कालः, अन्यदा च नरपतिर्विजययात्रार्थं कटकनिवेशं कृत्वा नगराद्बहिर्व्यवस्थितः, तत्र च रात्रिप्रयाणकसञ्जाताकस्मिकसैनिकलोकसंभ्रमे कथञ्चित्तयोर्विस्मृतौ स्वस्वखड्गौ, अर्द्धपथप्रयातयोश्च स्मृतिमार्गमवतीर्णौ, ततो जजल्पतुः परस्परं–आवयोस्तत्र विस्मृतौ कृपाणदण्डौ, ततः सम्यग्दृष्टिनोक्तं–भो चन्द्रपाल ! प्रत्या-

चन्द्रपालोऽब्रवीत्-न मे नृपातिप्रसादेन किञ्चिदूनमस्ति,
वृत्य पश्यावः पुनरतत्स्थानमालभेवहि तत्स्थावेव तावसी,
यदि विस्मृतौ विस्मरतु नाम अन्यो भव्यतरो भविष्यति, ततो जिनपालेन चिन्तितं—सत्यमेतदसौ ब्रूते, यदन्योऽपि
भविष्यसि । नृपतिप्रसादतः खङ्गः, किन्त्वसौ वेत्ति नेदृशम् ॥ १ ॥ पञ्चेन्द्रियवधप्रौढं, शस्त्रमेतदतोऽमुतः । महाऽ-
नर्थोऽविधित्यक्तादिहामुत्र च संभवी ॥ २ ॥ तस्मादज्ञानतिमिरतिरोहितविवेकलोचनो यद्येष निर्ग्रहणतां करोति
करोतु नाम, मम त्वनुजिनागमोपदेशसदौषधनिराकृताज्ञानतमस्ततेः न युक्ता महानर्थहेतोरेतस्योपेक्षा, ततो गत-
स्तत्स्थानं गवेषितः सर्वत्र पृष्टाश्च तत्प्रदेशवर्त्तिनो जनाः न लब्धा काऽपि तच्छुद्धिः, ततो व्युत्सृज्यात्मीयपरिग्रहा-
न्मण्डलाग्रं तत्स्थानासन्नवर्त्तिजनसमक्षं समागतो भूयोऽपि स्वकीयकटकदेशं, कालान्तरे च विजितप्रतिपक्षेण राज्ञा
सह समाजग्मतुस्तौ स्वनगरमङ्गरक्षौ, इतश्च-देशान्तरीयैः कैश्चित्प्राप्तौ खड्गौ, परिभ्रमन्तश्च ते समाजग्मुस्तदेव
नगरं, ददृशुश्च क्वचिद्रहःस्थितं कथञ्चित्प्रमत्तं राजपुत्रं, प्रारब्धो बन्दिग्रहेण ग्रहीतुमसौ तैः, ततो विज्ञाततद्भावेन
नरेन्द्रतनयेनारब्धं तैः सह प्रधनं, अन्योऽन्यप्रहारैश्च नृपसूनुस्ते च प्राप्ता निधनं, मिलितस्तत्र प्रभूतो लोकः, केन-
चिच्च राजपुरुषेण ददृशाते तौ जिनपालचन्द्रपालनामाङ्कौ कृपाणौ, प्रच्छन्नीकृत्यार्पितौ नरपतेः, कथिता च पुत्रमरण-

वार्ता, विलोक्य तन्नामाङ्काविमौ आहूतः प्रथमं जिनपालः क्षितिपतिना, प्रदर्श्य भणितं—गृहाण स्वकीयं खड्गं, तेनोक्तं-न मामकीनोऽयं, राज्ञा कथितं-कथं ?, तेनोक्तं-आत्मपरिग्रहान्मया व्युत्सृष्टत्वात्, ततो निवेदितः प्राचीनवृत्तान्तः, तुष्टेन भूभुजा पूजितोऽयं, तत आकारितश्चन्द्रपालः, सोऽप्येवमेवोक्तो, न चासौ सूक्ष्मेक्षिकां कृतवान्, केवलं मदीयमेतदित्युक्त्वा निर्विचारमेव जग्राह, ततः प्रमादवानिति कृत्वा दण्डितो राज्ञा, च्यावितोऽङ्गरक्षकपदात् । एवं चानर्थदण्डानिवृत्तानां दोषमवगम्य भवान्तरशरीरादिष्वपि ममत्वबुद्धिपरिहाराय व्युत्सर्जनोपयोगः कार्यः, अन्यथा तत्परिग्रहदोषानिवृत्तेः तज्जानितकर्मबन्धोपरतिर्न भवेदिति प्रस्तुतगाथाभावार्थः ॥ सम्प्रत्येतद्यतनोच्यते—

**कज्जं अहिकिच्च गिही, कामं कम्मं सुहासुहं कुणइ ।**
**परिहरियव्वं पावं, निरत्थमियरं च सत्तीए ॥ ८९ ॥**

'कार्यं' प्रयोजनं धर्मेन्द्रियस्वजनसत्कं 'अधिकृत्य' अङ्गीकृत्य 'गृही' अगारी 'कामं' अत्यर्थं 'कर्म' व्यापारं, कीदृशं ?—शुभं-चैत्यवन्दनादिकरणकारणस्वभावं सुवर्णरत्नकुङ्कुमादिविषयव्यापाररूपं वा अशुभं च—चण्डिकायतनविधापनादि मद्यमधुशस्त्ररजःप्रमार्जनकङ्कतकाङ्गारादिविक्रयणादि वा शुभाशुभं

' करोति ' विधत्ते'ननु धर्मादिप्रयोजनमङ्गीकृत्य गृहस्थः शुभाशुभव्यापारं करोतीत्युक्तं, निरर्थके तु का वार्त्ता ? इत्याशङ्कायामाह–' परिहर्त्तव्यं ' परित्याज्यं ' पापं ' अधर्महेतुं, मधुमधुकविक्रयाद्यनुष्ठानमिति शेषः, कीदृक्षमित्याह-' निरर्थं ' निष्प्रयोजनं, नन्वेवं निष्प्रयोजनस्य परिहार्यत्वेन सप्रयोजनस्य तु कामं करणीयत्वेनोपदिष्टत्वात्सार्थकस्यारम्भस्य कादाचित्कोऽपि त्यागो नोचितः स्यात्, नैवं, सोऽपि यथानिर्वाहं त्याज्य एव, अत एवाह–' इयरं च सत्तीए ' त्ति न केवलं निरर्थकं परिहर्त्तव्यम् ' इतरच्च ' सप्रयोजनं ' शक्त्या ' सामर्थ्येन गुरुलाघवालोचनपूर्वं, यथा निर्वहतीति हृदयं, परिहार्यमिति सम्बन्ध इति गाथार्थः ॥ अस्यैवातिचारद्वारगाथाऽधुना—

कंदप्पं कुक्कुइयं मोहरियं संजुयाहिगरणं च ।
उवभोगे अइरेगं पंचइयारे परिहरेज्जा ॥ ९० ॥

पञ्चातिचारान् परिहरेदिति तुर्यपादे क्रियाकारकसम्बन्धः, कान् पञ्चेत्याह-'कन्दर्पं' कन्दर्पः–कामस्तद्धेतुर्विशिष्टो वाक्प्रयोगोऽपि कन्दर्पो मोहोद्दीपकं नर्मेति भावः तमेकं परिहरेत्, एवं शेषपदेष्वपि क्रियायोगः कार्यः, अत्र च सामाचारी–श्रावकस्याट्टहासो न कल्पते कर्त्तुं, यदि नाम हसति तदेषदेवेति ?। तथा कुकुचः–कुत्सितसङ्कोचनादि-

क्रियायुक्तस्तस्य भावः कौकुच्यम्-अनेकप्रकारा मुखनयनादिविकारपूर्विका परिहासादिजनिका चेष्टा, भाण्डानामिव विडम्बनक्रियेत्यर्थः, अत्र सामाचारी—तादृशानि भणितुं न कल्पन्ते यादृशैर्लोकस्य हास उत्पद्यते, एवं गत्या गन्तुं स्थानेन स्थातुमिति, एतौ च कन्दर्पकौकुच्याख्यावतिचारौ प्रमादाचरितव्रतस्यावसेयौ, प्रमादरूपत्वादनयोः, चरमश्चोपभोगातिरेको वक्ष्यमाणोऽस्यैवातिचारो, विषयात्मकत्वादिति। तथा मुखमस्यास्तीति मुखरस्तद्भावः कर्म वा मौखर्य-धाष्टर्यप्रायमसत्यासम्बद्धप्रलापित्वं, अयं च पापोपदेशव्रतातिचारः, मौखर्ये सति पापोपदेशसंभवात्, तथाऽधिक्रियते—नियुज्यते नरकादिष्वनेनात्मेत्यधिकरणं-वास्युदूखलशिलापुत्रकगोधूमयन्त्रकादि संयुतम्-अर्थक्रियाकरणसमर्थं तच्च तदधिकरणं च संयुताधिकरणं 'चः' समुच्चये, अत्र च सामाचारी-श्रावकेण न संयुक्तानि शकटादीनि धार्याणि, अयं च हिंस्रप्रदानव्रतस्यातिचारः, तथा 'उपभोगे' सकृद्भोग्ये पुष्पताम्बूलादिरूपे अस्य चोपलक्षणत्वात्परिभोगे च-पुनः पुनर्भोग्ये वस्त्रवेश्मादिके, यद्वोपभुज्यत इत्युपभोग इति व्युत्पत्त्या सामान्येनैव यदुपभोग्यं वस्तु तदुपभोगशब्देन विवक्षितं तस्मिन् 'अतिरेकं' आधिक्यं, इहापि सामाचारी—उपभोगातिरिक्तानि यदि तैलामलकानि बहूनि गृह्णाति तदा तल्लौल्येन बहवः स्नातुं तडागादौ व्रजन्ति, ततः पूतरकाप्का-

यादिवधोऽधिकः स्याद्, एवं ताम्बूलादिष्वपि विभाषा, न चैवं कल्पते, ततः को विधिरुपभोगे ?, तत्र स्नाने तावद्गृह एव स्नातव्यं, नास्ति चेत्तत्र सामग्री तदा तैलामलकैः शिरो घर्षयित्वा तानि च सर्वाणि शाटयित्वा तडागादीनां तटे निविष्टोऽञ्जलिभिः स्नाति, तथा येषु पुष्पादिषु कुन्थ्वादयः सन्ति तानि परिहरति, एते च कन्दर्पादयः पञ्चातिचाराः पापोपदेशहिंस्रप्रदानप्रमादाचरितव्रतेषु दर्शिताः, अपध्यानाचरितव्रते त्वनाभोगादिनाऽपध्यानवृत्तिरेवातिचार एतदनुसारेणानुक्तोऽपि द्रष्टव्यो, न चायमेव, किन्तु कन्दर्पादयोऽप्यनाभोगादिनैवातिचाराः, आकुट्टया तु भङ्गा एवामी, तथा च वक्ष्यति 'कंदप्पा' इत्यादि, इमान् पञ्चातिचारान् गाथोक्तसङ्ख्याऽपेक्षया न तु सर्वथा सङ्ख्यानियमोऽयं, 'परिहरेत्' परिवर्जयेदिति गाथार्थः ॥ भङ्गद्वारे—

कंदप्पाइ उवेच्चा कुवंतो अइकिलिट्ठपरिणामो ।
पावस्सुदएण गिही भंजइ एवं अविण्णाणो ॥ ९१ ॥

'कन्दर्पादि' पूर्ववर्णितातिचारपञ्चकं 'उपेत्य' आकुट्टया 'कुर्वन्' विदधानः, कीदृक्षः सन्नित्याह—अतिक्लिष्टः—अतिबाधितः शुभभावं प्रतीत्य परिणामः—अध्यवसायो यस्यासौ अतिक्लिष्टपरिणामः, व्रतनिरपेक्षाध्यवसाय

इति भावः, केनेदृश इत्याह–'पापस्य' रजसः 'उदयेन' विपाकेन 'गृही' गृहस्थः 'भनक्ति' विनाशयति, निर्मूलकाषं कषतीति भावः, 'एतत्' अनर्थदण्डविरतिव्रतं 'अविज्ञानः' विशिष्टविवेकरहित इति गाथार्थः ॥ भावनायां त्वस्येयं गाथा—

चिंतंति करिंति सयंति जंति जंपंति किंपि जयणाए ।
तम्मुवउत्ता सम्मं, जे ते साहू नमंसामि ॥ ९२ ॥

'चिन्तयन्ति' ध्यायन्ति 'कुर्वन्ति' विदधति 'शेरते' स्वपन्ति 'यान्ति' गच्छन्ति 'जल्पन्ति' भाषन्ते 'किमपि' किञ्चिदेव धर्मपुष्टिकारकं, न तु सर्वमेव आर्त्तादि पापजनकमपि, 'यतनया' गुरुलाघवालोचनरूपया, एतद्ग्रहणेन चैतदाह–सर्वोऽपि क्रिया यतनया क्रियमाणा न पापबन्धाय, यदुक्तम्—"जयं चरे जयं चिट्ठे, जयमासे जयं सए । जयं भुजंतो भासंतो, पावं कम्मं न बंधई ॥ १ ॥" कीदृशाः सन्तः ? इत्याह–तस्मिन्–चिन्तनादौ उपयुक्ताः दत्तावधानाः तदुपयुक्ताः, 'सम्यक्' अवैपरीत्येन ये तान् 'साधून्' श्रमणान् 'नमस्यामि' नमस्करोमि । अयमत्र समुदायार्थः—ये सम्यक्चिन्तनाद्युपयुक्ता यतनया चिन्तनादिकमपि कुर्वन्ति तान् साधून् नमस्यामि, तत्र चिन्तनो-

पयोग उपयोगलक्षणोऽनादिनिधनः शरीरादर्थान्तरभूतः स्वयं कर्मणः कर्त्ता तत्फलोपभोगी च जीवो मया चिन्तनीयः, अजीवादिर्वा तल्लक्षणाद्युपेतो, अयं चाप्रवृत्तचिन्तस्योपयोगः, प्रवृत्तचिन्तस्य त्वेवं—किमहं शुभं चिन्तयाम्यशुभं वा?, तत्र यदाऽनाभोगादिनाऽशुभं चिन्तयति तदा मिथ्यादुष्कृतदानपूर्वमनुतापगर्भमशुभं परित्यज्य शुभमेव पुनश्चिन्तयेत्, शुभाचिन्तायामप्यपरापरपदार्थेषु गच्छच्चित्तं निवार्यम्, एकस्मिन्नेव वस्तुनि सूक्ष्मसूक्ष्मतरोपयोगेन धार्यमिति, करणोपयोगोऽपि एतत् चैत्यवन्दनाप्रतिक्रमणादि निरवद्यानुष्ठानं शास्त्रोक्तविधिना मया कार्यं,न पुनः सावद्यव्यापाररूपम्, अयमप्रवृत्तव्यापारस्योपयोगः, प्रवृत्तव्यापारस्य त्वहं न किञ्चित्सावद्यमाचरामि, अनुपयोगादिना सावद्याचरणेऽपि मिथ्यादुष्कृतदानपूर्वमनुतापगर्भं तत्त्यक्त्वा निरवद्यमेवानुष्ठातव्यं, तत्रापि तदुपरतये शक्तौ सत्यामभिग्रहसारं कायोत्सर्गादि विधेयमिति, शयनोपयोगस्त्वनागतो गुरुसकाशे मुखवस्त्रिकाप्रत्युपेक्षणपूर्वकं संस्तारकमनुज्ञाप्य बाहूपधानेन वामपार्श्वशायिना मया शयनीयं, शयनप्रवृत्तौ तु न निसृष्टं शेते, सङ्कोचितपाणिपादस्तु यदाऽऽसितुं न शक्नोति तदा कुक्कुटीन्यायेन पादप्रसारणादि करोति, प्रत्युपेक्ष्य प्रमृज्य च स्थाने मुञ्चति, अविधिशयनादौ तु मिथ्यादुष्कृतादि पूर्ववदिति, यानोपयोगस्तु युगमात्रन्यस्तदृष्टिनाऽव्याक्षिप्तचित्तेन दृष्टि पूतपदन्यासं त्रसाद्यसंसक्तमार्गेणोत्पन्ने गुर्वादि-

कार्ये मया गन्तव्यं, प्रवृत्तगमनोपयोगस्तु यथाचिन्तितनिष्पादनमेवोपयुक्ततया; अनाभोगादिनाऽन्यथाकरणे मिथ्यादुष्कृतादि पूर्ववदेतत्, अतिप्रसङ्गनिवारणाय च तनूत्सर्गाभिग्रहोऽत्रापीति, जल्पनोपयोगः पुनः षोडशवचनविधिज्ञेनात्मपरहितमकर्कशमनवद्यं मया भाषणीयं, तदपि कार्यापतितमेवं, न निष्प्रयोजनम्, अन्यथात्वे तु पूर्ववद्, अतिप्रसङ्गनिवारणार्थं तु शुभाध्यवसायस्य मौनाभिग्रहग्रहणमिति गाथार्थः ॥ गतं भावनाद्वारम् एतद्भणनाच्च नवभिरपि द्वारैर्व्याख्यातमनर्थदण्डाविरतिव्रतम्, अस्य व्याख्यायां च समाप्तानि त्रीण्यपि गुणव्रतानि, अधुना शिक्षाव्रतानां शिक्षापदाख्यद्वितीयनामवतामवसरः-तानि च सामायिकादीनि चत्वारि, तान्यपि च याद्दशादिनवद्वारैरेव प्रत्येकं वाच्यानि, अतः प्रथमं सामायिकव्रतं प्रथमद्वारेणाह—

सावज्जजोग वज्जण निरवज्जस्सेह सेवणं जं च ।
सव्वेसु य भूएसुं समयाभावो य सामइयं ॥ ९३ ॥

सहावद्येन गर्ह्येण वर्त्तन्ते सावद्याः ते च ते योगाश्च व्यापाराः सावद्ययोगास्तेषां वर्जनं-त्यागः अनुस्वारलोपश्चात्र प्राकृतशैल्या, ' निरवद्यस्य ' निष्पापव्यापारस्य पठनादेः ' इह ' अस्मिन् शासने लोके वा ' सेवनं'

' भूतेषु ' प्राणिषु शत्रुमित्रादिरूपेषु ' समताभावश्च '
अभ्यसनं यच्च तथा ' सर्वेषु ' समस्तेषु ' चः ' पूरणे
समो—रागद्वेषवियुक्तस्तस्याऽऽयो—लाभो ज्ञानदर्शनचा-
तुल्यतापरिणामश्च यः तत् ' सामायिक ' मिति सम्बन्धः,
चकारो भूतव्यतिरिक्तानुक्तमणिलेष्टुकनकादिपदार्थसमुच्चयार्थः,
रित्रसत्कः समायः स एव सामायिकं, स्वार्थे इकण्,
ततः सर्वेषु भूतेषु मण्यादिषु च समताभावः सामायिकमिति गाथार्थः ॥ भेदद्वारमिदानीम्—

सम्मत्तसुयं तह देसविरइ तिविहं गिहीण सामइयं ।
इत्तरियमावकहियं अहवा दुविहं तयं नेयं ॥ ९४ ॥

सम्यक्त्वं च—तत्त्वार्थश्रद्धानरूपं श्रुतं च—श्रुतज्ञानं सम्यक्त्वश्रुतं, समाहारत्वादेकत्वनपुंसकत्वे, तथा-शब्दः समुच्चये, न केवलं सम्यक्त्वश्रुतं, तथा देशविरतिः, प्राकृतत्वाल्लुप्तविभक्तिको निर्देशः, विरमणं विरतिः देशस्य देशेन वा विरतिर्देशविरतिः—स्थूलप्राणातिपातादिविरतिलक्षणा, एतत् 'त्रिविधं' त्रिप्रकारं 'गृहिणां' वेश्मवतां 'सामायिकं' प्राग्निरूपितशब्दार्थं, अयमत्र भावार्थः—श्रावकाणां त्रिविधं सामायिकं, तद्यथा-सम्यक्त्वसामायिकं श्रुतसा-
४१ मायिकं देशविरतिसामायिकं च, यद्यपि च सर्वविरतिसामायिकमपि चतुर्थमस्ति तथाऽपि गृहिणां तस्यासम्भवात्त्रि-

चेइहरसाहुगिहमाइएसु सामाइयं समो कुज्जा ।
पणिवायाणंतर साहु वंदिउं कुणइ सामइयं ॥ १ ॥

चैत्यगृहसाधुगृहादिकेषु मकारस्यालाक्षणिकत्वात् सामायिकं समः कुर्यात् प्रणिपातानन्तरं साधून् वन्दित्वा करोति सामायिकमित्यक्षरार्थः, पदार्थस्त्वयं–चैत्यानि–अर्हत्प्रातिमाः प्रशस्तभावचित्तहेतुत्वात् चित्तमेव चैत्यमिति व्युत्पत्त्या कथ्यन्ते तेषां गृहं चैत्यगृहं–जिनायतनं, साधयति–निष्पादयति मोक्षलक्षणं पदार्थमिति साधुः–यतिः, गृह्यतेऽनेन संसारनिबन्धनकर्मणा जीव आत्मीयभावगृहीतेनेति गृहं–वेश्म, चैत्यगृहं च साधुश्च गृहं च चैत्यगृहसाधुगृहाणि तान्यादिर्येषां पौषधशालादीनां तानि तथा तेषु 'सामायिकं' प्राग्निरूपितशब्दार्थं 'समः' रागद्वेषयोर्मध्यस्थः अविकृतो वा 'कुर्यात्' विदध्यादिति यो यत्रेति कथितं, यथा करोतीत्येतदुच्यते–प्रणिपातः–प्रणिपातदण्डको 'नमोत्थु ण' मित्यादिस्तस्मादनन्तरं 'साधून् वन्दित्वा' यतीनभिवाद्य करोति सामायिकं, क्वचिच्च 'पणिवायाणंतरसाहुवंदणं'ति पाठः, तत्र प्रणिपातानन्तरं साधुवन्दनं यत्र सामायिककरणे तत्तथेति क्रियाविशेषणं दृश्यम् । अयं च विधिः श्रीवसुदेवसूरिभिर्व्याख्यातः, परं न प्रायः सामाचार्येवं दृश्यत इति, तद-

नुसारेणैवं व्याख्या—प्रणिपतनं—प्रणिपातः सामान्येन प्रणाममात्रं, स च साध्ववग्रहसूचनादत्र साधूनामेव द्रष्टव्यः, तस्मादनन्तरं साधुवन्दनं कृत्वा सामायिकं करोति, यद्वा प्रणिपातानन्तरमित्यनेनार्हच्चैत्यासन्नविधिरभिहितः, साधून् वन्दित्वेत्यनेन तु साध्वासन्नविधिः, यतो यत्रार्हच्चैत्यानि तत्र तद्वन्दनापूर्वं सामायिकं ग्राह्यं; चैत्यवन्दना तु प्रणिपातदण्डकपूर्विकेति, अनेन च चैत्यसाधुसमीपलक्षणस्थानद्वयानुसारेण शेषाण्यपि गृहादिस्थानानि सूचितानि, प्राग्व्याख्यापक्षे तु साधुसमीपमेव मुख्यत उक्तं, केवलमनेनैव तुलादण्डमध्यग्रहणन्यायेनाद्यन्तग्रहणमपि बोध्यमित्यन्यदीयगाथार्थः ॥

आवश्यकचूर्ण्याद्युक्तसामाचारी त्वियम्—सामायिकं श्रावकेण कथं कार्यं ?, तत्रोच्यते—श्रावको द्विविधः-अनृद्धिप्राप्त ऋद्धिप्राप्तश्च, तत्राद्यश्चैत्यगृहे साधुसमीपे पौषधशालायां गृहे वा यत्र वा विश्राम्यति पृच्छति (तिष्ठति) च निर्व्यापारस्तत्र करोति, चतुर्षु तु स्थानेषु नियमेन करोति—चैत्यगृहे साधुमूले पौषधशालायां गृहे वाऽऽवश्यकं कुर्वाण इति, एतेषु च यदि चैत्यगृहे साधुमूले वा करोति तत्र यदि केनापि सह विवादो नास्ति यदि भयं कुतोऽपि न विद्यते यदि कस्यापि किञ्चिन्न धारयति मा तत आकर्षापकर्षौ भूतां यदिवाऽधमर्णमवलोक्य न गृह्णीयात् मा

विधमुक्तं, ननु सामायिकं नाम समभावरूपं प्रागाख्यातं, सम्यक्त्वश्रुतयोश्च श्रद्धानज्ञानरूपयोः कीदृशी समभावता?, ब्रूमः, यथावस्थितश्रद्धानज्ञानरूपे हि सम्यक्त्वश्रुते, यथावस्थितं च श्रद्दधानो जानानश्च समभाव एव, विषमभावनायां तु यथावस्थितत्वमेव श्रद्धानज्ञानयोर्नास्ति, यद्वा रागद्वेषविच्युतस्य यो लाभः स सामायिकं, स च सम्यक्त्वश्रुतयोरपि सतोर्निश्चयतो भवत्येव, यदुक्तमाचाराङ्गे—" जं मोणंति पासहा तं सम्मंति पासहा । जं सम्मंति पासहा तं मोणंति पासहा ॥ १ ॥" ज्ञानेऽप्युक्तं—" तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगणः । तमसः कुतोऽस्ति शक्तिर्दिनकरकिरणाग्रतः स्थातुम् ? ॥ १ ॥" इति, व्यवहारतस्तु सम्यक्त्वश्रुतयोरुपचरितमेव समभावत्वमिति । 'इत्तरिय' मित्याद्युत्तरार्द्धं, अत्र च 'अथवा' प्रकारान्तरसूचनार्थः, तच्चेदं—'द्विविधं' द्विप्रकारं 'तत्' सामायिकं 'ज्ञेयं' ज्ञातव्यं, कथं द्विविधमित्याह—इत्वरं यावत्कथिकं च, तत्रेत्वरं-परिमितकालिकं यावत् साधून् नियमं वा पर्युपासे इत्यादि विहितकालावधि, यावत्कथिकं चोपसर्गप्राप्तः सामायिकं करोति, म्रियमाणेनापि न मया सावद्यमासेवनीयं, उपसर्गकारिण्यपि न क्रोधवशगेन भाव्यमित्यादिरूपमिति गाथार्थः ॥

साम्प्रतं च यथा जायत इदं तथा कथ्यते—

कम्मक्खओवसमेण कयसामइओ जइव्व सो सम्मं ।
इय लाभदंसणेणं पुणो पुणो कुणइ सामइयं ॥ ९५ ॥

कर्मणो–देशचारित्रावरणीयद्वितीयकषायलक्षणस्य क्षयोपशमः कर्मक्षयोपशमस्तेन कर्मक्षयोपशमेन ' कृतसामायिकः ' विहितसमभावरूपाद्यशिक्षाव्रतो ' यतिरिव ' साधुरिव, यतो भवतीति शेषः, अतः ' सः ' श्रावकः ' सम्यक ' अवैपरीत्येन ' इय ' एवं लाभस्य दर्शनं तेन लाभदर्शनेन ' पुनः पुनः ' भूयो भूयः ' करोति ' विदधाति सामायिकं, एतदुक्तं भवति–यो हि गृही कर्मक्षयोपशमेन कृतसामायिकः साधुरिव भवति तस्यैवंविधफलदर्शनेन भूयो भूयः सामायिककरणेच्छा संपद्यते, तया च सामायिकं जायत इति, यदुक्तं– " सामाइयंमि उ कए समणो इव सावओ हवइ जम्हा । एएण कारणेणं बहुसो सामाइयं कुज्जा ॥ १ ॥ " अत्र च यतिरिवेति शब्देन श्रावकस्य सामायिकवतोऽपि साक्षाद् यतित्वं निषिद्धं, तस्यानुमतेरनिवारितत्वाद् अनियतकालत्वाच्च, यतेस्तु त्रिविधं त्रिविधेन निवृत्तत्वाद्यावज्जीविकत्वाच्चेति गाथार्थः ॥ एतच्च सामायिकं यो यत्र यथा करोति तथाऽन्यकर्तृकगाथाव्याख्यानेन समयसामाचार्या च सोपयोगत्वात्प्रदर्श्यते, तत्र गाथा—

चेइहरसाहुगिहमाइएसु सामाइयं समो कुज्जा ।
पणिवायाणंतर साहु वंदिउं कुणइ सामइयं ॥ १ ॥

चैत्यगृहसाधुगृहादिकेषु मकारस्यालाक्षणिकत्वात् सामायिकं समः कुर्यात् प्रणिपातानन्तरं साधून् वन्दित्वा करोति सामायिकमित्यक्षरार्थः, पदार्थस्त्वयं—चैत्यानि—अर्हत्प्रतिमाः प्रशस्तभावचित्तहेतुत्वात् चित्तमेव चैत्यमिति व्युत्पत्त्या कथ्यन्ते तेषां गृहं चैत्यगृहं—जिनायतनं, साधयति—निष्पादयति मोक्षलक्षणं पदार्थमिति साधुः—यतिः, गृह्यतेऽनेन संसारनिबन्धनकर्मणा जीव आत्मीयभावगृहीतेनेति गृहं—वेश्म, चैत्यगृहं च साधुश्च गृहं च चैत्यगृहसाधुगृहाणि तान्यादिर्येषां पौषधशालादीनां तानि तथा तेषु 'सामायिकं' प्राग्निरूपितशब्दार्थं 'समः' रागद्वेषयोर्मध्यस्थः अविकृतो वा 'कुर्यात्' विदध्यादिति यो यत्रेति कथितं, यथा करोतीत्येतदुच्यते—प्रणिपातः—प्रणिपातदण्डको 'नमोत्थु ण' मित्यादिस्तस्मादनन्तरं 'साधून् वन्दित्वा' यतीनभिवाद्य करोति सामायिकं, क्वचिच्च 'पणिवायाणंतरसाहुवंदणं 'ति पाठः, तत्र प्रणिपातानन्तरं साधुवन्दनं यत्र सामायिककरणे तत्तथेति क्रियाविशेषणं द्रष्टव्यम् । अयं च विधिः श्रीवसुदेवसूरिभिर्व्याख्यातः, परं न प्रायः सामाचार्येवं दृश्यत इति, तद-

नुसारेणैवं व्याख्या—प्रणिपतनं—प्रणिपातः सामान्येन प्रणाममात्रं, स च साध्ववग्रहसूचनादत्र साधूनामेव द्रष्टव्यः, तस्मादनन्तरं साधुवन्दनं कृत्वा सामायिकं करोति, यद्वा प्रणिपातानन्तरमित्यनेनार्हच्चैत्यासन्नविधिरभिहितः, साधून् वन्दित्वेत्यनेन तु साध्वासन्नविधिः, यतो यत्रार्हच्चैत्यानि तत्र तद्वन्दनापूर्वं सामायिकं ग्राह्यं; चैत्यवन्दना तु प्रणिपातदण्डकपूर्विकेति, अनेन च चैत्यसाधुसमीपलक्षणस्थानद्वयानुसारेण शेषाण्यपि गृहादिस्थानानि सूचितानि, प्राग्व्याख्यापक्षे तु साधुसमीपमेव मुख्यत उक्तं, केवलमनेनैव तुलादण्डमध्यग्रहणन्यायेनाद्यन्तग्रहणमपि बोध्यमित्यन्यदीयगाथार्थः ॥

आवश्यकचूर्ण्याद्युक्तसामाचारी त्वियम्—सामायिकं श्रावकेण कथं कार्यं ?, तत्रोच्यते—श्रावको द्विविधः- अनृद्धिप्राप्त ऋद्धिप्राप्तश्च, तत्राद्यश्चैत्यगृहे साधुसमीपे पौषधशालायां गृहे वा यत्र वा विश्राम्यति पृच्छति (तिष्ठति) च निर्व्यापारस्तत्र करोति, चतुर्षु तु स्थानेषु नियमेन करोति—चैत्यगृहे साधुमूले पौषधशालायां गृहे वाऽऽवश्यकं कुर्वाण इति, एतेषु च यदि चैत्यगृहे साधुमूले वा करोति तत्र यदि केनापि सह विवादो नास्ति यदि भयं कुतोऽपि न विद्यते यदि कस्यापि किञ्चिन्न धारयति मा तत आकर्षापकर्षौ भूतां यदिवाऽधमर्णमवलोक्य न गृह्णीयात् मा

भाङ्क्षीदितिबुद्ध्या यदिवा गच्छन्न किमपि व्यापारं व्यापारयेत् तदा गृह एव सामायिकं गृहीत्वा चैत्यगृहं साधुमूलं वा यथा साधुः पञ्चसमितिसमितस्त्रिगुप्तिगुप्तस्तथा याति, आगतश्च त्रिविधेन साधून्नमस्कृत्य तत्साक्षिक सामायिकं पुनः करोति—' करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहुं पज्जुवासामी ' त्यादि सूत्रमुच्चार्य, तत ईर्यापथिकीं प्रतिक्रामत्यागमनं चालोचयति, तत आचार्यादीन् यथारत्नाधिकतयाऽभिवन्द्य सर्वसाधून् उपयुक्तोपविष्टः पठति पुस्तकवाचनादि वा करोति, चैत्यगहे तु यदि साधवो न सन्ति तदेर्यापथिकीप्रतिक्रमणपूर्वमागमनालोचनां विधाय चैत्यवन्दनां करोति ततः पठनादि विधत्ते, साधुसद्भावे तु पूर्व एव विधिः, एवं पौषधशालायामपि, केवलं यथा गृहे आवश्यकं कुर्वाणो गृह्णाति तथैव गमनविरहितं, न चावश्यकं श्रावकस्य न संभवतीति वाच्यं, " समणेण सावएण य अवस्स कायव्वयं हवइ जम्हा " इत्यादिवचनप्रातिष्ठितत्वादस्य, मुखवस्त्रिकाप्रत्युपेक्षणपूर्वं च सर्वत्र सामायिकं साध्वादिसमीपे विधिना ग्राह्यमिति । ऋद्धिप्राप्तस्तु चैत्यगृहं साधुमूलं वा महर्द्ध्यैवैति येन लोकस्यास्था जायते, चैत्यानि साधवश्च सत्पुरुषपरिग्रहेण विशेषपूज्यानि भवन्ति, पूजितपूजकत्वाल्लोकस्य, अतस्तेन गृह एव सामायिकमादाय नागन्तव्यम्, अधिकरण-

भयेन हस्त्यश्वाद्यनानयनप्रसङ्गात्, आयातश्च चैत्यालये विधिना प्रविश्य चैत्यानि च द्रव्यभावस्तवेनाभिष्टूय यथासंभवं साधुसमीपे मुखपोतिकाप्रत्युपेक्षणपूर्वं 'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहंतिविहेणं जाव नियमं पज्जुवासामीत्याद्युच्चार्येर्यापथिकादि प्रतिक्रम्य यथारात्निकतया सर्वसाधूंश्चाभिवन्द्य प्रच्छनादि करोति, सामायिकं च कुर्वाण एप मुकुटमपनयति कुण्डलयुगलनाममुद्रे च पुष्पताम्बूलप्रावरणादि च व्युत्सृजति, किञ्च-यद्येष श्रावक एव तदाऽस्यागमनवेलायां न कश्चिदुत्तिष्ठति, अथ यथाभद्रकस्तदाऽस्यापि सन्मानो दर्शितो भवत्वितिबुद्ध्याऽऽचार्याणां पूर्वरचितमासनं ध्रियते, अस्य च, आचार्यास्तूत्थिता एवेतस्ततश्चङ्क्रमणं कुर्वाणा आसते तावद्यावदेष आयाति, ततः सममेवोपविशन्ति, अन्यथा तूत्थानानुत्थानदोषा विभाष्याः, एतच्च प्रासङ्गिकमुक्तं, प्रकृतं तु सामायिकस्थेन विकथादि न कार्यं, स्वाध्यायादिपरेणासितव्यं, यदुक्तं—"विगहाइएहिं रहिओ,सज्झायपरो तया जईतुल्लो। इच्छियकालं चिट्ठे पारेउं कुणइ वावारे ॥१॥" त्ति, न चेप्सितकालं तिष्ठेदित्युक्तेरेव तदैव गृहीतं तदैव मुक्तं सामायिके कार्यम्, अनवस्थितकरणताप्रसङ्गात्। किं तर्हि ?, जघन्यतोऽपि घटिकाद्वयं सामायिके स्थेयमिति वृद्धोपदेशः, इह च नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूतभेदाः सप्त मूलनयाः, तेषु च को नयः किं सामायिकमिच्छतीत्येतदपि किञ्चिदुच्यते, तत्र नैगमस्तावद्यदैव

सामायिकं गुरुणोद्दिष्टं यथा सामायिकसूत्रं पठ तदैव सामायिकं मन्यते, सङ्ग्रहव्यवहारौ तु सामायिकार्थं गुर्वन्तिकोपविष्टस्यैव सामायिकमभ्युपगच्छतः, ऋजुसूत्रमतं तु यः सामायिकाभ्युपगमसूचिकां सामायिकगाथां पठति चैत्यवन्दनं वा तदर्थं करोति तस्यैव सामायिकमभ्युपगच्छति, आसन्नासाधारणकारणत्वात्, शब्दादयः पुनः सामायिकोपयुक्तं समभावव्यवस्थितं शब्दक्रियारहितमपि सामायिकं स्वीकुर्वन्ति, तत्परिणामानन्यत्वात्, इति नयवादाश्चित्राः क्वचिद्विरुद्धा इवाथ न विरुद्धाः। लौकिकविषयातीतास्तत्त्वज्ञानार्थमधिगम्याः ॥ १ ॥ न चैतेभ्यस्तत्त्वज्ञानं न संभवति परस्परविरुद्धार्थप्रतिपादकत्वादिति वाच्यं, तथाभूतानामपि परस्परनिश्रया सम्यग्रूपत्वात्, तथाचोक्तम्— "एवं सव्वेऽवि नया मिच्छद्दिट्ठी सपक्खपडिबद्धा। अण्णोऽण्णानिस्सिया पुण लहंति सम्मत्तसब्भावं ॥ १ ॥" अत एव च सर्वनयसमूहमयं जिनमतमभिधीयते, यथोक्तम्—"सोउं सद्दहिऊण य णाऊण य तं जिणोवएसेणं। तं सव्वनयाविसुद्धं समत्थनयसम्मयं जं तु ॥ १ ॥" उक्तं यथा जायते सामायिकम्, अधुना जातमप्येतद् यदि न पाल्यते तदा दोषः? इत्याह—

सामाइयं तु पडिवज्जिऊण भंजंति कम्मदोसेण।
ते कंडरीयसरिसा भमंति संसारकंतारे ॥ ९६ ॥

'सामायिकं' उक्तशब्दार्थं 'तुः' पुनरर्थे तस्य चाग्रे योजना 'प्रतिपद्य' अङ्गीकृत्य 'भञ्जन्ति' विनाशयन्ति पुनः 'कर्मदोषेण' चारित्रावरणीयादृष्टापराधेन 'ते' सामायिकप्रतिपत्तारः प्रस्तुतश्रावकाः, किमित्याह—'कण्डरीकसदृशाः' कण्डरीकाभिधानराजपुत्रतुल्याः 'भ्रमन्ति' पर्यटन्ति संसरन्त्यस्मिन् प्राणिन इति संसारो—नारकतिर्यङ्नरामरगतिलक्षणः स एव चतुरशीतियोनिलक्षगहनत्वाज्जरामरणादिभयाकुलत्वाच्च कान्तारम्—अटवी संसारकान्तारं तस्मिन् । नन्वत्र देशविरतश्रावकाः प्रस्तुताः कण्डरीकस्तु प्रतिपन्नसर्वविरतिः अतः कथं सोऽत्र दृष्टान्ततया सङ्गच्छते ?, सत्यं, सर्वविरतेरपि सामायिकभेदत्वेन तच्छब्दवाच्यत्वादित्यदोष इति गाथाऽक्षरार्थः ॥ भावार्थस्तु कथानकगम्यः, तच्चेदम्——

अस्ति समस्तशस्तवस्तुस्तोमनामासङ्ख्येयद्वीपसागरमध्यवर्त्ती हिमवदादिषट्संख्याविख्यातवर्षधरगिरिवरविरचितभरतादिसप्तक्षेत्रीविशेषो गङ्गासिन्धुप्रमुखचतुर्दशमहानदीप्रतिबद्धानेकसहस्रसङ्ख्यतटिनीसमूहरमणीयो जम्बूद्वीपनामा द्वीपः, तत्र योजनलक्षप्रमाणेन किरणनिकरप्रहतान्धकारपञ्चप्रकारसाररत्नोन्मिश्रजात्यजांबूनदमयेन भद्रशालवनोपशोभमानभूमिकेन नन्दनसौमनसाभिधानोद्यानद्वयालङ्कृतमेखलायुगलेन पण्डकवनखण्डमण्डित-

शिखरेण महामेरुणाऽधिष्ठितमध्यं मेरुदक्षिणोत्तरपार्श्वविराजमाननिषधनीलवन्तपर्वताऽऽलग्नसमुत्थितचतुर्वक्षस्कारशिखरिसमुद्दीपितदेवकुरूत्तरकुरुक्षेत्रविभागं सीतासीतोदाभिधानमहानदीद्वितयोभयतटनिविष्टद्वात्रिंशद्विजयविभूषितं महाविदेहाभिधानं क्षेत्रं, तस्मिन् पुष्कलावतीविजये पुण्डरीकिणी नगरी—त्रिपणिपथविकीर्णस्वर्णरत्नप्रवालकमुकमलयजादिद्रव्यजातीर्विलोक्य । भवति मनसि नूनं पान्थसार्थस्य यस्यां, ननु भुवि नगरीयं सर्वलक्ष्मीनिवासः ॥ १ ॥ तस्यां च—स्वकुलगगनभानुर्भीतिवल्लीकृशानुर्नयविनयपटिष्ठः शिष्टचेष्टागरिष्ठः । अरिकरिवरकुम्भोद्भेदलीलायितेन, प्रकटितनिजनामा पुण्डरीको नृपोऽभूत् ॥ २ ॥ तस्य च कण्डरीको नामा लघुभ्राता युवराजः, तयोश्च स्वपुण्योदयानुरूपसंपद्यमानानवद्यसांसारिकसुखानुभवयोः नित्याऽनुपालयतोर्महीमतिचक्राम प्रभूतः कालः, अन्यदा च समाजगाम ग्रामनगरादिषु विहारक्रमेण बंभ्रम्यमाणः सुस्थिताचार्यस्तन्नगरीं, समवसृतो बहिरुद्याने, विदिततदागमनवृत्तान्तः समं पुण्डरीकनरपतिना वन्दनादिनिमित्तं समाययौ नगरीलोकस्तत्समीपं, विधिवद्वन्दनापुरस्सरं च सूरिदत्तधर्मलाभाशीर्वादमुदितमानसः समुपविवेश यथास्थानं, सूरिणा प्रारब्धा धर्मदेशना, यथा—अनाद्यनन्तसंसारे, मिथ्यात्वादिवशीकृताः । प्राणिनः कर्म बध्नन्ति, ज्ञानावरणादिभेदवत् ॥१॥

नरकादिभवे क्षिप्तास्तेन चात्यन्तवैरिणा । सहन्ते दुःखसङ्घातं, छेदनाद्यमनेकधा ॥ २ ॥ तथाहि नारका दृष्ट्वा, घटिकालयवर्त्तिनः । उत्पत्तिसमये रौद्रैः, परमाधार्मिकासुरैः ॥ ३ ॥ आकृष्यन्तेऽतिनिस्त्रिंशमारटन्तः कटुस्वरम् । विपाट्यन्ते ततस्तीक्ष्णकरपत्रैः कपाटवत् ॥ ४ ॥ शक्त्यादिभिर्विभिद्यन्ते, कल्प्यन्ते कल्पनीशतैः । हन्यन्ते मुद्गरैर्वास्या, तक्ष्यन्ते दारुवत्तथा ॥ ५ ॥ भिन्नाश्छिन्ना हता एवं, पुनः संघटिताङ्गकाः । दुर्वारदैवयोगेन, भूयो वीक्ष्य ततोऽसुरैः ॥ ६ ॥ नीयन्ते शाल्मलीदेशमालिङ्ग्यन्ते च तास्ततः । वज्रकण्टकभिन्नाङ्गाः, रसन्ति करुणस्वरम् ॥७॥ तप्तत्रपु च पाय्यन्ते, संदंशविधृताननाः । दृढं भ्राष्ट्रे तु भुज्य(भृज्ज्य)न्ते, भक्ष्यन्ते निजमामिषम् ॥ ८ ॥ तार्यन्ते च वसापूयरुधिरक्लेदकश्मलाम् । त्रायध्वमिति जल्पन्तो, घोरां वैतरणीं नदीम् ॥९॥ असिपत्रवनं याताः, कथञ्चित्ते ततश्च्युताः । तत्रापि पतितैः पत्रैश्छिद्यन्ते शस्त्रसन्निभैः ॥ १० ॥ एवं तिसृषु पृथ्वीषु, परतस्तु परस्परम् । षष्ठीं यावन्महादुःखं, नारकैरुपजन्यते ॥ ११ ॥ अन्योन्यसंमुखाकारोपर्यधोभाववर्त्तिनः । पृथिव्यां बत सप्तम्यां, विद्यन्ते वज्रकण्डकाः ॥ १२ ॥ तन्मध्ये नारका जाताः, निर्गन्तुं न च पारिताः । उत्पतन्तः पतन्तश्च, तुद्यन्ते मरणावधि ॥१३॥ अत्रान्तरे नृपतिराह—भगवन्! नारकाणामतिप्रचुरदुःखता भगवता प्रतिपादिता, तत्र च नरकोत्पत्तौ प्राणिनां किं मिथ्यात्वादय एव सामान्यप्रत्यया उतान्येऽपि विशेषप्र-

त्ययाः सन्ति ?, सूरिणोक्तं—सन्ति विशेषप्रत्यया अपि, तथा चागमः—" महारंभयाए महापरिग्गहयाए कुणिमाहारेणं पंचेंदियवहेणं जीवा नरयाउयं कम्मं निव्वत्तंति" तत एतदाकर्ण्य भूपतिः सत्रासं हा गतोऽस्मि तर्हि नरकं महारम्भतादिविशेषप्रत्ययानां राज्यनिबन्धनानां मयि सद्भावादिति विचिन्त्य प्रणामपूर्वं पुनरब्रवीन्मुनिं—स्वामिन् ! अस्ति कश्चिदस्मादृशां नरकनिवारणोपायः?, सूरिणाऽभिहितम्—अस्ति भागवती दीक्षा, राज्ञोचे—कीदृशी सा?, ततः सुस्थिताचार्येण सविस्तरमष्टादशशीलाङ्गसहस्रपरिपालनस्वभावाऽक्षेपमोक्षनगरप्रापिका प्ररूपिताऽर्हतां दीक्षा, हृष्टेन नरपतिनाऽभिदधे—यद्येवं निवेश्य लघुभ्रातरं कण्डरीकं राज्ये गृह्णामि भवत्पादमूलेऽहमिमां, ततोऽतिहृष्टचेता उत्थाय भूयोऽभिवन्द्य भावसारं गुरून् गतो निजवेश्म, तत्राहूतः प्रस्तावे क्वचित् कण्डरीको, भणितश्च—वत्स ! परिगृहाणामुं राज्यविस्तरम्, अहं तु त्वदनुमत्याऽङ्गीकरोमि महापुरुषनिषेवितमुत्तमं धर्मं, कण्डरीक आख्यद्—भ्रातः ! किमप्रस्ताव एव त्यज्यते राज्यं ?, पुण्डरीकेणोक्तं-दुर्गतिहेतुत्वदोषतो, महारम्भतादिभिर्नरक इति व्याख्यातं सूरिभिः; ततो लघुभ्रात्राऽभिहितं--आर्य ! यदीदृशमिदं राज्यं तत्किं मह्यं प्रदीयते ? । तवाहमपि नानिष्टो, यतोऽभूवं कदाचन ॥१॥ राजोवाच--त्वमपरिकर्मितदेहः शक्नोषि न दुष्करं तपः कर्त्तुं । तेनानुपाल्य राज्यं पश्चिमवयसि व्रतं कुर्याः ॥२॥

ततः कण्डरीकः—किमत्र परिकर्मणया—यावत्साहसमालम्ब्य, तात ! कार्यं प्रवर्त्त्यते । धीरैर्न दुष्करं तावत्किञ्चिदत्र विभाव्यते ॥ १ ॥ यदुक्तम्—सङ्कुचति महीमण्डलमब्धिः शुष्यति लघूभवति मेरुः । साहसवशेन पुंसामनुकूलं भवति दैवमपि ॥ २ ॥ न चाहमप्यन्येन पित्रा जातः, तदवश्यं मया प्रव्रज्यैव ग्राह्येति प्रतिपादयन्निषिध्यमानोऽपि पुण्डरीकेण गत्वा सूरिसमीपं स्वीचकार व्रतं, पुण्डरीकस्तु ततः प्रभृति स्थितो विशेषेण श्रावकधर्मपरायणः सततमेव सर्वविरतिविषयां मनोरथमालामनुचिन्तयन् राज्य एव, कण्डरीकस्तु गृहीतद्विविधशिक्षः सुस्थिताचार्यैः समं विहरन् ग्रामारामनगराकरमण्डितां वसुमतीं निनाय कियन्तमपि कालं, अन्यदा तु तथाविधभवितव्यतावशेन गृहीतोऽसौ रौद्रव्याधिना कारितः स्वसामग्र्यनुरूप्यमौषधादि सूरिभिः, न जातो विशेषः, ततः समागतास्तस्यामेव पुण्डरीकिण्यामाचार्याः, आवासिताः प्राशुकोद्यानभूमौ, विज्ञायागमनमाचार्याणां समाययौ राजा वन्दनानिमित्तम्, अभिवन्द्य परमभक्त्या सूरीन् पप्रच्छासौ—भगवन् ! क्वास्ते कण्डरीकमुनिः ?, सूरिणा निर्दिष्टं—विद्यतेऽस्मिन्नेव पुरोऽवलोक्यमाने शून्योद्यानपालवेश्मनि, राज्ञोक्तं—किमिति युष्मत्पार्श्व एव नोपविष्टः ?, सूरिणाऽभ्यधायि—किञ्चिद्रोगवशग एष न शक्नोति महतीं वेलामुपविष्ट आसितुं, ततो राजा स्वयमेव

गतस्तत्पार्श्वे, वन्दित्वा पृष्टः शरीरवार्त्ता, कथिता तेन, तत आदिष्टा भूपतिना भिषग्वराः यथा प्रगुणीक्रियतामयं साधुः, औषधादिना येन प्रयोजनं तदस्माकं ज्ञाप्यं येन संपादयामः, तैरपि यथाऽऽदिशति देवस्तथा क्रियत इति प्रतिपाद्य प्रारब्धाः साधोः क्रियाः, येन दुग्धशर्करादिना प्रयोजनं तत्सर्वं संपाद्यते राजाऽऽदेशेन नियुक्तकपुरुषैः, मासकल्पपूर्त्तौ च सूरिणा तत्समीपे परिचारकसाधून् धृत्वा चक्रेऽन्यत्र विहारः, तस्य च क्रमेण निवृत्तप्रायो जातो व्याधिः, सूरिश्च कदाचित्प्रत्याववृते तत्रैव, ददर्श कण्डरीकं नीरोगतनुं, ततः स्थित्वा कानिचिद्दिनान्यादिदेशामुं, यथा—भोः कण्डरीक! बहूनि दिनानि स्थितोऽस्यत्र त्वं, न चैकत्र साधूनां प्रभूतकालमवस्थानमुचितं, सिद्धान्तनिषिद्धत्वात्, तथा चोक्तम्—"पडिबंधो लहुयत्तं, न जणुवयारो न देसविण्णाणं। नाणाराहण कज्जे इइ दोसऽविहारपक्खंमि॥ १॥" वयमपि च विजिहीर्षवोऽन्यत्र, तदिदानीं मुत्कलय्य राजानमस्माभिरेव सममागम्यतां, कण्डरीकोऽपि वातरोगानुरूपोपचारेणोपचर्यमाणः सुस्निग्धमुग्धपेशलाहारैस्तल्लोलुपत्वाज्जातरसगार्द्ध्यपरिणामः तत्स्थानं परित्यक्तुमपारयन्नुवाच—भगवन्! न नः शरीरमिच्छाकारेण तथाविधपाटवमद्यापि भजते, तेन कियन्त्यपि दिनान्यत्रैव स्थातुमिच्छामः, सूरिणा निरदेशि—तिष्ठाप्रतिबद्धचित्ततया, तेनोदितं—इच्छाम्यनुशिष्टिं,

ततः स्थितोऽसौ तत्रैव, सूरयश्च विहृता अन्यत्र समं शेषतपस्विभिः, भूयोऽपि केषुचिद्दिवसेष्वतिक्रान्तेष्वागताः, पुनर्भणितो, नायातुमिच्छति, ततो ज्ञातं सूरिभिः—नन्वयं शठीभूतो रसादिगाद्धर्येन नायियासुः, तदनन्तरं कथितं राज्ञः, तेनापि धृत्यैकान्ते भणितोऽसौ—तवोभयकुलविशुद्धस्य क्षत्रियवंशालङ्कारभूतस्य स्वेच्छागृहीतदुष्करप्रव्रज्यस्य नेदमुचितं, यतः स एव भारः सत्पुरुषैरुत्क्षिप्यते निर्वोढुं यः पार्यते, किञ्च—तद्विस्मृतं भवतो यत्स्वमुखेनैव पुरा प्रकाशितं 'साहसवशेने'त्यादि, तद्विमुच्येदानीं शीतलविहारितामतिं व्रज गुरुभिः सह संपद्यस्वोद्यतविहारपरायणो येन संपद्यसे सुगतिसाधकः, ततोऽसौ किञ्चिल्लज्जाऽवनमितकन्धरः स्थित्वा क्षणं यदात्थ यूयं तत्करोमीत्युक्त्वा प्रस्तुते गमनदिवसे चचाल सूरिणा सार्द्धं, न चान्तप्रान्तरूक्षभिक्षाया उपर्यस्याभिलाषः, केवलं स किञ्चिद्भ्रातृलज्जातः किञ्चित्सूरिव्यपेक्षया विहृतः साधुभिः सार्द्धं दिवसा(ना)नि कियन्त्यपि, वेलाव्यतीतशीतलविरूक्षभैक्ष्यस्य भक्षणे अन्येद्युश्चेतो विस्रोतसिकामुपेयिवान् कर्मदोषेण—नूनं न शक्यतेऽस्माभिरियं प्रव्रज्या परिपालयितुं, लोहमययवचर्वणतुल्या खल्वेषा, नाल्पसत्त्वैर्निर्वोढुं पार्यते, तदिदानीं—किं करोमि क्व वा यामि, किं याचे वा धनाद्यहम् । कस्य वा करवै सेवामशक्तो व्रतपालने ? ॥ १ ॥ हुं ज्ञातं मम भ्राता पुण्डरीकः पूर्वमेव

व्रतमादित्सुरासीत् परं तदा मयैव निवारितः स स्वयं गृह्णता प्रव्रज्यां, अधुना चाहमशक्तो व्रतपालने, तस्माद्व्रजामि तत्समीपमेव, स एव ममेच्छां भ्रातृस्नेहेन विशिष्टव्रतकरणाभिलाषेण च पूरयिष्यति, न चात्र व्यतिकरे ममान्योऽभिगमनीयोऽस्तीत्यादि विचिन्त्य ग्रामान्तरप्रस्थितेषु सूरिष्वन्यदाऽकथयन्नेव साधूनां स्थितः पृष्ठ एव दिनद्वयं निगम्य प्रस्थितः पुण्डरीकिण्यभिमुखं, प्राप्तश्च क्रमेण तां, अन्ये तु विश्रोतसिकाकारणं वसन्तसमयसमागमरमणीयतां वर्णयन्ति, यतो लिखितमस्मत्पूज्यैः—"ततः समागते वसन्तसमये कामोत्कोचकारिषु पुष्पितेषु सहकारेषु सहकाराङ्कुरास्वादमुदितमानसेषु कलं कूजत्सु कोकिलेषु प्रमदभरपरवशत्वविघूर्णमाननागरकलोकस्थानस्थानप्रवर्त्यमानासु चारु चर्चरीषु वर्षसहस्रं यावत्परिपालितश्रामण्योऽपि कण्डरीकः संयमाच्चलितचित्त एकाक्येव राज्यार्थी समायातः पुण्डरीकिण्यामिति" स्थितो बहिरुद्याने, उच्चतरतरुशिखरशाखायामवलम्ब्य पात्रकाद्युपकरणं गत उद्यानपालकान्तिकं, भणितवांश्चैनं—यथा भो ! मदागमनवार्त्तां विज्ञाप्य पुण्डरीकनरपतेः कथय यथा युष्मद्दर्शनमाकाङ्क्षति कण्डरीकः, तद् भवन्तो वा तत्रागच्छन्तु स वाऽत्रागच्छत्विति ?, गतोऽसौ, कथितं यथाभणितं, पृष्टं राज्ञा—कियत्साधुसमन्वितः कण्डरीकः ?, तेनोक्तम्—एकाकी,

ततो व्यचिन्ति—न शोभनमेकाकिनोऽस्यागमनं, अनेन हि प्रतिपतितपरिणाममेव तमहमाकलयामि, तस्मादुचित-
स्वल्पपरिजन एव गच्छामि तत्समीपं, ततो गतो यथाचिन्तितक्रमेणैव नृपतिः, यावत्पश्यत्यमुं सुकुमारहरितकाय-
स्योपरि निविष्टं पर्यस्तिकावष्टम्भेन, सोऽपि दृष्ट्वा राजानमुत्सार्य पर्यस्तिकां स्थितस्तत्रैव पादप्रसारिकया, तदीयचेष्टा-
विशेषविदितान्तराभिप्रायेण च तेन नायमितोऽनन्तरमत्यन्तव्रतपराभग्नः किमप्यपरं भणितुमुचितः, केवलमनुकूल-
मेवास्याभिधीयत इति विचिन्तयता बभाषे—भद्र ! मया त्वं पूर्वमेव भणितो, न च तदा मदीयवचनमकारि भवता,
तदिदानीमपि साधु कृतं यत्त्वमिहागतोऽसि, गृहाणेदं राज्यं, समर्पय मम स्वकीयरजोहरणादिवेषं, ततो वाञ्छन्
विषयसुखमसौ राज्ये विनिवेशितो नरेन्द्रेण, सेयं क्षुधार्त्तमूर्त्तेर्विशिष्टतरभोज्यसंप्राप्तिः—राज्यालङ्कारमादाय, कण्डरी-
कोऽभवन्नृपः । तद्रजोहरणं धृत्वा, पुण्डरीकोऽजनि व्रती ॥ १ ॥ पश्चात्पुण्डरीकेण कथितममात्यानां यथा—युष्माकमेष
सम्प्रति नृपतिर्यामो वयं च गुरुमूलम् । चिन्तितमनोरथानां ममाद्य जाता सुनिष्पत्तिः ॥ १ ॥ इति प्रतिपाद्यन्नेत्राद्दृष्ट-
गुरुपादमूलेन न भोक्तव्यं न शयितव्यमिति मनसि विधाय गाढप्रतिज्ञां प्रवर्धमानातितीव्रशुभपरिणामो
निश्चक्राम नगरात्, इतरोऽपि गतो राजभवनं, व्रतभ्रष्ट एष कोऽमुष्य मुखमीक्षते इत्यभिप्रायवता परिज-

नेनानादरं विलोक्यमानः करोमि तावदष्टादशभक्ष्यविशेषैर्बहोः कालादद्य भोजनं पश्चाद् ज्ञास्याम्यहमेतैः सार्द्धमित्यापूरयन् रौद्रध्यानमादिदेश सूपकारान्—भद्राः ! यदत्र किञ्चिद् व्याप्रियते भक्ष्यं तत्सर्वं संस्कृत्योपस्थाप्यतां भोजनशालायां, तैरपि यथाऽऽदिशति देवस्तथा कुर्म इत्यभिधाय कियत्याऽपि वेलया संपादितं तच्छासनं, कथितं तदग्रे, उपविष्टो भोजनमण्डपे, दृष्ट्वाऽनेकप्रकारं भोज्यजातं बलिभिर्दुर्बला निर्द्धाट्यन्त इति प्रेक्षणकदृष्टान्तेन प्रथमं वल्लचनकाद्यसारं भुक्त्वा पश्चाद्बुभुजे घृतपूरादिप्रधानवस्तूनि, ततः क्षुत्क्षामकुक्षिणा तेन तावद्भुक्तं यथेप्सितं यावज्जलावकाशोऽपि जठरे नास्य विद्यते, अत्यन्तभक्षणाच्चाभूद्रात्रौ तस्य विसूचिका, तया च बाधितो गाढम्, अनादेयतयाऽप्रतिजागर्यमाणो जनेन चिन्तयामास—यदि कथमपि दैवादहमेतामत्रापदं तरिष्यामि तदाऽमी लोकाः सर्वे निग्राह्याः खदिरकुट्टिन्या, एवं प्रवर्द्धमानातितीव्ररौद्रपरिणामः कियत्याऽपि वेलयाऽपरिपच्यमानाहारजनितमहादाघवेदनादोदूयमानो मृत्वा समुत्पेदे सप्तमनरकपृथिव्यामप्रतिष्ठानाभिधानमहानरकेऽजघन्योत्कृष्टत्रयस्त्रिंशत्सागरोपमप्रमाणस्थितिनारकत्वेन । पुण्डरीकोऽपि समुल्लसितशुभजीववीर्ययोगेन प्रयातः कियन्तं भूभागं सुकुमालपाणिपादः ( देहः ), कदाचिदप्यदृष्टकष्टस्तावदतिखरकिरणकरनिकरोपताप्यमानपञ्चमुष्टिकलोचलुञ्चित-

निरावरणमस्तको निदाघतापातिक्रान्ततप्तवालुकादंदह्यमानचरणद्वन्द्वो रणद्वन्द्वहेतुराज्यत्यजनसुस्थमानसः
शरीरपीडामात्राचलितसत्त्वोऽप्यतिशायिक्षुत्तृषाश्रमादिबाधाविधुरदेहो—नमोऽतीतानागतवर्त्तमानजिनेभ्यो नमः समस्त-
सिद्धेभ्यो नमः संसारान्धकूपनिपतितास्मादृशप्राणिसार्वसद्धर्मदेशनाऽवलम्बनाकर्षणप्रवणाय श्रीसुस्थितसूरये,
अस्तु मे तत्प्रसादात्परमचरमाऽऽराधनेत्यादि चेतसि कुर्वाणः सकलसत्त्वक्षामणापुरस्सरं निरा-
कारप्रत्याख्यानप्रत्याख्यातसमस्तव्यापारस्तस्यामेव रात्रौ विप्रहाय तद्भववर्त्तिदशविधप्राणान् प्रययौ सर्वार्थसिद्धं
महाविमानं, तत्राप्यजघन्योत्कृष्टा तस्य त्रयस्त्रिंशत्सागरोपमाणि जाता स्थितिः, ततश्च्युतः सेत्स्यतीति ॥ एवं च
विशुद्धसामायिकपरिपालनगुणेनायं स्वल्पकालेनाप्याराधको जातः, कण्डरीको वर्षसहस्रमपि व्रतं परिपाल्यान्ते
प्रतिपतितसामायिकपरिणामदोषेण विराधको, यदुक्तं धर्मदासगणिना—"वाससहस्संपि जई, काऊणं संजमं
सुविउलंपि । अंते किलिट्ठभावो नवि सुज्झइ कंडरीउव्व ॥ १ ॥ अप्पेणवि कालेणं केइ जहागहियसीलसा-
मण्णा । साहिंति निययकज्जं पुंडरियमहारिसिव्व जहा ॥ २ ॥" इति परिभाव्यास्य पालन एव यतितव्यं,
भङ्गस्तु रक्षणीय इति दोषद्वारगाथाभावार्थः ॥ यथाऽवस्थितपरिपालने त्वमुष्य गुणं दिदर्शयिषुस्तद्द्वारगाथामाह—

सिवसग्गपरमकारणसामाइयसंगमं तु काऊण।
सागरचंदसुदंसणहेऊउ, चयंति नो पत्तं ॥ १७ ॥

शिवो—मोक्षः स्वर्गो—देवलोकस्तयोः परमकारणं—प्रकृष्टहेतुरक्षेपजनकत्वेन शिवस्वर्गपरमकारणं तच्च तत्सामायिकं च शिवस्वर्गपरमकारणसामायिकं तेन सङ्गमो—मीलकस्तत्सङ्गमस्तं 'तुः' विशेषणे, किं विशिनष्टि ?, भावेन, 'कृत्वा' विधाय, किमित्याह—'सागरचन्द्रसुदर्शनहेतुतः' सागरचन्द्रसुदर्शनावेव हेतू ताभ्यां ततः 'त्यजन्ति' मुञ्चन्ति 'नो' नैव 'प्राप्तं' लब्धं, अत्र हेतुशब्देन हिनोति—गमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुरिति व्युत्पत्त्या दृष्टान्तो विवक्षितः, तस्यापि जिज्ञासितविशिष्टार्थगमकत्वादिति गाथाऽक्षरार्थो। भावार्थस्तु कथानकाभ्यामवसेयः, तयोश्च सागरचन्द्रकथानकं तावद्—अस्ति प्रशस्तवस्तुविन्यासनिरस्तसमस्तदुरितोपद्रवो विपुलमेदिनीमण्डलमण्डनमसमानसेव्यतापराभतसुरलोकः सौराष्ट्रो नाम देशः, तत्रादभ्रशुभ्राभ्रंलिहप्रासादशिखरशिखासमूहापहस्तितरविरथतुरङ्गमार्गा मार्गसंचरत्तरुणरमणीजनक्वणत्मणिमेखलानूपुरादिरत्नाभरणरणज्झणारावबधिरितदिग्द्वारा द्वारावती नाम नगरी, तस्याः प्रशास्ता प्रधानप्रणतसामन्तसङ्घातो घातितनिःशेषविपक्षपक्षो भरत-

क्षेत्रत्रिखण्डाधिपत्यप्रकाशमानासमानसाहसातिरेकरञ्जितवासवो वासुदेवो राजा, तस्य चात्यन्तविश्रम्भभाजनमतिशायिस्नेहसदनं दनुजादिभिरप्यक्षोभ्यसत्त्वनिकेतनं बलदेवो भ्राता, तत्पुत्रश्च निषधस्तस्यापि तनूजः संबादिकुमाराणामतिवल्लभः सागरचन्द्रनामा तत्रैव प्रतिवसति स्म, इतश्च-तस्यामेव नगर्यामुग्रसेनाभिधाननरपतेरभिनवोपारूढयौवना निजरूपविनिर्जितसुरसुन्दरीसौन्दर्या कमलामेला दुहिता बभूव, सा च धनसेनराजसूनवे नभःसेनाय दत्ता, तत्प्रस्तावे चाकाशचारी परिव्राजकवेषधारी सम्यग्दृष्टिर्ब्रह्मचर्यव्रतो वैक्रियलब्धिसंयुतोऽनल्पकेलिकरणपरायणो नारदो लीलया परिभ्रमंस्तद्भवनमाजगाम, स च तेन प्रधानकन्यालाभाक्षिप्तचित्तेन लक्षितोऽपि नोचितसपर्यया पूजितो, गतः प्रद्वेषं, समुत्थाय ततो वेगेन प्राप्तः सागरचन्द्रसमीपं, समुचिताभ्युत्थानासनदानवन्दनादिविनयपूर्वकं चाभापितो यथा—स्वागतं महर्षे !, पृष्टश्च यथा दृष्टपूर्वं किञ्चिदाश्चर्यं यत् क्वचित्, नारदेनोक्तम्-इहैवावलोकिता समस्ताश्चर्यसीमा रूपेण विजितरम्भातिलोत्तमा कमलामेला राजदुहिता, सागरचन्द्रोऽभ्यधात्—सा मे स्यात्कथञ्चित्?, नारद उवाच—नाहं जाने, यतोऽसौ नभःसेनाय दत्ता, क्षणमात्रेण विसर्जितोऽनेन, गतः कमलामेलोपान्तं, तया च प्रथममेव नारदमागच्छन्तमवलोक्य विहिताभ्युत्थानादिविनयप्रातिपत्तिः, उपविष्टो नारदः, प्रणामपूर्वं भणितस्तथैव च, तेन

च जजल्पे-अस्यां मेदिन्यां मया द्वे आश्चर्ये निरीक्षिते, एकं सागरचन्द्रो निःशेषकलाकलापसंपन्नः सौभाग्य-रूपकलितो द्वात्रिंशल्लक्षणोपेतः, अपरञ्च नभःसेनः क्षुद्रः शठतानिकेतनं गर्वी मूर्खः सर्वजनस्य द्वेष्योऽतिकु-रूपशेखरकः, ततः सा विरक्ता तत्र, रक्ता सागरचन्द्रेऽब्रवीत्-कथं तु नाम स मे भविष्यति ?, नारदो निजगाद-नास्मि वेद्मि, अन्ये तु कथयन्ति-नभःसेनेनापमानितो गतः कमलामेलागृहं, तदग्रे तं विनिन्द्य सागरचन्द्रं च रूपेण वर्णयित्वा तत्सङ्गमाभिलाषिण्या अस्या रूपं चित्रपट्टिकायामालिख्य सागरचन्द्रस्य दर्शितवान्, ततस्त-द्विषयमनुरागमस्याप्युत्पाद्योत्पतित आकाशे, तत्प्रभृत्येव च कमलामेलासागरचन्द्रौ बभूवतुः परस्पराकाङ्क्षिणौ, तत्यजतुः स्वकीयक्रीडादिव्यापारं, जातौ दुस्सहविरहवेदनादूनमानसौ, ततश्च सागरचन्द्रावस्थामाकर्ण्य समागतः शम्बकुमारोऽनेकसमचित्तयादवकुमारपरिकारितस्तदन्तिकं, तदा चासौ पराङ्मुखः कमलामेलामेवैकाग्रमनसा ध्याय-न्नासीत, ततोऽनेन पिहिते तन्नेत्रे, सागरचन्द्रेणोक्तं-ज्ञाता कमलामेलाऽसि, शम्बेन हसित्वोक्तं-नाहं कमला-मेला, किन्तु कमलामेलः, ततश्छलेनानेनोक्तं-त्वमेव मे कमलदललोचनां कमलां मेलयिष्यसीति सत्यप्रतिज्ञो भवेः, कुमारैश्च तस्यैवार्थस्य समर्थनार्थं शम्बकुमारो मद्यं पाययित्वा दापितो वाचं-यथाऽहं परिणाययिष्यामि, मदा-

वसाने च लब्धचेतनेन चिन्तितं—कथमेतद्भविष्यति ?, यतो—नभःसेनाय दत्ताऽसौ, पितृभ्यां मयका कथम् । योऽज्या
सागरचन्द्रेण ? दुर्घटं तदिदं महत् ॥ १ ॥ यदुच्यते जनैः कैश्चिदितो व्याघ्र इतस्तटी । सोऽयं न्यायो ममायातः,
एतदभ्युपगच्छतः ॥२॥ ततो गतः प्रद्युम्नसमीपं, कथितः सर्वोऽपि वृत्तान्तः, तेन च दत्ताऽस्मै प्रज्ञप्ती विद्या, इतश्चो-
भयपक्षयोरपि प्रारब्धो विवाहमहः, कृतं वर्णप्रवेशनादि, ततः शम्बेन बहुकुमारोपेतेन सागरचन्द्रमुद्यानं नीत्वा
अनवद्यविद्याबलेन नभःसेनसमीपे रूपान्तरं कमलामेलासन्निभं धृत्वा सुरङ्गयैनामपहृत्यानेकविद्याधरस-
हितेन गान्धर्वविवाहमधिकृत्य परिणायितस्तामसौ, प्रज्ञप्तिविद्यासम्पादितानेकविधभक्ष्यपेयचूष्यलेह्यादिवस्तु-
विस्तराश्च सर्वे कुमाराः सपरिकराः क्रीडितुमारेभिरे । इतश्च नभःसेनो वैक्रियरूपया कमलामेलया
सह यावच्चतुर्थमण्डलं परिभ्राम्यति तावन्महान्तमट्टाट्टहासं विमुच्याद‍ृश्यतां गता सा, अन्ये तु कन्यान्तः-
पुरगतामेव तामपहृत्योद्वाहितवान्, नभःसेनविवाहसमये चानवलोक्यमानायामस्यामपहृतेति परिज्ञान-
मभूदित्याहुः, ततः समुत्थितो बहलकलकलः प्रवृत्ताश्च निरीक्षितुं सर्वत्र कमलामेलां, कथितं च विष्णु-
बलदेवयोः, तन्नियुक्तपुरुषैश्च कथञ्चिदुद्याने विचित्रक्रीडाभिर्विद्याधररूपधारिणा सागरचन्द्रेण प्रचुरखचर-

वृन्दपरिगतेन सह क्रीडन्तीं विलोक्य तां निवेदितं जनार्दनादियादवानां, तैश्च सङ्ग्रामभेरीताडनपूर्वं चतुरङ्गबलेन समागत्य प्रारब्धमायोधनं, मुक्ता सरोषमाकृष्टकोदण्डदण्डैर्निरन्तरशरनिकरवृष्टिर्विद्याधराणामुपरि, तेष्वपि तदेव कर्त्तुं प्रवृत्तेषु शम्बेन पादपतनपूर्वं कथितनिजवृत्तान्तेन क्षामितो विष्णुर्बलदेवश्च, ततः शम्बं तिरस्कृत्य सर्वलोकस्य पश्यत उद्वाहितो नभःसेनो विष्णुना कन्यकां, न चासौ व्यमुञ्चत् तच्छम्बसागरचन्द्रयोरुपरिष्टादिदं वैरम्, अतिकोपवशं गतश्छिद्रान्वेषी च संपन्नो, न लेभेऽवसरं काचिदपकारमसौ कर्त्तुं, एवं काले गच्छति समवससारान्यदा रेवतकोद्याने विमलकेवलालोकप्रकाशितसमस्तलोकालोकः सुरासुरनरेन्द्रसंस्तूयमानासमानचतुस्त्रिंशदतिशयः सुरकृताभिनवनवसङ्ख्यकनककमलविनिवेशितचरणयुगलो यादवकुलतिलको भगवानरिष्ठनेमिः, तद्वन्दनार्थं च निर्गतो निखिलयादवकुमारसहितो वासुदेवो, ववन्दे त्रैलोक्यस्वामिनं नेमिं, भगवताऽपि प्रारब्धा धर्मदेशना, कथितं संसारासारत्वं निन्दिता विषयाः प्रकाशितं दुर्जयत्वं मोहमहामल्लस्य वर्णितो देशसर्वचारित्रलक्षणस्तन्निहननोपायः प्रकटिता तद्विजयपूर्विका केवलज्ञानलक्ष्मीलाभपुरःसरा शाश्वतशिवसौख्यसम्प्राप्तिः, ततः संबुद्धा अनेके प्राणिनो गृहीतवन्तः केचित्सर्वविरतिं तत्पालनासमर्थाश्चापरे देशविरतिम्, अन्येषां तु सम्य-

सागरचन्द्रवर्जा शेषपर्षदभिवन्द्य भुवनबन्धुं स्वस्थानं प्रति गता, सागर-
क्त्वमात्रलाभ एवाभवत, तदनन्तरं च सागरचन्द्रवर्जा शेषपर्षदभिवन्द्य भुवनबन्धुं स्वस्थानं प्रति गता, सागर-
चन्द्रस्तु परमवैराग्यवासनावासितान्तःकरणस्त्रिकरणशुद्धेन भावेन जिनं प्रणम्याणुव्रतादिश्रावकधर्मं च प्रतिपद्य
यावन्नगरीसंमुखं चचाल तावदस्य चेतस्यभवद्, यथा-भुवननाथेन संसारनिस्तरणोपायः आनन्तर्येण सर्वविरतिरेव
प्रतिपादिता, देशविरतिस्तु परम्परया, तदयं सर्वविरत्यङ्गीकारोऽस्माभिः किं कर्त्तुं पार्यते ? किंवा नेति
तोलयाम्यात्मानं, ततो नगर्यासन्नोद्यान एव सामायिकग्रहणपूर्वं ततः कायोत्सर्गेण महासत्त्वतया स्वीकृता चेतसा
सर्वरात्रिकी प्रतिमा, इतश्च नभःसेननियुक्तचरपुरुषेण समवसरणोत्थानकालादेव सागरचन्द्रस्य पृष्ठलग्नेनोपलभ्य
तं वृत्तान्तं कथितं नभःसेनस्य, सोऽपि तुष्टचित्तः समागतस्तं प्रदेशं, दृष्ट्वाऽमुं पूर्वरोषप्रज्वलित आर्द्रां मृदमादाय
सागरचन्द्रशिरसि विरचितवांस्तया कुण्डलिकां, तां च श्मशानज्वलदङ्गारनिकरेण पूरितवान्, ततः स विदितजिनम-
ततत्त्वः 'सर्वः पूर्वकृतानामिह लभते कर्मणां फलविपाकम् । अपराधेषु गुणेषु च निमित्तमात्रं परो भवति ॥ १ ॥ मा
गाः खेदमिदानीमेतावत्यपि शरीरसङ्क्लेशे । सोढोऽनन्तगुणोऽयं जीव ! यतो नरकपतितेन ॥ २ ॥ इत्यादि भाव-
41 नया भावयन्नात्मानं तदुपरि मनागप्यकुर्वाणो रोषं सम्यगधिषह्य तां दाघवेदनां कृताऽर्हदादिनमस्कारः परित्यज्यै-

हभविकौदारिकशरीरं समभावाविचलितमानसः संप्राप्तो देवभूयतां, जातो महर्द्धिको वैमानिकसुरः, अत एवोक्तम्—
"धम्ममिणं जाणंता गिहिणोऽवि दृढव्वया किमुय साहू ? । कमलामेलाहरणे सागरचंदेण एत्थुवमा ॥ १ ॥"
सुदर्शनकथानकमिदानीं कथ्यते—

लक्ष्मीविलासमुकुरः करुणारसाढ्यैर्लोकैः प्रवर्त्तितपवित्रविचित्रसत्रः । चञ्चल्ललाटतिलको वसुधाङ्गनाया, अङ्गाभिधो जनपदोऽस्ति जने प्रसिद्धः ॥ १ ॥ अमरावतीति विख्याता, तत्र चम्पाभिधा पुरी । नैव शक्तः सहस्रास्यो, वक्तुं शेषोऽपि यद्गुणान् ॥ २ ॥ अपिच—सुवर्णकलशावलीकलितदेवहर्म्याकुला, कुलाचलसमोन्नतिप्रवरवेश्ममालाञ्चिता । निरस्ततिमिरस्थितिर्विपणिवर्त्तिरत्नोत्करैरनेककविविस्फुरल्ललितकाव्यकोलाहला ॥ ३ ॥ तस्यामभूदमलकीर्त्तिलतावितानविस्तारणप्रवणसद्गुणवारिपूरः । राजा प्रतापवसतिर्दधिवाहनाख्यः, तस्याभया प्रियतमा रतितुल्यरूपा ॥ ४ ॥ तस्य स्वकीयसम्पत्तिजितपुण्यजनेश्वरः । इभ्योऽभूदृषभदासः, ख्यातः कीर्त्तिगुणैः शुभैः ॥ ५ ॥ प्रेमपात्रं बभूवास्य, भार्या राजीवलोचना । अर्हद्दासीति विख्याता, सुशीलादिगुणावधिः ॥ ६ ॥ तद्गृहे सुभगो नाम, महिषीपरिरक्षकः । भद्रकोऽसौ गतोऽटव्यामन्यदाऽऽदाय सैरभीः ॥ ७ ॥

तदा च काले—वहलघुसृणरागो गन्धतैलं सुपक्कं, ज्वलनशकटिका च प्रौढकाषायवस्त्रम् । सदपवरकमध्यं कामिनीनामुरोजाः, प्रियमखिलमपीदं यत्र जातं जनानाम् ॥ ८ ॥ एवंविधहेमन्ते नद्यास्तीरे निरावरण-देशे । अस्तं गच्छति भास्वति सतुषारे वाति वाते च ॥ ९ ॥ निष्प्रतिकर्मशरीरं, मेरुस्थिरमम्बुनाथगम्भी-रम् । अद्राक्षीन्मुनिमेकं कायोत्सर्गस्थमथ सुभगः ॥ १० ॥ तं दृष्ट्वा चिन्तयामास, कथमेष महामुनिः । पतत्येवं-विधे शीते, स्थास्यत्यप्रावृतांशुकः ? ॥ ११ ॥ अपिच—अस्मिन् सरितस्तीरे प्रचुरतरश्वापदाकुले भीमे । रजनि-मेनकापायां कथं गमिष्यत्यसावेकः ? ॥ १२ ॥ इत्यादि चिन्तयन्नेव, बहुमानपुरस्सरम् । अभिवन्द्य गतो गेहं, गृहीत्त्वा महिषीर्निजाः ॥ १३ ॥ कथञ्चित्तामसौ रात्रिं, तत्रानैषीत्समुत्सुकः । भूयोऽपि दर्शनाकाङ्क्षी, मुनेरत्यन्त-वत्सलः ॥ १४ ॥ निशायां सावशेषायामुत्थायेयाय सत्वरम् । सैरिभीभिः समं यावत्तं मुनिं समुदैक्षत ॥ १५ ॥ प्रणणाम ततो भक्त्या, तदवस्थमहामुनेः । पादौ प्रमोदजन्माम्बुपूरप्लावितलोचनः ॥ १६ ॥ निषसादान्तिके चास्य, तावद्यावद्दिनेश्वरः । उज्जगाम तमस्तोममपाकुर्वन्निशा सह ॥ १७ ॥ अत्रान्तरे—नमोऽर्हद्भ्य इति वाचं, व्यक्तमुच्चारयन्मुनिः । उत्पपात नभः सोऽपि, श्रुत्वा तां हृद्यचिन्तयत् ॥ १८ ॥ नूनमेषा महाविद्या, तेनोच्चारण-

मात्रतः । अमुष्याः प्रययौ तूर्णमाकाशं मुनिसत्तमः ॥ १९ ॥ तत्प्रभृत्येष भुञ्जानो, गच्छंस्तिष्ठन्ननाकुलः । बहुमाने-नाध्यातिष्ठत्पदमुच्चारयन्नदः ॥ २० ॥ श्रेष्ठिनोक्तो न भद्रेदमविधानेन पठ्यते । स उवाच न ताताहं, मोक्तुं मन्त्रममुं क्षमः ॥२१॥ व्यचिन्तयत्ततः श्रेष्ठी, धन्योऽयं यस्य निश्चला । [ग्रन्थाग्रम् ७०००] इत्थं जिननमस्कारे, भक्तिः कल्याण-कारिका ॥ २२ ॥ बभाण तं पुनः श्रेष्ठी, यद्येवं भद्र ! ते सदा । एवमेव भवत्वेतन्मङ्गलं परमं हितम् ॥२३॥ महिषीचा-रणार्थं स, गतोऽन्येद्युः सुरापगाम् । ताश्च तीर्त्वा परं तीरं, जग्मुश्चारिजिघृक्षया ॥ २४ ॥ ततोऽसौ पृष्ठतस्तासां, गन्तु-मिच्छुर्नमस्कृतिम् । पठन्नेव ददौ झम्पामापगातटतो जले ॥ २५ ॥ बभूव कीलकस्तत्र, दैवयोगाच्च तेन सः । विद्धो वेदनयाऽऽक्रान्तः, पञ्चत्वं तत्क्षणाद्गतः ॥ २६ ॥ नमस्कारानुभावेन, तस्यैव श्रेष्ठिनस्ततः । अर्हद्दास्याः समु-त्पेदे, भार्यायाः कुक्षिकोटरे ॥ २७ ॥ तस्या गर्भप्रभावेन, पञ्चमे मासि गच्छति । दोहदोऽभूद्यथा दानं, दीनादिभ्यो ददाम्यहम् ॥ २८ ॥ तथा जिनेन्द्रहर्म्येषु, कारयामि महामहम् । पश्यामि च समं भर्त्रा, तदर्द्धासनमाश्रिता ॥२९॥ श्रेष्ठी तु पूरयामास, तस्या विज्ञाय दोहदम् । संपूर्णदिनमासाऽसौ, सत्तनूजमजीजनत् ॥ ३० ॥ द्योतयन्तं दिशा-चक्रं, स्वशरीरस्य तेजसा । रूपेणानन्यतुल्येन, निर्जयन्तं सुरानपि ॥ ३१ ॥ हर्षाधिक्यस्खलद्वाक्या, गत्वा चेटी

ततश्च—पारितोषिकमेतस्यै, दत्त्वा श्रेष्ठयतितोषतः ।
प्रियंवदा । इभ्यस्य कथयामास, पुत्रोत्पत्तिमनिन्दिताम् ॥ ३२ ॥
दानं प्रदापयामास, दीनादिभ्यो यथेप्सितम् । कारयामास
मोचयामास निःशेषगुप्तिभ्यो रुद्धमानवान् ॥ ३३ ॥
सुदर्शन इति ख्यातं, पितरौ नाम
जैनेन्द्रहर्म्येष्वष्टाहिकामहम् ॥ ३४ ॥ दोहदादनुमीयास्य, दर्शनं रूपशालिनः ।
तथा बालोऽप्यभूद्धर्मे, रतः सर्वज्ञदेशिते ॥ ३६ ॥
चक्रतुः ॥ ३५ ॥ शुक्लपक्षशशीवायं, कलाभिर्वृद्धिमाययौ ।
सत्तारुण्यमपि प्राप्तो, विषयेषु न सक्तधीः ॥ ३७ ॥ उद्वोढुम-
अत एव—संसारसागरोत्तारकृतोदारमहामतिः ।
सागरदत्ततनूजां मनोरमां विजितरतिरूपाम् ॥ ३८ ॥ तया सहास्य
निच्छन्नपि पित्रा परिणायितोऽन्यदा कन्याम् ।
दिनानि कतिचिज्जग्मुर्धर्मकामार्थसेविनः ॥ ३९ ॥ अन्यदा च पिता तस्य, प्रव्रज्यार्थं
संसारसुखानुभवशालिनः ।
विधायोचितसन्मानं, स्वाभिप्रायं निवेद्य
कृतोद्यमः । राजानं पुरलोकं च, निजावासमुपानयत् ॥ ४० ॥
स्वयं तथाविधाचार्यसमीपे प्रत्यपद्यत । सर्व-
च । स्वपदे दर्शयामास, नृपादीनां सुदर्शनम् ॥ ४१ ॥
स्वस्थाने स्थापितः पित्रा, सोऽपि लोकस्य संमतः । संजातः स्वगु-
ज्ञशासनोद्दिष्टविधानेनोत्तमं व्रतम् ॥ ४२ ॥
अन्येद्युर्जायया सार्द्धं, स्वप्रसादोपरिस्थितः । सद्धर्मगोचरां
णैर्यद्वा, गुणवान् कस्य न प्रियः ? ॥ ४३ ॥

वार्त्तां, कुर्वाणः प्रक्रमागताम् ॥ ४४ ॥ ददर्श नभसाऽऽगच्छच्चारणश्रमणद्वयम् । सभार्यस्तत उत्थाय, ववन्देऽसौ सुदर्शनः ॥ ४५ ॥ आनन्दजलपूर्णाक्षो, भक्तिरोमाञ्चिताङ्गकः । सिद्धान्तविधिनाऽपृच्छत्, स्वागतादि तपस्विने ॥ ४६ ॥ पुनः पृष्टं कुतः पूज्याः, यूयमत्र समागताः ? । नन्दीश्वरवरद्वीपादिति तावूचतुस्ततः ॥४७ ॥ अष्टाह्निकाः सुरैस्तत्र, कृता अत्यन्तसुन्दराः । जिनालयेषु नित्येषु, गतं नौ तद्दिदृक्षया ॥ ४८ ॥ ततः सुदर्शनः प्राह, कीदृशोऽसौ स्वरूपतः । कीदृशानि च चैत्यानि, वर्णतो मानतोऽपि च ? ॥ ४९ ॥ मुनिभ्यां बभाषे—अमुतो जम्बूद्वीपात्स द्वीपो द्वीपसङ्ख्ययाऽष्टमकः । लक्षात् द्विगुणद्विगुणप्रवृद्धलवणाम्बुधेः प्रभृति ॥ ५० ॥ अर्वाग् द्वीपसमुद्राः ये वर्तन्ते क्रमेण तेषां च । योऽन्त्यसमुद्रस्तस्मात्स ज्ञेयो द्विगुणविस्तारः ॥ ५१ ॥ बहुनन्दिवृक्षवनखण्डमण्डिते सुरवराप्सरःकलिते । तस्मिन्नञ्जनगिरयश्चत्वारो नीलरत्नमयाः ॥ ५२ ॥ तेषां च प्रत्येकं सन्ति चतस्रश्चतुर्दिशं वाप्यः । आयामविस्तराभ्यां जम्बूद्वीपप्रमा विमलसलिलाः ॥ ५३ ॥ ( गीतिः ) तद्बहुमध्ये धवलोज्ज्वलरत्नमया सुरम्यतलकलिताः । परिवर्त्तुलोरुतुङ्गा दधिवर्णा दधिमुखा गिरयः ॥ ५४ ॥ एतेषु चतुर्ष्वञ्जननगेषु षोडशसु दधि-मुखाद्रिषु च । उपरितले जिनभुवनानि सन्ति नित्यानि रम्याणि ॥ ५५ ॥ तानि चतुर्द्वाराणि प्रत्येक योजनानि

उत्तुङ्गतारतोरणमन्दिरचूलोच्चचारुशिखराणि ।
पञ्चाशत् । द्वासप्ततिः शतं च प्रविस्तरोच्चत्वदीर्घत्वैः ॥ ५६ ॥ रथगजतुरङ्गखचरप्रतिरूपकराजिराजितान्यधिकम् ।
कणत्कलकिङ्किणीकध्वजपङ्क्तिविभूषितान्युच्चैः ॥ ५७ ॥ तद्गर्भगृहस्यान्तः प्रवरतरा रत्नपीठिकैकैका ।
सर्वांगमनोहरशालिभञ्जिकारम्यरूपाणि ॥ ५८ ॥ अष्टोत्तरशतसङ्ख्या दशार्द्धवरवर्णरत्ननि-
तासु जिनेन्द्रप्रतिमा अष्टमहाप्रातिहार्ययुताः ॥ ५९ ॥ उत्कर्षतः प्रमाणं तासां श्रीनाभिसू-
र्वृत्ताः । रमणीया रोमहस्तकघण्टाद्युपकरणसंयुक्ताः ॥ ६० ॥ जिनभवनद्वारेभ्यः पुरतो मुख-
नुना तुल्यम् । वीरजिनेन समानं जघन्यतो मध्यमं चित्रम् ॥ ६१ ॥ तेभ्योऽग्रतः सुरासुरसत्प्रेक्षणकोचिताश्च
मण्डपाश्चतुर्भ्योऽपि । स्तम्भावलीविशिष्टास्त्रिद्वाराश्चित्रचित्राढ्याः ॥ ६२ ॥ श्रीऋषभवर्द्धमानकचन्द्राननवारिषेणनामानः ।
तत्सदृशाः । प्रेक्षणकमण्डपास्तत्पुरतः स्तूपाश्च रत्नमयाः ॥ ६३ ॥ मणिपीठिकास्थितास्ताः प्रशान्तमुखनयनशोभित-
तदभिमुखाश्च चतुर्दिग्व्यवस्थिता जिनवरप्रतिमाः ॥ ६४ ॥ मणिपीठिकास्तदग्रे तासु महेन्द्रध्वजा अतिशयोच्चाः ।
शरीराः । स्तूपेभ्योऽपि पुरस्ताद्रमणीयाश्चैत्यवरवृक्षाः ॥ ६५ ॥ एवं नन्दीश्वरे चैत्यस्वरूपमुपवर्ण्य तौ । धर्मलाभं प्रदायास्मै,
रमणीयपुष्करिण्यस्तत्पुरतो विमलजलपूर्णाः ॥ ६६ ॥

द्रुतमुत्पतितौ नभः ॥ ६७ ॥ ततः प्रभृति जातोऽसौ, स्थिरचित्तः सुदर्शनः । सुतरां धर्मकार्येषु, जग्राहाभिग्रहं तथा ॥ ६८ ॥ अष्टम्यां च चतुर्दश्यां, पौर्णमास्यां सदैव हि । उद्दिष्टायां च कर्त्तव्यं, पौषधं प्रतिमायुतम् ॥ ६९ ॥ तथा—कदा भागवतीं दीक्षां, प्रतिपद्य निराकुलः । निर्ममो विहरिष्यामीत्यभिलाषपरः स्थितः ॥ ७० ॥ इतः सुदर्शनस्यैव, मित्रं राज्ञः पुरोहितः । अत्यन्तं स्नेहसंपन्नो, ब्राह्मणः कपिलाभिधः ॥ ७१ ॥ कपिलाख्या च तद्भार्या, श्रुत्वा सा गुणकीर्त्तनम् । स्वभर्त्तुरन्तिके जाता, साऽनुरागा सुदर्शने ॥ ७२ ॥ रहः कदाचिदालोक्य, स्ववेश्मनि सुदर्शनम् । निन्ये स्वभर्त्तुरातङ्ककथनच्छद्मना ततः ॥ ७३ ॥ अभ्यन्तरापवरिकां, प्रविश्य तमुवाच सा ! स्वामिन् ! प्राप्तो बहोः कालात्, समयोऽयं मनोरथैः ॥ ७४ ॥ यत्रागमनं भवतः सम्पन्नं तमिह सफलयेदानीम् । मम विरहदग्धदेहं निजसङ्गजलेन निर्वाप्य ॥ ७५ ॥ श्रुत्वेदृशं वचस्तस्या, अनुरागेण निर्भरम् । आसन्नलब्धप्रतिभः, सोऽभ्यधादिदमुत्तरम् ॥ ७६ ॥ किं त्वया न श्रुतं भद्रे !, षण्ढोऽपि यदहं किल । नरवेषेण तिष्ठामि, मायया मुग्धवञ्चकः ॥ ७७ ॥ ततो निवृत्तरागाऽसौ, भट्टिनी तं व्यसर्जयत् । सम्प्राप्तः स्वगृहे जातो, गाढं दीक्षाभिलाषुकः ॥७८॥ संजायते न चाद्यापि, धर्माचार्यादिमीलकः । एवं दिनेषु गच्छत्सु, राज्ञोद्याने कदाचन ॥ ७९ ॥ प्रारब्ध उत्सवः कोऽपि,

तत्राहूतः सुदर्शनः । कपिलश्च सपत्नीकोऽभयादेवीमनोरमाः ॥ ८० ॥ स्वस्वपरिवारवाहनसमन्विताः सर्वे एव संमिलिताः । तत्र सपुत्रां दृष्ट्वा मनोरमां कपिलया भणितम् ॥ ८१ ॥ सम्मुखमभयादेव्याः स्वामिनि ! समुपैति केयमिह देवी । सुरकुमरमिवोत्सङ्गे सुरूपमाबिभ्रती बालम् ॥ ८२ ॥ सच्छत्रचामरादिप्रवरविभूत्यन्विता स्वरूपेण । निर्जितसुरेन्द्ररामा रमणीयाभरणवेषधरा ॥ ८३ ॥ अभयादेव्या गदितं-जाया सुदर्शनस्येयं, भद्रे ! नाम्ना मनोरमा । योऽयमङ्कगतोऽमुष्या, सोऽनयोरेव पुत्रकः ॥८४॥ कपिलोवाच नो देवि !, श्रद्दधेऽहमिदं वचः । यतः सुदर्शनः षण्ढः, कथं पुत्रस्ततो भवेत् ? ॥ ८५ ॥ देव्येदितं कथं भद्रे !, भवत्येदमबुध्यत ? । ततोऽसौ कथयामास, स्ववृत्तान्तं यथास्थितम् ॥ ८६ ॥ हसित्वाऽभिदधे राज्ञी, मुग्धे ! त्वं विप्रतारिता । स्वदाररतिना तेन, परदारविवर्जिना ॥ ८७ ॥ तथाहि—रूपेण सूर्पकारातिर्यथाऽनेन पराजितः । तेजसा च दिवानाथो, वपुःकान्त्या निशाकरः ॥ ८८ ॥ गाम्भीर्येण चाम्भोधिः, स्थैर्येण गिरिनायकः । तथा कथं त्वयैतस्य, षण्ढत्वं वद कल्पितम् ? ॥ ८९ ॥ एषाऽपि या त्वया दृष्टा, पत्न्येतस्य मनोरमा । नाम्ना न नाम सद्भूतैर्गुणैरपि मनोरमा ॥ ९० ॥ परपुरुषगन्धमिच्छति नेयं स्वप्नेऽपि तेन संभाव्या । न सुदर्शनं विनाऽस्याः पुत्रोत्पत्तिः कदाचिदपि ॥ ९१ ॥ तस्माच्छठोत्तरेणैव, त्वां चक्रेऽसौ निरुत्तराम् ।

एवंविधार्थवैदग्ध्यं, ब्राह्मणीनां क्व वा भवेत्? ॥ ९२ ॥ एवमाभाषितोवाच, साऽसूयागतमानसा । जाने तत्रापि पाण्डित्यमेनं कामयसे यदि ॥ ९३ ॥ साऽब्रवीन्निजबुद्ध्याऽहं, कामयिष्ये न चेदमुम् । मरिष्यामि तदाऽवश्यं, प्रतिज्ञातमिदं मया ॥ ९४ ॥ आकारिता ततो धात्री, स्वावासगतयाऽनया । पण्डिताख्या तदग्रे च, स्वाभिप्रायः प्रकाशितः ॥ ९५ ॥ तयाऽभाणि त्वया पुत्रि !, न सुन्दरमिदं कृतम् । अविज्ञायैव यत्त्वं, प्रतिज्ञा महती कृता ॥ ९६ ॥ स महात्मा यतो वत्से !, मन्यते परयोषितम् । मातरं वा स्वसारं वा, तन्मुञ्चेमं कदाग्रहम् ॥ ९७ ॥ गृहीत्वा सा ततो रज्जुं, बभाण कुरु पाशकम् । प्राणैः समं त्यजाम्येनमम्ब ! येन कदाग्रहम् ॥ ९८ ॥ ततो ज्ञात्वाऽतिनिर्बन्धं, सैतस्या अनिवर्त्तकम् । बभाषे पुत्रि ! यद्येवं, पूरयामि तवेहितम् ॥ ९९ ॥ केवलं कतिचिद्वत्से !, दिनानि प्रतिपालय । यावदेति जनानन्दः, कौमुदीपरमोत्सवः ॥ १०० ॥ एवमाश्वासिता धात्र्या, गणयन्ती दिनान्यसौ । विवक्षितावधेर्वाक्कष्टेनातिष्ठदुन्मनाः ॥ १ ॥ अथ क्रमेण संप्राप्ते, कौमुदीदिवसे मुदा । पटहं दापयामास, प्रातरेव महीपतिः ॥ २ ॥ यथा सान्तःपुरो राजा, क्रीडोद्यानं गमिष्यति । ततः समस्तलोकेन, तत्रागम्यं निजश्रिया ॥ ३ ॥ यस्तु कार्यान्तरासक्तोऽवज्ञायाज्ञां महीपतेः । लङ्घयिष्यति दण्ड्योऽसौ, दण्डेन महता किल ॥ ४ ॥ ततः सुदर्शनः श्रुत्वा, चिन्तयामास चेतसि । चतुर्मासक-

मेकत्र, राजाऽऽज्ञाऽन्यत्र दुर्घटम् ॥ ५ ॥ यतो जिनेन्द्रबिम्बानां, चतुर्मासकपर्वणि । कार्या पूजा चतूरूपो; धार्यः शक्त्या च पौषधः ॥ ६ ॥ न चैतदुत्सवव्यग्रः, कर्त्तुं शक्ष्यामि किञ्चन । मोचयामि तदात्मानं, पुरो गत्वा महीपतेः ॥ ७ ॥ ततोऽनर्घ्याणि रत्नानि, गृहीत्वाऽसौ सुदर्शनः । ददर्श नृपतिं तेन, पृष्टस्तुष्टेन सादरम् ॥ ८ ॥ केनार्थेन त्वमायातस्ततोऽवादीत्सुदर्शनः । युष्मदाज्ञेह कार्त्तिक्यामुद्यानगमनं प्रति ॥ ९ ॥ अर्हत्पूजनमस्माकं, कर्त्तव्यं पौषधस्तथा । तदत्र नापराधो न, उद्यानानागतावपि ॥ १० ॥ राज्ञोक्तं—क्रियतां स्वेच्छया सर्वं, नापराधोऽस्ति ते क्वचित् । ततोऽर्हत्स्नात्रपूजादि, विधायासौ प्रयत्नवान् ॥ ११ ॥ चकार पौषधं धन्यः, सर्वतः स चतुर्विधम् । अस्थादक्षोभ्यसत्त्वश्च, प्रतिमां सार्वरात्रिकीम् ॥ १२ ॥ इतो देव्या शिरोदुःखव्याजेनान्तःपुरस्थया । प्रोक्ता धात्री त्वया मेऽद्य, मेलनीयः सुदर्शनः ॥ १३ ॥ तद्व्यापारमथैक्षिष्ट, सा प्रतिपद्य तद्वचः । ईक्षाञ्चक्रे च तं क्वापि, रहसि प्रतिमागतम् ॥ १४ ॥ तदा च—विच्छायकमलवदनां विलोक्य नलिनीं गतेऽस्तमिह मित्रे । दयिता वियोगशङ्की विरौति करुणस्वरं चक्रः ॥ १५ ॥ अपिच—दिशा प्रतीच्याऽङ्गनयेव तूर्णं, समुद्रपानीयजिघृक्षयाऽत्र । पर्यस्यते रश्मिनियन्त्रितोऽयं, दिवाकरः कुम्भ इवाम्बुराशौ ॥ १६ ॥ ततश्च—पूर्वं वस्त्राच्छादितयक्षप-

तिमाप्रवेशकरणेन । कञ्चुकिनो विश्वास्य द्वित्रा वाराः कथञ्चिदपि ॥ १७ ॥ देवी यक्षप्रतिमाः किल पूजयतीति तेषु विश्वस्तम् । तिष्ठत्सु समानिन्ये तेनोपायेन सोऽपि तया ॥ १८ ॥ समर्पितोऽभयादेव्याः, साऽपि तं पुरतः स्थितम् । कामार्त्ता हावभावाद्यैः, क्षोभयितुं प्रचक्रमे ॥ १९ ॥ स्पर्शालिङ्गनचुम्बनपरापि न शशाक चलयितुं तं सा । धर्मध्यानारूढं महामुनिं वीतरागमिव ॥ १२० ॥ अत्रान्तरे–क्षोभयितुमसौ लग्ना बलेन न च मया प्रतीकारः । विहितोऽमुष्या इति लज्जयेव नाशं गता श्यामा ॥ २१ ॥ तथा–पश्य समस्तां रात्रिं स्थितोऽपि नाहं शशाक मोचयितुम् । अस्याः सत्पुरुषममुं त्रपयेवास्तमित इन्दुरपि ॥ २२ ॥ सर्वामपि त्रियामां कदर्थितो ध्यानतो न यश्चलितः । दृश्योऽयमिति धियेवाऽऽरुरोह रविरुदयगिरिशिखरम् ॥ २३ ॥ ततश्च-रात्रौ विविधोपायैरपि यावदसौ चचाल नो भावात् । प्रोक्तः पुनः प्रभाते मामनुरक्तां रमस्व विभो ! ॥ २४ ॥ सत्खाद्यपेयताम्बूलपुष्पवस्त्रादि सर्वमेवाहम् । सुन्दर ! दास्ये भवते, ज्ञास्यति न च कोऽपि राजादि ॥ २५ ॥ उक्तोऽप्येवं मौनं मुमोच न यदा तदाऽऽह रोषेण । मामभ्युपैहि नो चेद्द्रक्ष्यसि यत्कारयिष्यामि ॥ २६ ॥ इतश्च नृपतिर्गेहमुद्यानात्समुपेयिवान् । तत् ज्ञात्वा यच्चकारैषा, तदिदानीं निबोधत ॥ २७ ॥ दम्भेन तया स्वयमेव करुहैर्निजशरीरमुल्लिख्य । पूत्कृतं निर्घृणया यथा प्रविष्टोऽत्र

जार इति ॥ २८ ॥ शब्दश्रवणानन्तरमारक्षिजनाः सरोषमायाताः । कासाविति जलपन्तो, ददृशुस्तं कुट्टयामासुः
॥ २९ ॥ ज्ञातस्तैश्च सुदर्शनोऽयमिति धिक् पृष्टः प्रविष्टः कथं ?, न ब्रूते नृपतेर्निवेदितमसौ ब्रूते पुनः पृच्छतः ।
नो चेदानयतेह येन सकलं जानेऽहमुत्क्षिप्य तैरानीतश्च सविस्मयेन पठितं भूपेन वृत्तं नवम् ॥ ३० ॥ यदि किरति
कुकूलांश्चन्द्रमाः शीतवर्त्तिर्यदि च हिमसमूहं दाहको दाववह्निः । यदि च सुरगिरीन्द्रः कम्पते निष्प्रकम्पो, ननु
जगति तदास्तां सर्ववस्तुष्वनास्था ॥ ३१ ॥ यतः-पृष्टोऽसावनुकूलचारुवचनैर्भूपेन भो ! भो ! भवान्, देव्या किं
प्रविवेशितोऽत्र ? यदिवा श्रेष्ठिन् ! प्रविष्टः स्वयम् ? । ग्राह्यं ते वचनं स्त्रियास्तु न मया सद्भावमावेदय, प्रत्तं भद्र !
तवाभयं खलु मया चेत्सत्यमाभापसे ॥ ३२ ॥ दण्ड्यन्ते निश्चितं सर्वे, देवीधात्रीमहल्लकाः । सत्योक्ताविति
संचिन्त्य, मौनमास्थाय स स्थितः ॥ ३३ ॥ राज्ञोदितं ततो रोषात्, नन्वयं दम्भमाश्रितः । शूलाग्रे प्रोयतां पश्चा-
दुष्टैर्नीतः पुराद्बहिः ॥ ३४ ॥ प्रवादश्च पुरे जातो, राज्ञा नाचरितं शुभम् । भाव्यमत्र विधानेन, नैवंकारी सुदर्शनः
॥ ३५ ॥ इतश्च-तं वृत्तान्तं समाकर्ण्य, वज्रपातोपमं जनात् । भार्या मनोरमा तस्य, प्रलापानकरोत् बहून् ॥ ३६ ॥
तदन्ते पुष्पधूपाद्यैः, पूजां कृत्वाऽर्हतः पराम् । कायोत्सर्गे स्थिता भक्त्या, चैत्यवन्दनपूर्वकम् ॥ ३७ ॥ क्षणादास-

नकम्पेन, तत्प्राणिधानशुद्धितः । तदग्रे देवता स्थित्वाऽब्रवीत्किं क्रियतां तव ? ॥ ३८ ॥ कायोत्सर्गं समुत्सार्य, सा प्रोवाच महासती । मोचयामुं पतिं देवि !, कलङ्काच्चेदयं शुभः ॥ ३९ ॥ ततोऽसौ देवता शीघ्रं, दर्शनोत्सर्पणप्रिया । शूलं सिंहासनं चक्रे, गत्वा रत्नोपशोभितम् ॥ ४० ॥ आरक्षितास्तु तं क्षुद्रा, जघ्नुः खड्गादिभिस्ततः । चक्रे सा हारकेयूरकुण्डलादिविभूषितम् ॥ ४१ ॥ अत्रान्तरे–तथा सुदर्शनं दृष्ट्वा, देवरूपोपमं जनाः । धर्मो जयति नाधर्म, इत्युक्त्वा तं ववन्दिरे ॥ ४२ ॥ राजाऽपि विस्मितमनाः श्रुत्वा लोकस्य भाषितं तादृक् । पश्चात्तापोपगतो व्यचिन्तयन्नोचितं विहितम् ॥ ४३ ॥ आगत्य तत्समीपं प्रणम्य विनयेन मर्षणां कृत्वा । नगरमहोत्सवपूर्वं महाविभूत्या द्विपारूढम् ॥ ४४ ॥ प्रावेशयत्स्वनगरं गजात्समुत्तार्य निजगृहस्यान्तः । सिंहासनोपवेशितमथ तं नृपतिर्बभाणैवम् ॥ ४५ ॥ यत्ते मयाऽपराद्धं पापेनालं विवेकविकलेन । तत् क्षमणीयं सर्वं क्षान्तिधना येन सन्तः स्युः ॥ ४६ ॥ तेनोदितं नृपाहं सर्वेषु प्राणिषु क्षमाशीलः। किं पुनरुर्वीनाथे ? भवति परं किमपि विज्ञपये॥४७॥ प्रव्रजितुं मे वाञ्छा तन्मुञ्च नरेन्द्र ! सुप्रसादो माम् । साधुर्भवितेत्युदित्वा तैलमथानायितं राज्ञा ॥ ४८ ॥ यच्छत सहस्रपाकं सहात्मनाऽभ्यञ्जितोऽयमतिकुशलैः । तेनाङ्गमर्दकजनैः स्नानादि विधापितश्च ततः ॥ ४९ ॥ भुक्तोत्तरे प्रसन्नं प्रणयेन

कुतूहलेन पप्रच्छ । निशि चरितं तमुवाच स नृपते ! किमतीतचरितेन ? ॥ ५० ॥ अत्याग्रहेण राज्ञो बभाण नरनाथ ! देहि यद्यभयम् । धात्र्या अभयादेव्याः कञ्चुकिनां तदिह कथयामि ॥ ५१ ॥ राजोवाच श्रेष्ठिन् ! अयुक्तमेतत्तथाऽपि ते वचनम् । न विलङ्घ्यमतो दत्तं ब्रूहि त्वं सर्वमविकल्पम् ॥ ५२ ॥ भणितं ततोऽमुना नरपतिश्च देव्यां प्रकोपमापन्नः । उपशामितस्तेन पुनः संपन्नः श्रावको राजा ॥ ५३ ॥ राज्यार्द्धमस्मै वितरीतुमिष्टं, राज्ञा न चेयेप कथञ्चिदेषः । संसारगर्त्ताद्विनिवृत्तचेताः, स केवलं स्वं प्रविमोच्य राज्ञः ॥ ५४ ॥ दीनादिलोकाय वितीर्य दानं, विधाप्य पूजां च जिनालयेषु । स धर्मघोषाभिधसूरिपार्श्वे, जग्राह दीक्षां प्रियया समेतः ॥ ५५ ॥ अन्ये तु चारणश्रमणगमनानन्तरं कपिलावृत्तान्तवर्जमेतां कथां कथञ्चिदन्यथा कथयन्ति, यथाऽऽह श्रीवसुदेवसूरिः—अन्यदाऽत्यन्तरूपोऽसौ, राजमार्गेण लीलया । गच्छन् समन्वितो मित्रैः, राजदेव्याऽवलोकितः ॥ ५६ ॥ पृष्टा चेटी यथा कोऽसौ, रूपनिर्जितमन्मथः । चेट्या समुद्रदत्तस्य, पुत्रोऽसाविति भाषितम् ॥ ५७ ॥ श्रावकः परमः ख्यातः, सञ्ज्ञयाऽसौ सुदर्शनः । ततः सातिशयं देवी, तदुपर्यनुरागिणी ॥ ५८ ॥ स्वधात्रीं प्राह मोहेन, मातस्त्वं शीघ्रमानय । एनं केनाप्युपायेन, नो चेन्मे नास्ति जीवितम् ॥ ५९ ॥ ततः सा प्रतिपद्यैवं, वर्य-

चातुर्यभूषिता । तत्समीपं ययौ युक्त्या, स्वाशीर्वादपुरस्सरम् ॥ ६० ॥ हृदयानन्दकारिण्या, भाषया भाषितं मितम् । देवीभाषितमेकान्ते, ततः स प्रतिभाषते ॥६१॥ धिग् धिगेतन्न वक्तव्यं, न श्रोतव्यं कदाचन । परस्त्री सकला वर्ज्या, राजपत्नी विशेषतः ॥६२॥ मया पुनर्विशेषेण, परदाराभिवर्जनम् । यावज्जीवं गृहीतं हि, तस्मात्कथ्यं न हीदृशम् ॥ ६३ ॥ तयाऽऽगत्य ततो देव्यास्तस्याः सर्वं निवेदितम् । सामभेदादिना प्रोक्तो, न कथञ्चित्समीहते ॥ ६४ ॥ एतदाकर्ण्य सा देवी, पतिताऽलं महीतले । आश्वासिता कथञ्चिच्च, तालवृन्तानिलादिभिः ॥ ६५ ॥ तया धात्र्या पुनः प्रोक्ता, तिष्ठ पुत्रि ! सुनिर्वृता । कार्त्तिक्यां पौर्णमास्यां ते, मेलयामि न संशयः ॥ ६६ ॥ इतः प्रभृति पूर्ववदेव यावद्व्रतग्रहणमिति । तं वृत्तान्तं परिज्ञाय, विधायोद्बन्धनं द्रुतम् । स्वयमेवाभया देवी, प्राणत्यागं चकार सा ॥ ६७ ॥ ततः पाटलिपुत्रस्य, श्मशाने पूतनाकुले । उत्पेदे व्यन्तरीत्वेन, तथामृत्युविधानतः ॥ ६८ ॥ स्वापराधभयाद् धात्री, पण्डिता तु तदैव हि। स्वत एव गता नंष्ट्वा, पुरं पाटलिपुत्रकम् ॥६९॥ देवदत्ताभिधा तत्र, वेश्यामाश्रित्य सा स्थिता । सुदर्शनगुणोत्कीर्त्ति, कुर्वती प्रतिवासरम् ॥ ७० ॥ सुदर्शनोऽपि कालेन, संयमाराधनापरः । गीतार्थो गुर्वनुज्ञातः, शिश्राये—कविहारिताम् ॥ ७१ ॥ पञ्चरात्रं पुरे ग्रामे, चैकरात्रिं महामुनिः । विहरन्नाजगामासौ, पुरं पाटलिपुत्रकम् ॥ ७२ ॥

जीर्णदेवगृहे तत्र, बहिस्तात् स व्यवस्थितः । दृष्टः पण्डितया धात्र्या, कथञ्चिद्दैवयोगतः ॥ ७३ ॥ कथितो देवद-त्तायास्तयाऽवक्षिप्तचित्तया । कथञ्चित्स गृहं भिक्षादानव्याजात्प्रवेशितः ॥ ७४ ॥ द्वारं पिधाय गेहस्य, तत्रस्थं तं महामुनिम् । उपसर्गैतुमारेभे, हावभावैरनेकधा ॥ ७५ ॥ न चास्य चलितं चेतो, वर्यधैर्यशिरोमणेः । तैरनेकैरपि शृङ्गं, मेरोरिव महानिलैः ॥ ७६ ॥ ततो नीत्वा श्मशानेऽसौ, विलक्षीभूतया तया । रजन्यामुज्झितो दृष्टो, व्यन्तर्याऽभयया ततः ॥ ७७ ॥ तस्या अप्युपसर्गैरक्षुभितस्यास्य केवलं ज्ञानम् । सप्तमदिवसे जातं केवलमहिमा कृतो देवैः ॥ ७८ ॥ उपशमिता तेन ततो रागादीनां विपाककथनेन । सा व्यन्तरी सगणिका धात्री च विशिष्टचरितेन ॥ ७९ ॥ कालेन गतश्च शिवं विधाय निश्शेषकर्ममलविलयम् । सामायिकादचलितः सर्वावस्थासु दृढचित्तः ॥ ८० ॥ इति न चलति यः स्थिराशयः, समभावाज्जिनशासने रतः । अधिरोहति सद्गुणावलीं, स श्राद्धोऽपि सुदर्शनो यथा ॥ १८१ ॥ इति सुदर्शनकथानकं समाप्तम् ॥ गतं गुणद्वारमधुना यतना निगद्यते—

धम्मज्झाणोवगओ जियकोहाई जिइंदिओ धीरो ।
सुस्साहुपेसणरओ जयणपरो होइ सत्तीए ॥ ९८ ॥

धर्मध्यानम्—आज्ञाचिन्तनादिरूपं तेनोपगतः—संगतो धर्मध्यानोपगतः, तथा जिताः—परिभूताः क्रोधादयः—कोपप्रभृतयः कषाया उदयनिरोधोदितवैफल्यापादनाभ्यां येन स जितक्रोधादिः, पुनः कीदृश इत्याह—जितानीन्द्रियाणि येन स जितेन्द्रियः—वशीकृतस्पर्शनादिकरणः, स्पर्शादिषु शुभेतरेषु प्रीत्यप्रीतिरहित इति भावना, भूयः किंविशिष्टः ?—' धीरः ' सात्त्विको देवादिविरचितोपसर्गक्षुधादिपरीषहाक्षोभ्य इतियावत्, बुद्धिर्वा धीस्तया राजत इति 'धीरः' सावद्यानवद्यवस्तुपर्यालोचनया सावद्यपरिहारेण निरवद्यानुष्ठायीति तात्पर्यं, तथा सुसाधवः—प्रधानयतयः आचार्यादयस्तेषां सम्बन्धि प्रेषणम्—आदेशः सुसाधुप्रेषणं तत्र रतः—आसक्तः सुसाधुप्रेषणरतः, आचार्यादिवैयावृत्त्यकरणरत इति तात्पर्यं, कः पुनरेवंभूतगुणोपेतो भवति ? इत्याह—' यतनापरः ' प्रस्तावात्सामायिके गुरुलाघवालोचनतत्तत्प्रवृत्तितन्निष्ठो ' भवति ' जायते, कया ? ' शक्त्या ' सामर्थ्येन, अथवा कस्यां सत्यामित्याह—' शक्तौ ' सामर्थ्ये इत्यक्षरार्थः, समुदायार्थस्त्वयं—शक्त्या हेतुभूतया शक्तौ वा सत्यां प्रतिपन्नसामायिको धर्मध्यानोपगतादिविशेषणविशिष्टो यद्भवति सा सामायिकयतनेति गाथार्थः ॥ अतिचारद्वारमिदानीम्—

मणवइकायाणं पुण दुप्पणिहाणं विवज्जए सड्ढो ।
सामाइयसइअकरणमणवट्ठियकरणमइयारो ॥ ९९ ॥

इह यतनापरो धर्मध्यानोपगतादिविशेषणो भवतीति प्राग्भणनेन तत्त्ववृत्त्या मनःप्रभृतीनां सुप्रणिधानस्य विधेयत्वमुक्तं, दुष्प्रणिधाने तु का वार्त्तेत्याह—मनोवचःकायानां दुष्प्रणिधानं पुनर्विवर्जयेच्छ्राद्धः, पुनःशब्दः प्राग्उपात्तोऽप्यत्र योज्यते, भावना तु पातनिकयैव दर्शिता, न चैतदेव विवर्जयेत्, किन्त्वन्यदपि, तथा चाह—"सामाइयसइअकरणं "ति सामायिकस्मृत्यकरणमनवस्थितकरणं च, चस्य गम्यमानत्वात्, ननु कुत एतद्विवर्जयेत् ? इत्याह—यत इति शेषो, यतोऽतिचार इति, अयं च प्रत्येकं योज्यते, यथा मनःप्रभृतीनां दुष्प्रणिधानमतिचारः, सामायिकस्मृत्यकरणमतिचारोऽनवस्थितकरणं चातिचार इति, अनवस्थितकरणमपि सामायिकस्यैव, सान्निध्यादित्येवं योजनेति गाथार्थः ॥ अतिचारपदभावना चेयं—मनोदुष्प्रणिधानं नाम गृहादिगतसुकृतदुष्कृतचिन्तनारूपं, वाग्दुष्प्रणिधानं तु असमंजसासत्यादिभाषणं, कायदुष्प्रणिधानमप्रत्युपेक्षिताप्रमार्जितस्थानकायनिवेशनं, एतानि च सामायिकस्थोऽपरित्यजन् सामायिकफलं न लभत एव, यदुक्तम्—" सामाइयंति काउं घरचिंतं जो उ चिंतए सड्ढो । अट्टवसट्टोवगओ निरत्थयं तस्स सामइयं ॥ १ ॥ कडसामइओ पुव्विं बुद्धीए पेहिऊण भासेज्जा । सइ निरवज्जं वयणं अन्नह सामाइयं न भवे ॥ २ ॥ अनिरिक्खियापमज्जिय थंडिल्ले ठाणमाइ सेवंतो । हिंसाभावेऽवि न सो कडसाम-

इओ पमायाओ ॥ ३ ॥" तथा 'सामायिकस्मृत्यकरणं' 'सामायिकविषयायाः स्मृतेः—स्मरणस्याकरणम्—अनासेवनं, एतदुक्तं भवति—प्रबलप्रमादान्नैवं स्मरति यदुतास्यां वेलायां मया सामायिकं कर्त्तव्यं कृतं न कृतं वेति, स्मृतिमूलं च मोक्षानुष्ठानमतोऽस्यापि करणे सामायिकमफलमेव, यदुक्तम्—" न सरइ पमायजुत्तो जो सामइयं कया उ कायव्वं । कयमकयं वा तस्स हु कयंपि विफलं तयं नेयं ॥ १ ॥" अनवस्थितकरणमिति, अनवस्थितम्—अस्थिरस्वरूपं करणं—विधानं सामायिकस्य, यद्वाऽनवस्थितस्येति सामायिकस्य विशेषणं तस्य करणं, कोऽर्थः ?—प्रबलप्रमादादेव तत्कालगृहीतं सामायिकं तत्कालमेव मुञ्चति यथाकथञ्चिद्वा करोति तदनवस्थितकरणं, तदपि क्रियमाणं सामायिकस्याशुद्धिमेव जनयति, यथोक्तम्—" काऊण तक्खणं चिय पारेइ करेइ वा जहिच्छाए । अणवट्ठिय सामइयं अणायराओ न तं सुद्धं ॥ १ ॥" गतमतिचारद्वारमधुना भङ्गोऽभिधीयते—

दुप्पणिहाणं काउं न देइ मिच्छुक्कडत्ति भावेण ।
कुणइ य अइप्पसंगं तस्स फुडं होइ भंगोत्थ ॥ १०० ॥

'दुष्प्रणिधानं' प्राग्वर्णितमनोदुष्प्रणिधानादि 'कृत्वा' विधाय, सामायिकस्थ इति प्रस्तावाल्लभ्यते,

'न ददाति' न वितरति 'मिच्छुक्कडं' ति मिथ्यादुष्कृतं 'भावेन' भावतः संवेगसारं, यथा हा न सुन्दरमिदं कृतं यत्सामायिकस्थेन गृहचिन्तादि कृतं "हा दुट्ठु कयं हा दुट्ठु कारियं अणुमयंपि हा दुट्ठु । अंतो अंतो डज्झइ झुसिरो व्व दुमो वणदवेणं ॥ १ ॥" इत्येवमात्मानं निन्दतीति तात्पर्यम्, अथवा 'मिच्छादुक्कडं'-त्यस्यार्थो निर्युक्तिकारगाथाद्वयादस्मादवबोद्धव्यो, यथा "मित्ति मिउमद्दवत्ते छत्ति य दोसाण छायणे होइ । मित्ति य मेराएँ ठिओ दुत्ति दुगुंछामि अप्पाणं ॥ १ ॥ कत्ति कडं मे पावं डत्ति य डेवेमि तं उवसमेणं । एसो मिच्छाउक्कडपयक्खरत्थो समासेणं ॥ २ ॥" ति, 'करोति' विदधति 'चः' समुच्चये 'अतिप्रसङ्गं' अत्यासक्तिं पुनः पुनरतिचारकरणेन 'तस्य' एवंविधस्य प्राणिनः 'स्फुटं' प्रकटं 'भवति' संपद्यते 'भङ्गः' विनाशः 'अत्र' सामायिकविषय इति गाथार्थः ॥ भावनाऽधुना—

सव्वं चिय सावज्जं तिविहं तिविहेण वज्जियं जेहिं ।
जावज्जीवं तेसिं नमामि भत्तीय पयकमलं ॥ १०१ ॥

'सर्वं' निश्शेषं सूक्ष्मबादरभेदभिन्नं 'चिय' त्ति एवार्थे सर्वमेवेत्यर्थः 'सावद्यं' सपापं अनुष्ठान-

मिति गम्यते 'त्रिविधं' करणकारणानुमतिभेदं 'त्रिविधेन' मनसा वाचा कायेन, नवविधमिति तात्पर्यं, 'वर्जितं' परिहृतं यैः सुसाधुभिः, किं परिमितमेव कालं ?, नेत्याह—'यावज्जीवं' यावदिति मर्यादायां यावज्जीवनं यावज्जीवं, चरमोच्छ्वासं यावदित्यर्थः, तेषां सुविहितानां 'नमामि' प्रणिपतामि 'भक्त्या' अन्तःप्रीत्या, न तूपरोधादिना, बहुमानपुरस्सरमिति योऽर्थः, 'क्रमकमलं' पादपङ्कजमिति गाथार्थः ॥ उक्तं सामायिकं नवभेदं, सम्प्रति देशावकाशिकस्यावसरः, तदप्येतैरेव नवद्वारैरभिधेयमिति प्रथमद्वारेण तावदाह—

देसावगासियं पुण संखेवो जस्स पुव्वगहियस्स ।
जह विसपन्नगदिट्ठी संखिवई वाइओ कोई ॥ १०२ ॥

पूर्वगृहीतप्राणातिपातादिव्रतपरिमाणैकदेशो देशस्तस्मिन्नवकाशः-अवस्थानं देशावकाशस्तेन निर्वृत्तं देशावकाशिकं, पुनःशब्दः पूर्वोक्तापेक्षया, सामायिकं तावत् 'सावज्जजोगविरई' त्यादिगाथया स्वरूपतो निरूपितं, देशावकाशिकं तु किंरूपमित्याह—देशावकाशिकं पुनः, स्वरूपेण ज्ञेयमिति शेषः, यत्र किमित्याह—सङ्क्षेपणं सङ्क्षेपः सङ्कोच इतियावत् 'यत्र' यस्मिन् 'पूर्वगृहीतस्य' प्रागुपात्तस्य प्राणातिपातादिव्रतस्येत्यर्थाद्गम्यते,

तत्सङ्क्षेपस्यैवात्र सूत्रकृता देशावकाशिकत्वविवक्षणात्, " सव्ववयाणं संखेवकरणं देसावगासियं " ति वचनप्रामाण्याद्, अत्रैव निदर्शनमाह—' जह विसपन्नगदिट्ठी संखिवई वाइओ कोऽवि ' त्ति यथा यद्वाद्विषं च—गरलं ' पन्नगदृष्टिश्च ' सर्पदृक् ते ' सांक्षिपति ' सङ्कोचयति ' वातिकः ' मन्त्रवादी स्थावरजङ्गमविषप्रतिकर्त्ता ' कोऽपि ' अनिर्दिष्टनामेति गाथार्थः ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—कश्चिद्राजा प्रतिपक्षमहाबलनृपतिभयेन स्वदेशवर्त्ति जलयवसादि विनिनाशयिषया निजमण्डले विषकरं पातितवान्, ततश्च कोऽपि पलदशकं कोऽपि पलविंशतिं कोऽपि पलपञ्चाशतं कोऽपि पलशतं विषस्यानीतवान्, अन्यश्च राज्ञ एव वैद्यः स यवमात्रं विषमुपादाय राज्ञः समर्पितवान्, रुष्टो राजा तन्मात्रार्पणेन, इङ्गिताकारकुशलेन च वैद्येन सरोषं नरेन्द्रमवगम्य भणितं, यथा—देव ! महाविषमेतद्, यवमात्रेणाप्यनेन भारशतानि भवन्ति, यतः शतवेध्येतद्,राज्ञोक्तं—कः प्रत्ययः?, वैद्येनोक्तम्—आनाय्यतां कश्चिन्मुमूर्षुर्गजः, ततस्तद्वचनानन्तरमेवानायितो भूपेनैको जराजर्जरो रोगाविधुरो महाकरी, त्रोटयित्वा तत्पुच्छवालं दत्तं तत्स्थाने नखाग्रेण विषं वालाग्रमात्रं वैद्येन, तत्क्षणमेव समस्तशरीरे संचरितं विषं, पतितो निश्चेष्टो हस्ती, जातो नीलीरागरञ्जित इवातिनीलवर्णः, भाणितं वैद्येन—देव ! एष सर्वोऽपि संपन्नो विषरूपो,

योऽप्येन श्वशृगालादिर्भक्षयिष्यति सोऽपि विषीभाविष्यति, एवंच शततमस्थानमप्येतद्वेधयतीति महाविषमेतत्, ततो राज्ञोक्तं--अहो भिषग्वर ! एवंविधमहाविषस्यास्यास्ति कश्चित्प्रतीकारः ?, भिषजोदितं-देव ! अस्ति, प्रतीत्युत्पादनार्थं नृपतेः पुनर्भणितं वैद्येन--देव ! समानाय्यतामन्यो बलिष्ठशरीरः कश्चिन्महास्तम्बेरमः, कृतं तद्वचस्तथैव भूपालेन, वैद्येनापि तथैव संचारितं विषं, तत्क्षणमेव चरितं विषं सर्वस्मिन्नपि तद्देहे, ततस्तत्कालमेव नियोजितस्तत्रैव देशेऽगदः, तेन चोत्सार्यानीतं विषमेकस्मिन् पादे, ततोऽपि पादाङ्गुष्ठे, ततोऽपि तदग्र इति, ततस्तुष्टो राजा कृतवान् महाप्रसादं वैद्यस्य, सोऽपि तदनुभावेन संपन्न ऐहलौकिकसुखाभागी, एवं श्रावकोऽपि दिग्व्रतेन योजनशतादिक्षेत्रमानमवगृहीतवान्, देशावकाशिकेन तु तदेव सङ्क्षिप्य गव्यूतादिमानं चकार, ततोऽपि वा गृहदेहलीमर्यादमिति, अत्र च गजदेहतुल्यं दिग्व्रतमितिक्षेत्रं, विषचरणसमं त्वत्र श्रावकस्य गमनागमनादि, अगदसदृशं तु देशावकाशिकं, तेन तद्विषयं बहु बहुतरं निरुणद्धि ॥ दृष्टिविषसर्पोदाहरणं यथा--कस्मिंश्चिदरण्ये दृष्टिविषसर्पः प्रतिवसति स्म, तद्दृष्टेश्च महाविषत्वाद् द्वादश योजनानि विषयोऽभूत्ततोऽनेन द्वादशयोजनप्रमाणायां भूमौ यः कोऽपि कपोतिकादिः खचरः शशकादिः स्थलचरः स सर्वोऽपि विनाशितः, ततस्तेन पथा चटकोऽपि न संचरति, अन्यदा

महामन्त्रवादेको निजमित्रमण्डलीपरिवृतः समागतस्तं प्रदेशं, पश्यति च सर्वतो निःसञ्चारमेनं, पप्रच्छ च तत्रत्यन्तवर्त्तिनं कमपि लोकं—किं कारणमयं प्रदेश इत्थं निःसंचारो वीक्ष्यते ?, तेनोक्तं—अस्त्यत्रैको महादृष्टिविषो दन्दशूकः, तद्दृष्टेश्च द्वादश योजनानि विषयः, ततोऽनेन दवदग्धारण्यतुल्ये कृतेऽस्मिन् प्रदेशे मरणभयेन न कोऽपि संचरति, किं बहुना ?, चटकादिभिरपि स्वजीवितरिरक्षिषया परिहृतोऽयं देशः, तेनोक्तं—यद्येवं समस्ति मे गुरुपरम्परागत एको गारुडमन्त्रः तन्माहात्म्यान्निरोधयाम्यहमेतावन्तमस्य दृष्टिविषयं, ततो गत्वा सर्पसमीपदेशमसौ निरुरोध तद्विषयं, द्वादशयोजनप्रमाणस्यास्य चकार योजनमात्रां सीमां, ततोऽपि सङ्क्षिप्य परिमितां परिमिततरां तावद् यावद् दृष्टिसमासन्नाङ्गुलादिमानामिति, उपनयस्तु पूर्ववदेव स्वबुद्ध्या कार्य इति ॥ भेदद्वारे गाथा—

संवच्छराइगहियं पभायसमए पुणोऽवि संखिवइ ।
राओ तंपिय नियमइ भेएण विसिट्ठतरमेव ॥ १०३ ॥

संवत्सरो-वर्ष आदिः—पूर्वो यस्य कालावधेः स संवत्सरादिस्तेन गृहीतम्-उपात्तं संवत्सरादिगृहीतं, आदिशब्दाच्चतुर्मासिकादिग्रहः, ' प्रभातसमये ' विभातकाले यद् दिक्परिमाणमिति शेषः, ' पुनरपि ' भूयोऽपि ' संक्षि-

पति ' संकोचयति सोऽयं देशावकाशिकभेद इति प्रक्रमः, अस्य चेयं भावना—केनापि श्रावकेण सुगुरुसमीपे पर्युषणावधि चतुर्मासकावधि वा दिक्परिमाणादि गृहीतं, तच्च संशय्योत्थानकाले नमस्कारावबोधपूर्वकं यदाऽनुस्मृत्य पुनरेवं विचिन्तयति-अतिपुष्कलमिदं न मे प्रतिदिवसमेतावद् विषयीभविष्यति तस्मादद्यतनदिवसादौ सङ्कोचयाम्येतदहं, ततस्तथैवास्य सङ्कोचयत एको देशावकाशिकभेदः, अन्यश्च भेद एवं—' रात्रौ ' रजन्यां स्वापकाले इति तात्पर्यं 'तदपि नियमयति ' यत्प्रातर्दिनादौ नियतं कृतं तदेव नियन्त्रयति, सङ्क्षिप्ततरं करोतीत्यर्थः, कथं नियमयति ? इत्याह-' भेदेन ' पृथिव्यादिग्रहणविकल्पेन ' विशिष्टतरमेव ' प्रधानतरमेवेतिगाथार्थः ॥ एतच्च यथा जायते तथा कथ्यते—

**एगविहं तिविहेणं सव्ववयाणं करेइ संखेवं ।**
**अहवा जहासमाही गंठीनवकारपरिमाणं ॥ १०४ ॥**

' एकविधं ' स्वयं न करोमीत्याद्येकप्रकारं ' त्रिविधेन ' मनसा वाचा कायेनेत्येवंरूपेण ' सर्वव्रतानां ' समस्ताणुव्रतादिविरतिविशेषाणां ' करोति ' विदधाति ' सङ्क्षेपं ' समासं, अन्यभङ्गोपलक्षणं चैतत्, एतदुक्तं भवति—य एकविधत्रिविधेन सर्वव्रतसङ्क्षेपं करोति तस्यानेनैव भङ्गकेनैतद्देशावकाशिकं जायते, सर्वव्रतसङ्क्षेपरूपदेशावकाशि-

करयैतेन भङ्गेन गृहीतत्वात्, अन्यस्य त्वन्यथाऽपीति, 'अथवा' यद्वा 'यथासमाधि' समाध्यनतिक्रमेण, शक्त्यनुल्लङ्घनेनेति हृदयं, 'ग्रन्थिनमस्कारपरिमाणं' इति ग्रन्थिश्च नमस्कारश्च ग्रन्थिनमस्कारौ ताभ्यां परिमाणं—परिमितत्वं यस्य देशावकाशिकस्य तद् ग्रन्थिनमस्कारपरिमाणं, देशावकाशिकं करोतीति सम्बन्धः, साधुपर्युपासनादेवभवनावस्थानव्याख्यानश्रवणाद्युपलक्षणं चैतत्, तात्पर्यार्थस्त्वयं—यो महाधनाढ्यादिः कोऽप्यात्मनोऽतिव्याप्तिमालोच्य तत्परिहारार्थं यावदेव ग्रन्थिर्वस्त्राञ्चलादौ बद्ध आस्ते तावदेतत्परिमाणं ममैतावद्देशावकाशिकं, नमस्कारपरिमाणमिति यावन्नमस्कारमुच्चारयामि, उपलक्षणव्याख्यानाच्च यावत्साधून् पर्युपासे इत्यादि, परिमाणं चेति तस्येत्थमपि देशावकाशिकं जायत इति गाथार्थः ॥ एतदकरणे दोषमाह—

जाणंतस्सवि एवं अनिवित्तीपच्चओ बहू बंधो ।
तहवि न करेइ माणं दिया य राओ पमाएणं ॥ १०५ ॥

'जानतोऽपि' अवबुध्यमानस्यापि, आस्तामजानतः, 'एवं' पूर्वोक्तरूपेण देशावकाशिकाकरण इति शेषः, किमित्याह—'अनिवृत्तिप्रत्ययो बहुर्बन्धः' निवर्त्तनं निवृत्तिः—प्रत्याख्यानं न अनिवृत्तिः निवृत्तिः सैव प्रत्ययः—कारणं

यस्यासावनिवृत्तिप्रत्ययः 'बहुः' प्रभूतो 'बन्धः' कर्मबन्धः, कोऽर्थः ?— ज्ञानबलेन ज्ञानवताऽप्यनङ्गीकृतप्रत्याख्यानेन कर्मबन्धो न निवारयितुं शक्यः, यद्यपि चैवं 'तथाऽपि' कश्चिन्महामोहग्रहगृहीतचित्तवृत्तिः 'न करोति' न विधत्ते 'मानं' परिमाणं नियतत्वामिति योऽर्थः, 'दिवा' दिवसे, चशब्दो भिन्नक्रमे, 'रात्रौ' रजन्यां चेत्यत्र योज्यते, केन हेतुना ? इत्याह—'प्रमादेन' विकथानिद्रादिना, यश्च न करोति तस्यायमेव प्रभूतकर्मबन्धलक्षणो दारुणो दोष इति प्रकृतद्वारतात्पर्यं, यद्वा जानन्तीति भिन्नमस्येति च, तेन च प्रकृतदेशावकाशिकं संबध्यते, 'अचोऽची' ति लोपेन च 'जाणंतस्से' ति रूपं भवति, यथा—"मोत्तूण पत्तनियरं जडाण नियपरिमलं समप्पंते । सहस्सुम्मूलणदुक्खं वालय ! बालोऽसि किं भणिमो ? ॥ १ ॥" अत्र 'सहस्सुम्मूलण'-त्ति 'अचोऽची' ति लोपः, अकरण इत्याध्याहारः, अपिशब्द एवार्थे, स च बहुशब्दादग्रे दृश्यः, 'तहवि न करेइ माणं' ति, अत्रापि प्राकृते लिङ्गविभक्तिवचनानां व्यत्ययो बहुलमिति लक्षणेन 'करिंती' ति द्रष्टव्यं, ततश्चायमर्थः—अस्य देशावकाशिकस्याकरणेऽनिवृत्तिप्रत्ययो बहुरेव बन्धः, एवं जानन्ति तथाऽपि दिवा रात्रौ वा कदाचिदिति यावन्मानं न कुर्वन्ति प्रमादेन हेतुना, ये च जानन्तोऽपि न कुर्वन्ति तेनैवाविरतिप्रत्ययेन बन्धेन

बध्यन्त इति दोषद्वारगाथाभावार्थो, न चानिवृत्तिप्रत्ययो बन्धोऽसिद्धः, तस्यागमासिद्धत्वात्, तथाहि—अप्रत्याख्यानस्य पूर्वभवशरीराद्यपि सर्वं मुत्कलमेवागमे प्रतिपादितं, यदुक्तम्—" अच्छेल्लया य मुक्केल्लया य देहा भवंमि जेऽणंता । तेसिमवोसिरियाणं बंधेणं घेप्पई जीवो ॥ १ ॥" अत एव च दुष्कृतगर्हायां—" गहिऊणं मुक्काइं जम्मणमरणेसु जाइं देहाइं । पावेसु पसत्ताइं वोसिरियाइं मए ताइं ॥ १ ॥" इति पूर्वभवशरीरव्युत्सर्जनं कारितमिति गाथार्थः ॥ गुणद्वारे—

चाउम्मासिगऽवहिणा बहुयं गहियं न तस्स संपत्ती ।
एवं नाउं विहिणा संखेवं कुणइ राईए ॥ १०६ ॥

चतुर्णां मासानां समाहारश्चतुर्मासं चतुर्मासेन निर्वृत्तश्चातुर्मासिकः स चासाववधिश्च चातुर्मासिकावधिस्तेन ' चातुर्मासिकावधिना ' मासचतुष्टयविहितमर्यादया ' बहुकं ' प्रचुरं गृहीतं न ' तस्य ' विवक्षितगृहीतस्य ' संप्राप्तिः ' सम्यग् लाभः ' एवं ज्ञात्वा ' इत्थमवगम्य विधिना " उवउत्तो गुरुमूले संविग्गो इत्तरं व इयरं वा । गिण्हइ पच्चक्खाणं " इत्यादि शास्त्रान्तरोक्तेन विधानेन ' सङ्क्षेपं ' संवरणं ' करोति ' विदधाति ' रजन्यां ' रात्रौ,

अयमत्र भावार्थः—चातुर्मासिकमासिकाद्यवधिना यत् कनकधनधान्यादि व्यवहरणीयतया मुत्कलीकृतं तस्य रात्र्यादौ विवक्षिते काले यदा व्यवहारो न संभवति तदा गुर्वादिसमीपे संवरणमेव विवेकिना कार्यं, तेन कृतेनाश्रवनिरोधाद्, अकृतेन त्वविरतिप्रत्ययबन्धभावादिति गाथार्थः ॥ अत्र च कामदेवो दृष्टान्तः, तत्कथासचिका चेयमन्यत्र गाथा—
“ चंपाए कामदेवो पडिमं पडिवण्णु सव्वराईयं । सक्कपसंसा देवोवसग्ग वीरेण परिकिहणं ॥ १ ॥ ” अस्याश्च भावार्थः कथानकेनोपदर्श्यते——

चम्पायां नगर्यामधिगतजीवाजीव उपलब्धपुण्यपाप आश्रवसंवरविनिर्जराकुशलो बन्धमोक्षविचारविचक्षणः परमभक्तिसमाराधिताष्टादशदोषविनिर्मुक्तदेवः कामदेवो नाम श्रावको बभूव,—कृतदेवगुरुसपर्या सुशीलधुर्या विनीततावर्या । परिहृतसकलाकार्या भद्राख्या तस्य वरभार्या ॥ १ ॥ तेन च भगवतो महावीरतीर्थकृतोऽन्तिके परिग्रहपरिमाणमङ्गीकृतं यथा वृद्धिप्रयुक्ताः षट् कोटयः षट् कोटयो निधानप्रयुक्ताः प्रविस्तरप्रयुक्ताः षट् च, सर्वा अप्यष्टादश कोटयो मे धनस्य, हलशतानि पञ्च बोहित्थशतानि पञ्च दशदशसहस्रपरिमाणा दश गोवर्गाः, शेषं च व्युत्सृष्टं मया द्विविधं त्रिविधेन स्वपरिग्रहात्, एवं चैतावत्परिग्रहसमेतः स्थितो विंशतिवर्षाणि, केवलमष्टमीचतुर्दश्यादितिथिषु सर्वदैव विहित-

चतुर्विधसर्वपौषधो ध्यानाध्ययननिरतमानसः सार्वरात्रिकीं प्रतिमामभ्यस्यन् आसाञ्चक्रे, अन्यदा च कंचित्पर्वदिवसे प्रतिमा-प्रतिपन्नमेनं सौधर्मसभामध्यवर्त्ती सौधर्मेन्द्रः कथञ्चिदवलोक्यासाधारणतद्गुणानुरागरञ्जितमनाः सकलसुरसमूहसमक्षमेवं प्रशशंस, यथा—भो ! भोः ! सुराः ! शृणुत जम्बूद्वीपदक्षिणभरतार्द्धवर्त्तिचम्पापुरीवास्तव्यकामदेवसमानः श्रावको नाधुना कश्चिदीक्ष्यते यः सेन्द्रैरपि सुरैर्ध्यानाच्चलयितुं न पार्यते, अहो ! एवं महानुभावाः केचन श्रावका अपि भवन्ति, अत्रान्तरे तादृशीं शक्रप्रशंसामुपश्रुत्यैको देवोऽश्रद्दधानो विधाय विकरालगजेन्द्ररूपं समाजगाम, तत्क्षोभणाय प्रवृत्तोऽनेकप्रकारं दन्तक्षोभदानादिभिरुपसर्गयितुं, न च मनागपि चचाल स महासत्त्वः, ततो विहितमनेन महाऽहिरूपं, तेनापि स्फारफुत्कारविमोक्षणापूर्वमतिकोपकरालमूर्त्तिना दंष्टुमारब्धोऽपि यावन्न क्षुभितस्तावाद्विकृतघोरराक्षसाकारो विकटाट्टहासविमोचनावक्षोभितासन्नवर्त्तिप्राणिसार्थो विविधबिभीषिकादिभिर्भीषयितुमुपचक्रमे, अत्रान्तरे महासत्त्वस्यास्य तथा निष्कारणघोरोपसर्गकरणव्यावृत्तं तं सुराधममवलोक्य कोपेनेव पाटलिततनुरुदियाय दिवसकरः, सुरस्तु सर्वरात्रमुपसर्ग्य यावन्न शशाक तं शुद्धध्यानप्रबन्धाच्चलयितुं तावन्निर्वेदमागतः प्रणणाम भावसारं, बभाषे च—धन्यस्त्वं यस्यानलीकगुणसंस्तवं सकलसुरसभामध्योपविष्टस्त्रिविष्टपाधिपतिरपि

विदधाति, ततस्तदीयातिशायिसर्वगुणानुरञ्जितः स सुपर्वा भूयो भूयोऽभिवन्द्य तं गतः स्वर्गं, कामदेवोऽपि पारयित्वा कायोत्सर्गं प्रयातः स्वगृहं, तत्र चाकथयदस्य कोऽपि यथा—भगवांस्त्रिलोकबन्धुः सुरासुरप्रणतपादनलिनयुगः । श्रेष्ठिन् ! बहिरुद्याने समवसृतो जिनवरो वीरः ॥ १ ॥ तच्छ्रुत्वाऽसौ तस्मै हृष्टमनाः पारितोषिकं दत्त्वा । अगमत्समवसृतिभुवं कृतार्थमभिमन्यमानः स्वम् ॥ २ ॥ त्रिः प्रदक्षिणीकृत्य विधिवदभिवन्द्य च भगवन्तमुपाविशेशोचितदेशे, जिनेश्वरेण तु—तत्सत्को रात्रिवृत्तान्तः, साध्वादिभ्यः पुरोऽखिलः । प्रकाशितस्ततस्तेऽपि, सद्ध्याने जज्ञिरे स्थिराः ॥ १ ॥ कालान्तरे च—श्रावकधर्ममपेतकलङ्कं, तीर्थकृता गदितं परिपाल्य । भक्तिनिवृत्तिसमाहितचित्तः, सत्तमदेवभवं प्रतिपेदे ॥ २ ॥ सौधर्मदेवलोकप्रवरविमानेऽरुणप्रभाभिख्ये । द्युतरायुरजनि देवस्ततश्च्युतः सेत्स्यति विदेहे ॥ ३ ॥ यतनाऽधुनोच्यते—

एगमुहुत्तं दिवसं राई पंचाहमेव पक्खं वा ॥
वयमिह धारेउ दढं जावइयं उच्छहे कालं ॥ १०७ ॥

एकं च तन्मुहूर्त्तं च एकमुहूर्त्तं, द्वे घटिके यावदित्यर्थः, 'दिवसं' चतुष्प्रहरप्रमाणं दिनं 'रात्रिं' चतुष्प्रहरा-

त्मिकामेव रजनीं 'पञ्चाहमेव' पञ्चाहोरात्राण्येव 'पक्षं वा' पञ्चदशरात्रिन्दिवानि वा 'व्रतं' नियमं 'इह'
लोके 'धारयतु' बिभर्तु पालयत्वितियावत् 'दृढं' अत्यर्थं 'जावइयं' ति यावन्मात्रं कालमिति सम्बन्धः
'उत्सहेत' उत्साहं कुर्यात्, देशावकाशिकग्रहणं प्रतीति शेषः। प्रकृतभावना चेयं—यावन्तमेव कालं देशावका-
शिकग्रहणं प्रत्युत्सहेत, कोऽर्थः ?—यावत्काला जीवस्यैतद्ग्रहणे वीर्योल्लासशक्तिस्तावत्कालमेव मुहूर्त्तदिवसादिकमेत-
द्भूयो भूयः कुर्यात्, न त्वालस्यं विदध्यादिति, एषैवास्य यतनेति गाथार्थः॥ अतिचाराः सम्प्रत्यस्य—

आणयणि पेसणेऽवि य पओग तह सद्दरूववाए य॥
वहिपोग्गलपक्खेवो पंचइयारे परिहरेज्जा॥ १०८॥

'आणयणि' त्ति आनयने सप्तम्येकवचनान्तं पदं, अथवा 'आणयण' त्ति सूत्रत्वाल्लुप्तसप्तम्येकवचनो निर्देशः, 'पेसणे' इति च सप्तम्यन्तं 'अपि चे' ति समुच्चये, प्रयोजनं प्रयोगः, स च द्वयोरप्यानयनप्रेषणयोः प्रत्येकं संबध्यते, तत आनयने प्रयोग एकोऽतिचारो, द्वितीयः प्रेषणे प्रयोग इति, अनयोश्चानयने प्रयोगस्तावदयम्—विवक्षितक्षेत्र-
बहिर्वर्त्तिनः सचित्तादिद्रव्यस्य विवक्षितक्षेत्र एवानयने—प्रापणे प्रयोगः, स्वयं गमने व्रतभङ्गभयादन्यस्य संदेशका-

दिना त्वयेदमानेयमित्येवं व्यापारणमानयनप्रयोगः, प्रेष्यत इति प्रेषणः, ' कृत्यल्युटो बहुल ' मिति वचनात्कर्मणि ल्युटि प्रेष्य उच्यते, तस्मिन् प्रयोगः—तद्विषयं व्यापारणं, गृहीतदिक्परिमाणादूर्ध्वं स्वयं गमने व्रतभङ्गभयादन्यप्रस्थापने प्रेषणप्रयोग इत्यर्थः, ' तह ' त्ति यथा प्राक्तनावतिचारौ तथा शब्दरूपपातः, शब्दश्च—काशितादिः स्वकीयो रूपं च—आकृतिः स्वशरीरस्य शब्दरूपे तयोः पातनं पातो—विवक्षितक्षेत्रबहिःस्थिताकारणीयस्य श्रोत्रे दृष्टौ च निवेशनं शब्दरूपपातः, पातशब्दस्य प्रत्येकं सम्बन्धेन शब्दपातरूपपातनामकौ द्वावतिचारावेतौ, अनयोश्चैवं संभवः—स्वबुद्धिस्वीकृतक्षेत्रात् परतः स्थितमाकारणीयं कञ्चन नरं व्रतभङ्गभयादाह्वातुमशक्नुवन् यदा काशितादिशब्दश्रावणस्वकीयरूपसंदर्शनव्याजेन तमाकारयति तदा व्रतसापेक्षत्वाच्छब्दपातो रूपपातश्चातिचाराविति, चकारोऽग्रे दृश्यः, ततो न केवलमेतेऽतिचाराः, बहिः पुद्गलप्रक्षेपश्च, बहिः—विवक्षितक्षेत्राद्बाह्यभूमौ प्रयोजनभावे परप्रबोधनाय पुद्गलानां—लेष्टुशर्करादीनां प्रक्षेपणं—प्रेरणं बहिः पुद्गलप्रक्षेपः स च, संभवी चायं, यदुक्तं—" सुण्णहरं जिणवरमंदिरं च पडिवज्जिऊण पोसहिओ । बहिया पोग्गलखेवेहिं कुणइ सण्णं स लोगस्स ॥ ", एवं च पञ्चेति सङ्ख्या, अतिचारान् परिहरेत्, प्रस्तावाद्देशावकाशिकस्यातिक्रमविशेषान् परित्यजेद्, यतो देशावकाशिकमे-

न तदर्थमभिगृह्यते--मा भूद् बहिर्गमनागमनव्यापारजनितः प्राण्युपमर्द इति, स च स्वयं कृतोऽन्येन वा कारित इति फले न
तदर्थमभिगृह्यते--मा भूद् बहिर्गमनागमनव्यापारजनितः प्राण्युपमर्द इति, परस्य पुनरनिपुणत्वात्तदविशुद्धिरेव, इह च आद्यद्वयमव्युत्प-
कश्चिद्विशेषः, प्रत्युत गुणः स्वयंगमने, ईर्यापथविशुद्धेः, परस्य पुनरनिपुणत्वात्तदविशुद्धिरेव, इह च आद्यद्वयमव्युत्प-
न्नबुद्धित्वेन सहसाकारादिना वा, अन्त्यत्रयं तु व्याजपरस्यातिचारतां यातीति गाथार्थः ॥ भङ्गद्वारमितः—

सव्ववयाण निवित्तिं दियहं काऊण तक्खणा चेव ।
आउट्टियाएँ भंगं निरवेक्खो सव्वहा कुणइ ॥ १०९ ॥

'सर्वव्रतानां' स्थूलप्राणातिपातविरमणादीनां 'निवृत्तिं' सङ्क्षेपनियमलक्षणां 'दिवसं' दिनं सकल-मिति शेषः 'कृत्वा' विधाय 'तत्क्षणादेव' सपद्येव 'आकुट्टिकया' उपेत्यकरणेन 'भङ्गं' सर्वनाशं निरपेक्षः 'सर्वथा' सर्वप्रकारेण, व्रतविगमं प्रतीत्येति गम्यते, 'करोति' विदधाति, अयमत्र भावार्थः—प्राणातिपातविरम-णादीनि पूर्वं यानि व्रतानि स्वीकृतानि तेषामेव कदाचित्पृथिव्यादिखननादिनिवृत्त्या सङ्क्षेपं दिवसप्रमाणं विधाय तत्कालमेवोपेत्यकारेण पृथिव्यादिविनाशप्रवृत्तो देशावकाशिकव्रतस्य सर्वव्रतसङ्क्षेपरूपस्य भङ्गं जनयति, तन्निरपेक्षत्वादिति गाथार्थः ॥ भावनाद्वारे गाथा—

सव्वे य सव्वसंगेहिं वज्जिए साहुणो नमंसिज्जा ।
सव्वेहिं जेहिं सव्वं सावज्जं सव्वहा चत्तं ॥ ११० ॥

'सर्वान्' अशेषान् 'चः' पूरणे 'सर्वसङ्गैः' निखिलसम्बन्धैः अन्तरङ्गैः बहिरङ्गैर्ममत्वधनधान्यादिभिर्वर्जिता—रहिताः सर्वसङ्गवर्जितास्तान् 'साधून्' भावयतीन् मोक्षार्थसाधनपरानित्यर्थः 'नमस्येत' नमस्कुर्यात्, यैः किं कृतमित्याह—सव्यैः—अनुकूलैः, प्राणिष्विति गम्यते, यैः 'सर्वं' समस्तं 'सावद्यं' सपापमनुष्ठानमिति शेषः 'सर्वथा' सर्वप्रकारेण 'त्यक्तं' मुक्तमिति गाथार्थः ॥ उक्तं द्वितीयशिक्षाव्रतं, साम्प्रतं तृतीयमभिधातव्यं, तदपि नवद्वारमित्यतः प्रथमद्वारेण तावदाह—

पोसह उववासो उण आहाराईनियत्तणं जं च ।
कायव्वो सो नियमा अट्ठमिमाईसु पव्वेसु ॥ १११ ॥

'पुष पुष्टौ' इत्यस्य धातोः पोषः—पुष्टिः प्रक्रमाद्धर्मस्य तं धत्ते—करोतीति पौषधः—पर्वदिनानुष्ठेयं धर्मकर्म तस्मिन् स एवोपवसनमुपवासः पौषधोपवासः, पुनःशब्दो देशावकाशिकादस्य विशेषोपदर्शनार्थः, ततोऽयमर्थः—

देशावकाशिकं तावत्प्रागुक्तरूपं, पौषधोपवासस्तु कीदृश इत्याह—पौषधोपवासः पुनराहारादिनिवर्त्तनं यच्चेति, आहारः अशनपानखाद्यस्वाद्यभेदाच्चतुर्विधः स आदिर्येषां देहसत्कारादीनां ते तथा तेषां निवर्त्तनं—नियमनमाहारादिनिवर्त्तनं तद्यत्, तत् स इत्यर्थः, चशब्दो न केवलमाहारादीनां चतुर्णां निवर्त्तने पौषधोपवासः, किन्तु तदन्यतमनिवर्त्तनेऽपीत्यनुक्तार्थसमुच्चयार्थः, ' कर्त्तव्यः ' विधेयः स ' नियमात् ' नियमेन ' अष्टम्यादिषु पर्वसु ' अष्टमीचतुर्दश्यादिपूत्सवतिथिषु, यदुक्तं—" पौसह उववासो उण अट्ठमिचउद्दसीसु जम्मादिणे । नाणे निव्वाणे चाउमास अट्ठाहि पज्जुसणे ॥ १ ॥ " ' अट्ठाहि'त्ति अष्टाहिकाश्चैत्राश्वयुङ्मासानध्यायदिनेष्वष्टमीप्रभृतयो याः क्रियन्ते तासु कल्याणकदिनाष्टाहिकासु वा, एतेषु च दिनेषु सुश्रावकस्य जिनपूजातपोऽनुष्ठानविशेषोद्यमो भणित एव, यदाह धर्मदासगणिः—" संवच्छर चाउम्मासिएसु अट्ठाहियासु य तिहीसु । सव्वायरेण लग्गइ जिणवरपूया तव गुणेसु ॥ १ ॥ " त्ति, यद्वा चकारोऽयं भिन्नक्रमस्ततः कर्त्तव्यः स चेत्यत्र योज्यः, शेषं पूर्वमिवेति गाथार्थः ॥ भेदद्वारमधुना—

आहारदेहसक्कारबंभऽवावारपोसहो चउहा ।
एक्केक्को च्चिय दुविहो देसे सव्वे य नायव्वो ॥ ११२ ॥

आहारश्च प्रागुक्तो देहसत्कारश्च–शरीरभूषा ब्रह्म च–ब्रह्मचर्यं ' वावारत्ति ' अचोऽचीति लोपे अव्यापारश्च-हलादिकर्म्मत्यागः, आहारदेहसत्कारब्रह्माव्यापारास्तेषां पोषध आहारपोषधो देहसत्कारपोषधो ब्रह्मचर्यपोषधोऽव्यापार-पोषधः, स 'चतुर्द्धा' चतुर्भिः प्रकारैश्चतुर्भेद इत्यर्थः, तद्यथा–आहारपौषधो देहसत्कारपौषधो ब्रह्मचर्यपौषधोऽव्यापारपौषध इति, पौषधशब्दस्याहारादिपदैः प्रत्येकं सम्बन्धाद्, एकैकोऽपि चाहारपौषधादिः 'द्विविधः' द्विभेदो ज्ञातव्य इति सम्बन्धः, कथमित्याह–' देसे सव्वे य'त्ति देशविषयः सर्वविषयश्च, तत्र देशविषय आहारपौषध एकभक्तादिः, सर्वविषयस्तु चतुर्विधाहारनिरोधेन चतुर्थतपः, देहसत्कारपौषधोऽपि देशविषयोऽस्नानपौषधादिः सर्वविषयस्तु सर्वस्यैव स्नानोद्वर्त्तन-वर्णकविलेपनपुष्पगन्धविशिष्टवस्त्राभरणादेः शरीरसत्कारस्य रागबुद्ध्या परिहारः, ब्रह्मचर्यपौषधो देशे दिवैव रात्रावेव सकृदेव द्विरेव वेत्यादिनियमेन मैथुनासेवनं, सर्वत्र त्वहोरात्रं यावद्ब्रह्मचर्यपालनं, चरमस्तु देशत एकतरस्य कस्यापि व्यापारस्याकरणं, सर्वतस्तु सर्वेषामेव व्यापाराणां हलशकटगृहकर्मादीनामकरणं, इह चाव्यापारविषये यो देशतः पौषधं करोति स सामायिकं करोति न वा, यस्तु सर्वतः पौषधं करोति स नियमात्सामायिकं करोति, यदि न विदधाति तदा तत्फलेन वंच्यते, यतः सर्वतोऽव्यापारपौपधिकः सावद्यव्यापाररहितो ध्यानाध्ययनादिविशुद्धव्यापारः

स्वरूपेणैव भवति, यदुक्तं—" सावज्जजोगविरओ झाणज्झयणंमि निच्चलो धणियं । जिणभवणगओ चिट्ठइ, अव्वावारंमि पोसहिओ ॥ १ ॥ " ननु पौषधशालायाः पौषधार्थमेव विधीयमानत्वात्पौषधिकस्य पौषधशालायामेवावस्थानमुचितं नान्यत्र, तत्कथमिदमुक्तं ' जिणभवणगओ ' इत्यादि, सत्यं, जिनभवनाद्यभावे पौषधशालावस्थानमनुज्ञातं, यदुक्तं—" चेइयसाहुअभावे भिण्णा भणिया घरस्स एगंते । एगस्स समिद्धस्स य पोसहसाला इमा भणिया॥ १ ॥ चंदवडिंसय संखो, सुदंसणो कामदेव अभओ य। एगागिणो य एए पोसहसालासु सुव्वंति ॥२॥ आवश्यकचूर्णौ तु सामान्येनैवोक्तं, यथा—"चैत्यगृहे वा साधुमूले वा पौषधशालायां वा" उन्मुक्तमणिसुवर्णो व्यपगतमालावर्णकविलेपनप्रहरणः, तत्र च कृते पठयति गुणति पुस्तकं वा वाचयति धर्मध्यानं वा ध्यायति, यथैतान् साधुगुणानहमसमर्थो मन्दभाग्यो धारयितुमित्यादि विभाषेति, अतः प्रवचनगाम्भीर्यमेव पर्यालोच्यं, न स्वमनीषिकया काप्याग्रहो विधेय इति, एतच्च पौषधव्रतं यः सामायिकमिव द्विविधत्रिविधेनेत्येवं प्रतिपद्यते तस्य पौषधेनैव सामायिकार्थप्राप्तेर्नात्यन्तं सामायिकविधानं फलवत्, केवलं पौषधसामायिकलक्षणं व्रतद्वयं मया प्रतिपन्नमिति भावनाविशेषात्फलवदपीति गाथार्थः ॥ तृतीयद्वारेणेदमेव सम्प्रति निर्दिश्यते—

विरतिफलं नाऊणं भोगसुहासाउ बहुविहं दुक्खं ।
साहुसुहकोउएण य पडिपुण्णं ( चउव्विहं ) पोसहं कुणइ ॥ ११२ ॥

विरतेः—नियमस्य फलं कार्यं विरतिफलं—कर्मानाश्रवादिरूपं, यदुक्तं—'संयमे अनिण्हयफले' संयमोऽनाश्रवफल इति 'ज्ञात्वा' अवबुध्य, तथा भोगसुखस्याशा भोगसुखाशा तस्या भोगसुखाशातः—कामभोगसौख्यवाञ्छातो 'बहुविधं' नानाप्रकारं शरीरमानसादिभेदं 'दुःखं' असातोदयरूपं, कपिलब्राह्मणस्येवासन्तोषप्रत्ययं—"जहा लाभो तहा लोभो, लाभा लोभो पवड्ढई । दोमासकयं कज्जं, कोडीएवि न निट्ठियं ॥ १ ॥" इत्याद्युत्तराध्ययनोक्तं ज्ञात्वेति वर्त्तते, ततः किमित्याह—चतुर्विधं पौषधं करोतीति चरमपादेन सम्बन्धः, न केवलमेतद्द्वयं ज्ञात्वेदं करोति, किन्तु कारणान्तरेण चेत्याह—'साधुसुखकौतुकेन च' साधूनां—व्रतिनां सुखं साधुसुखं यथा—नैवास्ति राजराजस्य तत्सुखं नैव देवराजस्य । यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥ १ ॥" इत्येवंरूपं तत्र कौतुकं—कुतूहलमभिलाष इति तात्पर्यं तेन च 'चतुर्विधं' प्रागुक्ताहारपौषधादिभेदेन चतूरूपं 'पौषधं' प्राङ्निरूपितशब्दार्थं 'करोति' निर्वर्त्तयति, अनेन चैतैस्त्रिभिः कारणैः पौषधं जायत इति पर्यायत आवेदितामिति गाथार्थः ॥ दोषद्वारमितः—

जे पोसहं तु काउं चइया य परीसहेहिं भंजंति ।
नालोयंति य भग्गं भमंति भवसायरे भीमे ॥ ११४ ॥

' ये ' इत्यनिर्दिष्टनामानः श्रावकाः ' पौषधं ' प्रागुक्तरूपं ' तुः ' विशेषणे, चतुर्विधमपीति विशिनष्टि, ' कृत्वा ' विरच्य ' चइय ' त्ति उद्वेजिताः 'च्यावित्ताः' त्याजिता वा पौषधपरिणामादिति शेषः, कैः ?–' परीषहैः ' कर्मनिर्जरणार्थं परिषोढव्याः परीषहास्तैः–क्षुत्तृष्णामलस्त्रीप्रभृतिभिरिति हृदयं, किमित्याह–' भञ्जन्ति ' विनाशयन्ति पौषधमिति प्राक्पदे–( ग्रन्थाग्रं ७५०० ) नैव संवध्यते, न केवलं ये भञ्जन्ति, नालोचयन्ति च भग्नमिति, ' भग्नं ' विनाशितं सन्तं गुरुसमीपे न प्रकटयन्तीत्यर्थः, चकारान्मूलत एव पौषधमत्यन्तविषयाभिलाषुकतया ये न गृह्णन्ति यत्तदोर्नित्यसम्बन्धात्ते किमित्याह–' भ्रमन्ति ' पर्यटन्ति ' भवसागरे ' संसारसमुद्रे ' भीमे ' रौद्रे, प्रकृतसमुदायार्थश्चायं–ये पौषधं विधाय भञ्जन्ति भग्नं च गुरोर्न कथयन्ति मूलतो न कुर्वन्ति वा तेषां संसारसागरपरिभ्रमणलक्षणो दोष इति गाथार्थः ॥ गुणस्त्वेतत्करणे–

धीरा य सत्तिमंता पोसहनिरया लहंति परमगइं ।
दिट्ठंतो इह संखो, आणंदो जणमणाणंदो ॥ ११५ ॥

'धीराः' बुद्धिशोभिनः 'शक्तिमन्तः' सामर्थ्योपेताः सन्तः यत्तदोरध्याहाराद् ये 'पौषधनिरताः' पौषधोपवासलक्षणतृतीयशिक्षाव्रते नितरामासक्तास्ते 'लभन्ते' आसादयन्ति परमा-अनुत्तरा पुण्यप्रकर्षरूपत्वाद् गतिः—गम्यमानत्वात्परमगतिः—सुदेवत्वलक्षणा तां परमगतिं, अनन्तरफलापेक्षया चेदमुच्यते, परम्परया तु परमगतिं—मोक्षलक्षणामपीति, आगमसिद्धं चैतद्, यतो देशविरतश्रावकस्योत्कर्षेणाच्युतान्त एवोत्पादोऽभिहितः, तथा चोक्तम्—"उववाओ सावयाणं उक्कोसेणं तु अच्चुओ जाव।" परम्परया तु जिनधर्मो मोक्षफल एवेत्यत्राविगानमेवेति, 'दृष्टान्तः' निदर्शनं 'इह' अस्मिन्नर्थे 'शङ्खः' शङ्खनामा श्रावकः, तथा 'आनन्दः' आनन्दाभिधः श्रमणोपासकश्च, चस्य गम्यमानत्वात, कीदृशः सः? इत्याह—जना—लोकास्तेषां मनांसि तान्यानन्दयति तदानन्दहेतुत्वाद्वा जनमनआनन्द इति गाथासङ्क्षेपार्थः, विस्तरार्थस्तु कथानकाभ्यामवसेयः, ते चेमे—

इहेव जंबुदीवे २ भारहे वासे अत्थि सावत्थी नाम नयरी, जीए—दोसायरो मयंको छुहसुसियाई घराइं विहवीणं। जिणमंदिरेसु दीसंति सावया न उण अन्नत्थ ॥ १ ॥ अविय—सुरसेणालंकरिया जीसे कूवावि देवरायव्व। वरमत्तवारणाइं विज्झवणाइंव भवणाइं ॥ २ ॥ लोओऽवि जत्थ दक्खिन्नमंदिरं विणयकेलिपमयवणं।

नीइयरो परसंतोसभायणं धम्मसद्धालू ॥ ३ ॥ तत्थासि पउरपुरलोयसम्मओ मयविमुक्कमइविहवो । विहवोहामियधणओ नयविणयगुणाण कुलभवणं ॥ ४ ॥ जीवाइपयत्थविऊ जिणसासणगाढभत्तिअणुरत्तो । नीसेसकलाकुसलो सुसावओ संखनामोत्ति ॥ ५ ॥ तस्स य सरयपुण्णिमासिणीनिसानाहजोण्हापवाहविमलसीलाहरणा आहरणविप्फुरियाणेयरयणकिरणसंताणविच्छुरियदिसामंडला दिसामंडलप्पसिद्धरूवाइगुणसमुदयाणंदियलोयणुप्पला उप्पला नाम समणोवासिया भारिया, तीए समं तिवग्गसारं जीवलोयसुहमणुहवंतस्स तस्स वइक्कंतो कोइ कालो, अत्थि य तीए चेव सावत्थीए पुरीए वत्थव्वो सयगोत्ति बीयनामो तस्सेव संखस्स समाणधणकणयाइविहवो साहम्मिओत्ति परमपीईठाणं नीसेससावगगुणसमण्णिओ पोक्खली नाम सावओ, तेसिं च परोप्परं परमपीईसंजुयाणं कयाइ बंधमोक्खचिंतावावडाणं कयाइ संसारसरूववियाररयाणं कयाइ दाणाइचउब्भेयधम्मकम्मासेवणरयाणं वच्चंतेसु दिवसेसु तीसे चेव नयरीए उत्तरपुरत्थिमे दिसीभाए कोट्ठयाभिहाणे चेइए समोसढो अण्णया साहुसहस्सपरिवारो गामाणुगामं विहारक्कमेण विहरंतो भगवं महावीरतित्थयरो, रइए सुरेहिं दिव्वसमवसरणे उवविट्ठे तिलोयबंधुंमि निविट्ठासु जहासुहं सयलपरिसासु विण्णाततव्वइयरा समागया महारिद्धिसमुदएणं भगवओ

वंदणवडियाए ते दोवि संखसयगनामधेया सावया, एत्थंतरंमि पत्थुया परमेसरेण धम्मकहा, अविय– भो भो जणा! जस्स निमित्तं अज्जेह इह संसारे सावयेतवित्थरं वित्थारेह बहुपावकारणे महारंभे आरंभेह मित्तनाइसयणसंबंधिलोयाण विविहोवयारे अवयारेह परिणयणाइविचित्तसववहारे तंपि हयसरीरं विज्जुच्छडाडोवचंचलं, न विवेइजणाणं जणेइ मणंपि आसाबंधं, अविय–जस्स कएण धणाइं मणहर-दाराइं तहय मित्ताइं। अज्जेह तं सरीरं विज्जुविलासो व्व अइचडुलं ॥ १ ॥ तहा–विसया जयम्मि कस्स व, न वल्लहा होज्ज मणहरा एत्थ। अण्णायमच्चुधाडी सव्वहरा जइ न हु पडेज्जा ॥ २ ॥ किंच– पज्जलियसिहिसिहाडोवभीसणे सणिसणंतअसिपत्ते। निवडंतकुंतमोग्गरतिसूलबाणोहदुहजणए ॥ ३ ॥ पर-माहम्मियसुरकयवेउव्वियभीमरूवतासणए। अंधारियदिसियक्के कज्जलकालेण तिमिरेण ॥ ४ ॥ पसरंत-दुरभिगंधे वससोणियपवहजायाचिक्खल्ले। नेरइय करुणविरसा बोहसंजणियउव्वेए ॥ ५ ॥ एयारिसंमि नरए निवडंताणं पियाहि रुइराहिं। रणझणिरनेउराहिं रसणारवमुहलगमणाहिं ॥ ६ ॥ किं कीरइ परिताणं ?, मणंपि जीवाण किं च विहवेणं। कलहोयकणयरयणोहमाइबहुरूवसारेण ? ॥ ७ ॥ किं वा सिणेहघणनिब्भरेहिं सयणेहिं

मित्तकलिएहिं ? । अहवा बाहुबलेणं अरिबलभुयदप्पदलणेणं ॥ ८ ॥ जह नरए तह तिरियत्तणेऽवि विविहजम्म-मरणदुक्खेहिं । तवियाण नत्थि सरणं जियाण धणदारमाईहिं ॥ ९ ॥ तहा हि—जइया गरुयायवसलिलपूरसीयाइ-जणियदुक्खेहिं । तिरियभवंमि किलिस्संति पाणिणो तइय किं ताणं ? ॥१०॥ एवं मणुयभवंमिवि मच्छियमायंगडुंब-माईणं । उत्तमजाइमएणं कुलेसु जायंण अहमेसु ॥११॥ दालिद्दरोगदोहग्गसोगजरमरणवेयणत्ताणं । कत्तोऽवि परत्ताणं न अत्थि वित्थरियदुक्खाणं ॥ १२ ॥ एवं नाऊण जणा करेह धम्मंमि चेव सुपयत्तं । मरणंमि समावडिए जेण न परिदेवणं कुणह ॥ १३ ॥ अविय--पाणवहाईदोसाण कारणं होंति एत्थ जीवाणं । अत्थो कामो य तहा तो ते वज्जेह पुरिसत्थे ॥ १४ ॥ जओ--पाणिवहेणं लच्छी समज्जिया जेहि ते हु दुक्खाणं । जाया भायणमिह जलनिहि व्व सरियासहस्साणं ॥ १५ ॥ नहु कोवि वल्लहो इह नवि वेसो विज्जुविलसियसमाए । अण्णुण्णपुरिससेवणपराए वेसाएँ व सिरीए ॥ १६ ॥ दंसियकुडिलगईहिं कत्तो सोक्खं भवे सुहत्थीए । भोगेहिं भुयंगेहि व चित्तवियाररस हेऊहिं ? ॥ १७ ॥ जेहिं जिया करणरिऊ विजियं सयलंपि तेहि तेलोक्कं । इंदियनिग्गहणे च्चिय ता जइयव्वं जयत्थीहिं ॥ १८ ॥ इंदियवसगा पुरिसा वसवत्ती होंति सयललोयस्स । आसापासऽवबद्धा सहंति तहऽणेगदुक्खाइं ॥ १९ ॥

कइयावि इट्ठजोगे जंपि सुहं तंपि विसयतिसियाणं । न जणइ तत्तिं पउरंति सुमिणसंजणियसंगं व ॥ २० ॥ इय रिद्धीणं बुज्झियमसारयं तहय विसयसोक्खस्स । मोत्तूण इमे जुत्तं करेह ता धम्मपुरिसत्थे ॥ २१ ॥ एवं निसामिऊणं भयवओ वयणं संबुद्धा बहवे पाणिणो, पडिवण्णा केहिवि सव्वविरई, अण्णेहि पुण देससंजमो, अन्नेहि सम्मत्तंति, ततो वंदिऊण भयवंतं समुट्ठिया परिसा, तेवि संखसयगसावगा सोऊण तित्थयरदेसणं तुट्ठमाणसा परमभत्तीए अभिवंदिऊण जिणं जहागयं पडिगया, तंमि य दिणे पक्खियपडिकमणं साहूणं, तओ संखेण सयगाइसम्मुहं संलत्तं, जहा अज्ज साहूणं पक्खियं, परं अम्हेहिं पोसहवयं न गहियं, तेण विउलं असणपाणखाइमसाइमं करावेऊण तुब्भेहिं चेव सह अज्ज भोयणं कायव्वं, ततो सयगेण भणियं--जइ एवं ता मम चेव गेहे तुब्भे एह जेण अहमेव साहम्मियवच्छल्लं करेमि; पडिवण्णं संखेण, गया सयं सयमावासं, गंतूण सयगेण गिहं कारियं अट्ठारसवंजणाउलं अणेयभक्खभोज्जपेयतांबूलसज्जसंजुयं सुविउलमाहारजायं, संखोऽवि निययावासमणुपत्तो चिंतेइ—नेयं सुंदरं कयं, जं मए सयगस्स पुरओ तग्गिहे भोयणमब्भुवगयं, जओ अज्ज पक्खसंधी एयंमि य दिणे अण्णयावि अम्हे पोसहकरणपुव्वं पोसहसालाए चिट्ठामो, ता अज्जंपि मए सविसेस-

धम्माणुट्ठाणपरेण एगागिणा गहियपोसहेण पोसहसालाए ठायव्वं, ततो पुच्छिया उप्पला, तीएवि भणियं—सामि ! इमं चेव जुत्तं, तओ सो उम्मुक्कमणिसुवण्णवत्थालंकाराइवित्थरो गओ पोसहसालं, पडिवज्जिऊण चउव्विहं सव्व-पोसहं चिट्ठइ पसत्थज्झाणोवगओ । इओ य सयगो भोयणसमए जाए जाव न पासइ समागयं संखं तस्सेव गिहं पत्तो ताव तओ उप्पलं भणइ—सुरसाविए ! कहिं गओ संखो ?, तीए भणियं—पोसहसालाए, तओ सोऽवि पत्तो तहिं, दिट्ठो मुणिव्व पसत्थज्झाणोवगओ संखो, पविट्ठो निसीहियापुरस्सरं पडिक्कमणं इरियावहियं आलोइय गम-णागमणाए निमंतेइ वंदिऊण, जहा एह तुब्भे अइक्कमेइ भोयणवेला, तओ संखेण भणियं—न मे कप्पइ अज्ज एवं काउं पडिवण्णसव्वपोसहस्स, तओ नाऊण तव्वइयरं गओ इमो सगिहं, समं अण्णेहिं साहम्मिएहिं भुत्तो भोयणं, संखस्स विचित्तधम्मवावारपरायणस्सऽइक्कंतो वासरो, एत्थंतरंमि अत्थगिरिसिहरावलंबी संवुत्तो दिवस-यरो, तओ किं होइउं पवत्तं भुयणे ?, अविय—अलिणो निबद्धराया मोत्तुं मउलंतकमलसंडाइं । वच्चंति वियसियं कुमुयमहव मलिणा न थिरपेम्मा ॥ १ ॥ अरयं व सप्पहे दप्पणेव्व दिट्ठिं खिवंति रविबिंबे । वल्लहघरूसुयाओ कयसिंगाराओ तरुणीओ ॥२॥ अरुणरविकिरणरंजियगिरिसिहराइं समुण्णयाइ तहा । उत्तत्तकणयमइयाइं मेरुसिंगाइं व

सहंति ॥ ३ ॥ आसन्नविरहसंकाराविहुत्तनिहित्तनयणवत्ताइं । जायाइं गुरुयउव्वेयभायणं चक्कमिहुणाइं ॥ ४ ॥ एक्कं मुणालनालं गहियं चंचूहि चक्कमिहुणेणं । तच्छिद्दण्णोण्णाहियपवेसणत्थं च विरहभया ॥ ५ ॥ नासियनीसेसतमो विइण्णसोहोवि सयलभुवणस्स । सूरोवि जाइ अत्थं अवरेसुं का थिरत्तासा ? ॥ ६ ॥ अह विज्जुपुंजसच्छहनियतेयारुणियअवरजलहिजलो । गयणंगणंमि बहलो संझाराओ समुच्छलिओ ॥ ७ ॥ मलिणे उव्वेयणए जणस्स तिमिरंमि समुहमिंतंमि । कह थिरराओ कीरउ संझाए रुइररूवाए ? ॥ ८ ॥ संझासहीविओए दिसाण वयणाइ निम्मलाइंपि । सोएणव सामाइं कयाइं अइबहलतिमिरेण ॥ ९ ॥ नीलपडणव सयलं समोत्थयं महियलंपि संजायं । संतमसपूरपूरियमवहियनिन्नुन्नयविभागं ॥ १० ॥ पसरंतबहलगंधाणुसारओ लेंति सुरहिकुसुमेसु । घणतिमिरच्छाइयलोयणावि चंचरियसंघाया ॥ ११ ॥ खणमेत्तेण य चंदो वम्महरज्जाभिसेयकलसो व्व । उवठविओ पुव्वदिसावहूएँ जोण्हाजलाउण्णो ॥ १२ ॥ तह निम्मलावि किरणा ससिस्स विरहदुयाण तरुणीणं । न सुहाइ अहव सव्वस्स सुहयरो न खलु सव्वोऽवि ॥ १३ ॥ एवं च निब्भरे कामियणमणहरे पयट्टे पओससमये सो संखसावओ निव्वत्तियदेववंदणाइआवस्सयकिच्चो काऊण जामिणीजामदुगं जाव सज्झायं सुदक्खुजागरियं

जागरमाणो इमं चिंतिउं पयत्तो–जाए पभायसमए जाव न गंतूण वंदिओ वीरो । ताव न पोसहमेयं पारेउं कप्पए मज्झ ॥ १ ॥ इत्थं च पसत्थझाणोवगयस्स कमेण वोलीणा रयणी, परिगलियतारतारयनियरकुसुमसमिद्धिस्स तुंगगयणंगणतरुस्स परिपक्कफलं पिव पच्छिमादिसादीहसाहाए लंबिउं पवित्तं ससिमंडलं, समुल्लसिया पुव्वादिसाए अरुणच्छाया, तरणिकिरणसंफासवियसमाणकमलमउलमालामयरंदबिंदुसंदोहावहाराणुसारलग्गचंचरीयकुडियभीउव्व मंदमंदसंचारी रयणिसमयससालग्गगाढसुरयसंगामसमकिलंतकामिणीसेयसलिलावहारी पसरिओ सिसिरपहाओ य मारुओ, एयंमि अंतरे विहियपाहाउयसंझावस्सओ निग्गंतूण पोसहसालाओ जहा महामुणी तहा पंचसमियाइउवउत्तो गओ भगवओ महावीरस्स वंदणत्थं कोट्ठयचेइयं संखसावओ, दिट्ठो तिलोयबंधू पमोयभरनिब्भरयाए पयट्टजलवाहवाहपूरिज्जमाणलोयणेण पप्फुल्लवयणकमलेण य तिपयाहिणापुव्वं वंदिओ भावसारं, थोउं च पवत्तो, अविय–जय सयलभुवणबंधव ! जय करुणामयरसोहसरिणाह ! । जय सिद्धत्थनराहिवतिसलादेवीण कयहरिस ? ॥ १ ॥ जय जम्मण्हवणचालियसुरगिरिकयगरुयहरिचमक्कार ! । जय वालकालमुट्ठिप्पहारअवहरियसुरदप्प ? ॥ २ ॥ जय सुरवरपुच्छियसद्दसत्थवित्थारकहियपरमत्थ ! । जय

चत्तसयलसंसारसंग! संगहियपव्वज्ज ? ॥ ३ ॥ जय कुवियसुराहिवमुक्कवज्जसंगभीयचमरकयरक्ख ? । जय जियसंगमयामर ! जय जय उप्पण्णवरनाण ? ॥ ४ ॥ इह जम्मणमरणपरंपराण नरतिरियनारयसुरेसु । निव्विण्णो जय वच्छल ! नेसु समं सिवपुरिं वीर ! ॥ ५ ॥ ततो पणमिऊण सेसएवि गोयमाइमुणिवरे उवविट्ठो उचियमहीवट्ठे, इओ य सयगाइसमणोवासया पभाए चेव ण्हाया कयबलिकम्मा समागया तत्थेव तित्थयरवंदणत्थं, तित्थयरं वंदिऊण निसण्णा जोग्गभूमीए, एत्थंतरंमि पणामपुव्वं निवेसिऊण कमलमउलसमसंजलिपुडं भालयले भणियं संखेण—भयवं ! कोहवसट्टे जीवे किं बंधई किं चिणाइ ?, आह जिणो-आउयवज्जाओ सत्त कम्मपयडीओ भो संखा ! ॥ १ ॥ एवं माणवसट्टे पुच्छा मायाएँ तहय लोभे य । सव्वत्थ उत्तरं एयमेव भणियं जिणिंदेणं ॥ २ ॥ ताहे पुट्ठो सामी सयगाईहिं जहा इमो संखो । हीलइ अम्हे कल्लं जं न कओ पोसहो तेण ॥ ३ ॥ सामिणा भणियं-नेयमत्थि,—पियधम्मो दढधम्मो जागरिओ तह सुदक्खुजागरियं । एसो ता मा निंदह एयमसब्भूयभणणेणं ॥ ४ ॥ तत्थेव तओ पुच्छा गोयमसामिस्स कइविहा भंते ! । जागरिया पन्नत्ता !, तिविहं तं आह तित्थयरो ॥ ५ ॥ बुद्धाबुद्धसुदक्खूभेएणं तत्थ बुद्धजागरिया । जा केवलस्स सयउवउत्तभावस्स होइ ठिई ॥ ६ ॥ बीया मिच्छदिट्ठीणऽबुद्धतत्तओ

पमत्ताणं । निद्दाविमोक्खणा तइय होइ पुण सम्मादिट्ठीणं ॥ ७ ॥ तेच्चिय जेण सुदक्खा सुध-
म्मन्चितापरा तओ तेऽवि । भीयमणा तं सोउं खामंति पुणो पुणो संखं ॥ ८ ॥ एगट्ठा पासिणाइं
पुच्छंतट्ठाइ आइयंति तहा । एयत्थो अट्ठपए उतररूवे पगेण्हंति ॥ ९ ॥ पासिणाइं पुच्छिओ जाण साहई जिण-
वरो महावीरो । वच्चंति तओ गेहं वंदित्तु पुणोवि जिणचंदं ॥ १० ॥ गोयमसामीवि पुणो भणइ जिणं वंदिऊण
नाह । इमो । पव्वइहि किं संखो अगारवासं परिच्चइउं ? ॥ ११ ॥ तित्थयरेण य भणियं—गोयम ! न पव्वइस्सइ
केवलमेसो पभूयवरिसाइं । पालियसावगधम्मो, संपत्ते कालमासंमि ॥ १२ ॥ कालं काउं विहिणा, सोहम्मे होइउं
सुरत्तेण । तत्तो चुओ समाणो महाविदेहंमि सिज्झिहिइ ॥ १३ ॥ शङ्खकथानकं समाप्तम् ॥

आनन्दकथानकं तु—अत्थि इहेव भरहवासे वासवपुरं पिव विबुहमणसंतोसजणयं जणयाइत्रिणयप्पहा-
णपउरजणाहिट्ठियं ठियनाणाइगुणसुसाहुजणज्झाणकुंतग्गभिण्णमयणदंसणुप्पन्नसोयभरविहुररइपलात्राणुकारिसु-
व्वमाणभवणवावीविहारिहारिहंससारसाइसउणसंघायकयकोलाहलं लाहलद्धप्पसिद्धिसुद्धववहारववहरंतविढत्तसं-
पया पयाणसमुवज्जियासमुदंतपवरकित्तिवित्थरालंकरियपउरवाणियं वाणियगामं नाम नयरं, जं सबाला-

यवंव कणयसिलाविणिम्मियजिणभवणभित्तिपसरंतपहाजालेण हरिसद्दलं(सद्धणुं) व इंदनीलमहानीलमरगयाइमणिघडियजिणिंदमहापडिमापयट्टकिरणमालाहिं सुररायधणुहसहस्ससंजुयं व रविरहतुरंगमग्गावहारितुंगदेवहरयसिहरसंठियविचित्तरयणनिस्सरंतमऊहसंघाएहिं, अवि य–जत्थ निसासुवि रमणीयरमणिआभरणमणिहयतमासु । विहडंति न दिणबुद्धीए गेहवावीसु चक्काइं ॥ १ ॥ तत्थासि निसियकरालकरवालप्पहारपहयवइरिवारणघडाकुंभयडुच्छलियबहलमुत्ताहलचच्चियसंगामभूमिमंडलो भूमिमंडलप्पसिद्धमाहप्पसत्तुसामंतापराजिओ जियसत्तू नाम नरवई, सयलंतेउरप्पहाणा पहाणरूवलावण्णसोहग्गाइगुणसमुदयधारिणी धारिणी नाम तस्स महादेवी, तत्थेव य वेसमणोव्व धणेणं तरणिव्व सरीरदित्तयाए चंदोव्व सोमत्तेणं जलहिव्व गंभीरभावेण सेलेसोव्व थिरत्तगुणेण माणणिज्जो जणस्स अपरिभवणिज्जो खलवग्गस्स अच्चणिज्जो ललियलावण्णाइगुणालंकियलीलावईनयणनीलुप्पलाणं अपरिमियचायभोयविलासप्पमुहगुणजणियसयलजणाणंदो आणंदो नाम गाहावई परिवसइ,—तस्स य हिरण्णकोडी चत्तारि कलंतरंमि वट्टंति । चत्तारि निहाणगया, चत्तारि पवित्थरपउत्ता ॥ १ ॥ चत्तारि य गोवग्गा वग्गे वग्गे य दससहस्सा । सो चेव पुच्छणिज्जो

जणस्स कज्जेसु बहुएसु ॥ २ ॥ सो चेव मेढिभूओ पमाणभूओ य तुंबभूओ य । नियकुडुंबस्सवि सयल-
कज्जवट्टावओ तह य ॥ ३ ॥ अविय सहावेण चेव जो—करुणापहाणहियओ, पुव्वाभासी पियंवओ दक्खो ।
गुरुदेवपूयणरओ परोवयारी रुइररूवो ॥ ४ ॥ तस्स य रंभव्व सुराहिवस्स गोरिव्व तिउरदहणस्स । नामेण
सिवाणंदा, आसि पियाऽणुवमलायण्णा ॥ ५ ॥ निम्मलसीलाहरणा असरिसरूवा गुणगणोवेया । सद्धम्मकम्म-
निम्मलजलोहनिद्धोयपावमला ॥ ६ ॥ तीए सह पंचप्पयारं मणुयलोयसारं तस्स विसयसुहमणुहवंतस्स अइक्कंतो
कोइ कालो । इओ य तस्सेव नयरस्स उत्तरपुरत्थिमे दिसीभाए अत्थि दूइपलासं नाम चेइयं, तत्थऽण्णया
सुरासुरसिद्धगंधव्वजक्खाइदेवनिकायनायगेहिं थुव्वमाणो पसरियपहाणसुक्कज्झाणहव्ववाहनिदड्ढघायकम्मसमुब्भू-
यकेवलण्णाणो सुरकयकणयमयनवनवसंखकमलविणिवेसियपायपंकेरुहो वियासयंतो विविहजणवएसु भविय-
लोयपउमसंडे समागओ महावीरतित्थयरो, आणंदिया तन्नयरनिवासिणो लोया, समागया जिणचलणं-
तियं, एत्थंतरंमि वद्धाविओ तन्निउत्तचरपुरिसेहिं जियसत्तू राया, सो य तक्खणंमि चेव समुट्ठिऊणासणाओ
गरुयभत्तिजायदेहबहलपुलउब्भेओ सहामज्झ एव सत्तट्ठ पयाइं अणुसरिऊण जिणाभिमुहो नमो

नमो भगवओ महावीरसामिपायाणंति भणंतो धरणिनमियजाणुत्तिमंगो पणमिऊण भयवंतं पुणो ठाऊण सयंमि सीहासणे दाविऊण वद्धावयपुरिसस्स दीणाराणं अद्धतेरस लक्खे काराविऊण नियपुराओ आरब्भ जाव दूइपलासचेइयं मयरंदगंधलुद्धालिमालामणोहारिझङ्कारबहिरियदिसाविवरं कुसुमोवयारं निम्माविऊण उद्धपसरंतरयणकिरणावलीभासुराओ तुंगतोरणमालाओ धराविऊण मणिकणयकलहोयमयाइं विविहमंगलकलसे विरयाविऊण ठाणट्ठाणेसु पवणपहोलंतरत्तासोयाइपल्लवचंदणमालाओ चलिओ वंदणत्थं भयवओ सयलसामंताइबलसमन्निओ संतेउरपुरपरियणो, पत्तो समोसरणभूमिं, जीए गयणयलविमलफलिहसिलासंचयरइयमाजोयणपरिमंडलं विरायए पउमरायमणिमंडियं कोट्टिमुच्छंगं, अविय—बिउणियदिणयरकिरणाइं जत्थ रइयाइं देवनिवहेण। रेहंति रयणकंचणरुप्पयपायारवलयाइं ॥ १ ॥ चंचरियकलयलारवमुहलो भवियाण दूरसरियाणं। हक्कारणुज्जुओ इव सुररइओ जत्थ कंकेल्ली ॥ २ ॥ रइयं च तस्स मूले सोहइ करजालबद्धपरिवेसं। जत्थ बहुवण्णरुइरुइररयणसीहासणचउक्कं ॥ ३ ॥ गयणंगणंमि जयदुंदुहीओ नवजलयगहिरनायाओ। जत्थऽइभत्तीए पवाइयाओ तुट्ठेहिं तियसेहिं ॥ ४ ॥ पिसुणियतिहुयणासुपहुत्तणाइं धरियाइ जिणवरस्सुवरिं। तिण्णि य सियायवत्ताइं जत्थ रेहंति दिव्वाइं ॥ ५ ॥ इय कित्तियं च कीरउ

वण्णणयं समवसरणभूमीए ?। रइऊण जं सयं चिय अमराविहु विम्हयं पत्ता ॥६॥ तओ तं दट्ठूण परमविम्हओ फुल्ललोयणेण पविसिऊण तयब्भंतरं कयजिणपयक्खिणातिएण राइणा पणमिओ भावसारं तित्थयरो, एत्थंतरंमि आणंदगाहावईवि महया विभूईए समागओ भगवओ वंदणवडियाए, वंदिऊण भयवंतं निविट्ठो जहोइयट्ठाणंमि, तयणंतरं च सिवपुरीपयट्टभवियलोयमग्गप्पयासणत्थं ताडावियपयाणमंगलपडहसद्दाणुकारिणा महुरगंभीरेण सरेण पारद्धा भयवया धम्मदेसणा, अविय——चइऊण मोहनिद्दं सासयकज्जुज्जया जणा ! होह । घडिया छलेण आउयदलस्स तुट्टंति खंडाइं ॥ १ ॥ हेयाहेयविभागं अगम्मगम्माइं जेण नो मुणइ । जागरमाणोऽवि जणो समोत्थओ मोहनिद्दाए ॥ २ ॥ विहडंति धणाइं सुसंचियाइं विहडंति बंधवा निद्धा । विहडइ सव्वं अन्नंपि मोत्तुमेक्कं जए धम्मं ॥ ३ ॥ सोच्चिय सासयकज्जस्स साहओ बीयमंकुरस्सेव । निन्नासियसयलदुहो संपाइयसोक्खसंघाओ ॥ ४ ॥ तहाहि—दोसोवरमसरूवो धम्मो जीवस्स चेव एस गुणो । दोसा पाणिवहाई तदुवरमे सव्वसंवरणं ॥ ५ ॥ तम्मि य न कम्मबंधो होइ नवो जं च पुव्वबद्धंति । तं सुद्धझाणतवभावणाहिं नासेइ सव्वंपि ॥ ६ ॥ एवं च—सासयकज्जं मोक्खो सोऽवि य जीवस्स चेव पज्जाओ । नीसेसकम्म-

विगमे नियरूवावट्ठियसरूवो ॥ ७ ॥ नियरूवं पुण जीवस्सऽणंतनाणं चऽणंतसोक्खं च । विरियमणंतं दंसणमणंतयं न उ अभावो तं ॥ ८ ॥ जाव य नऽज्जवि एसो जायइ जीवस्स ताव सोक्खाइं । संसारियाइं सुगईसु हवंति न कुगइदुक्खाइं ॥ ९ ॥ जइया य अहक्खायं, सव्वविसुद्धं खु सव्वसंवरणं । तइया सासयसोक्खो होही मोक्खो न संदेहो ॥ १० ॥ ता सव्वसंवरे च्चिय समुज्जमं कुणह भो जणा ! मोत्तुं । संसारवित्थरममुं निरयाइदुहोहसंजणयं ॥ ११ ॥ एवं निसामिऊण संबुद्धा बहवे पाणिणो, जाया सव्वसंवरसमुज्जया, तओ पणामपुव्वं मत्थए अंजलिं काउं भणियमाणंदगाहावइणा—जा सव्वसंवरं मुणिवरिंद ! काउं न होज्ज सामत्थी । किं तस्स परित्ताणं हवेज्ज अम्हारिसस्स भवे ? ॥ १२ ॥ भयवया भणियं—जो सव्वसंवरं न हु करेइ सो देससंवरं कुज्जा । बारसविहपंचाणुव्वयाइ गिहधम्मरूवं तु ॥ १३ ॥ ताओ च्चिय संसारे होज्ज परित्ता विचित्तचित्ताणं । नरयाइदुग्गईवारणंमि जं सोऽवि सुसमत्थो ॥ १४ ॥ सो चेव सव्वसंवरहेऊवि हवेज्ज पयरिसं पत्तो । जत्तो सासयसुक्खं लहेज्ज मोक्खं निरासंसो ॥ १५ ॥ आणंदेण भणियं—जइ एवं ता अहं तुम्हमंतिए इमं चेव देससंवरं पवज्जामि, भयवया भणियं—अहासुहं देवाणुप्पिया ! मा पडिबंधं करेहि, तओ दुविहं तिविहेण पच्चक्खायाइं थूलपाणाइवायथूल-

मुसावायथूलादत्तादाणाइं, पवण्णो सदारसंतोसं, सदारेऽवि सिवाणंदं मोत्तुं अण्णस्स कओ जावज्जीवं परिहारो, गहियमिच्छापरिमाणं जहा दुवालस कोडीओ हिरण्णस्स चत्तालीस सहस्सा गोवग्गाणं पंच २ सयाइं हलसगड-वोहित्थाणं इच्चेमवाइ मोत्तुं अण्णस्स जावज्जीवं नियमो, एवं पंचाणुव्वयाइं पडिवज्जिऊण गहियाइं सत्त सिक्खावयाइं जहासत्तीए, परियाणियाइं सव्वेसिंपि वयाणं सम्मत्तमूलाण दुविहपरिण्णाएवि अइयारट्ठाणाइं, अण्णेऽवि अब्भुवगया विचित्ता अभिग्गहा, तओ वंदिऊण भावसारं तित्थयरं तित्थयरप्पणीयधम्मसंपत्तीए अत्ताणं बहु मन्नमाणो गओ नियगेहं, साहियं सिवाणंदाए जहा पडिवज्जिओ अज्ज मे भयवओ महावीर-स्स सयासे सम्मत्तमूलो पंचाणुव्वयसत्तसिक्खावइओ सावगधम्मो, तीए भणियं—जइ एव ता अहंपि पडिव-ज्जामि एयं, तओ तेण अब्भणुण्णाया महया विच्छड्डेण गया भगवओ समीवे, तीएऽवि पडिवज्जिओ तहेव तिलोयबन्धुपायमूले धम्मदेसणासुणणपुव्वं सावगधम्मो, पणमिऊण जिणं गया नियावासंमि । इत्थंतरंमि गोयमसामिणा अभिवंदिऊण तित्थेसरं भणिअं, जहा—आणंदे समणोवासए इहेव भवे तुम्ह समीवे पडिवज्जिही साहुधम्मं ?, भयवया भाणियं—न, किंतु इमेण चेव मम समीवे पत्तेण समणोवासगपरियाएण वीसं

वरिसाणि चिट्ठित्ता समाहीए कालमासे कालं काउं सोहम्मकप्पवत्तिअरुणविमाणे चउपलिओवमाऊ देवो होही, तओ चुओ महाविदेहे सिज्झिही। इओ य-आणंदसावयस्स सिवाणंदाए सावियाए सद्धिं सावगधम्माबाहाए बुहजणपसंसणिज्जं विसयसुहमणुहवंतस्स अइक्कंताइं चोदस वरिसाइं,-पण्णरसमे य वरिसे कयाइ रयणीए चरिमजामंमि। जाया इमस्स चिंता जहा ममं जेट्ठपुत्तंमि ॥१॥ खिविउं कुडुंबभारं पोसहसालाए ठाइउं जुत्तं। कोल्लायसन्निवेसे सनाइगिहमज्झरइयाए॥२॥तओ पभायसमए काऊण सव्वंपि जहाचिंतियं तस्सेव वाणियगामस्स नाइदूरे उत्तरपुरच्छिमदिसावत्तिकोल्लागसन्निवेसवासिनियसयणाइगिहमज्झंकारियं पविट्ठो पोसहसालं, तत्थ दंसणाइयाओ एक्कारसवि पडिमाओ जहाविहिं कमेण फासियाओ, पच्छा आढत्ता वीसइमे वरिसे मारणंतियसंलेहणा, तीए झोसियसरीरस्स पसत्थज्झवसाणलेसापरिणामस्स कयाइ समुप्पण्णमोहिणाणं, तेण य-सोहम्मं जावुड्ढं दिसासु तिसु तिरियमुयहिमज्झं जा। हेट्ठा लोलुयनरयं उत्तरओ जाव हिमवंतं ॥ ३ ॥ सो पासिउं पयत्तो एयंमि य अंतरे महावीरो। तत्थेव विहरमाणो समोसढो बाहिरुज्जाणे ॥ ४ ॥ न सक्केइ य भयवओ गंतुं वंदणत्थं आणंदो, तओ य कयाइं-भिक्खडाए पविट्ठं गोयमसामिं भणेइ आणंदो। भयवमणुग्गहह ममं जेण वंदामि ते पाए ॥५॥ तं सोउं वंदावइ सिग्घं तत्थेव गोयमो गंतुं। वंदित्ता

आणंदो पुच्छइ ओही गिहत्थस्स ॥६॥ किं जायइ एमाणो ? भणइ तओ गोयमो हवइ किं तु । नहु एमाणो ताहे, विप्पाडिवत्तीएँ जायाए ॥ ७ ॥ भणियं आणंदेणं गोयम ! पुच्छेज्ज जिणवरं वीरं । मा कुण विप्पडिवत्तिं अम्हं तुम्हं च स पमाणं ॥८॥ तओ भिक्खानियत्तेण पुच्छिओ गोयमसामिणा महावीरो—भयवं ! ओहिण्णाणपरिमाणे किं आणंदो असब्भूयवाइत्ति मं खामेउ ? अहं वा आणंदं खामेमि ?, परमेसरेण भणियं—खामसु गंतुं आणंदसावयं तुज्झ एत्थ अइयारो । गोयम ! जाओ विवरीयओहिपरिमाणकहणेण ॥ १ ॥ तो तक्खणंमि आणंदखामणं कुणइ गोयमो गंतुं । आणंदोऽविहु विहियाणसणो पत्तो सुरावासं ॥ २ ॥ आनन्दकथानकं समाप्तं, एतच्च विस्तरत उपासकदशाङ्गे ॥ अधुनाऽस्यैव व्रतस्य यतनोच्यते—

जहसत्तीए उ तवं करेइ ण्हाणाइ परिमियं चेव ।
दिय बंभयारि रत्तिं मियं च वावारसंखेवं ॥ १६ ॥

शक्तिः—सामर्थ्यं तस्या अनतिक्रमो यथाशक्ति तेन, किमित्याह—'तपः' अनशनादिरूपं 'करोति' निर्वर्त्तयति, 'तुः' पूरणे, भावार्थस्त्वयम्—बह्वी स्तोका वा यावती तपःकरणे शक्तिस्तस्या अनुल्लङ्घनेनानशनायामाम्लादि विदधाति,

तथा 'स्नानं' शौचं तदादिर्यस्य विलेपनादेस्तत्स्नानादि तच्च 'परिमितं' परिमाणवत् करोति, चकाराद्यतनया च भूप्रेक्षणजलगालनादिलक्षणया, यदुक्तं—" भुमीपेहणजलछाणणाइ जयणा उ होउ ण्हाणंमि।" एवकारोऽवधारणेऽपरिमितादिव्यवच्छेदार्थः, तथा 'दिवा' दिवसे ब्रह्मचारी 'रात्रौ' रजन्यां ' मितं च ' साङ्क्षिप्तं च प्रहरादिमानेन गण्डपीलापूतिनिष्काशनमिवाब्रह्मासेवनं करोतीति प्रस्तावाद्गम्यते, तथा व्यापारा—गृहहट्टादिसत्काश्चेष्टाविशेषाः तेषां सङ्क्षेपणं सङ्क्षेपः—समासस्तं करोतीति वर्त्तते, इह च ' जहसत्तीए उ तवं करेइ ' इत्यनेनाहारपौषधस्य ' ण्हाणाइं परिमियं चेवे ' त्यनेन च शरीरसत्कारपोषधस्य ' दिय बंभयारि रत्तिं सियं चा' नेन तु ब्रह्मचर्यपौषधस्य ' वावारसंखेव '-मेतेन चाव्यापारपोषधस्य यतना प्रतिपादिता, इयं च पौषधेऽगृहीतेऽपि गाथानिर्दिष्टविधिना वर्त्तमानस्य भवतीति गाथार्थः ॥ पौषधातिचारा इदानीमभिधीयन्ते——

संथार थंडिलेऽवि य अप्पडिलेहापमज्जिए दो दो ।
सम्मं च अणणुपालणमइयारे पंच वज्जेज्जा ॥ ११७ ॥

संस्तीर्यते--स्वापार्थमास्तीर्यत इति संस्तारः स च स्थण्डिलानि च--कायिकोच्चारभूमयः संस्तारस्थण्डिलं,

प्रायेण संस्थापयति, दाहे वा शरीरं सिञ्चति, ब्रह्मचर्ये त्वैहलौकिकान् पारलौकिकान् वा भोगान् प्रार्थयते, शब्दादीन् वाऽभिलषति, ब्रह्मचर्यपौषधः कदा पूर्णो भविष्यति, त्याजिता ब्रह्मचर्येणेति वा चिन्तयति, अव्यापारे सावद्यानि व्यापारयति, कृतमकृतं वा चिन्तयतीत्येवं पञ्चातिचारविशुद्धोऽयमनुपालनीय इति गाथाभावार्थः ॥ भङ्गद्वारमितोऽभिधीयते—

उवसग्गपरीसहदारुणेहिं कम्मोदएहिं नासेज्जा ।
रयणं व पोसहं खलु अइक्कमाईहिं दोसेहिं ॥ ११८ ॥

उपसर्गाश्च—दिव्यादयः षोडश परीषहाश्च—क्षुदादयो द्वाविंशतिरुपसर्गपरीषहास्तैर्दारुणाः—रौद्रा ये ते उपसर्गपरीषहदारुणास्तैरुपसर्गपरीषहदारुणैः, कैरेतैरिति चेदाह—' अतिक्रमादिभिर्दोषैः ' अतिक्रमः आदिरेषां व्यतिक्रमातिचारानाचाराणां ते तथा तैर्दोषैः—दूषणैः, इह चोपसर्गपरीषहेषु सत्सु येऽतिक्रमादयो भवन्ति ते तद्दारुणाः, तैः किमित्याह—' नाशयेत् ' भ्रंशयेत् पौषधं ' खलुः ' अवधारणे, नाशयेदेवेत्यत्र योज्यः, न केवलमुपसर्गपरीषहदारुणैः, कर्मोदयैर्वा—ज्ञानावरणाद्युदयरूपैर्वाऽतिक्रमादिभिः, वाशब्दोऽत्राध्याहार्यः, अतिक्रमादिस्वरूपं चाधाकर्माङ्गीकृत्येदृशमा-

सहस्सो चउव्वीसो ॥ १ ॥ " त्ति, तथा 'सम्यक्' अवैपरीत्येन 'अननुपालनं' अकरणं, तच्च पञ्चमोऽतिचारः, चकारस्य सम्यगननुपालनं चेत्यत्र व्यवहितसम्बन्धाद्, एतानतिचारान् पञ्च 'वर्जयेत्' परिहरेत्, पौषधव्रतस्येति प्रस्तावाद् गम्यते । न च स्वमनीषिकया व्याख्याता एते, यदुक्तं निर्युक्तिकृता—" पोसहोववासस्स समणोवासएणं इमे पंच अइयारा जाणियव्वा न समायरियव्वा, तंजहा—अप्पडिलेहियदुप्पडिलेहियसेज्जासंथारए १ अपमज्जियदुप्पमज्जियसेज्जासंथारए २ अप्पडिलेहियदुप्पडिलेहियउच्चारपासवणभूमी ३ अपमज्जियदुपमज्जियउच्चारपासवणभूमी ४ पोसहोववासस्स सम्मं अणणुपालणयत्ति, " इह च वृद्धोक्ता सामाचारी—कृतपौषधो नाप्रत्युपेक्षितं दुष्प्रत्युपेक्षितं शय्यासंस्तारकं पौषधशालां वा सेवते, दर्भवस्त्रं वा भूम्यां संस्तृणाति, कायिकाभूमेश्चागतः पुनरपि संस्तारकं प्रत्युपेक्षते, अन्यथाऽतिचारः स्यात्, एवं पीठकादिष्वपि विभाषेति, एते च चत्वारोऽतिचाराः सर्वतोऽव्यापारपौषध एव भवन्ति, पञ्चमस्त्वाहारपौषधादीनां सर्वेषामपीति, अतिचारता चाद्यानां चतुर्णां प्रतीतैव, पञ्चमस्य तूपदर्श्यते—कृतपौषधोऽस्थिरचित्तः सन्नाहारे तावत्सर्वमाहारं तद्देशं वा प्रार्थयते, द्वितीयदिवसे वाऽऽत्मार्थमादरं कारयति, शरीरसत्कारे शरीरमुद्वर्त्तयति, दंष्ट्रिके केशान् रोमाणि वा शृङ्गाराभि-

शेभि, अत्र चाहारपौषधादीनां चतुर्णामपि चतुर्भिर्विशेषणैरुग्रतपश्चरणादिभिः क्रमेण भावना द्रष्टव्येति गाथार्थः ॥

उक्तं तृतीयं शिक्षाव्रतं, साम्प्रतं चतुर्थव्रतस्यावसरः, तत्रापि प्रथमद्वारस्येत्यतस्तत्तावदुच्यते—

साहूणं जं दाणं नायागयकप्पमन्नपाणाणं ।
सो अतिहिसंविभागो सद्धासक्कारकमसहिओ ॥ १२० ॥

ज्ञानदर्शनचारित्रैर्मोक्षं साधयन्तीति साधवो--यतयस्तेभ्यः साधुभ्यो यद् 'दानं' वितरणम्, अत्र "छट्ठिविभत्तीएँ भण्णइ चउत्थी" इत्यनेन चतुर्थी, केषां सम्बन्धि दानमित्याह—'न्यायागतकल्प्यान्नपानानां' न्यायेन-वणिक्कलादिनीत्या, नतु क्षत्रखननाद्यपन्यायेन, आगतानि—उपार्जितानि न्यायागतानि कल्प्यानि--यतिजनोचितानि, न त्वाधाकर्मादिदुष्टतयाऽयोग्यानि, अन्नपानानि—आहारपानीयानि, बहुवचनेन चादिशब्देनेऔषधवस्त्रपात्रादिग्रहः, कर्मधारयसमासश्चात्रैवं—कल्प्यानि च तान्यन्नपानानि च कल्प्यान्नपानानि न्यायागतानि च तानि कल्प्यान्नपानानि च तानि तथा तेषां यद्दानं, तत्किमित्याह—ज्ञानादिगुणसमन्वितस्तिथिपर्वादिनिरपेक्षमेव भोजनकालोपस्थाय्यतिथिः, तथा चोक्तम्—"तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना ।

गमे उपवर्णितं, यथा—" आहाकम्मनिमंतण पडिसुणमाणस्सऽइक्कमो होइ । पयभेयाइ वइक्कम गहिए तइएयरो गतिए ॥ १ ॥ " किमिव नाशयेदित्याह—' रत्नमिव ' चिन्तामण्यादिपदार्थमिव, अयमत्र भावार्थः—यथा कश्चित् प्रमादी प्राप्तमपि चिन्तारत्नादि प्रमादान्नाशयति तथा पौषधमतिक्रमादिदोषैरुपसर्गादिदारुणैः कर्मोदयैर्वा स्फेटयतीति गाथार्थः ॥ भावनाद्वारमिदानीम्—

उग्गं तप्पंति तवं, सरीरसक्कारवज्जिया निच्चं ।
निव्वावारा तह बंभयारि जइणो नमंसामि ॥ ११९ ॥

' उग्रं ' गाढं ' तप्यन्ते ' कुर्वन्ति ' तपः ' मासोपवासादि ये तान्नमस्यामीति सम्बन्धः, यत्तदोः शेषात्, तथा ' शरीरसत्कारवर्जिता नित्यं ' शरीरस्य—देहस्य सत्कारो—रागबुद्ध्याऽभ्यञ्जनस्नानाङ्गरागादिस्तेन वर्जिताः-त्यक्ता ' नित्यं ' सदा यावज्जीवमित्यर्थः, तथा ' निर्व्यापाराः ' सावद्यव्यापाररहिताः, ' तह ' त्ति सर्वपदेषु योज्यते तच्च योजितमेव, तथा ' बंभयारि ' त्ति ब्रह्म—अष्टादशभेदभिन्नं नवगुप्तिसनाथं ब्रह्मचर्यं तच्चरन्ति—सेवन्ते पालयन्ति ये ते ब्रह्मचारिणः, अत्र प्राकृतत्वाद्विभक्तिलोपः, ये एवंविधास्तान् ' यतीन् ' व्रतिनो ' नमस्यामि ' नमस्क-

एसो सुरसूसणाविणओ ॥ ३ ॥" त्ति, तथाऽपि पौषधोपवासपारणकेऽवश्यं साधुसंभवेऽमुं कृत्वा भोक्तव्यम् अन्यदा त्वनियम इति दर्शनार्थं पौषधानन्तरमभिहित इति गाथार्थः ॥ भेदोऽधुनाऽस्योच्यते—

असणं पाणं तह वत्थपत्तभेसज्जसेज्जसंथारो ।
अतिहीण संविभागे भेया अह एवमाईया ॥ १२१ ॥

अश्यत इति अशनं—ओदनादि पीयत इति पानं—क्षीराश्रावणसौवीरकद्राक्षापानकादि, एतौ द्वौ भेदौ, तथाशब्दो भेदान्तरसमुच्चये, तान्येवाह—' वस्त्रपात्रभैषजशय्यासंस्तारः ' इति, तत्र वस्त्रं—वासः कार्पासिकादि पात्रम्-अलाब्वादि भैषजं—त्रिकटुकादि शय्या—वसतिः संस्तारः—कम्बल्यादिलक्षणः, एतेषां च शय्यान्तानां द्वन्द्वे संस्तारकशब्देन मध्यपदलोपी तृतीयातत्पुरुषः, स चैवं—वस्त्रपात्रभैषज्यशय्याभिः सहितः संस्तारः वस्त्रपात्रभैषज्यशय्यासंस्तारः, एते पंच पूर्वकाभ्यां सह सप्त भवन्ति, एते चाशनादयः किमित्याह—अतिथिसंविभागे भेदाः, तत्रातिथिर्नाम सर्वारम्भनिवृत्त्यादिगुणप्रधानं पात्रं, यदुक्तं—" सर्वारम्भनिवृत्तस्तु, स्वाध्यायध्यानतत्परः । विरतः सर्वपापेभ्यो, दान्तात्मा ह्यतिथिर्भवेत् ॥ १ ॥" तस्मै संविभागो—धर्मार्थमशनादिदानं, तथोक्तम्—" संयमगुण-

अतिथिं तं विजानीयाच्छेपमभ्यागतं विदुः ॥ १ ॥ " तस्य संविभजनं संविभागः--पुरःपश्चात्कर्मादिदोपरहितपिण्डादिदानमतिथिसंविभागः, स कीदृक्षः ?, उच्यते—' श्रद्धासत्कारक्रमसहितः' श्रद्धा—भक्तिबहुमानरूपा सत्कारः—पादप्रमार्जनासनप्रदानवन्दनादिपूजा क्रमो—यद्यत्रौदनादि प्रथमं दीयते तद्रूपः, श्रद्धादिपदानां च त्रयाणां द्वन्द्वः ततस्तैः सहितो—युक्तः श्रद्धासत्कारक्रमसहितः, एतस्य च गाथासूत्रस्यायं भावार्थः—इह यद्यप्यनेकधा दानमभिहितं विद्यते, यदुक्तम्"—आदानगर्वसङ्ग्रहभयानुकम्पात्रपोपकारैः स्याद् । दानं धर्माधर्माभयैश्च दशधा मुनिभिरुदितम् ॥ १ ॥" तथाऽपि धर्मार्थं यद्दानं तद्रूपोऽयमतिथिसंविभागोऽनेन सूचितो, यतस्तल्लक्षणमिदं—" यत् स्वयमदुःखितं स्यान्न च परदुःखे निमित्तभूतमपि । केवलमुपग्रहकरं, धर्मकृते तद् भवेद्देयम् ॥ १ ॥ " अयं च यद्यपि श्रावकेण सदा कर्त्तव्य एव, यदुक्तं—" पइदिणं भत्तपाणेणं, ओसहेण तहेव य । अणुग्गहेह मे भयवं !, सावओ उ निमंतए ॥ १ ॥ " गृहप्रविष्टे च साधावयं विधिर्यथा—" गिहमागयस्स साहुस्स आसणं नियमसो उ दायव्वं । वंदिय सयं च वियरइ अहवा अण्णं दवावेइ ॥ १ ॥ ठियओ चिट्ठए ताव, जाव सव्वं पयच्छियं । पुणोऽवि वंदणं दाउं, भुंजई उ सयं गिही ॥ २ ॥ एन्तरसऽणुगच्छणया ठियस्स तह पज्जुवासणा भणिया । गच्छंताणुव्वयणं

एसो सुरसूसणाविणओ ॥ ३ ॥" त्ति, तथाऽपि पौषधोपवासपारणकेऽवश्यं साधुसंभवेऽमुं कृत्वा भोक्तव्यम् अन्यदा त्वनियम इति दर्शनार्थं पौषधानन्तरमभिहित इति गाथार्थः ॥ भेदोऽधुनाऽस्योच्यते—

असणं पाणं तह वत्थपत्तभेसज्जसेज्जसंथारो ।
अतिहीण संविभागे भेया अह एवमाईया ॥ १२१ ॥

अश्यत इति अशनं—ओदनादि पीयत इति पानं—क्षीराश्रावणसौवीरकद्राक्षापानकादि, एतौ द्वौ भेदौ, तथाशब्दो भेदान्तरसमुच्चये, तान्येवाह—'वस्त्रपात्रभैषजशय्यासंस्तारः' इति, तत्र वस्त्रं—वासः कार्पासिकादि पात्रम्-अलाब्वादि भैषजं—त्रिकटुकादि शय्या—वसतिः संस्तारः—कम्बल्यादिलक्षणः, एतेषां च शय्यान्तानां द्वन्द्वे संस्तारकशब्देन मध्यपदलोपी तृतीयातत्पुरुषः, स चैवं—वस्त्रपात्रभैषज्यशय्याभिः सहितः संस्तारः वस्त्रपात्रभैषज्यशय्यासंस्तारः, एते पंच पूर्वकाभ्यां सह सप्त भवन्ति, एते चाशनादयः किमित्याह—अतिथिसंविभागे भेदाः, तत्रातिथिर्नाम सर्वारम्भनिवृत्त्यादिगुणप्रधानं पात्रं, यदुक्तं—"सर्वारम्भनिवृत्तस्तु, स्वाध्यायध्यानतत्परः । विरतः सर्वपापेभ्यो, दान्तात्मा ह्यातिथिर्भवेत् ॥ १ ॥" तस्मै संविभागो—धर्मार्थमशनादिदानं, तथोक्तम्—"संयमगुण-

युक्तेभ्यः षड्जीवनिकायरक्षणपरेभ्यः । पञ्चेन्द्रियविरतेभ्यः समितेभ्यः पञ्चसमितिषु च ॥ १ ॥ समतृणमणिमुक्तेभ्यो यद्दानं दीयते सुपात्रेभ्यः । अक्षयमतुलमनन्तं, तद्दानं भवति धर्माय ॥ २ ॥ " नन्वत्र को हेतुः यदेवंविधपात्रेभ्यो दीयमानं दानमक्षयादिगुणविशिष्टं भवति ?, ब्रूमो, विधिविशेषाद्द्रव्यविशेषाद्दातृविशेषात्पात्रविशेषाच्च फलविशेष इति, इत्थं चेदमङ्गीकर्त्तव्यम् अन्यथा—"दंसणनाणचरित्तं, तवविणयं जत्थ जत्तियं पासे । जिणपण्णत्तं भत्तीएँ पूयए तं तहाभावं ॥ १ ॥ " इत्येतत्कल्पभाष्योक्तं विघटेत, नहि तत्र जिनप्रणीतदर्शनादिगुणसमुदायवत्पात्रपूजैव सफलेत्येतत्प्रतिपादितं, किन्तु ' जत्थ जत्तियं पासे ' इति वचनाद्यथासंभवभाविगुणपूजाऽपि फलविशेषहेतुर्भवत्येव, ततश्च यत्र समुदितगुणयोगस्तत्र पात्रे प्रदीयमानदानस्य महत्फलं, अन्यत्रापि दातुः स्वकीयभाववशेन विशिष्टमेव फलं, यदुक्तं व्यवहारभाष्ये—" निच्छयओ पुण अप्पेऽवि जत्थ वत्थुंमि जायई भावो । तत्तो सो निज्जरओ जिणगोयमसीहआहरणा ॥ १ ॥ " ' सीह ' त्ति सिंहजीवोदाहरणादिति, किञ्च—अनुकम्पादानस्य सर्वत्र जिनैरनिषिद्धत्वादेव चेदमवबुध्यते, तस्मात्स्थितमेतत्—द्रव्यदातृपात्रविधिसामग्र्याऽक्षयादिगुणं दानमिति, किमेत एव भेदा उतान्येऽपि केचन सन्ति ?, उच्यते, सन्ति, यत आह ग्रन्थकृत्—' भेदाः ' प्रकाराः ' अथैवमादिकाः ' इत्येवम्—उक्तप्रकारा अशनादय आदयो येषां कम्बलपादप्रोञ्छनकादीनां त एवमादय इति गाथार्थः ॥ तृतीयद्वारम्——

सोऊण अदिण्णेवि हु, कुरंगवरजुण्णसेट्ठिमाईणं ।
फलमिह निरंतरायस्स दाणवुद्धी सुहा होइ ॥ १२२ ॥

' श्रुत्वा ' आकर्ण्य, उपलक्षणं चैतद् दृष्ट्वेत्यस्य, किम् ?—फलं-साध्यं स्वर्गापवर्गादिरूपं, क ?—' इह ' अस्मिन् लोके प्रवचने वा, कस्य ?—' निरन्तरायस्य ' अप्रत्यूहस्य, ' दानबुद्धिः ' वितरणमतिः ' शुभा ' पुण्या सुखा वा--सुखहेतुः ' भवति ' जायते, क सति ?--' अदत्तेऽपि ' अवितीर्णेऽपि, आहारादाविति शेषः, केषामित्याह—कुरङ्गवरजीर्णश्रेष्ठ्यादीनां कुरङ्गश्च--हरिणो वरजीर्णश्रेष्ठी च—प्रधानपुरातनवणिङ्मुख्यः तावादी येषां ते तथा तेषां, अयमत्र भावार्थः—यद्यपि तथाविधसामर्थ्यभावात्कथञ्चित्साक्षाद्दानं न संपन्नं तथाऽपीहलौकिकं पारलौकिकं च दानफलं श्रुत्वा दृष्ट्वा वा निरन्तरायस्य प्राणिनो दानबुद्धिर्जायत एवेति गाथासमासार्थः ॥

विस्तरार्थः कथानकाभ्यामवसेयः, तत्र कुरङ्गकथानकमनर्थदण्डव्रते यत्पुरा वासुदेवचरितमुपवर्णितं तत्सर्वमेव तावत्कथनीयं यावत्कौशाम्बवने वासुदेवो जराकुमारक्षिप्तपुताडितः कथाशेषतां गतो बलदेवश्च सरसो जलमादाय समागतस्तं तथाऽवस्थमवलोक्य मूर्च्छया पतितो धरणीतले, प्रत्यागतचेतनश्च कियत्याऽपि वेलया सहान्तमुन्मुच्य

सिंहनादं येनायं मदीयभ्राता विनिपातितः स यदि सत्यमेव सुभटस्तदा ददातु मम दर्शनं, न खलु सुप्ते प्रमत्ते व्याकुले वा प्रहरन्ति धीराः, तन्नूनं पुरुषाधमः कश्चिदसावित्येवमुच्चशब्देन प्रतिपादयन् समन्ततो दिशश्चावलोकयन् पर्यट्य तत्पार्श्ववर्त्तिदेशं पुनः समागतो गोविन्दसमीपं, गाढमोहाच्छादितविवेकलोचनः प्रवृत्तश्च प्रलपितुं— हा भ्रातः ! जनार्दन ! पृथिव्यामेकवीर ! मामेकाकिनमपहाय क्व गतोऽसि ?, किंवा ममैवं प्रलपतोऽपि वाचं न ददासि ?, सम्प्रत्येष पुरुषोत्तम ! दिवसकरोऽस्तगिरिशिखरानुसारी वर्त्तते, तदुत्थाय विधेहि सन्ध्योपासनं, न ह्युत्तमपुरुषाः स्वपन्ति सन्ध्यासमये, रजनी चेयं बहलान्धकारा क्रूरश्वापदसङ्कुलायामटव्यां कथमेवं निगमनीयेत्यादि प्रलपत एव प्रभाता रजनिः, समुद्गतो दिनकरः, तथाऽपि यावन्नोत्तिष्ठति हरिस्तावत्त-त्स्नेहमोहितमना बलदेवस्तद्वियोगमनिच्छन्नात्मनः स्कन्धे समारोप्यैनं प्रवृत्तो गिरिकाननविवरेषु पर्यटितुं, अत्रा-न्तरेऽतिक्रान्ता अस्य षण्मासाः, ततो यः सिद्धार्थनामा सारथिः पूर्वगृहीतव्रतो देवीभूतः सोऽवधिज्ञानेनावलोक्य तदवस्थं बलदेवं तत्प्रतिबोधनाय समागतस्तं प्रदेशं, देवमायया दर्शितो बलदेवस्य पर्वतविकटकूटसङ्कटप्रदे-शेभ्य उत्तरन्महारथः, स च समभूमिमनुप्राप्तो गतः शतखण्डतां, ततस्तं संधातुमिच्छन् सिद्धार्थदेवो भणितो

बलदेवेन—भो मुग्धपुरुष ! यः तव रथो गिरिगह्वराणि विलङ्घ्यास्मिन् समे पथि शतखण्डीभूतः स कथमेष त्वया सन्धीयमानोऽपि प्रगुणो भविष्यति ?, देवेनोक्तं—य एष तव भ्राता अनेकेषु युद्धशतेषु युध्यमानो न मृतः स इदानीं युद्धं विनैव मृतो यदा जीविष्यति तदा रथोऽपि प्रगुणो भविष्यतीत्यादिदृष्टान्तैः प्रत्यानीतचेतनो देवेन स्वरूपमुपदर्श्य प्राग्वृत्तान्तकथनपूर्वकं प्रतिबोधितो बलदेवस्त्याजितो हरिकलेवरं, कारितो नदीद्वयपुलिने सत्कारमस्य, अत्रान्तरे भगवता अरिष्टनेमिना विज्ञाय बलदेवस्य प्रव्रज्यासमयं प्रेषितो विद्याधरश्रवणो, दत्ता तेन तस्य प्रव्रज्या, तामादाय तुङ्गिकागिरिशिखरे घोरतपश्चरणं कर्त्तुमारब्धः, एष प्रायेण च मासान्मासात्तृणकाष्ठहार-कादिभ्यो भक्तपानप्राप्तौ प्राणयापनां करोति, अन्यदा मासपारणकदिने भिक्षार्थं नगरमेकं प्रविष्टे तस्मिन्नेका कामिनी समुपारूढप्रौढयौवना पानीयादानायावटतटनिकटवर्त्तिनी तद्रूपातिशयसमाक्षिप्तमनस्कतया समासन्नवर्तिनं स्वबाल-कमपि रुदन्तमजानती घटककर्णभ्रान्त्या तद्गलक एव समाधाय रज्जुं कूपे प्रक्षेप्तुमारब्धा, समीपवर्तिना चान्येन सोपालम्भं निर्भर्त्स्य विरूक्षाक्षरैर्ग्राहिता प्रतिबोधं त्याजिता श्वासावशेषं गर्भरूपं, अयं च वृत्तान्तो जातो दृष्टिगोचरचारी बलदेवमुनेः, विषण्ण एष मनसा—हा धिग् विरूपं मे रूपं यदित्थं

दृष्टमात्रमपि स्त्रीणां मोहहेतुतयाऽसमञ्जसकारयितृ, तदिदानीं ममेदमेवोचितं यद्विजनारण्यावस्थानमिति विचिन्तयन्नेव स्त्रीजनाकुलेषु ग्रामनगरादिवासिमस्थानेष्वाहारार्थमपि मया न प्रवेष्टव्यमिति घोराभिग्रहं गृहीत्वा तत एव स्थानादनुपात्तभिक्ष एव विनिवृत्त्यानेकशशकशूकरकुरङ्गादिविविधश्वापदनिकेतनं वनं विवेश, तत्रस्थस्य चामुष्य कदाचिद्दिनदशकात्कदाचिद्दिनपञ्चदशकादेवमादिव्यवधानेन तन्मार्गागन्तृसार्थादिभ्यः संपद्यते कोऽपि कदाचिदप्याहारो, जायते तेन प्राणयापना, एवं च गच्छत्सु केषुचिद्दिवसेषु तस्य निर्व्याजप्रशमधनस्य महामुनेरुद्वीक्षणेन प्रपेदिरे वनचरा अपि बहवो भद्रकभावादिगुणसन्ततिं, न केवलं नरास्तिर्यञ्चोऽपि, एकश्च कुरङ्गशावः सततत‌दवलोकनोत्पन्नकर्मतानवसमुद्भूतजातिस्मरणोऽनवरतमेव तत्सेवाचिकीर्षया क्षणमपि न मुमोच तत्पार्श्वम्, अपि च-गच्छति गच्छति तिष्ठति तिष्ठति चाश्नाति चाश्नाति मुनीन्द्रे । भक्तिपरीतः स मृगो निजमित्रे सुहृदिवाव्याजः ॥ १ ॥ अन्येद्युश्च तस्यामेवाटव्यां नृपादेशेन गन्त्रीसमन्वित उपात्तोदात्तसंबलकः प्रासादोपयोगिकाष्ठग्रहणाय रथकार एकः समागत्य महातरुमेकमर्द्धकृत्तं कारयित्वा निशातकुठारकरैः कर्मकरैः संपन्ने प्रहरद्वयदिवसे तस्यैवार्द्धच्छिन्नस्य तरोश्छायायामुपविश्य प्रारब्धायां तल्लोकैर्भोजनवेलायां समायाते तस्मिन् महा-

मुनौ मासोपवासपारणके तं देशं समाविशन्तमालोक्य भिक्षानिमित्तं तत्पृष्ठलग्ने चागते भक्तिभरावनम्रशिरसि प्रमोदेन परिपुञ्छ्यमाने हरिणशिशुके परमश्रद्धया धन्योऽहम् अहो ! यस्य ममास्मिन्नपि निर्जनारण्ये समापन्नायामाहारवेलायां प्रगुणीकृतेप्रचितद्रव्येषु तिरस्कृतचिन्तामण्यादिमाहात्म्यो वनविहारिहारिणकैरप्येवमाराध्यमानो महामुनिराहारार्थी समाजगामाभ्यर्णमित्यातिशायिना बहुमानेन समुद्भिन्नसर्वाङ्गबहलपुलककण्टकितकायः समुत्थायोचितद्रव्यहस्तो यावत्तं प्रतिलाभयितुं समारेभे, सोऽपि द्रव्याद्युपयोगं दातुमारब्धः, सारङ्गकोऽपि पुण्यभागेष मनुष्यरूपो यः संजातसमग्रसामग्रीक एवमेनं महातपस्विनं प्रतिलाभयितुमुद्यतः, अहं तु तिर्यग्जातिः उपारूढगाढभक्तिकोऽपि किं करोमि ?, न खल्वपुण्यभाजां वेश्मसु पतन्ति वसुवृष्टयः, एवं चिन्तयितुं प्रवृत्तः, तावदकाण्डप्रचण्डपवनानेकविधपरावर्त्तनाभिर्बृहत्कटत्कारभज्यमानः सोऽर्द्धच्छिन्नः पादपो भवितव्यतावशेन निपतितस्तेषामेव रथकारादीनां त्रयाणामुपरि, तदभिघातेन प्रासास्त्रयोऽपि पञ्चत्वं गता ब्रह्मलोकदेवलोकं दानपात्रभावानुमोदनाध्यवसानमाहात्म्यैः, उक्तञ्च–" कर्त्तुः स्वयं कारयितुः परेण, चित्तेन तुष्टस्य तथाऽनुमन्तुः । साहाय्यकर्त्तुश्च शुभाशुभेषु, तुल्यं फलं तत्त्वविदो वदन्ति ॥ १ ॥" तथा धर्मदासगणिनाऽप्युक्तम्–" अप्पहियमायरंतो अणुमोयंतो य सोग्गइं लहइ । रहकार दाणमणुमोयओ मिगो जह य बलदेवो ॥ १ ॥"

वरजीर्णश्रेष्ठिकथानकं चैवम्—वैशाल्यां नगर्यामार्यसङ्गत्युपार्जितोर्जितातिविशदकीर्त्तिविस्तरो विस्तरदतिशायिपुण्यप्राग्भारवशवशीभूतप्रबलप्रचुरशत्रुसामन्तश्चेटको नाम परमश्रावको राजा, तस्य सकलान्तःपुरप्रधाना पद्मावती देवी, तया सह त्रिवर्गसारं विषयसु–[ग्रं० ८०००] खमनुभवतोऽतिगच्छत्सु केषुचिद्दिनेषु भगवान् महावीरस्तीर्थकरश्छद्मस्थपर्यायवर्त्ती निकषा वर्षासमयं समाययौ तत्र विहारक्रमेण, प्रारेभे चातुर्मासिकक्षपणं, प्रतिमाव्यवस्थितश्च चतुष्पथे ददृशे जीर्णश्रेष्ठिना, स च श्रेष्ठिपदच्यावितस्तदा दृष्ट्वा त्रिलोकनायकमतीव मुमुदे, बहुमानपुरस्सरं च चिन्तितवान्—सोऽयं सिद्धार्थकुलतिलको महामुनिर्महावीरो यस्यानन्तगुणगणोपार्जितोर्जितकीर्त्तिः शरद्राकाशशाङ्करश्मिजालनिर्मला सुधेव धवलीकरोत्यशेषदिग्भित्तीः, अतो धन्या वयं येषामेष परमेश्वरो दृष्टिगोचरचारी संवृत्तो, न ह्यनुपार्जितप्रचुरपुण्यानामावासेषु प्ररोहन्ति कल्पमहीरुहाः, तदिदानीं शोभनतरं भवति यद्यस्मद्गृहेऽस्य पारणकं संपद्यते, ततो महतीं वेलां पर्युपास्य भगवन्तं गतो गृहं,तत्रापि भोजनवेलायामुपवेष्टुमना भोजनाय चिन्तितवान्—यद्येतस्मिन् काले कथमपि परमेश्वरः समायाति। भिक्षार्थं मद्गेहे, मया समो नापरस्तदा पुण्यैः ॥ १ ॥ (गीतिः)" एवं च प्रतिदिवसोपचीयमानश्रद्धाविशेषस्य

निरन्तरायमाचरतोऽनुदिनं जिनवन्दनाद्युपचारमुपरचयतोऽनेकप्रकारं मुनिनाथदानमनोरथावलीं समाजगाम कार्त्तिक-पौर्णमासीदिनं, समुत्थितः प्रातरेव, गतो भगवतो वन्दनार्थं, ववन्दे भावसारं, विज्ञातवांश्च यथा—स्वामिनः पारणकदिनमद्य, ततो यदा कायोत्सर्गं पारयति तदा मम ज्ञाप्यमित्येवमर्थं धृतस्तन्निकटवर्त्ती पुरुषः, स्वयं प्रयातो गृहं, अत्रान्तरे पारितो भगवता कायोत्सर्गः, प्राप्तः पुरुषः श्रेष्ठिसमीपमचकथत् तद्वृत्तान्तं, प्रवर्द्धमानशुभाध्यवसायकण्डकश्चलितस्तन्निमन्त्रणाय यावज्जगाम कियन्तमपि भूभागं तावज्जलभारमेदुरोदराम्भोधरमधुरतारगर्जितमिव शुश्राव देवदुन्दुभिध्वनिं, व्यज्ञासीच्च लोकाद् यथा संपन्नं भगवतोऽभिनवश्रेष्ठिगेहे पारणकं, संजातस्तत्र पञ्चदिव्यप्रादुर्भावः, ततोऽवस्थितपरिणामो व्यावृत्योपेयाय स्वमन्दिरं, तत्प्रस्तावे च समवसृतः तत्र पार्श्वनाथतीर्थकृत्सत्कः केवली, पृष्टस्तत्रत्यलोकैः—जीर्णाभिनवश्रेष्ठिनोः कः पुण्यभागिति, केवलिनोदितं—जीर्णश्रेष्ठी, लोकैरभिहितं—कथं ?, केवली निजगाद—चत्वारो मासा अस्य जीर्णश्रेष्ठिनो भगवत्पारणकं कारयतः, अनुदिनप्रवर्द्धमानशुभपरिणामेन चानेनोपार्जितं प्रभूतपुण्यं, अथ च यदि जिनस्य पारणकसूचकं नाश्रोष्यदेष देवदुन्दुभिध्वनिं तदा क्षणेनातिविशुद्धाध्यवसायसामर्थ्येन केवलमुदपादयिष्यत्, तस्मादयमेव पुण्यभागिति ॥ समाप्ते द्वे अपि यथोद्दिष्टे कथानके॥ प्रस्तुतोपसंहारश्चायं—

यथाऽनयोः कुरङ्गजीर्णश्रेष्ठिनोर्दानपरिणामः समजनि तथा दानफलमैहिकामुष्मिकं सत्कीर्त्तिस्वर्गापवर्गादि श्रुत्वा दृष्ट्वा चान्यस्याप्यतिथिसंविभागाध्यवसायो जायत इति ॥ सम्प्रत्येतदकरणेऽविधिकरणे वा दोषद्वारम्—

साहूण वरं दाणं न देइ अह देइ कहवि अमणुण्णं।
नागसिरी इव कडुतुंबदाणओ भमइ संसारे ॥ १२३ ॥

'साधूनां' तपस्विनां 'वरं' प्रधानं द्रव्यक्षेत्रकालप्रस्तावाद्यानुरूप्येण 'दानं' विश्राणनं 'न ददाति' नो वितरति, तृष्णाद्यभिभूतो य इति शेषः 'अथ ददाति कथमपि' अथो प्रयच्छति कथञ्चित् तत् 'अमनोज्ञं' अननुकूलं, यदात्मनोऽनर्थहेतुतया अनुपयोगि, न रोचत इति भावः, स किमित्याह—'नागश्रीरिव' सोमब्राह्मणपत्नीव 'कटुतुम्बदानतः' कटुकालाबुफलवितरणतो 'भ्रमति' पर्यटति 'संसारे' भव इति गाथाऽक्षरार्थः ॥ भावार्थः कथानकगम्यः, तच्चेदम्—जंबूद्दीवे २ भारहखेत्तस्स मज्झिमे खंडे। चंपा नामेण पुरी सुपसिद्धा अलयनयरिव्व ॥ १ ॥ तत्थ चउद्दसविज्जाठाणविऊ भायरा परिवसंति। सोमे य सोमदत्ते य सोमभूई य वरविप्पा ॥ २ ॥ नागसिरी भूयसिरी जक्खसिरी तेसि तिण्हवि कमेणं। भज्जा अनण्णसमरूवकंतिलायन्नकलिआओ ॥ ३ ॥

अण्णंमि दिणे तिण्हंपि ताण भट्टाण सपरिवाराणं । नागसिरीए रसवई आढत्ता भोयणनिमित्तं ॥ ४ ॥ तत्थ य अलाबुमेगं पक्कं खंडाइसारदव्वेहिं । तं ताव परिक्खत्थं जाऽऽसायइ ताव विसतुंबं ॥ ५ ॥ हा ? कहमेयं बहुपवरदव्वसंभारसंचियमियाणिं । व्राहिं परिच्चइस्सं ! एवं परिचिंतियं तीए ॥ ६ ॥ दिट्ठो गेहपविट्ठो धम्मरुई मासखमणपारणए । तस्सेव तयं दिण्णं तेणवि तं गहियमविकप्पं ॥ ७ ॥ पत्तो य नियं ठाणं तं दंसइ धम्मघोससूरीणं । नियगुरूणं तेहिवि नायं कहियं च तस्स तओ ॥ ८ ॥ थंडिलभुवमणुपत्तो निसिरइ तस्सेक्कबिंदुयं जाव । ता तग्गंधागयलग्गकीडिया मरणमावण्णा ॥ ९ ॥ ताहे पभूयजीवोववायहेउत्ति तं कलेऊणं । सयमेव तयं भुत्तं तो पत्तो वेयणं तिव्वं ॥ १० ॥ काऊण नमोकारं अरहंताईण सुद्धपरिणामो । धम्मायरियस्स तहा गहियाणसणो समाहीए ॥ ११ ॥ समसत्तुमित्तभावो कालगओ सुरवरो समुप्पण्णो । तेत्तीससागराऊ सव्वट्ठमहाविमाणंमि ॥ १२ ॥ सूरीहिवि उवउत्तेहिं जाणियं सेससाहुमाईणं । सिट्ठं विसिट्ठनाणेहिं चेट्ठियं तस्स सव्वंपि ॥ १३ ॥ तंपि य परंपराए निसुयं विप्पेहि तेहि नागसिरी । निद्धाडिया गिहाओ पावा रिसिघायहेउत्ति ॥ १४ ॥ तीसे च्चिय नयरीए मज्झंमज्झेण सा परियडंती । खिंसिज्जइ लोएणं, दुक्खं भिक्खंपि पाउ-

णइ ॥ १५ ॥ दिवसेसु केत्तिएसुवि सोलस रोगा य तीएँ संजाया । कासाई कोढंता दुव्विसहा तिव्ववियणाए ॥ १६ ॥ तेहिं परिपीडिया दीण दुम्मणा आउयक्खए मरिउं । छट्ठीए पुढवीए नेरइयत्तेण उप्पन्ना ॥ १७ ॥ बावीस सागराईं अहाउयं पालिऊण मच्छभवे । वसिउं पत्ता सत्तममहीएँ तेत्तीस अयराऊ ॥ १८ ॥ तत्तो पुणोवि मीण-त्तणेण होऊण सत्थदाहहया । नेरइएसुप्पण्णा सत्तमपुढवीएँ तह चेव ॥ १९ ॥ एवं परंपराए एक्केक्कमहीएँ दुन्नि वाराउ । गोसालओव्व भमिओ पुणो अणंतं च संसारं ॥२०॥ संपत्ता मणुयत्तं जंबूदीवस्स चेव भरहंमि । चंपाए सत्थ-वाहयसागरदत्तस्स भज्जाए ॥ २१ ॥ भद्दाए सा धूया जाया सुकुमालियात्ति नामेणं । सुकुमालपाणिपाया संपत्ता जोव्वणमुयारं ॥ २१ ॥ जिणदत्तसत्थवाहसुएण सा सागरेण परिणीया । वेएइ तीएँ फासं सो सिंबलिकंटयाणं व ॥ २२ ॥ सयणीयगयो पच्छा सुहप्पसुत्तं चइत्तु तं झत्ति । सेज्जंतरं उवगओ तत्थवि पत्ता तहा चत्ता ॥ २३ ॥ तो गंतूणं साहइ पिउणो तेणावि सागरस्स पिया । जिणदत्त उवालद्धो तेणवि अंबाडिओ पुत्तो ॥ २४ ॥ सो भणइ ताय ! अवि जलियजलणज्जालाकलावदुप्पेच्छं । अहमारोहामि चियं, सहे न सोमालियाफासं ॥ २५ ॥ कुड्डंतरिएण तयं सागरदत्तेण कहवि निसुयं च । भणिया धूया वच्छे ! अण्णस्स तुमं पयच्छिस्सं ॥ २६ ॥ अच्छसु

मज्झे व गिहे वीसत्था सासुरंमि मा जासी । अण्णंमि दिणे दिट्ठो सागरदत्तेण दमगेगो ॥ २७ ॥ ण्हायविलि-
त्तस्स तयं समप्पए तस्स भणइ य तुहेसा । दिण्णा मए नियसुया तुज्झं पियपणइणी होही ॥ २८ ॥ अब्भुवगया
य सा तेण जाव नीया य वासभवणंमि । सुत्तो य तीएँ फासं वेयइ करवत्तफासं व ॥ २९ ॥ च-
इऊण तं गओ सो तच्चेडीए पसाहियं पिउणो । आसासिया य तेणं भणिया वच्छे!ऽन्नजम्मंमि ॥ ३० ॥
दोहग्गकारणं किंपि दारुणं जं तए कयं कम्मं । तस्स फलमेयमुवणयमओ तुमं परिहर विसायं ॥ ३१ ॥ कुण
निच्चमेव दाणाइं धम्ममागामिएऽवि जेण भवे । होसि न अपारदुक्खोहहेउदोहग्गकुलभवणं ॥ ३२ ॥
तप्पभिइ दाणपराएँ अन्नया साहुणीओ तीएँ गिहं । गोवालिसीसिणीओ समागया भिक्खकज्जेणं ॥ ३३ ॥ ताओ
पडिलाभित्ता वेरग्गगया य पुच्छई पच्छा । ठाणाइ ताहिं कहिए गया य रयणीइ तट्ठाणं ॥ ३४ ॥ दिट्ठा महत्तरा
वंदिया य तीएवि साहिओ धम्मो । पडिबुद्धा पडिवण्णाऽणगारधम्मं असढभावा ॥ ३५ ॥ अण्णंमि दिणे गोवाल-
मयहरिं भणइ वंदिऊणेसा । तुमएऽणुण्णायाहं छट्ठं छट्ठेण चिट्ठामि ॥ ३६ ॥ चंपाएँ पुरीएँ बहिं सुभूमिभागस्सऽदूर-
सामंते । सूराभिमुहाऽऽयावणानिरया गुरुकम्मखयहेऊ ॥ ३७ ॥ मयहरियाए भणियं नेयं अज्जाण विहियमिह किंतु ।

जइ तुह इच्छा ता निययउवस्सयस्सेव मज्झ गया ॥ ३८ ॥ आयावसु जहसत्तीएँ तीए सम्मं न सद्दहियमेयं । कुणइ य जहाभिरुइयं सा तीएँ निवारियावि दढं ॥ ३९ ॥ अह अन्नया कयाई सुभूमिभागंमि केऽवि पंच जणा । दिट्ठा गणियाएँ समं ललमाणा देवदत्ताए ॥ ४० ॥ अवि य—एगो धरेइ छत्तं एगो विरएइ चामरुक्खेवं । एगो य पुप्फपूरं सिरंमि तीसे कुणइ रुइरं ॥ ४१ ॥ एगो धोयइ पाए उच्छंगगयं धरेइ एगो तं । देविव्व दिव्वलीलाय सा ठिया तीएँ सच्चविया ॥ ४२ ॥ तं दट्ठुं सा चिंतइ धन्ना एसा पुरा विहियसुकया । सेविज्जइ जा एवं बहुचाडुरएहिं पुरिसेहिं ॥ ४३ ॥ मज्झं इमस्स सुचरियतवस्स जइ अत्थि किंपि फलमहुणा । ता एवमण्णजम्मे होहं पंचण्ह दइयाऽहं ॥ ४४ ॥ एवं विहियनियाणा कम्मोदयओ सरीरबाउसिया । चिट्ठित्तु कंपि कालं मया गया बीयकप्पंमि ॥४५॥ देवी नवपलियाऊ होउं तत्तो चुया ठिइखएणं । पंचालजणवएसुं कंपिल्लपुरंमि नयरंमि ॥ ४६ ॥ दुवयनरिंदस्स सुया चुलणीदइयाएँ गब्भसंभूया । जाया विसिट्ठरूवाइसंपया दोवई नामं ॥४७॥ तीसे सयंवरामंडवो य काराविओ विभूईए। मिलिया अणेगकोडी तत्थ नारिंदाण विविहाणं ॥४८॥ सा पंडवाण मंचं संपत्ताण अह सयंवरे तंमि। पत्थरस गले खिविउं उक्खित्ता तीएँ वरमाला ॥ ४९ ॥ पडुपवणवसेणेसा पडिया पंचण्ह पंडुपुत्ताणं । उवरिं च समुग्घुट्ठं, सुरेहि

पंचण्ह भज्जेसा ॥ ५० ॥ वित्तंमि विवाहमहूसवंमि ते पंडवा विभूईए । संमाणिय दुवएणं संपत्ता हत्थिणागपुरं ॥ ५१ ॥ सा दोवईवि तेसिं पंचण्हं निययजीवियाओवि । अइवल्लहाण भुंजइ तेहि समं तत्थ विसयसुहं ॥५२॥ एवं वच्चंतेसुं दिणेसु कइसुवि समागओ तत्थ । गगणंगणमग्गेणं कलहपिओ नारओ सहसा ॥५३॥ न य दिट्ठो सो इंतो विभूसणाहरणवावडमणाए । दुवयतणयाएँ कुविओ गओ य अह धायईखंडं ॥ ५४ ॥ तत्थविय भरहखित्ते चंपगउज्जाणमंडिया नयरी । नामेण अवरकंका तत्थ निवो पउमनाहोत्ति ॥ ५५ ॥ तस्स सहं अवइण्णो तेणवि अब्भुट्ठिओ सहरिसेणं । नीओ नियओरोहं महिलाओं पयासिउं भणइ ॥ ५६ ॥ सावेण साविओ तंसि भणसु जइ एरिसाओ महिलाओ । अण्णस्स संति कस्सवि, तो पभणइ नारओ तत्थ ॥ ५७ ॥ जंबुदीवे भारहखेत्ते नयरंमि हत्थिणपुरंमि । जा दिट्ठा रूववई देवाणवि दुल्लहा नारी ॥५८॥ पंचण्ह पंडवाणं जुहिट्ठिलज्जुणसुभीमसहदेव । नउलाण पवरभज्जा दुवयसुया दोवई नामं ॥ ५९ ॥ तीए पुरओ तुह महिलियाण सव्ववि सया विरायंति । मक्कडिसमूहसरिसा वियदुजणहासजणयाओ ॥ ६० ॥ जओ—रूवाइसओ तीए देवीहिवि पाविओ न संपुण्णो । अच्छउ ता दूरे च्चिय माणुसरूवीहि एयाहिं ॥ ६१ ॥ इय वण्णिऊण तं गयणमंडले नारओ समुप्पइओ । इयरोऽवि मयणबाणेहिं ताडिओ

चिंतइ मणंमि ॥ ६२ ॥ कह तीएँ समं संगो मह होही हुं समत्थि मह देवो। पुव्वभवसंगओ तं तवेण आराहिउं झत्ति ॥६३॥ पेसेमि तीएँ पासं जेण तमाणेइ सो तओ तेण। तह चेव कयं देवोऽवि आगओ तं गहेऊणं ॥६४॥ गिहउज्जाणे धरिउं तं साहइ पउमनाहनरवइणो। गंतूण सोऽवि पेच्छइ सुपसत्थं तत्थ तं नारिं ॥६५॥ सुहनिद्दाएँ पसुत्तं पेच्छंतिं किंपि सुमिणमव्वत्तं। सियकुसुमभूसियंमि सयणीए सव्वओभद्दे ॥ ६६ ॥ नारिमणमोहणेहिं महुरेहिं पिएहिं सरलवयणेहिं। अह सुत्ता जागरिया निवेण सा पउमनाहेणं ॥ ६७ ॥ भणिया य मए सुंदरि ! तमाणिया एत्थ भरहखेत्ताओ। धायइसंडे दीवे नयरीएँ अवरकंकाए ॥ ६८ ॥ ता तुह नारयकयगुणथुईएँ मं इच्छ सुयणु ! अणुरत्तं। जेण जियलोयसारं सुंदरि ! अणुहवासि विसयसुहं ॥ ६९ ॥ तीए भणियं सुपुरिस ! जं भणिहिसि तं अवस्स काहामि। जइ छण्हं मासाणं मज्झंमि न कोऽवि मह एही ॥ ७० ॥ एवं होउत्ति गओ तं वयणं मन्निऊण तेणेसा। पक्खित्ता कन्नंतेउरंमि जाया तवरया य ॥ ७१ ॥ इओ य—रयणिविरामंमि जुहिट्ठिलोऽवि जा पेच्छई न तं देविं। ता साहइ कुंतीए साऽवि गया कण्हपासंमि ॥ ७२ ॥ साहइ तं वुत्तंतं एत्थंतरयंमि गयणमग्गेणं। कत्तोऽवि झत्ति जडमउडभूसिओ नारओ पत्तो ॥ ७३ ॥ कहियं च तेण धायइसंडे नयरीएँ अवरकंकाए। दिट्ठा पंडवभज्जा रुय-

माणी पउमनाहगिहे ॥ ७४ ॥ तो अट्ठमेण तवसा सुट्ठियदेवं वसीकरेऊणं । पंडवरहेहिं पंचहिं सह पत्तो तत्थ रहचडिओ ॥ ७५ ॥ चंपगनामुज्जाणे ठविऊण रहे य दारुगं दूयं । पेसेइ तस्स पासं गओ य सो भणइ अविसंकं ॥ ७६ ॥ एत्थागओ महप्पा कण्हो लवणोयहिं समुत्तरिउं । तो अप्पसु दुवयसुयं, होसु व अह जुज्झसज्जोत्ति ॥ ७७ ॥ सो भणइ न जाणेऽहं कण्हो धवलो व कोऽवि इह पत्तो । अत्तवहट्ठाएँ दुयं तरिऊणं लवणजलनाहं ॥ ७८ ॥ तप्पुरओ ता गंतुं पभणसु जह आगओ तहा वच्च । मा होसु पयंगो पउमनाहकोवग्गिजालाए ॥ ७९ ॥ तेणवि कण्हस्स इमं सिट्ठं तो दारुणं महाजुज्झं । जायं पढमं सह पंडवेहिं तो हारिए तेहिं ॥ ८० ॥ पत्तो रहेण विण्हू संगर-भूमीएँ पूरए संखं । सद्देण तस्स टलियं किंपि बलं पउमनाहस्स ॥ ८१ ॥ तो आरोवइ चावं टंकारेणं इमस्स संखुहियं । सेसंपि बलं भग्गं तो नट्ठो पउमनाहोऽवि ॥ ८२ ॥ पविसित्तु अवरकंकं धणकणजवसिंधणाइसंपुण्णं । रोहग-सज्जं नाउं ठिओ इओ वासुदेवोऽवि ॥ ८३ ॥ तो नारसिंहरूवं काऊणं पायदद्दरसरेणं । पाडेइ अवरकंकं सगोउरट्टालपायारं ॥ ८४ ॥ तो भयभीओ सरणं समागओ दोवईए पउमनिवो । तीयवि भणियं सरणं उवेहि तं इत्थिरूवेणं ॥ ८५ ॥ मं पुरओ काऊणं हरिस्स तं चिय करेइ सो तत्थो । गहिऊण दोवइं अह

हरीवि वियरेइ से अभयं ॥ ८६ ॥ एवं कयकिच्चो पंडवाण समप्पिऊण नियभइणिं । जंबुद्दीवाभिमुहं तहेव चालिओ छहिं रहेहिं ॥ ८७ ॥ इओ य–धायइसंडपुरत्थिम भरहद्धे चंपनयरिवत्थव्वो । तत्थासि वासुदेवो कविलो नामेण विक्खाओ ॥ ८८ ॥ मुणिसुव्वओ य अरहा समोसढो तइय तस्स नयरीए । पवरम्मि पुन्नभद्दंमि चेइए जइजण-समेओ ॥ ८९ ॥ सो कविलवासुदेवो सुणमाणो तस्स अंतिए धम्मं । सुणिउं कण्हावूरियसंखधणिं पुच्छइ जिणिंदं ॥ ९० ॥ भयवं ! क एस संखं आवूरइ ? तो जिणो भणइ भद्द ! । जंबुद्दीवगभरहद्धसामिओ वासुदेवोऽयं ॥ ९१ ॥ पत्तो इहइं दोवइकडंमि सिरिपउमनाहरायाणं । जिणिउं गहिउं च तयं चालिओ सट्ठाणमेत्ताहे ॥ ९२ ॥ हरिसेण पंचजन्नं वायंतो लवणजलहिमणुपत्तो । भणइ जिणं तो कविलो जइ एवं जामि तं दट्ठुं ॥ ९३ ॥ कयपूयं च विसज्जिय भूओऽवि समागमिस्समिह अहयं । तो बेइ जिणो उत्तिमपुरिसाण न होइ मेलावो ॥ ९४ ॥ जओ–तित्थयर चक्कवट्टी बलदेवो तह य वासुदेवा य । एए सुमहापुरिसा न परोप्परदंसणमिमेसिं ॥ ९५ ॥ एवं भणिओऽवि गओ वेगेण रहेण जाव उयहितडं । कविलो जा कण्होऽविहु पत्तो लवणोयहीमज्झं ॥ ९६ ॥ अव्वत्ते धयचिंधे दट्ठुं कविलेण पूरिओ संखो । कण्हेणऽवि कयमेवं निसुओ य परोप्परं सद्दो ॥ ९७ ॥ पच्छाहुत्तो चालिओ पत्तो कवि-

लो य अवरकंकपुरिं । दट्ठूण तहापडियं निद्धाडियपउमनाहनिवं ॥ ९८ ॥ ठविउं तस्सेव सुयं रज्जे चंपाउरिं
समायाओ । इयरोऽवि तरियजलही, लवणाहियसुट्ठियसुरस्स ॥ ९९ ॥ पासंमि वच्चमाणो पभणइ भो
पंडवा ! वयह तुब्भे । उत्तरह ताव गंगं जाव अहं सुट्ठियं पासे ॥ १०० ॥ तो ते सयमुत्तरिउं पेसंति न महु-
महस्स तं नाव । बेंति य परोप्परममी पेच्छामु परक्कमं हरिणो ॥ १ ॥ बावट्ठिजोयणाइं वित्थिन्नं
किं महानइं गंगं । तरिही भुयाहि ! किं वा नवत्ति एयं परिक्खामो ॥ २ ॥ एत्थंतरंमि सुट्ठियसुरंतियं गंतुमागओ
कण्हो । गंगातडंमि चिट्ठइ पलोयमाणो खणं नावं ॥ ३ ॥ जावागया न नावा तावेगभुयाएँ सारही तुरए । घेत्तुं रहं
च लग्गो बीयाइ भुयाएँ तं तरिउं ॥ ४ ॥ पत्तो य मज्झभागं परिसंतो चिंतई नियमणंमि । कहं पंडवेहि एसा
बाहाहिं महाणई तरिया ॥ ५ ॥ गंगादेवीवि तयं वियाणिउं देइ थाघमेयस्स । बावट्ठिजोयणाइं, लंघिय पत्तो तडे
ताहे ॥ ६ ॥ पुच्छइ य पंडुपुत्ते तुब्भेहिं कहं इमा समुत्तिण्णा ? । तेऽविय भणंति नावाएँ पोसिया किं न सा
मज्झं ? ॥ ७ ॥ तेयाहु तुह परिक्खत्थमेव तो रूसिऊण कण्हेणं । निव्विसया आणत्ता सयं तु पत्तो य बारवइं
॥ ८ ॥ तेऽविय पंडुस्स तयं, कहंति गंतूण हत्थिणागपुरं । तेणवि कुंतीएँ पुत्तट्ठाणमणुजाइओ कण्हो ॥ ९ ॥

तो तस्स अणुमईए अदिट्ठसेवाएँ दाहिणदिसाए । पंडुमहुरं निवेसिय नगरिं लीलाएँ तत्थ ठिया ॥ १० ॥ तत्थऽच्छंताण यऽसिं दोवइदेवीएँ अन्नया जाओ । नामेण पंडुसेणो पुत्तो कल्लाणगुणरासी ॥ ११ ॥ सो जोव्वणमणुपत्तो कमेण बावत्तरीकलाकुसलो । थेरा य तत्थ केई समोसढा अण्णदियहंमि ॥ १२ ॥ तेसि सयासे धम्मं सोऊणं पंडवा विरत्तमणा । रज्जंमि पंडुसेणं निवेसिऊणं विणिक्खंता ॥ १३ ॥ दोवइदेवीवि समं तेहिं चिय गिण्हिऊण पव्वज्जं । सुव्वयनामाए अज्जियाएँ वरसीसिणी जाया ॥ १४ ॥ एक्कारस अंगाइं कमेण पढियाइं तीए तेहिंपि । पंडुसुएहिं अहिया संपुण्णा चोद्दसवि पुव्वा ॥ १५ ॥ छट्ठट्ठमदसमदुवालसाइविविहेहिं तवविसेसेहिं । ते संताविय देहं विहरंति महिं सह गुरूहिं ॥ १६ ॥ विहरंतो नेमिजिणो इओ य पत्तो सुरट्ठविसयंमि । तव्वंदणत्थमेए थेरं आपुच्छिउं चलिया ॥ १७ ॥ पत्ता य हत्थकप्पं नयरं भिक्खाए परियडंता य । निसुणंति सिद्धिगमणं जिणस्स उज्जितसेलंमि ॥ १८ ॥ विहिचत्तभत्तपाणा नीहरिउं तो इमाओ नयराओ । आरूढा सेत्तुज्जं ठाउं पाओवगमणेणं ॥ १९ ॥ उप्पन्नऽणंतनाणा सासयसोक्खं लहुं गया मोक्खं । कालेण दोवई अज्जियावि काऊण विहिमरणं ॥ २० ॥ देवत्तेणं दससागराउया बंभलोयकप्पंमि । उववण्णा ताओ चुया महाविदेहंमि

सिज्झिहिई ॥ २१ ॥ एवं संखेवेणं चरियं इह दोवईऍ अक्खायं । नायाधम्मकहाओ वित्थरओ जाणियव्वंति ॥ २२ ॥ इय दोवईऍ भवभमणकारणं बुज्झिऊण भो भव्वा ! । मा अमणुण्णं साहूण देह दाणं कयाइयवि ॥ १२३ ॥

इति नागश्रीकथानकं समाप्तम् ॥ गुणद्वारमधुना—

जं जोग्गं थेवंपि हु तं तेसिं देंति धम्मसद्धाए ।
कयपुण्णसालिभद्दो व सावगा ते सुही होंति ॥ १२४ ॥

यद् 'योग्यं' उचितं मुनीनामिति गम्यते 'स्तोकमपि' स्वल्पमपि तत् 'तेभ्यः' मुनिभ्यः 'ददति' प्रयच्छन्ति य इति गम्यते, किमुपरोधादिना ?, नेत्याह—'धर्मश्रद्धया' दुर्गतिप्रसृतजन्तूनां धारणात् सुगतिस्थापनाच्च धर्मः, यदुक्तम्—"दुर्गतिप्रसृतान् जीवान्, यस्माद्धारयते ततः । धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म इति स्मृतः ॥ १ ॥" तस्मिन् श्रद्धा—निजाभिलाषो धर्मश्रद्धा तया, अनेन चैतदुपलक्ष्यते यदुक्तमन्यैर्यथा—देशे काले कल्प्यं, श्रद्धायुक्तेन शुद्धमनसा च । सत्कृत्य च दातव्यं, दानं पूतात्मना सद्भ्यः ॥ १ ॥ कृतपुण्यशालिभद्राविवेति दृष्टान्तसूचा, 'श्रावकाः' श्राद्धास्ते 'सुखिनः' सातभाजो 'भवन्ति' जायन्त इति, तात्पर्यार्थस्त्वयं—ये सुभिक्षदु-

भिक्षादिकालमार्गग्रामादिक्षेत्रग्लाननीरोगाद्यवस्थायोग्यं स्तोकमपि देयवस्तु सुसाधुजनाय श्रद्धापुलकिततनवः प्रयच्छन्ति ते स्वर्गापवर्गाद्यनुपमसुखभाजो भवन्तीति गाथासङ्क्षेपार्थः ॥ विस्तरार्थः कथानकाभ्यामवसेयः, तयोश्चाद्यं तावदिदम्—

विजयपुराभिधानपत्तने विजयसेननरपतौ नीत्या कोशकोष्ठागारादिसंपत्समृद्धं सप्ताङ्गं राज्यमनुपालयति धनवसुश्रेष्ठिनः पद्मश्रीभार्याया वसुदत्तनामा पुत्रोऽभवत्, तस्मिंश्च जातमात्र एव धनवसुश्रेष्ठी पञ्चत्वमुपजगाम, ततस्तदुपरमे दिवाकरास्तंगमने भुवनप्रकाशहेतुः किरणसम्पदिव क्षयमुपेयाय सकललक्ष्मीः, पद्मश्रीस्तु परिम्लानिमागताऽऽत्मनो निर्वाहं तत्रापश्यन्ती वसुदत्ततनूजमुपादाय धनमानविगमे विदेशगमनमेवोचितं मानधनानां न तु कर्मकरादिवृत्त्या स्वदेश एवावस्थानमिति चिन्तयन्ती प्रययौ श्रीपुरनाम नगरं, स्थिता तत्र कञ्चन श्रेष्ठिनं समाश्रित्य, वसुदत्तस्तु कृतस्तद्गृह एव वत्सपालकः, तत्प्रसङ्गेन प्रातिवेशिकलोकवत्सकानां स एव चिन्तां कर्त्तुमारेभे, ततो व्रजत्सु केषुचिद्दिवसेषु वत्सचारणाय गतोऽन्यदा नगरबहिर्भुवं, ददर्श महामुनिमेकं ववन्दे भावसारं, तस्मिंश्च दिने तत्र नगरे पायसभोजिकामहोत्सवो जनस्य, ततोऽसौ वसुदत्तबालकः कस्याञ्चिद्वेलायां

वत्सकांश्चारयित्वा यावद् गृहमायाति स्म तावद्ददर्श गृहे गृहे पायसं संस्क्रियमाणं, ययाचे च मातरं–अम्ब ! ममाद्य
प्रदीयतां पायसं, सा च संस्मृत्य निजभर्तृकालं पश्य दुर्वारविधिविलसितं धनवसुश्रेष्ठिनः पुत्रो भूत्वा कथमेष
परानुकम्पनीयामवस्थामवाप ?, न चेदं विजानाति मदीयमातुः कुत एतावती संप्रति प्राप्तिः ?, हा सत्यं कृतमिदमस्म-
त्तनयेन यदिदमुद्घुष्यते लोकैर्यथा–" तस्करा डिम्भरूपाणि, ब्राह्मणाः श्रमणा नृपाः । पञ्चाप्येते न जानन्ति, परपीडां
कदाचन ॥ १ ॥" इत्यादि चिन्तयन्ती रोदितुमुपचक्रमे, तदीयरुदिताकर्णनोपजातपरमकारुण्याश्च प्रातिवेशिक-
सीमन्तिन्यः समागत्य पप्रच्छुर्यथा–किं भगिनि ! एवं कहकहध्वानरुद्धगलसरणि रुद्यते भवत्या ?, किं न संप-
द्यते तव ?, कथ्यतां यद्यकथनीयं न भवति, ततस्तया मन्दाग्यान्येव पृच्छत येषामीदृग्विलसितमित्यभिधाय कथि-
तस्तनूजवृत्तान्तः, ताभिरभाणि–यद्येवं मा रोदीः, संपादयिष्यामो वयमेवैतदुपस्करं, ततश्च कयाऽपि तन्दुलाः कयाऽपि
दुग्धं कयाऽपि गुडखण्डादि प्रदत्तमस्यै, भणितं च–यथा प्रभाते पूरणीयास्त्वया पुत्रमनोरथा अनेनोपस्करेण, द्वितीयदिने
च प्रातरेव भणितो वसुदत्तः–वत्स ! अद्य त्वद्योग्यां क्षैरेयीं करिष्याम्यतः शीघ्रमेवागन्तव्यं भवता, ततोऽसौ प्रहरद्वय-
समये समायातो, गृहमुपविष्टो भोजनाय, भृत्वा भाजनं पायसस्य समर्पितं जनन्या, अत्रान्तरे समाययौ स एव मासपारणके

पूर्वदृष्टो महामुनिः, प्रविष्टः कथञ्चित्तदीयमेव वेश्म, विलोकितो वसुदत्तेन समुल्लसितभक्तिना, नूनं ममाप्यस्ति काचित् पुण्यभाजनता ययेदृशी सामग्री संपन्ना, यत उक्तं—" केषाञ्चिच्चित्तवित्तं भवति भुवि नृणां दानयोग्यं न पात्रं, पात्रे प्राप्ते परेषां गुणवति भवतो नोचिते चित्तवित्ते । स्याच्चित्तं नापरे द्वे द्वितयमपि भवेत्कस्यचिन्नैव वित्तं, चित्तं कस्यापि नोभे उभयमपि न तद् दुर्लभं यत्समग्रम् ॥ १ ॥ " इत्यादि चिन्तयता श्रद्धातिशयसंपन्नबहुलपुलकजालकाङ्कित-कायेनोपादाय पायसस्थालं प्रतिलाभयित्वा तत्त्रिभागेन मुनिपुङ्गवमचिन्ति चेतसि, यथा—अतिस्तोकमेतत्, नानेन मुनेरर्द्धाहारोऽपि संपत्स्यते, ततो भूयो दत्तस्त्रिभागो, हन्ताद्याप्यल्पमेतत् न पर्याप्त्या भविष्यति, यदि चैतस्य मध्ये-ऽन्यत्कदन्नं पतिष्यति तदैतदपि विनङ्क्ष्यति, कियद्वा महामुनिरसौ पर्यटिष्यति ?, तत्परिपूर्णमेव प्रयच्छामीति पर्या-लोचयता पुनः क्षिप्तमशेषमेव तत् मुनिपात्रे, गतो मुनिस्तद्गृहीत्वा, तस्य च मात्रा दत्तमन्यत्पायसं, भुक्तं यथेच्छं, भोजनावसाने गतो वत्सचारणायाटव्यां, भवितव्यतावशेन जाता तत्र दिने वृष्टिः, तद्भयाच्च गतानि दिशो दिशं वत्सरूपाणि, तानि च मीलयतोऽस्यास्तं गतो दिनकरः, संपन्ना तमःपटलालक्ष्यमाणनिम्नोन्नतविभागनया दुःसञ्चारा विभावरी, स्थगितानि पुरद्वाराणि, ततोऽसौ प्राकारभित्तिकोणमाश्रित्य स्थितो नगरद्वार एव, कियत्यां च वेलायामस्य

शीतवातादिकदर्थ्यमानस्य स्निग्धाहाराजीर्णदोषेण जाता विशूचिका, संपन्नमतिगाढं शूलमुपरतस्तेन, प्रकृतिभद्र-
कादिमध्यमगुणयोगिताऽवबद्धमनुष्यायुष्को राजगृहनगरे धनश्रेष्ठिभार्यायाः कुवलयावलीनामिकाया अनेकोपयाचि-
तकरणखिन्नाया अपुत्राया उत्पेदे पुत्रत्वेन, द्वादशदिने च निर्वर्त्तितमस्य कृतपुण्यक इति नाम, अष्टवार्षिको ग्राहितः
कलाः, प्राप्तोदग्रयौवनश्च धनश्रेष्ठिना परिणायितो वैश्रमणश्रेष्ठिकन्यां कान्तिमतीं, अन्यदा च कथञ्चित् प्रविष्टो माध-
वसेनागणिकागृहं, ददर्श तत्र रमणीयरूपातिशयशालिनीं त्रिभुवनजयपताकामिव कामस्य सर्वाङ्गीणाभरणभूपि-
ताङ्गीं पर्यङ्कोत्सङ्गविनिवेशितकायां महति मणिदर्पणे स्वशरीरशोभामवलोकयन्तीं माधवसेनां, चिन्तित-
वांश्च—"अहो! लावण्यमेतस्याः, अहो रूपं जगज्जयि। अहो सौभाग्यसम्पत्तिर्विश्वविस्मयकारिणी ॥ १ ॥" अत्रान्तरे
ददृशे तयाऽप्यसौ सविनयमुत्थाय-सविलासकलाऽऽलापैः, सकटाक्षैर्निरीक्षितैः । आक्षिप्यमाणहृदयः, पर्यङ्के उप-
वेशितः ॥ १ ॥ सोऽपि तदनुरागविवशमानसो निजगृहादानाय्य पुष्पताम्बूलादि कृतवानुचितप्रतिपत्तिमस्याः,
तद्वियोगासहिष्णुश्च स्थितस्तद्गृह एव तया सह कामभोगासक्तान्तःकरणः प्रतिदिवसमष्टोत्तरशतसंख्यदीनारकान्
माता प्रेष्यमाणान् प्रयच्छन्, तदीयकुट्टिन्या भाटीमूल्यं सततं निजगृहायातभोगाङ्गोपयोगेन निन्ये द्वादश वर्षाणि, तदा

च कदाचिल्लोकान्तरीभूतौ तत्पितरौ, न ज्ञातौ तेन, तद्भार्या च कान्तिमती तथैव प्रेषितवती दीनारादि, गतेषु च केषुचिद्दिनेषु निष्ठां गते वित्तजातेऽन्येद्युर्लोठनीकणकसमन्वितं प्रेषयामास स्वाभरणं, दृष्ट्वा माधवसेनायाः कुट्टिन्या चिन्तितं, यथा--अहो महासती सा यया पतिव्रतात्वमनुपालयन्त्या पत्युर्भक्त्या स्वाभरणमपि प्रहितं, यच्चैतल्लोठन्यादिसहितं प्रेषितं तेन स्वकीयजीविकावशेषवित्तता ख्यापिता, तन्न युक्तमिदं ग्रहीतुं, ततः पुनः स्वकीयद्रम्माष्टोत्तरशतेन तत्पूजयित्वा तस्या एव संप्रेष्येदमुक्ता तया माधवसेना—वत्से ! रसत्यक्तयावकतुल्य एष कृतपुण्यकः सम्प्रति, तत्त्यज्यतामसौ, तयोक्तं—अम्ब ! एतत्प्रसादेन बहुद्रव्यं मीलितमस्माभिः, तन्न युक्त एतत्त्यागः, तयोक्तं—पुत्रि ! न त्वमभिज्ञा वैशिकाचारस्य, यतो वेश्यानामृजुसूत्रनयमतीनामिवातीतानागतत्यागेन वर्त्तमान एवादरः, सम्प्रति चायं मुनिरिव निष्किञ्चनः, तत्किमनेन ?, ततस्तस्या अनिच्छन्त्या एव तयाऽसावपमानितः, अन्ये तु वदन्ति-मद्यं पाययित्वाऽज्ञातचर्यया निष्काशितो, गतः स्वगृहमभ्युत्थितः स्वभार्यया कृतचलनक्षालनादिव्यापारश्च ज्ञातवान् पित्रोर्मरणवृत्तान्तं, कृतवान् महान्तं चित्तखेदं, स्थित्वा च कतिचिद्दिनानि कान्तिमत्याः कृतगर्भाधानः प्रवृत्तः पोतवणिग्भिः सह परकूलं गन्तुं, प्रदोषसमये च निर्गत्य निजगृहान्नगरबहिस्तादावासितस्य सार्थस्यासन्नायां देवकुलिकायां स्वभार्याप्रस्तारितखट्वायां सुप्तः।

इतश्च तत्रैव राजगृहे नगरे सूरनामा श्रेष्ठी भार्याचतुष्टयसमन्वितां स्वमातरं मुक्त्वाऽऽत्मना वाणिज्यबुद्ध्या दिग्यात्रां जगाम, स च तत्रैव कथञ्चिदुपरेमे, लेखबद्धवार्त्ता च प्रहिता तन्मातुः केनचित्, तयाऽप्येकान्ते ज्ञापिता निजवधूनां, भणिताश्चैताः, यथा—यूयमपुत्रास्ततो द्रव्यं राजकुले यास्यति अतः प्रवेश्यतां कश्चिदन्योऽपि पुत्रोत्पत्तिनिमित्तं द्रव्यरक्षणार्थं च पुरुषः, ताभिर्भणितम्—अम्ब ! नास्माकं कुलवधूनामिदमुचितं, तयोदितं—न जानीथ यूयम्, अवस्थोचितप्रवृत्तौ न स्मृतिशास्त्रे दोष उक्तः, यदुक्तम्—"नष्टे मृते प्रव्रजिते, क्लीबे च पतितेऽपतौ । पञ्चस्वापत्सु नारीणां, पतिरन्यो विधीयते ॥ १ ॥" इति, किञ्च—"कुन्त्या युधिष्ठिरो धर्मेण वायुना भीम इन्द्रेणार्जुन उत्पादित" इत्यादिलोकश्रुतिः, न चासावकुलीनेति, तस्मादवसरायातं कर्त्तव्यमिदमपि, इत्येवं श्वश्रूवचनमुपश्रुत्य प्रतिपन्नं ताभिः, यतः—"एकं तावदनादिसंसृतिगतैरभ्यस्तमेतत्सदा, जीवैर्वैषयिकं सुखं गुरुजनस्याज्ञाऽपि लब्धाऽत्र चेत् । जातस्तर्हि महोत्सवः समधिको नन्विन्द्रियाणामथो, न्यायः सैष पयोऽन्तिके किल धृतो यज्जूर्णमार्जारकः ॥ १ ॥" ततस्तास्तस्यामेव रात्रौ पुरुषान्वेषणाय यावत्प्रववृतिरे तावद्ददृशुः सार्थासन्नदेवकुलिकायां खट्वामारुह्य निर्भरप्रसुप्तमेकाकिनं कृतपुण्यकं, तथैवोत्पाट्य निन्युः स्वगृहं, प्रासादमारोप्य प्रवृत्ता रोदितुम्, अन्तरान्तरा च बभणुर्यथा—

बहोः कालादागतोऽसि क्व स्थित एतावन्तं कालं ? किमनुभूतमस्मद्विरहे भवता सुखं दुःखं वा ? सोऽपि कृतपुण्यकः किमिदमदृष्टाश्रुताननुभूतपूर्वकं वैशिकमिति चिन्तयन् शून्यहुङ्कारादिप्रदानेन यद्भवति तद्भवतु, पश्यामि तावत्कार्यपरिणतिमितिबुद्ध्या तस्थौ तत्रैव, भणितश्च तासां श्वश्र्वा यथा—वत्स! पूर्वजन्मोपात्तोदात्तपुण्यसंभारानुभावसंपद्यमानाशेषाभीप्सितार्थान् अनुभव एताभिश्चतसृभिर्दिव्यनायिकाभिः सार्द्धमुदारभोगान्, सर्वाऽप्येषा गृहलक्ष्मीस्तवेयं, तत्तिष्ठ यथासुखमेतत्त्यागभोगपरायणः, सोऽप्यवादीद्—अम्ब ! यत्त्वमात्थ तत्करोमि, को हि नामावाप्तमहानिधानो रोरत्वाय स्पृहयते इत्यभिधाय स्थितस्तत्रैव, दिव्यदेवलीलया च कामभोगासक्तमानसस्यास्यातिचक्रमुर्द्वादश वर्षाणि, संजाताश्च तासां चतसृणामपि पुत्राः, अत्रान्तरे पुनरेकान्ते धृत्वा निगदिताः श्वश्र्वा वध्वो, यथा संपन्ना भवतीनां पुत्राः सिद्धा समीहितद्रव्यरक्षा तन्निष्काश्यतामसौ, किमनेन परपुरुषेण धृतेन ?, ताभिरूचे—एतावन्तं कालं धृत्वा न युक्त एतत्त्यागः, यदि च भवत्या निर्बन्धस्तदा किमपि संबलकमेतद्योग्यं दत्त्वोत्सृजामः, तयोदितम्—एवमस्तु, ततः पाथेययोग्यमोदकेषु चन्द्रकान्तजलकान्तादिरत्नानि प्रक्षिप्य तेषामेव मोदकानामेकां थगिकां भृत्वा जातेऽर्द्धरात्रसमये निर्भरप्रसुप्तेषु लोकेषु भवितव्यतावशेन तदैव देशान्तरात् समागत्य तत्रैव प्रदेशे समावासिते तस्मिन्नेव

सार्थे तथैव खट्वायां शायिनमुच्छीर्षकविनिवेशितसंबलकप्रसेविकं मदिरामदापहृतचेतनं नीत्वा मुमुचुस्तास्तस्यामेव देवकुलिकायां कृतपुण्यकं, कियत्याऽपि वेलया प्रत्यायातचैतन्यः किं स्वप्नोऽयमुत सत्यमिदमित्यादि चिन्तयन् विदितसार्थागमनवृत्तान्तया तद्भार्यया समागत्य विभातप्रायायां रजन्यां तं प्रदेशं गृहीत्वा तामुच्छीर्षकात् संबलकस्थगिकाम् उत्पाट्य खट्वां नीतोऽसावनुपहताङ्गलावण्यानुमीयमानाविविधविलासानुभवनसौस्थ्यः कर्पूरकस्तूरिकादिदिव्यपरिमलवासितदिगन्तरालो निजवेश्म, कारयितुमारब्धः स्नानाद्युचितकरणीयं, अत्रान्तरे समागतो लेखशालायास्तत्पुत्रः, पातितोऽस्य पादयोर्जनन्या, कथितं च—त्वत्तनयोऽयं, तेनाप्युक्ता माता यथा-दीयतां मे भोजनं येन कृताभ्यवहारो गत्वा लेखशालायां पठामि, ततः कान्तिमत्या तस्या एव स्थगिकाया मध्याद्दत्त एको मोदकः, भुञ्जानश्च वीक्षितवांस्तन्मध्ये मणिमेकं, गृहीत्वा गतो लेखशालायां, दर्शितोऽन्यलेखशालिकानां, तैर्भणितं—यद्येष कन्दुकापणे क्षिप्यते तदा प्राप्यतेऽभीष्टभक्ष्यं, ततः कृतं तेन तथैव, इतश्च कान्तिमत्या यावत्ते मोदका व्यापारयितुमारब्धास्तावत्प्रासास्ते विचित्रमणयः, ततः पृष्टः कृतपुण्यकः—किमेते चौरभयेनैवं मणयः कृताः?, तेनोदितम्—एवं, अन्येद्युश्च श्रेणिकराजसत्कः सेचनककरी पानीयपानायावतीर्णः सरोवरं, जलमध्यप्रविष्टो गृहीतस्तन्तुकेन जलज-

न्तुना, न शक्यते मोचयितुं, ज्ञापितोऽयमर्थोऽभयकुमारस्य, तेनापि दापितः पटहको, यथा य एनं करिणं तन्तुकात् मोचयति तस्य राजाऽऽत्मीयां दुहितरं राज्यार्द्धलक्ष्म्या सह प्रयच्छति, ततो निशम्योद्घोषणामेतां तेन कन्दुकेन कृतपुण्यकपुत्रादासेन जलकान्तमणिना मोचितो हस्ती, गतो नृपसमीपं, राज्ञा तु भणितोऽभयकुमारः—कथमस्य नीचजातिकस्य कन्दुकपुत्रस्य दुहिता प्रदेया ?, ततोऽभयकुमारेण प्रतिपादितोऽयं—कुतस्तेऽसौ मणिः?, न खलु राजकुलभाण्डागारमीश्वरश्रेष्ठिगृहं वा विमुच्येदृशरत्नानामन्यत्र संभवः, तत्सत्यमावेद्यताम्, अन्यथा महानिग्रहेण निग्रहीष्यति त्वां नृपः, तेनोक्तं—यदि सत्यं पृच्छसि तदा कृतपुण्यकपुत्रात्, तत आह्वायितः कृतपुण्यको, दत्ता सममर्द्धराज्यश्रियाऽस्य दुहिता, कालेन चाभाषितोऽभयकुमारेण कस्मिंश्चित्कथाप्रसङ्गे कृतपुण्यको, यथा—केषु देशेषु त्वं पर्यटितः?, क्व चैतान्यसंभाव्यरत्नानि विटपितानि ?, तेनाभाणि—यदि सत्यमापृच्छ्यते तदा राजगृहादन्यत्र नाहं क्वापि गतः, ततः कथितो मूलत आरभ्य सर्वो निजवृत्तान्तः, केवलं न जानामि तद्गृहनिर्गमप्रवेशं, ततोऽभयकुमारेण चिन्तितं—अहो ! बुद्धिकौशलं वणिक्पत्न्याः येन वयमपि जिताः, ततः कारितं देवकुलं विधापिता तत्र यथाऽवस्थितकृतपुण्यकरूपा लेप्यमयी प्रतिमा, ज्ञापितं पटहकदापनेन नगरे, यथा याः काश्चिदत्र नगरे पुरन्ध्र्यः सन्ति ताभिः समागत्या-

स्मिन् देवकुले सहात्मीयपुत्रपौत्रादिभिः कर्त्तव्याऽभिनवप्रतिष्ठितप्रतिमापूजा, ततस्तामुद्घोषणां श्रुत्वा समागन्तुं प्रवृत्ताः
सर्वा एव नगरनार्यः, समं ताभिश्चतसृभिर्निजवधूभिः सपुत्राभिः साऽपि श्रेष्ठिपत्नी समायाता द्वितीयदिने तद्देवकुलं,
दृष्ट्वा कृतपुण्यकेन कथिता अभयकुमारस्य, अत्रान्तरे ते डिम्भका अवलोक्य देवकुलमध्यवर्त्तिनीं कृतपुण्यकाकारां
प्रतिमां सोऽयमस्मत्पितेति ब्रुवाणा झगित्येव गत्वा निविष्टाः प्रतिमोत्सङ्गे, ततोऽभयकुमारेणाकारिता सा श्रेष्ठिपत्नी,
दर्शयित्वा करालभृकुटीं भणिता, यथा—महादण्डयोग्या त्वं यद्यपि तथाऽपि न त्वां निगृह्णीमः, केवलं समर्पय गृह-
सारं सह वधूभिः कृतपुण्यकस्य, अन्यथा न भविष्यसि त्वं, एवं भीपयित्वा तां कृतः कृतपुण्यकस्तद्गृहस्वामी, पुन·
रपि स्वीकृतास्ताश्चतस्रोऽपि भार्यास्तेन । साऽपि माधवसेना यत्प्रभृति कृतपुण्यको निष्काशितो गृहात्स्वजनन्या तत्प्र-
भृत्येव त्यक्तशरीरालङ्कृतिर्विहितवेणीबन्धा सततविरचिततदन्वेषणाऽपि तच्छुद्धिमलभमाना तस्थावपरपुरुषपरिहारेण,
तदा च विज्ञातदेवकुलिकाव्यतिकरा समागता यक्षं पूजयितुं, दृष्टश्च तत्राभयकुमारेण सह विश्रम्भवार्त्तां कथयन्
कृतपुण्यको, निरुपमानन्दमनुभवन्ती मिलिता कृतपुण्यकस्य, जगाद च—निश्शेषमहीमण्डलपर्यटितैरपि न ते क्वचि-
द्वार्त्ता । लब्धा मदीयपुरुषैर्द्वादश वर्षाणि यावदिह ॥ १ ॥ अद्य पुनः शर्वर्याश्चरमप्रहरे त्वदाकृतिधरेण । स्वप्ने

केनापि यथा, प्रियाऽहमालिङ्गिता बुद्धा ॥ २ ॥ निर्गच्छन्त्याश्च गृहाद्यथा बभूवुर्मनोरमाः शकुनाः । वामाक्षिस्फुरणादि च यथा तथा ज्ञातमद्य मया ॥ ३ ॥ नूनं प्रियेण सार्द्धं भवता मम दर्शनं तदेतन्मे । संजातममृतवर्षणमिव पुण्यैर्जलधराभावे ॥ ४ ॥ ततोऽसावपि प्रतिगृहीता तेन, तत्प्रभृति च सप्तभिर्भार्याभिः सह जन्मान्तरप्रदत्तमहासुनिदानानुभावोपात्तप्रकृष्टपुण्यसंभारसंपद्यमानानवद्यत्रिवर्गसारं बुद्धजनप्रशंसनीयं जीवलोकसुखमनुभवतोऽतिचक्राम कियानपि कालः । अन्यदा च सुरविसरसंपूज्यमानचरणकमलोऽनुपमां घातिकर्मक्षयाविर्भूतकेवलज्ञानसम्पदं भुवनत्रयातिशायिनीमनुभवन् समवससार गुणशिलकचैत्ये भगवान् महावीरः, विरचितं देवैः समवसरणं, निविष्टस्तत्र पूर्वाभिमुखो ज्ञातकुलतिलकः, उद्यानपालकादवगततदागमनो वन्दनाय समाजगाम सममभयकुमारकृतपुण्यकादिभिरवाप्तक्षायिकसम्यक्त्वप्रमुखगुणश्रेणिः श्रेणिको, वन्दितवान् भक्तिसारं त्रिलोकबन्धुम्, उचितभूमिकोपविष्टः शुश्राव परमगुरुदेशनां, कथान्तरे च ललाटतटविनिवेशितकरकमलकुड्मलो व्यजिज्ञपदभयकुमारः—स्वामिन् ! किमनेन कृतपुण्यकेन पूर्वभवे कृतं यदनुभावादन्तरा स्तोककालविच्छिन्नभोगो भोगानवापत् ?, ततो भगवता कथितोऽस्य पूर्वभवः, तत्र च—अन्तरितं क्षैरेयीदानं भागत्रयेण यदकार्षीद् । अध्यवसाय-

च्छेदाच्छिन्नं तेनास्य विषयसुखम् ॥ १ ॥ ततोऽवबुद्धप्राग्जन्मवृत्तान्तः कृतपुण्यकस्तत्कालोचितविहितकर्त्तव्यो महाविच्छर्देन समुत्पन्नसंवेगातिशयो गृहीत्वा भगवत्पादमूले प्रव्रज्यां परिपाल्य यावदायुष्कं विधानेनाराधितविधिमरणः समुत्पेदे देवत्वेनेति ॥ समाप्तं कृतपुण्यकाख्यानकम् ॥

शालिभद्रकथानकं त्वेवम्—मगधाभिधानदेशे राजगृहे पत्तने गुणसमृद्धे। आसीच्छ्रेणिकराजस्तद्भार्या चेल्लणाभिख्या ॥१॥ नगरे तत्रैव तदा गोभद्राख्यो बभूव सुश्रेष्ठी। तस्य च भद्रा जाया ददर्श सा स्वप्नमन्येद्युः ॥२॥ रजनीविरामसमये शालिवनं विविधफलभरावनतम्। प्रतिबुद्धा निजभर्त्तुः कथितवती सोऽपि तामाह ॥ ३ ॥ पुत्रस्तवाशु भविता, निःशेषकलाकलापकुलवसतिः। तस्यामेव रजन्याममभूदमुष्याः प्रवरगर्भः ॥ ४ ॥ तत्र प्रवर्द्धमाने शालिवनक्रीडनाभिलाषश्च। जज्ञे कदाचिदस्यास्तद्भर्त्रा पूरितः क्षिप्रम् ॥ ५ ॥ कालेनासूत सुतं देवकुमारोपमं तदनु भद्रा। द्वादश दिनानि पित्रा महोत्सवः कारितः प्रीत्या ॥ ६ ॥ तदनन्तरमभिधानं चास्य कृतं गुरुजनेन तुष्टेन। सस्वप्नदोहदस्यानुरूप्यतः शालिभद्र इति ॥ ७ ॥ वृद्धिं गतः क्रमेण च कान्त्या बुद्धया कलाकलापेन। द्वात्रिंशद्दिव्यकन्याः पित्रा परिणायितः प्रीत्या ॥ ८ ॥ गोभद्रस्तु कदाचित्स्वीकृत्य जिनेन्द्रभाषितां दीक्षाम्। विधिनाऽनुपाल्य मृत्वा देवो वैमानिको जातः ॥ ९ ॥ पूर्व-

भवस्नेहेन च तनयस्याचिन्त्यपुण्यशक्तेश्च । आगत्यागत्यासौ देवश्चक्रेऽस्य सान्निध्यम् ॥ १० ॥ तथाहि—यदस्य द्वात्रिंशत्सङ्ख्यभार्यासमन्वितस्योपयोग्यं प्रवरवस्त्राभरणादि साराहारताम्बूलादि च तत्सर्वमनुदिवसं संपादितवान्, एवं च सकललोकातिशायिमहिम्नोऽमुष्यातिरमणीयसुरनिर्मितद्वात्रिंशच्छय्यास्वभिरममाणस्य स्वप्रियाभिः सहातिगते कियत्यपि काले समाजग्मुस्तन्नगरं कम्बलिरत्नानां विक्रयाय देशान्तरीया वणिजः, प्रविविशुर्नृपतिगेहम्, आभाषिताः श्रेणिकराजेन, यथा-भो भद्राः ! किं मूल्यमेकैककम्बलरत्नस्य ?, तैरवादि--दीनारलक्षं, ततो महार्घतया न गृहीतानि तानि राज्ञा, ते तु राजभवनान्निर्गत्य ययुर्भद्रावेश्म, तदुक्तमूल्येन निर्विचारमात्तान्यमूनि सर्वाण्येव भद्रया, अत्रान्तरे समुपतस्थौ चेल्लणा श्रेणिकस्य यथा गृह्यतां मद्योग्यमेकं कम्बलरत्नं, ततः प्रेषितः श्रेणिकेन तेषां वणिजामन्तिकमेकः पुरुषः, तेन पृष्टे सति निर्वचनं कृतमेतैर्यथा—दत्तानि भद्रागृहे सर्वाणि, तेन चागत्य नृपस्य कथितोऽयं व्यतिकरः, ततो विशेषेण रुष्टा राज्ञश्चेल्लणा, बभाण च, यथा—कृपणस्त्वं य एकमपि ग्रहीतुं न शक्नोषि, तया तु वणिक्पत्न्यापि भूत्वा सर्वाणि गृहीतानि, ततो भद्रासमीपे प्रहितो मनुष्यस्तदर्थं, तया च न्यगादि, यथा—विहितानि तानि तत्क्षणमेव मया विपाट्य चरणप्रोञ्छनकानि समर्पितान्येकैकसंख्यया स्ववधूनामतो यदि प्रयोजनं तदा

स्वीक्रियन्तामपराणि पुरातनानि, ततो गत्वा तेन निवेदितं तत्सकलमेव श्रेणिकस्य, सोऽवोचद्—द्रष्टव्योऽसौ शालि-
भद्रो यस्यैतावती समृद्धिः, वयं च धन्या यन्नगरनिवासिनः स्वसम्पदधरीकृतवैश्रमणा एवंविधा वणिजः, तदन-
न्तरं भाणयामास भद्रो-यथा इच्छामो वयं शालिभद्रस्य दर्शनं, तया भाणितं,यथा-प्रसीदतु देवः, शृणोत्वस्मद्विज्ञप्तिं-शालि-
भद्रो न कदाचित्सप्ततलप्रासादाद्बहिर्निःसरति, सुरवितीर्णमाणिक्यनिकरनिराकृततिमिरसन्ततौ स्वभवने विचित्रक्रीडाभिः
क्रीडन् सह स्वप्रियाभिः नापि सूर्याचन्द्रमसौ विलोकयति, तद् यदीष्यते शालिभद्रस्य दर्शनं देवेन तत्क्रियतामेतद्-
गृहागमनेन प्रसादः, एवमस्त्वित्यभ्युपगते राज्ञा भूयोऽप्यबीभणद् भद्रा—यद्येवं यावदहं प्रगुणयामि गृहादि तावन्नो-
त्सुकेन भाव्यं गृहागमनं प्रति स्वामिना, ततः कारितो भद्रया स्वभवनादारभ्य नरेंद्रमन्दिरसिंहद्वारं यावद्देवाङ्गवस्त्रा-
दिभिः स्थानस्थानदत्तानेकप्रकाररत्नहारैर्दिव्योल्लोचः, पदे पदे प्रारब्धानि विचित्रनाटकादिप्रेक्षणकानि, पश्चादाका-
रितो नृपतिः, समागन्तुं प्रवृत्तः सान्तःपुरपरिजनः सकलसामग्र्या, प्राप्तो दिव्यदेवांशुकोल्लोचलम्बमानरत्नावचूल-
शोभां वीक्षमाणः प्रमदभरनिर्भरः शालिभद्रभवनं, कृतोचितविनयप्रतिपत्तिर्निवेशितः सिंहासने, सप्ततलप्रासादो-
परिभूमिकावस्थितस्य शालिभद्रस्य सविधमुपगत्य भाणितं भद्रया-वत्स ! समागच्छाधोभूमिकां श्रेणिकनृपति-

रुपविष्ट आस्ते, तेनोदितम्—अम्ब ! स्वयमेव मूल्यं कृत्वा गृहाण यदागतमस्ति, तयोदितं—जात ! नेदं क्रयणीयं वस्तु, किंतु भवतो जनस्य च सर्वस्य स्वामी श्रेणिको नाम राजा तव दर्शनार्थं गृहमायातो विद्यते, तदेहि कुरु तद्दर्शनं, एतदाकर्ण्य ममाप्यन्यः स्वामीति विचिन्तयन् गतो विषादं, उक्तञ्च—" मणिकणगरयणधणपूरियंमि भवणंमि सालिभद्दोऽवि । अन्नो किर मज्झवि सामिउत्ति जाओ विगयकामो ॥ १ ॥ न करिंति जे तवं संजमं च ते तुल्लपाणिपायाणं । पुरिसा समपुरिसाणं अवस्स पेसत्तणमुवेंति ॥ २ ॥ " अलङ्घ्यं मातृवचनमित्युत्थाय गतो नृपासन्नभूमिं, कृतप्रणामो निवेशितो निजोत्सङ्गे राज्ञा, व्यचिन्ति च निर्वर्णयताऽनुपमां तच्छरीरशोभां—निःशेषजनमनोहरममुष्य यादृक्षमङ्गलावण्यम् । तादृशममराणामपि सेन्द्राणां नास्ति मन्येऽहम् ॥१॥ अङ्गप्रत्यङ्गनिरीक्षणाक्षणिकचित्तेन यावदक्षेपि चक्षुरस्याऽऽस्यकमले नरपतिना तावद्ददृशेऽश्रुपूरपूरितमेतस्य नयनयुगलं, पृष्टा च तज्जननी—किमेतत् ?, तयोदितं—देव ! अस्ति विज्ञप्तिकाऽत्र, शालिभद्रपिता देवेषूत्पन्नः, स च पुत्रस्नेहेन देवलोकसत्कगन्धमाल्यालङ्कारादिभिः प्रतिदिनमभिनवाभिनवैरेनमुपचरति अतो नायं मानुषोपभोग्यभोगाङ्गगन्धं सोढुं शक्नोति, तन्मुच्यताम् व्रजतु स्वस्थानमेषः, ततो विमुक्तो गतः स्वस्थानं, अत्रान्तरे विज्ञप्तं भद्रया—अत्रैव भोजनकरणेन विधीयतां

शालिभद्रस्य प्रसादः, अभ्युपेतं भूमिपतिना, कारिता तदनु सकलाऽपि सामग्र्यनया, अभ्यञ्जितः सहस्रपाकादिस-
चैलैश्चारुविलासिनीभिः, स्नापितो विधिना, गृहीतवस्त्रालङ्कारश्च सर्वर्त्तुकक्रीडावनं कौतुकेन प्रविष्टो ददर्श विमल-
जलपूर्णा शालिभद्रस्य मज्जनवापीं, तद्विलोकनाकुलितमानसस्य चास्य कथञ्चित्पतितमङ्गुलीयकं वापीमध्ये, ततो
भद्रया समाचार्यन्यत्र तज्जलं यावत्तावदपश्यद्दिव्यदुद्योतभासुरमाभरणसमूहं, तन्मध्ये स्वाङ्गुलीयकं चाङ्गारतुल्यं,
राजाऽपृच्छच्च—किमेतत् ?, भद्राऽवोचत्—यथा शालिभद्रस्य तद्भार्याणां च यदाभरणनिर्माल्यं प्रतिदिवसमत्र निपतति
तदिदं, ततो विस्मितमना अहो ! प्राग्भवोपार्जितपुण्योपचयाविलसितं शालिभद्रस्य यदेवं मनुष्यस्याप्यचिन्ति-
तोपनतं सर्वं देवानुभावात्संपद्यत इत्यादि चिन्तयन् भोजितो भद्रया सपरिवारोऽनेकविधरसाविशेषमनोहरमाहार-
जातं भूपतिः, तदनु वितीर्णानेकप्रकारताम्बूलवस्त्रालङ्कारादिपदार्थसार्थो गतः स्वावासं । शालिभद्रस्तु तत्प्रभृति
संविग्नमानसो गमयामास कियन्त्यपि दिनानि, अन्येद्युश्च समाययौ तत्राप्रतिबद्धविहारेण विहरन् धर्मघोषाभिधान
आचार्यः, आवासितो बाह्योद्याने, वातायनवर्ती शालिभद्रो विलोक्य तद्वन्दनाय प्रचलितमनेकलोकं पप्रच्छ स्वानु-
चरं, यथा—क्वायं जनसमाजो याति ?, भणितमनेन—सूरिवन्दनार्थं, ततोऽसावपि जननीमापृच्छ्य जगामाचार्यसन्नि-

काशं, वन्दित्वा भावसारं सूरिं निविष्ट उचितदेशे शेषलोकोऽपि श्रेणिकराजप्रमुखोऽभिवन्द्य यावदुचितभूमिमाशिश्राय तावदाचार्येण धर्मलाभाशीर्वाददानपुरःसरमारब्धा धर्मदेशना, यथा—इष्टानिष्टवियोगयोगविषमग्राहादिजीवाकुले, मोहावर्तविभीषणे मृतिजरारोगादिवीच्याविले । त्राणं नान्यदहो जनाः ! निपततां सद्यानपात्रोपमं, जैनं धर्ममनन्तशर्मजनकं मुक्त्वा भवाम्भोनिधौ ॥ १ ॥ यतः-अर्था अनर्थजनकाः क्षणनश्वराश्च, कामा विपाककटवो न चिरस्थिराश्च । देहोऽपि नित्यपरिशीलनसव्यपेक्षो, नापेक्षते कृतमुपैति विनाशमाशु ॥ २ ॥ तस्मादास्थां विमुच्याहो !, अर्थादिषु विनिरपृहाः । सेवध्वं धर्ममेवैकमिति सर्वज्ञशासनम् ॥ ३ ॥ द्वेधा स च भवेत्साधुश्रावकस्वामिसंश्रयात् । आद्यः क्षान्त्यादिभिर्भेदैर्विज्ञेयो दशधा तयोः ॥ ४ ॥ अणुव्रतादिभेदैस्तु, स्थितो द्वादशधा परः । सम्यक्त्वं मूलमेतस्य, द्विविधस्यापि कीर्तितम् ॥ ५ ॥ इत्यादि, तदवसाने च लब्धावसरः सरभसमाधाय शिरसि करकमलमुकुलमिवाञ्जलिपुटं पप्रच्छ शालिभद्रो—भगवन् ! कीदृशां प्राणिनामन्यो नाथो न जायते ?, सूरिणोक्तम्—सुकृततपश्चरणानां सज्ज्ञानध्यानशीलनिष्ठानाम् । भवचेष्टामुक्तानां नान्यः संपद्यते नाथः ॥ १ ॥ शालिभद्र उवाच—यद्येवं जननीमापृच्छय युष्मदन्तिके मयाऽप्येवं-

विवेन भाव्यं, सूरिणोदितं—मा प्रतिबन्धं कार्षीः, ततः प्रणम्याचार्यं गतोऽसौ स्वभवनं, शेषलोकस्तु स्वावासं प्रति
जगाम, शालिभद्रेणापि भणिता माता—यथाऽम्ब ! श्रुतोऽद्य मया धर्मघोषसूरिसमीपे धर्मः तदिच्छामि त्वदनुज्ञ-
या तं कर्त्तुं, सावित्र्या भणितं-कुरु वत्स ! यथाशक्त्या, गृह एव व्यवस्थितः । कस्ते श्रेयः प्रवृत्तस्य, प्रतिपन्थी भवि-
ष्यति ? ॥ १ ॥ शालिभद्रोऽभ्यधादम्ब !, गृहावस्थितिशालिनाम् । कीदृशः संभवेद्धर्मः, प्रतिबन्धममुञ्चताम् ? ॥ २ ॥
मात्रोक्तं—सत्यमेतत्, किन्तु जात ! दुष्करो भवादृशां गृहत्यागो, यतो देवभोगलालितो भवान्, कथमिव मानवीय-
मन्तप्रान्तानुचितमाहारमाहारयिष्यति ?, यदि चैष निर्बन्धस्तदा परिकर्मय तावच्छरीरं परित्यजैकैक-
तूलिकां शिथिलय ललितलीलावतीलास्यादिकुतूहलानि, ततस्तथैव कर्त्तुमारब्धो मातृवचनम् ।

अन्यदा चास्य स्वसाऽऽत्मीयभर्त्तारं धन्याभिधानं स्नपयन्त्यश्रुपातं चक्रे, धन्यश्च पप्रच्छ—प्रिये ! किमेवं
रोदिषि ?, तयोदितं—मम भ्राता शालिभद्रः प्रव्रजितुकामोऽनुदिनमेकतूल्यादिपरिहारेण परिकर्मणां कुर्वाण आस्ते
तेन रोदिमि, धन्येनोदितं—कातरः स य एवं क्रमेण त्यजति, तयाऽभाणि—यदि सुत्यजमिदमाभाति तदा त्वमेवैकहे-
लया किं न त्यजसि ?, तेनोक्तं—त्वद्वचनमेव प्रतीक्षमाणः स्थितोऽहमेतावन्तं कालम्, अधुना तु यथा त्यजामि तथा

पश्य, ततस्तत्प्रभृत्येव प्रारब्धाश्चैत्यभवनेऽष्टाह्निकामहाः, प्रवर्त्तितं स्वशक्त्युचितं दीनादिदानं, अत्रान्तरे प्रव्रज्याविहितनिश्चयं विलोक्य पतिं भणितमनया–प्रिय ! परिहासोऽयं मया कृतः तत्किं मां त्यक्त्वा प्रव्रजितुमिच्छसि ?, तेनोचे–प्रिये ! सर्वस्यापि संयोगो वियोगावसानः, तदुक्तम्–" सर्वे क्षयान्ता निचयाः, पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ताः, मरणान्तं च जीवितम् ॥ १ ॥ " तस्मादुपरतेच्छैरेव वरमेतत्त्यागो विहितो, न त्वसन्तुष्टानां तदपगमो, यत उक्तम्–" अवश्यं यातारश्चिरतरमुषित्वाऽपि विषयाः, वियोगे को भेदः ? त्यजति न जनो यत्स्वयमिमान् । व्रजन्तः स्वातन्त्र्यात् परमपरितापाय मनसः, स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १ ॥ " ततो विज्ञायास्य निश्चयं साऽपि ' भर्तृदेवता नार्य ' इति वचनमनुस्मरन्ती तदनुगमनविहिताभिलाषा बभूव, अत्र च प्रस्तावे श्रुतो भगवान् महावीरो गुणशिलकचैत्ये समवसृतो धन्येन, शिबिकामधिरुह्य सहात्मीयभार्यया गत्वा भगवदन्तिकं स्वीकृता प्रव्रज्या, तद्व्यतिकरमवगत्य शालिभद्रोऽप्यापृच्छ्य जननीं क्षमयित्वा श्रेणिकनरपतिं महाविभूत्या समागम्य स्वामिसमीपं प्रवव्राज विधिसारं, प्रतिपन्नदीक्षौ च तौ द्वावपि स्वल्पकालेनैवोपात्तग्रहणासेवनाशिक्षौ षष्ठाष्टमदशमादिविचित्रसन्तततपोविशेषशोषितशरीरौ मासकल्पेन ग्रामारामनगराकरादिपरिकरितां वसुमतीं

विहरन्तौ सह परमेश्वरेण कियतः कालात्पुनः समाययतुस्तदेव राजगृहं नगरं, भिक्षावेलायां च पारणकनिमित्तं यावत्तीर्थङ्कर-मभिवन्द्य चलितौ तावदुक्तस्तयोः शालिभद्रस्त्रैलोक्यनाथेन, यथा—त्वामद्य जननी भोजयिष्यति, ततो द्वावपि गोचरचर्यायां प्रविष्टौ, गतौ भद्रागृहं, न च महावीरागमनश्रवणसंजातहर्षप्रकर्षया भद्रया वधूभिः सार्द्धं जिनशालिभद्रदर्शनार्थौत्सुक्यव्याकुलत्वेन प्रस्थितया समवसरणभूमिं प्रत्यभिज्ञातावेतौ, अप्राप्तभिक्षौ च प्रत्यावृत्तौ ददृशाते भवितव्यतावशेन दधिमथितविक्रयाय नगरप्रविष्टाभिर्गोपवृद्धाभिः, तन्मध्ये चैकस्याः शालिभद्रमालोक्य सन्तोषपोषसमुद्भिद्यमानबहलपुलकाङ्कितकाययष्टेः समुद् समुदपद्यत दधिदानाभिलाषः, ततो भणितः सप्रणामपूर्वं शालिभद्रोऽनया—भोः तपस्विन् ! यद्युपकुरुते तदा गृहाणेदं दधि, तदनूपयोगपूर्वं जग्राहासौ, तत्तुष्टचित्ता गताऽसौ स्वस्थानं, इतरावपि प्राप्तौ जिनान्तिकं, कृतेर्यापथप्रतिक्रमणौ गमनागमनाद्यालोचनादिपूर्वं स्थितौ क्षणमात्रं, पृष्टं च शालिभद्रेण—भगवन् ! कथं मामद्य जननीभोजयिष्यति ?, तीर्थकृता न्यगादि—या तुभ्यं दध्यदात् सा तवान्यजन्ममाता, यतस्त्वं पूर्वभवेऽत्रैव मगधाजनपदे समुपरते स्वभर्त्तरि प्रक्षीणे पूर्वसञ्चिते सकलेऽपि वसुनि देशान्तरादागत्य शालिग्राममाश्रिताया अस्या एव धन्याभिधानायाः पुत्रः सङ्गमको नाम वत्सपालको बभूविथ, तेन च कदाचित्त्वज्जीवेन

वत्सचारणावाप्यमानजीविकेन कस्मिंश्चिदुत्सवे ददृशे गृहे गृहे पायसमुपभुज्यमानं जनैः, अजानता चात्मीयां प्राप्तिं प्रार्थिता करुणस्वरं रुदता माता—ममापि पायसं प्रयच्छ, ततः साऽपि तदाग्रहं तथाविधं दृष्ट्वा आत्मनश्च तत्सम्पादनासामर्थ्यं विचिन्त्य प्रवृत्ता रोदितुं, तदीयरुदिताकर्णनोद्भूतकारुण्याभिः प्रातिवेशिकस्त्रीभिः कृता तत्तनूजयोग्या क्षीरादिदानेन पायससामग्री, ततोऽनया निष्पादिते पायसे भोक्तुमुपविष्टे च तत्र सङ्गमके कुतोऽपि समागतो मासोपवासपारणार्थी महामुनिरेकः, दत्तं चानेन प्रवर्द्धमानश्रद्धापरिणामेन प्रथममेव भोजनार्थोपात्तं पर्याप्त्या तत्तस्मै महामुनये, शेषं चाकण्ठप्रमाणं भुक्तमात्मना, तदजीर्णदोषेण वत्सचारणार्थं गतस्यारण्यमस्योदपादि महातृष्णा, तदभिभूतो जलाशयावलोकनपरायणो दृष्टस्तेन मुनिना, भणितश्च-भो ! नात्र प्रदेशे निकटवर्त्ति जलमस्ति भवतश्च गाढमापदमुत्प्रेक्षे तदिदानीं वरं पञ्चपरमेष्ठिनमस्कारानुस्मरणमेव भवतो युक्तं, तेनोक्तं—मुने ! नाहं जानामि तत्कर्त्तुं, ततः कृपापरीतचित्तेन तपस्विना—भोः संगमक ! अहमुच्चारयिष्यामि नमस्कारं भवतः कर्णमूले त्वया त्वेकाग्रमनसा परिभाव्योऽयमिति प्रतिपाद्य प्रारब्धो नमस्कार उच्चारयितुम् [ ग्रंन्थाग्रं ८५०० ] असावपि प्रकृतिभद्रकत्वादिमध्यमगुणयोगिताऽवबद्धमनुष्यायुषस्तदनुरूपप्रवर्द्धमानशुभपरिणामस्तदैव कालगतो मुनिदानानुभाव-

निर्वर्त्तितमहाभोगफलकर्मा समुत्पेदे गोभद्रश्रेष्ठिनो भद्रायां भार्यायां सुतत्वेन, इदं च भगवता कथ्यमानमाकर्ण्य
शालिभद्रस्योदपादि जातिस्मरणं, तदनु तदेव जन्मान्तरमातृदत्तं दधि मासोपवासावसाने पारयित्वा सहैव धन्य-
मुनिना गतो गिरिनिकुञ्जं, तत्र गृहीतानशनौ द्वावपि स्थितौ पादपोपगमनेन, अत्रान्तरे समवसरणमागता सवधूका
भद्रा, अभिवन्द्य भावसारं तीर्थकरं पप्रच्छ—भगवन् ! क्वास्ते शालिभद्रः ?, ततो भगवता न्यगादि सर्वोऽपि तदीय-
वृत्तान्तो यावत्पादपोपगमनेन स्थिताविति, तदनन्तरमियायासौ तत्रैव, ददर्श पादपोपगमनव्यवस्थितं शालिभद्रं
धन्यं च, अभिवन्द्य प्रवृत्ता रोदितुं, विललाप चानेकप्रकारं, यथा—द्वात्रिंशत्तूलीनां सुत्वोपरि वत्स ! केवलधरायाम् ।
उपलशकलाकुलायां त्वं तिष्ठसि कथमिवेदानीम् ? ॥ १ ॥ यस्त्वं पुरा प्रबुद्धो जात ! सदा गीतवादनरवेण । सम्प्रति
स कथं दारुणशिवारुतैस्त्यजसि ननु निद्राम् ? ॥ २ ॥ हा पुत्र ! तथा तपसा शोषितदेहो यथा गृहगतोऽपि । न
मयोपलक्षितस्त्वं धिग् धिग्मां पापकर्माणम् ॥ ३ ॥ इत्यादि प्रलपन्ती श्रेणिकराजः शशास तां च तदा । तत्रागतः
कथञ्चित्प्रवन्दितुं शालिभद्रमुनिम् ॥ ४ ॥ निन्ये च नगरमध्यं तावप्यायुःक्षये मुनी जातौ । सर्वार्थसिद्धिनामनि
५२ महाविमाने सुरत्वेन ॥ ५ ॥ तत्राजघन्योत्कृष्टं त्रयस्त्रिंशत्सागरोपमाण्यायुः परिपाल्य ततश्च्युतौ महाविदेहे सेत्स्यत

इति ॥ एवं सुखावलीनां हेतुः खल्वतिथिसंविभागोऽयम् । मोक्षफलः कर्त्तव्यो यथा कृतः शालिभद्रेण ॥ १ ॥

इति श्रीशालिभद्रकथानकं समाप्तमिति ॥ यतनाद्वारमधुनोच्यते–

जं साहूण न दिन्नं कहंचि तं सावया न भुंजंति ।
पत्ते भोयणसमए दारस्सऽवलोयणं कुज्जा ॥ १२५ ॥

यत् 'साधुभ्यः' तपस्विभ्यः 'न दत्तं' नो वितीर्णं, कल्प्यमिति शेषः, 'कथञ्चित्' केनापि प्रकारेण, 'कहिंपी' ति पाठे क्वापि देशे काले वा, तत् 'श्रावकाः' यथावस्थितनामानः श्राद्धाः, तथा च श्रावकशब्दस्यैवं व्युत्पत्तिः श्रावकप्रज्ञप्त्यादिषु, यथा–"संपत्तदंसणाई पइदियहं जइजणा सुणेई य । सामायारिं परमं जो खलु तं सावगं बिंति ॥ १ ॥" तथा–"श्रवन्ति यस्य पापानि, पूर्वबद्धान्यनेकशः । आवृतश्च व्रतैर्नित्यं, श्रावकः सोऽभिधीयते ॥ १ ॥" 'न भुञ्जन्ते' नाभ्यवहरन्ति, यदुक्तम्–"साहूण कप्पणिज्जं, जं नवि दिन्नं कहिंपि किंचि तहिं । धीरा जहुत्तकारी सुसावगा तं न भुंजंति ॥ १ ॥" ननु तत्र ग्रामादिक्षेत्रादौ यदि कथञ्चिद्व्रतिनो न भवन्ति तदा का वार्त्ता ? इत्याह–'प्राप्ते भोजनसमये' जाते भुक्तिप्रस्तावे 'द्वारस्यावलोकनं कुर्यात्' गृहद्वारसंमुखं पश्येत्,

यदीदृश्यवसरे कश्चित्तपोधनो धर्मबान्धवः समभ्येति तदा तस्मै ग्रासदानेनापि मे महती निर्जरा भवतीत्यभिप्रायवा-
निति गर्भार्थः, न चेदमपि गाथाशकलं स्वमनीषया व्याख्यायते, यदाह धर्मदासगणिः—“ पढमं जईण दाऊण
अप्पणा पणमिऊण पारेइ । असई य सुविहियाणं भुंजइ य कयदिसालोओ ॥ १ ॥ ” त्ति प्रकृतव्रतयतना, भावना
चेयं—साधुदत्तशेषं श्रावकैर्भोक्तव्यं, साध्वभावे च भोजनवेलायां दिगालोकनं कार्यं, न त्वित्थमेव भोज्यमिति
गाथाऽक्षरार्थः ॥ संप्रत्यस्यैवातिचारद्वारगाथोपन्यस्यते—

सच्चित्ते निक्खिवणं पिहणं ववएसमच्छरं चेव ।
कालाइक्कमदाणं अइयारे पंच वज्जेज्जा ॥ १२६ ॥

‘ सचित्ते ’ सचेतने वस्तुनि पृथिव्यादौ ‘ निक्षेपणं ’ न्यसनं, साधुदेयभक्तादेरदेयबुद्ध्या स्थापनमित्यर्थ, तथा ‘ पिधानं ’ स्थगनं सचित्तेनैव बीजपूरकफलादिना, साधुदेयभक्तादेरदेयबुद्ध्यैवोपरि फलादिधरणं, तथा व्यपदेशश्च मत्सरश्च व्यपदेशमत्सरं, समाहारत्वादेकवचनं, तत्र व्यपदेशो नाम व्याजोक्तिः—परकीयमिदमन्नादिक-मित्येवमदित्सया साधुसमक्षं भणनं, यद्वा मातुः पित्रादेर्वा पुण्यं मदीयदानेन भवत्विति भणनं व्यपदेशः, मत्स-

रस्तु-असहनं साधुभिर्याञ्चायां कृतायां कोपकरणं, तेन रङ्केणापि याचितेनेदं दत्तम् अहं तु किं ततोऽपि न्यूनः ? इति विकल्पो वा, 'चेव' त्ति समुच्चये, तथा कालस्य प्रस्तुतसाधुभिक्षावेलारूपस्यातिक्रमः—अदित्सयाऽनागत-भोजनपश्चाद्भोजनद्वारेणोल्लङ्घनं कालातिक्रमस्तेन दानं कालातिक्रमदानं, अस्मिंश्च क्रियमाणे ग्राहका एव न भवन्ति, यदुक्तम्—"काले दिण्णस्स पहेणयस्स अग्घो न तीरए काउं । तस्सेवाथक्कपणामियस्स गेण्हंतया नत्थि ॥ १ ॥" 'अथक्क'त्ति अप्रस्तावः, अत एवैवमुपदेशः—सत्पात्रं महती श्रद्धा, काले देयं यथोचितम् । धर्म-साधनसामग्री, नाल्पपुण्यैरवाप्यते ॥ १ ॥ एवं चैतान् 'अतिचारान्' प्रस्तुतव्रतमालिन्यरूपान् 'पंचे'ति पञ्चस-ङ्ख्यान् 'वर्जयेत्' त्यजेत्, अतिचारभावना तु यदा अनाभोगादिनाऽतिक्रमादिना वैतानाचरति तदा अतिचारा अमी, अन्यथा तु भङ्गा एवेति गाथार्थः ॥ इतोऽस्यैव भङ्गद्वारगाथा—

दाणंतरायदोसा न देइ दिज्जंतयं च वारेइ ।
दिन्ने वा परितप्पइ, किविणत्ताओ भवे भंगो ॥ १२७ ॥

दानस्यान्तरायो—विघ्नो दानान्तरायस्तस्य दोषः तद्धेत्वन्तरायकर्मोदयलक्षणः, अथवा दानविघ्नहेतुः कर्म्मैव

दानान्तरायशब्देनोच्यते, ततः स एव जीवदानाध्यवसायदूषणाद्दोषो दानान्तरायदोषस्तस्मात् 'न ददाति' न प्रयच्छति, स्वीकृतेऽप्यतिथिसंविभागव्रत इति गम्यते, 'दीयमानं' दानयोग्यमन्नादि साध्वादीनां वितीर्यमाणम्, अन्येन दृष्ट्वेति शेषः, वाशब्दो विकल्पार्थः, 'वारयति' निषेधयति, 'दत्ते' वितीर्णे सति वा पूर्ववत् 'परितप्यते' किमेतन्मया दत्तं, बहु वा दत्तमित्येवं पश्चाद्धूयते, कस्मात् ?—'कृपणत्वात्' कार्पण्याद्धेतोः, यत्तदोर्नित्यसम्बन्धाद् य एवं करोति तस्य किमित्याह—'भवेत्' जायेत 'भङ्गः' विनाशः, प्रक्रान्तव्रतस्येति गम्यमिति गाथार्थः ॥ भावनाऽधुनोच्यते——

धण्णा य पुण्णवंता तेसिं सफलं च जीवियं लोए ।
सेज्जंसो इव दाणं भत्तीए देंति पत्तेसु ॥ १२८ ॥

धनं लब्धारो धन्याः-समृद्धिमन्तः, 'च' समुच्चये, स चाग्रे योज्यः, न केवलं धन्याः, 'पुण्यवन्तश्च' सुकृतिनश्च ते इतिशेषः, तथा 'तेषां' प्राणिनां 'सफलं च' सप्रयोजनं च 'जीवितं' असवो 'लोके' जगति, ये इति तत्सम्बन्धादेव गम्यं, ये 'श्रेयांस इव' बाहुबलिपौत्रक इव दान 'भक्त्या' भावेन 'ददति' दिशन्ति

रस्तु-असहनं साधुभिर्याञ्चायां कृतायां कोपकरणं, तेन रङ्केणापि याचितेनेदं दत्तम् अहं तु किं ततोऽपि न्यूनः ? इति विकल्पो वा, 'चेव' त्ति समुच्चये, तथा कालस्य प्रस्तुतसाधुभिक्षावेलारूपस्यातिक्रमः—अदित्सयाऽनागतभोजनपश्चाद्भोजनद्वारेणोल्लङ्घनं कालातिक्रमस्तेन दानं कालातिक्रमदानं, अस्मिंश्च क्रियमाणे ग्राहका एव न भवन्ति, यदुक्तम्—"काले दिण्णस्स पहेणयस्स अग्घो न तीरए काउं । तस्सेवाथक्कपणामियस्स गेण्हंतया नत्थि ॥ १ ॥" 'अथक्क'त्ति अप्रस्तावः, अत एवैवमुपदेशः—सत्पात्रं महती श्रद्धा, काले देयं यथोचितम् । धर्मसाधनसामग्री, नाल्पपुण्यैरवाप्यते ॥ १ ॥ एवं चैतान् 'अतिचारान्' प्रस्तुतव्रतमालिन्यरूपान् 'पंचे'ति पञ्चसङ्ख्यान् 'वर्जयेत्' त्यजेत्, अतिचारभावना तु यदा अनाभोगादिनाऽतिक्रमादिना वैतानाचरति तदा अतिचारा अमी, अन्यथा तु भङ्गा एवेति गाथार्थः ॥ इतोऽस्यैव भङ्गद्वारगाथा—

दाणंतरायदोसा न देइ दिज्जंतयं च वारेइ ।
दिन्ने वा परितप्पइ, किविणत्ताओ भवे भंगो ॥ १२७ ॥

दानस्यान्तरायो—विघ्नो दानान्तरायस्तस्य दोषः तद्धेत्वन्तरायकर्मोदयलक्षणः, अथवा दानविघ्नहेतुः कर्म्मैव

दानान्तरायशब्देनोच्यते, ततः स एव जीवदानाध्यवसायदूषणाद्दोषो दानान्तरायदोषस्तस्मात् 'न ददाति' न प्रयच्छति, स्वीकृतेऽप्यतिथिसंविभागव्रत इति गम्यते, 'दीयमानं' दानयोग्यमन्नादि साध्वादीनां वितीर्यमाणम्, अन्येन दत्त्वेति शेषः, वाशब्दो विकल्पार्थः, 'वारयति' निषेधयति, 'दत्ते' वितीर्णे सति वा पूर्ववत् 'परित-प्यते' किमेतन्मया दत्तं, बहु वा दत्तमित्येवं पश्चात्तप्यते, कस्मात्?—'कृपणत्वात्' कार्पण्याद्धेतोः, यत्तदोर्नित्य-सम्बन्धाद् य एवं करोति तस्य किमित्याह—'भवेत्' जायेत 'भङ्गः' विनाशः, प्रक्रान्तव्रतस्येति गम्यामिति गाथार्थः ॥ भावनाऽधुनोच्यते—

धण्णा य पुण्णवंता तेसिं सफलं च जीवियं लोए।
सेज्जंसो इव दाणं भत्तीए देंति पत्तेसु ॥ १२८ ॥

धनं लब्धारो धन्याः-समृद्धिमन्तः, 'च' समुच्चये, स चाग्रे योज्यः, न केवलं धन्याः, 'पुण्यवन्तश्च' सुकृतिनश्च ते इतिशेषः, तथा 'तेषां' प्राणिनां 'सफलं च' सप्रयोजनं च 'जीवितं' असवो 'लोके' जगति, ये इति तत्सम्बन्धादेव गम्यं, ये 'श्रेयांस इव' बाहुबलिपौत्रक इव दान 'भक्त्या' भावेन 'ददति' दिशन्ति

'पात्रेषु' संसारगर्त्तानिपतज्जन्तुजातमात्मानं च जिनवचनयथावस्थितानुष्ठायितया पान्ति—रक्षन्तीति पात्राणि—साधवस्तेष्विति गाथाऽक्षरार्थः, भावार्थस्तु कथानकात्समधिगम्यः, तच्चेदम्——

भारतवर्षमध्यखण्डालङ्कारभूते गजपुराभिधानपत्तने सप्तमकुलकरनाभिमरुदेव्योस्तनूजस्य प्रथमवर्त्तितसकललोकनीतेः श्रीमदादितीर्थकरस्य सुनन्दादेव्याश्च पौत्रः स्वपितृवितीर्णतक्षशिलाराजधानीनायकस्य बाहुबलिनः पुत्रः सोमप्रभो नाम नरपतिरासीत्, तस्य चातिशायिरूपलावण्यसौभाग्यादिगुणगणावाप्तकीर्त्तिविस्तरो विस्तरदमन्दराज्यलक्ष्मीसमुचितसमस्तशस्तलक्षणश्रेयांसः श्रेयांसनामाङ्गजो युवराजो बभुव, तेन च कदाचिद्रजन्याश्चरमयामे सुखशय्याप्रसुप्तेन स्वप्नो दृष्टो, यथा—मया सुरशैलः श्यामायमानः सन् अमृतकलशैराभिषिक्तोऽधिकतरं दीपितुमारेभे, इतश्च तस्यामेव वेलायां तत्र वास्तव्यस्तथैव सुबुद्धिश्रेष्ठी सोमप्रभनृपश्च स्वप्नं दृष्टवन्तौ, तत्र—श्रेष्ठी दिनकरबिम्बं रश्मिसहस्राद् वियुज्यमानमलम् । श्रेयांसेनायोजितमपश्यदधिकं विराजन्तम् ॥ १ ॥ राजा तु दिव्यपुरुषं स्वप्नेऽद्राक्षीदरिप्रबलसैन्यैः। युद्धे परिभूतमथ श्रेयांसवितीर्णसाहाय्यम् ॥ २ ॥ शत्रुततिं जितवन्तं प्रातः सर्वेऽपि सदसि संमिलिताः । स्वप्नार्थमजानन्तो जल्पितवन्तो यथा किमपि ॥ ३ ॥ कल्याणमहो ? भविता श्रेयांसस्याधिकं ततः सर्वे । स्वं स्वं

श्रेयांसकुमारोऽपि राजसभातः समागतः समारूढः स्वकीयं
स्थानं जग्मुर्धृतिमन्तरतेन वचनेन ॥ ४ ॥ श्रेयांसकुमारोऽपि राजसभातः समागतः समारूढः स्वकीयं
सप्तभूमिकं प्रासादं, तत्र गवाक्षगतो यावदक्षिपाद्दिक्षु चक्षुस्तावद्ददर्श भगवन्तं त्रैलोक्यचूडामणि-
मिक्ष्वाकुकुलतिलकं भिक्षादानानभिज्ञलोकेन कन्याधनादिभिर्गृहे गृहे निमन्त्र्यमाणं गोचरचर्यया नगरमध्यमागच्छन्तं
निजपितृपितामहमादितीर्थकरं संवत्सरोपवासशोषितशरीरं वृषभस्वामिनम्, एवंविधाकृतिरन्यत्रापि मया दृष्टपूर्वा क्वचिद्
एवमीहापोहमार्गणापरायणस्योदपादि जातिस्मरणम्, अजनि च क्षणमात्रं मूर्छा, सकर्पूरचन्दनरसाद्यभिषिक्तस्य व्यज-
नादिवातवीजितस्य च संपन्ना चेतना, ततः प्रासादादवतीर्णः प्राङ्गणभुवम्, अत्रान्तरे भगवानपि समागतस्त-
दीयमन्दिरद्वारम्, इतश्च समानीताः कैश्चिदिक्षुरससंपूर्णाः कुम्भा ढौकनीयकृते, समर्पिताः कुमारस्य, तेनाप्यादायैककलशं
तन्मध्यात्स्वहस्तयुगलेन धन्योऽहं यस्यैतावती समग्राऽपि सामग्री संमिलिता, यतः—"क्व प्राप्तस्तीर्थनाथोऽर्थी, सत्पा-
त्राधिपतिर्गृहम् ? । क्व वा प्राभृतमायातो, देय इक्षुरसोऽनघः ? ॥ १ ॥ उल्ललास कथं वा मे, भक्तिरत्रातिनिर्मला ? ।
अहो ! सत्पुण्ययोगेन, सोऽयं त्रितयमीलकः ॥ २ ॥" इत्यादि चिन्तयता प्रणम्य तीर्थकरमवादि—यथा भगवन् !
उपादीयतामयं सर्वदोषविशुद्धो ममानुग्रहनिमित्तमिक्षुरसो यद्युपकुरुते, परमेश्वरेण च विहितद्रव्याद्युपयोगेनानुत्सुक-

मानसेन मौनस्थितेनैव प्रसारितः पाणिपुटः, पर्यस्तः श्रेयांसेन तत्रेक्षुरसः, स्वामिनस्त्वचिन्त्यतीर्थकरनामकर्मानुभावेन करपुटक्षिप्यमाणेक्षुरसस्य शिखैव ववृधे, न त्वधो बिन्दुरपि पपात, तदुपयोगेन समाश्वस्तशरीरो बभूव संवत्सरानशनोपतप्तकायस्तीर्थकरो, न चालक्ष्यत केनाप्याहारयन्नसौ, यतो जन्मप्रभृत्येवैते गुणास्तीर्थकृतां, यथा—देहः प्रस्वेदामयविवर्जितो नीरजा सुरभिगन्धः । गोक्षीरसमं रुधिरं निर्विश्रसुधासितं मांसम् ॥ १ ॥ आहारो नीहारो लक्ष्यो नच मांसचक्षुषाऽमुष्यः। निःश्वासः फुल्लोत्पलसमानगन्धोऽतिरमणीयः ॥२॥ अस्मिंश्चावसरे हर्षभरनिर्भरैर्गगनवर्त्तिभिस्त्रिदशादिभिर्मुमुचे समं गन्धोदकेन पञ्चवर्णो वृन्तस्थायी कुसुमवर्षः, समाहताः सजलजलधरोदारगर्जितानुकारिनिजध्वानबधिरितभुवनविवरा दुन्दुभयः, कृतः पवनविलुलितध्वजाञ्चलचञ्चलश्चेलोत्क्षेपः, निपातिताऽर्द्धत्रयोदशकोटीप्रमाणा स्वप्रभाजालप्रकाशितदिगन्तरा रत्नवृष्टिः, उद्घुष्टं जयजयारवोन्मिश्रमहो ! सुदानमहो सुदानमितिवचनम्, अवतीर्णाः श्रेयांसगृहाङ्गणमेव केचिद् द्युसदः, संप्राप्तो विस्मितमना अन्योऽपि लोकः, पृष्टवांश्च श्रेयांसं-कथं भवता विज्ञातोऽयं पारमेश्वरः पारणकविधिः ?, श्रेयांस उवाच—जातिस्मरणेन, जनो व्याजहार-कीदृशमिदं जातिस्मरणं !, कथं चैतेन विदितोऽयं प्रकारः ?, तेनोक्तं-जातिस्मरणं तावन्मतिज्ञानविशेषः, अनेन च

मयाऽष्टौ भवा आत्मीयाः स्मृताः, येषु भगवज्जीवेन सहाहं पर्यटितः, तथाहि—इतो नवमभवे भगवतो मम पितृपितामहस्य जीव ईशानकल्पे ललिताङ्गनामा देव आसीत्, तस्य च स्वयंप्रभाभिधाना देवी परमप्रेमपात्रं कलत्रमहमभूवं, यथा च देवी तस्याहमभवं तथा कथयामि, ततः पूर्वभवे ह्यस्मिन् धातकीखण्डद्वीपान्तर्वर्त्तिपूर्वविदेहालङ्कारभूते सकलमङ्गलालये मङ्गलावतीविजये नन्दिग्रामनाम्नि ग्रामे वास्तव्यस्यैकस्य दरिद्रकुटुम्बिनो नागिलाख्यगृहपतेर्नागश्रीभार्यायाः सुलक्षणासुमङ्गलादीनां षण्णां दुहितृणामुपरि पुरोपार्जितोर्जितदौर्भाग्यसंभारवशेन सकलस्यापि स्वजनपरिजनस्यानिष्टा अत एव स्वपित्रवितीर्णनामधेयतया निर्नामिकेति लोके प्रसिद्धा पुत्रिका बभूव, तदा च कदाचित्कस्मिंश्चिदुत्सवे धनाढ्यलोकडिम्भकान् नानाविधभक्ष्यहस्तानवलोक्य तया ययाचे निजजननी—यथा ममापि किमपि मोदकादि भक्ष्यं प्रयच्छ येनाहमप्येतैर्नगरबालकैः सहाभिरमे, ततो मात्रा सकोपं त्रिवलितरङ्गितललाटपट्टां भीषणभृकुटीं विरच्य हत्वा च कपोलदेशे पाणिना निष्काशिता सा गृहाद्, उक्ता च—कात्र त्वद्योग्यं निराशे! भक्ष्यमस्ति!, यद्यर्थिनी त्वमस्य तदा व्रजाम्बरतिलकं पर्वतं, येन मनोरमाभिधाने तदुद्याने प्राप्नोषि नानाविधानि भक्ष्यफलानि, तानि च खादित्वा रमस्व स्वेच्छया, न चागन्तव्यं मदीयगृहसंमुखं, यद्यायासि तदा तथा करिष्यामि यथा न भविष्यसि, एवं च साक्रोशमसौ

निर्द्धाटिता रुदन्ती निःसृता गेहात्, ददर्श चाम्बरतिलकपर्वताभिमुखं व्रजन्तमनेकलोकं, जगाम तेनैव सह सा तं प्रदेशं, ततोऽसौ विलोकयामास तत्रानेकविधफलभरावनम्रपादपाकुलं गृहं शकुनिसार्थानामावासभमिं मृगादीनामत्युच्चशिखरैर्गगनाङ्गणमिव मातुमुद्यतमम्बरतिलकाभिधानं पर्वतं, तस्मिंश्च दृष्ट्वा मनोरमोद्यानवर्त्तितरुनिकरफलान्याददानमनेकलोकं स्वयंपाकपतितस्वादुफलनिकरमादाय साऽपि भक्षितवती, रमणीयतया च गिरेः संचरन्ती सह जनेन तांस्तानुद्देशानश्रौषीत् कस्यापि श्रुतिमनोहरं शब्दं, तदनुसारप्रवृत्तजनेन सार्द्धं जगाम साऽपि यावत्तं प्रदेशं तावद्ददर्शापरिमितानां देवमनुष्यादीनामग्रे धर्मकथां कुर्वाणं चतुर्दशपूर्वविदं ज्ञानचतुष्टयविज्ञातप्रत्यक्षवस्तुविस्तरं चारुतरयतिपरिवारं युगन्धराभिधानं सूरिं, ततः साऽपि समं तेन लोकेन प्रणिपत्य भगवन्तं निषण्णा ततो नातिदूरदेशे, श्रुता जीवानां बन्धमोक्षादिदेशना, कथान्तरे च पप्रच्छैषा तं महामुनिं—किं मत्तोऽपि केऽपि जीवाः सन्ति दुखिनः ?, सूरिणाऽभ्यधायि—भद्रे ! कीदृशं ते दुःखं ?, यतस्त्वं शृणोषि शुभाशुभान् शब्दान् पश्यसि सुन्दरासुन्दराण्यनेकरूपाणि जिघ्रसि प्रधानाप्रधानान् अनेकविधगन्धान् आस्वादयासि मनोज्ञामनोज्ञान् कटुतिक्तकषायमधुरादिरसविशेषान् स्पृशसीष्टानिष्टाननेकशो विचित्रस्पर्शान्, विद्यते च भवत्याः शीतोष्णक्षुधादिदुःखस्य कोऽपि कियानपि प्रतीकारः, स्वपिषि च त्वमात्मीयनिद्रया,

ज्योतिःप्रकाशेन करोषि च स्वकार्याणि, दुःखिनस्तु तेऽत्र संसारे ये सततमेव संपद्यमा-
कदाचिदत्यन्तान्धकारेऽपि ज्योतिःप्रकाशेन करोषि च स्वकार्याणि, दुःखिनस्तु तेऽत्र संसारे ये सततमेव संपद्यमा-
नाशुभशब्दरूपगन्धरसस्पर्शा निष्प्रतीकारशीतादिवेदना अक्षिनिमेषमात्रमपि कालमनवाप्तनिद्रासुखा नित्यान्धकारेषु
नरकेषु नरकपालैरनेकप्रकारकदर्थनाभिः कदर्थ्यमाना निरुपक्रमायुषः प्रभूतं कालं गमयन्ति, किंच—आसतां ताव-
न्नारकाः, येऽमी तिर्यञ्चस्तेऽपि वराकाः स्वपक्षपरपक्षोपजायमानाभिघाताः शीतोष्णक्षुत्पिपासादिवेदना या अनुभवन्ति
ताः प्रभूतकालेनापि कः शक्तो व्यावर्णितुं ?, अपरं च—ये त्वत्तो हीनतरा बन्धनादिपातिताः परवशाः
शारीरमानसानि दुःखशतसहस्राणि मनुष्या अपि वेदयन्ते तानपि पश्य तावत् त्वदपेक्षया किं दुःखमनुभवन्ति ?,
ततस्तया प्रणामपूर्वमभाणि-भगवन्! अवितथमिदं यत्त्वयोक्तं, केवलमस्य दुःखस्य प्रतीकारभूतमनुरूपं मद्योग्यतायाः
ममाप्युपदिश किमपि धर्मानुष्ठानं यदासेव्याहं जन्मान्तरेऽपि नैवंविधदुःखभागिनी भवामि, ततो निवेदितानि
सूरिणा तस्याः पञ्चाणुव्रतानि, गृहीतानि तया भावसारं, लोकाश्च तदीयदेशनया प्रतिबुद्धाः केचिदङ्गीचक्रिरे सर्व-
विरतिम् अन्ये देशविरतिमपरे सम्यक्त्वमात्रं, ततः केनापि जनेन समं प्रणम्य सूरिं निर्गतिकतया गता स्वकीय-
मेव गृहं; तत्रस्था च पालयति व्रतानि, क्रमेण तारुण्यमारूढा दौर्भाग्यदोषेण न केनापि परिणीता, षष्ठाष्टमादितपो-

विशेषशोषितशरीरा, तत एव निरन्तरस्वपितृवितीर्यमाणग्रासाच्छादनमात्रेणैव सन्तुष्टा निनाय प्रभूतकालं, अन्यदा च सकलशक्तिविकलमालोच्यात्मशरीरं विधिविहितभक्तपरित्यागा पूर्वोदितललिताङ्गकदेवेन स्वायुष्कक्षयप्रच्युतायां स्वर्गलोकात् स्वकीयदेव्यां स्वयंप्रभाऽभिधानायां तत्स्थानेऽन्यां चिकीर्षुणाऽवतीर्णेन मर्त्त्यलोकं रात्रौ विलोकिता सा, ततः प्रदर्श्य स्वकीयरूपं निर्नामिके ! मामङ्गीकृत्य कुरु निदानम्—अहमेतस्य देवी भवेयं, एवं भणित्वा चादर्शनीभूतोऽसौ, साऽपि तद्दर्शनोत्पन्नतदभिलाषा समाधिना कालगता तमेव ध्यायन्ती समुत्पेदे तस्मिन्नेवेशानकल्पे श्रीप्रभे विमाने तस्यैव देवस्याग्रमहिषी स्वयंप्रभाभिधाना देवीत्वेन, अन्तर्मुहूर्त्तमात्रेणैव सर्वपर्याप्तिभिः पर्याप्ता भवप्रत्ययावधिज्ञानविदितपूर्वभवव्यतिकरा समं ललिताङ्गकदेवेनावतीर्य तमेवाम्बरातिलकपर्वतं मनोरमोद्यानसमवसृतं समभिवन्द्य युगन्धरगुरुमुपदर्श्य तदग्रतो भक्तिभरनिर्भरं नाट्यविधिं पुनः स्वविमानं गता दिव्यकामभोगान् सुचिरमासिषेवे, अन्यदा च प्रम्लानमाल्यमालमधोमुखनयनयुगलमालोक्य किमपि ध्यायन्तं ललिताङ्गकदेवमभिहितमनया—प्राणेश ! किमद्य विमनस्कस्त्वमीक्ष्यसे?, तेनोदितं—प्रिये ! मे स्तोकावशेषमायुः, समासन्नीभूतस्त्वया सह विप्रयोगः, ततस्तस्या अपि तद्दुःखदुःखितायाः कदाचिदपि पश्यन्त्या एव नन्दीश्वरयात्राप्रस्थितः प्रधान-

विमानेन व्रजन्नर्द्धपथ एव पटुपवनविध्यापितः प्रदीप इव प्रलयमुपगतो ललिताङ्गदेवः । ततश्च्युत इहैव जम्बूद्वीपे पूर्वविदेहे समुद्रासन्नपुष्कलावतीविजये लोहार्गलनगरस्वामिनः सुवर्णजङ्घाभिधाननरपतेर्लक्ष्मीवत्या भार्याया वज्रजङ्घो नाम राजकुमारो जातः, स्वयंप्रभा तु तद्वियोगशोकाग्निना दह्यमाना तस्मिन्नेव श्रीप्रभे विमाने रतिमप्राप्नुवंती प्राक्तनयुगन्धरगुरूपदेशेन भूयो बोधिलाभनिमित्तं नन्दीश्वरद्वीपादिस्थानेषु जिनायतनपूजामाचरन्तीं निर्गम्य कियन्तमपि कालमायुःक्षयेण ततश्च्युत्वाऽस्मिन्नेव जम्बूद्वीपवर्त्तिविदेहविजये पुण्डरीकिण्यां नगर्यां वैरसेनचक्रवर्त्तिनो गुणवत्या देव्याः श्रीमती नाम्ना सुता जज्ञे, सा च पितृभवने पद्मसरसि हंसिकेव क्रीडन्ती धात्रीजनपरिगृहीता देहोपचयेन कलाकलापेन च वृद्धिमुपागता, क्रमशः समारूढप्रौढयौवना च कदाचित्सर्वतोभद्रप्रासादवर्त्तिनी विलोक्य नगरबहिस्तात् देवसंपातमीहापोहेन सस्मार पूर्वभवं, मोहमुपगता च क्षणं पारिवारिकाभिः सिक्ता चन्दनजलेन वीजिता व्यजनवातैर्लेभे चैतन्यं, चिन्तयामास चैवं–कथं मया प्राप्यः प्रियो ललिताङ्गकः ? किं वा तद्व्यतिरेकेण मे जीवितेन ?, ततोऽङ्गीचकार मौनं, स्वजनपरिजना अप्यवचनामवलोक्य जृम्भकसुरैराक्षिप्ताऽस्या वागित्यादि प्रलपन्तः कारयामासुर्मन्त्रयन्त्रादीन्, न च मुमोच मूकतामसौ, अन्यदा च मण्डयित्री

धात्री रहस्ये तामवोचद्—वत्से ! यदि कारणेन केनापि मूकत्वमवलम्ब्य व्यवस्थिता तदा निवेदय ममाग्रे, मा कदाचिन्ममापि शक्तिर्भवति तत्सिद्धौ, अज्ञाते वस्तुनि कीदृशमुपचारं चिन्तयामि ?, तयाऽवाचि—मातः ! अस्ति कारणं, तथाहि—मम जातिस्मरणमुदपादि, तेन पूर्वभवकान्तो ललिताङ्गकदेवो मया स्मृतः, तं च स्मृत्वा तद्वियोग-दहनदंदह्यमानमात्मानं निर्जीवमिव कलयामि, तेन मौनमालम्ब्य स्थिताऽस्मि, तयाऽभाणि—पुत्रि ! न मौनावस्थानेन कार्यसिद्धिः, किन्तूपायेन, तत्साधु कृतं भवत्या यदिदं मम निवेदितं, तथा करोमि संप्रति यथाऽचिरेणैव तव प्रिययोगो भवति, ततोऽनया कारितो महांश्चित्रपटो, लेखितं तत्र यथा कथितं धातकीखण्डप्रभृति देवलोकच्यवनावसानं सविस्तरं तच्चरितं, तदनन्तरं यः कोऽपि राजपुत्रादिस्तत्रायाति स्म तस्य दर्शयामासासौ तं पटं, अन्यदा च लोहार्गलपुरात् समाजगाम केनापि प्रयोजनेन तत्र वज्रजङ्घकुमारः, स चालोक्य तया श्रीमत्यम्बधात्र्या प्रदर्श्यमानं तं चित्रपटं झगिति जातजातिस्मरणो व्याजहार—नन्वहं स ललिताङ्गको यस्यैतच्चरितमालिखितं विद्यते, तत्कथय केनेदं लिखितं ?, न खलु स्वयंप्रभां देवीं विमुच्यान्योऽस्यार्थस्याभिज्ञः, तद्दर्शयत ममेदानीं तां, ततस्तुष्टयाऽम्बधात्र्योक्तं—कुमार ! यैषा तव पितृष्वसुर्दुहिता श्रीमती सा स्वयंप्रभा तयेदमालेखितं, तद्यावदहं राज्ञः

कथयामि तावत्प्रतीक्षस्व, मा दूरमुन्मनीभूः, एतदुक्त्वा गताऽसौ श्रीमतीसमीपम्, अचकथदमुष्यास्तद्वृत्तान्तं, पश्चाद्राज्ञो निवेद्योभयव्यतिकरं महाविभूत्या पाणिग्राहणपूर्वं संघटयामास कुमारेण सममेतां, विसृष्टा चोत्कृष्टसन्मानेन पितृभ्यां, अन्यदा सार्द्धं निजभर्त्रा ययौ लोहार्गलनगरं, तत्र सुकृतानुभावसंपद्यमानसमीहितार्थसार्थयोस्त्रिवर्गसारं विषयसुखसंभारमनुभवतोस्तयोरतिजग्मुः कियन्तोऽपि वासराः, वैरसेनचक्री च लोकान्तिकदेवप्रतिबोधितः सांवत्सरिकमहादानपूर्वं ज्येष्ठपुत्रं पुष्कलपालं राज्ये निवेश्याङ्गीकृतसर्वसङ्गविरतिः समुत्पन्नकेवलज्ञानो धर्मतीर्थं प्रवर्त्तयामास, वज्रजङ्घस्य तु जनितनिजगुणजनमनोविस्मयः समजनि तनयः, इतश्च--कदाचित्पुष्कलपालस्य विसंवदिताः केचित्सामन्ताः, ततः पुष्कलपालेन वज्रजङ्घस्य दूतः प्रहितो यथा भवता श्रीमतीसमेतेन शीघ्रमागन्तव्यं, तदनन्तरं सोऽपि तमर्थं दूतादवगम्य प्रचुरतरस्कन्धावारसहितः स्वपुत्रं नगरे संस्थाप्य प्रतस्थौ समं श्रीमत्या तदभिमुखं, तदन्तराले च शरवणमार्गेण गन्तव्यं, तस्मिंश्च गुणदोषविज्ञायकलोकेन निषिद्धो वज्रजङ्घो, यथाऽत्र दृष्टिविषाः सर्पाः सन्ति, तस्मादनेन पथा न गन्तव्यं, पश्चादसौ परिरयेण तान् परिहरन् क्रमेण प्राप पुण्डरीकिणीं, विज्ञाततदागमनाश्च तत्सामन्ताः प्रणता भयेन पुष्कलपालस्य, सोऽपि गृहागतयोस्तयोर्विधायोचितप्रतिपत्तिं प्रीत्या धृत्वा च कतिचिद्दिनानि

तौ विससर्ज, स्वपुराभिमुखं व्रजन्तौ च क्रमेण प्राप्तौ शरवणासन्नदेशं, लोको बभाण—सम्प्रति शरवणमध्येनापि गच्छतां न कश्चिदपायो, यतस्तत्र कस्याचिन्महामुनेः केवलज्ञानमुत्पन्नं, तस्मिंश्च देवसन्निपाते तदुद्योतेन प्रतिहतं पन्नगानां दृष्टिविषं, तच्च श्रुत्वा वज्रजङ्घश्चलितस्तेनैव पथा, ददर्श तत्रावासितौ सागरसेनमुनिसेनानगारौ निजभ्रातरौ प्रवरसाधुपरिवारौ, यौ च वासभवनमविकलतपोलक्ष्म्याः आश्रयः प्रसन्नतायाः स्थानं सौम्यतागुणस्य, ववन्दे च सपरिवारो भावसारं, भिक्षावेलायां च विशुद्धान्नपानादिभिः प्रतिलाभयामास स्वावासमायातौ, मध्यन्दिनावसाने च तयोरेव महातपस्विनोर्गुणाननुचिन्तयन् अहो महानुभावावेतौ मद्भ्रातरौ वयमपि कदा विमुच्य राज्यविस्तरमेनां मुनिवृत्तिमङ्गीकृत्य निःस्पृहमानसा इत्थं विहरिष्याम इति पर्यालोचयन्मुहुर्मुहुर्दत्तप्रयाणकः क्रमेण प्राप्तः स्वनगरं, इतश्च तत्तनूजेन निजनगरान्निर्गतयोः पित्रोर्दानसन्मानादिना वशीकृत्य भृत्यवर्गं प्रयुक्तस्तदागमनकाले तद्वासगृहे विषधूपः, एनं च व्यतिकरमजानानो वज्रजङ्घः समं श्रीमत्याऽतिक्रान्ते प्रदोषे विसृष्टपरिजनोऽनुस्मरन् साधुगुणान् विश्रान्तः तत्र, विषधूपविह्वलितचेतनश्च तत्सहित एव प्राप्तः पञ्चत्वं, समुत्पन्नास्त्रिपल्योपमायुष्क उत्तरकुरुषु सहैव तया मिथुनत्वेन, तदवसाने च मृत्वा सौधर्मदेवलोके देवभावेन द्वावपि जातौ पूर्वानुवेधेन, तत्रापि महती प्रीतिरासीत्,

प्रभङ्कराभिधानपुर्यां वज्रजङ्घजीवः सुविधिनाम्नो
पल्योपममात्रं चायुः, तत्क्षये च वप्रावतीविजयवर्त्तिन्यां केशवनामा संजातः, तत्रापि
वैद्यस्याङ्गजोऽभयघोषाभिधानोऽजनि, श्रीमतीजीवस्तु श्रेष्ठितनयः
तथैवात्यन्तिकी स्नेहवृद्धिर्बभूव, तयोश्चान्येऽपि तस्मिन् भवे चत्वारो वयस्या राजाऽमात्यश्रेष्ठिसार्थवाहपुत्रा
बभूवुः, ते च कदाचिदेकस्य कृमिकुष्ठदोषोपद्रुतस्य महामुनेः क्रियां कृत्वा तन्मूलपुण्योपार्जनेन पश्चिमवयोविराचित-
श्रामण्यानुभावेन च बद्धदेवायुषो मृत्वाऽच्युतकल्प इन्द्रसामानिकाः सुरा उत्पन्नाः, ततश्च्युतोऽभयघोषजीव
इहैव जम्बूद्वीपे पुष्कलावतीविजये पुण्डरीकिण्यां नगर्यां वैरसेनराजस्य धारिणीदेव्या वज्रनाभनामा सूनुः संजातः,
स च कालक्रमेण चक्री संपन्नः, इतरेऽपि वैरसेनस्य सूनवः केशववर्जाः क्रमेण बाहुसुबाहुपीठमहापीठनामानो
माण्डलिका राजानो जज्ञिरे, वैरसेनोऽपि प्रतिपन्नदीक्षो वज्रनाभस्य चक्रोत्पत्तिकाले केवलज्ञानमवाप्य धर्मतीर्थं
प्रवर्त्तितवान्, केशवजीवस्तु वज्रनाभचक्रिणः सारथिर्बभूव, केनापि कालेन सोऽपि समं तैश्चतुर्भिर्भ्रातृभिः सारथिना
च भगवतो वैरसेनतीर्थकरस्य स्वपितुरन्तिके दीक्षां प्रपेदे, तेषां च मध्ये वज्रनाभश्चतुर्दशपूर्वधर इतरे चैकादशाङ्ग-
विद आसन्, प्रभूतकालं च श्रामण्यं परिपाल्याराधितसमाधिमरणा उत्पेदिरे च सर्वेऽपि सर्वार्थसिद्धे महाविमाने

देवत्वेन, स्थितिस्तत्र त्रयस्त्रिंशत्सागरोपमाणि, तत्क्षये च प्रथमं वज्रनाभजीवोऽजनि नाभिकुलकरसुतत्वेन, बाहुप्रभृतिजीवास्तु क्रमेण तस्यैव भरते बाहुबलिब्राह्मीसुन्दरीभावेन जाताः, सारथिजीवस्त्वहं श्रेयांसः समजनि, तदेवमहो लोकाः ! मया पूर्वमेव पुण्डरीकिण्यां वैरसेनस्तीर्थंकरो दृष्टः, श्रुतं च तत्समीपे यथैष वज्रनाभो भारतक्षेत्रे तीर्थंकरो भविष्यति, ज्ञातश्च तदा तदन्तिकप्रव्रजितेनैष दानादिविधिः, केवलमेतावन्ति दिनानि भवान्तरस्मरणं नासीत्, अद्य तु परमेश्वरावलोकनोपजातजातिस्मरणस्य सर्वमिदं मे प्रकटमभूत्, ततः कारितो मया भगवानेवं पारणकं, येऽपि सुरशैलादिस्वप्ना अस्मदादिदृष्टाः समागतेन सत्पित्रा विचारयितुमुपक्रान्तास्तेषां मध्ये तदेव पारमार्थिकं फलं यत्संवत्सरानशनशुष्यमाणमूर्त्तेः तातस्य पारणकविधापनेन कर्मशत्रुविजये साहाय्यकरणकमिति, एतच्चाकर्ण्य जनोऽभिवन्द्य तं स्थानमुपगतः स्वं स्वं, श्रेयांसोऽपि च भक्त्या यत्र प्रतिलाभितो भगवान् मा क्रमिषीदत्र जनः पदानि तातस्य निजकपादाभ्यामिति तत्र दिव्यरत्नैः सत्पीठं कारयामास, पृष्टश्च जनेनोचे—नन्विदमादिकरमण्डलं, तदनु स्वस्वगृहेषु जनोऽपि च यत्र जिनः पारणं चक्रे तत्र तथाविधपीठं विधाप्य सन्ध्यात्रयेऽपि पूजयति, कालेन ख्यातिमगात् तच्चेहादित्यमण्डलकं, श्रेयांसः पात्रदानानुभावसंपद्यमानोत्तरोत्तरकल्याणकलापः सुचिरमनुभूयसांसारिकसुखं भगवत

आदितीर्थकरस्य जातायां केवलज्ञानोत्पत्तौ भगवत्समीप एव गृहीतव्रतः परिपालयन्निरतिचारं श्रामण्यं क्षपकश्रेणिक्रमेण विधाय घनघातिकर्मक्षयमुत्पाटितविमलकेवलज्ञानः कालक्रमेण क्षपितभवोपग्राहिकर्मचतुष्को विहाय शरीरं गतो मोक्षम् ॥ इति श्रेयांसकथानकं समाप्तम् ॥

प्रकृतद्वारगाथाभावार्थस्त्वयं–यथा श्रेयांसेन भावनासारं पात्रदानमनुष्ठितं तथाऽन्येनाप्यनुष्ठेयमिति ॥ व्याख्यातं नवभिरपि द्वारैरतिथिसंविभागव्रतं, तद्व्याख्यानाच्च समाप्तानि चत्वारि शिक्षापदानि, तत्समाप्तौ द्वादशापि व्रतानि भणितानि, सम्प्रति संलेखना नवभिर्द्वारैर्वाच्येति प्रथमद्वारेण तावदभिधीयते—

जिणभवणाइसु संथार दिक्ख निज्जावयाओ अडयाला ।
पियधम्माइसमेया, चउरंगाऽऽराहओ मरणे ॥ १२९ ॥

'जिणभवणाइसु संथार दिक्ख' त्ति जिनभवनम्–अर्हदाश्रयः आदिशब्दाज्जिनजन्मभूम्यादिग्रहस्तेषु जिनभवनादिषु संस्तीर्यते–स्वापार्थं वितन्यते इति संस्तारः–कुशकम्बल्यादिरूपस्तत्प्रधाना दीक्षा–सर्वसंयमोपादानेन चित्तशिरस्तुण्डमुण्डनं संस्तारदीक्षा, प्रत्युपेक्षणादिक्रियाकलापासमर्थस्य अन्तः सर्वसावद्यनिवृत्तिप्रतिज्ञाऽध्यवसायेन

बहिस्तु रजोहरणमुखानन्तकादिसाधुवेषधारणेन संस्तारकेऽवस्थानमित्यर्थः, सा ग्राह्येति शेषः, तथा चोक्तम्—"धर्मावश्यक-हानौ वा, मरणे वाऽप्युपस्थिते । संलिख्य तपसाऽऽत्मानं, संयमं प्रतिपद्यते ॥१॥ अर्हतां जन्मनिर्वाणचैत्यस्थाने प्रतिश्रये । तदलाभे गृहेष्वेवारण्ये जन्तुविवर्जिते ॥ २ ॥" इति उपलक्षणं चेयमनशनादेः, ततो जिनभवनादौ संस्तारदीक्षाग्र-होऽनशनादि वाऽङ्गीकार्यं, इह चानशनस्य नियमात्सप्रतिकर्मत्वादेतदङ्गीकरण एव विशेषविधिमाह—'निज्जावया अडयाल' त्ति निर्यापयन्ति—अनशनिनं सुखे स्थापयन्तीति निर्यापकाः—प्रतिचारकाः 'तु' पुनरर्थे, कियन्तः ? अष्टभिरधिकाः चत्वारिंशदष्टचत्वारिंशत्, कार्या इति शेषः, किंरूपा एते कार्याः ? इत्याह—'प्रियधर्मादिसमेताः' भावप्रधानत्वान्निर्देशस्य प्रियधर्मत्वादिभिर्गुणैः समेता—युक्ताः, आदिशब्दाद् दृढधर्मत्वादयो गृह्यन्ते, तथा चोक्तं—"पासत्थोसन्नकुसीलठाणपरिवज्जिया उ गुणजुत्ता । पियधम्मवज्जभीरू अडयालीसं तु निज्जवगा ॥ १ ॥ उव्वत्त १ दार २ संथार ३ कहग ४ वाई ५ य अग्गदारंमि । ६ भत्ते ७ पाण ८ वियारे ९-१० कहग ११ दिसा जे समत्था १२ य ॥ २ ॥ एएसिं तु पयाणं चउक्कगेणं गुणिज्जमाणाणं । निज्जावगाण संखा होइ जहासमयणि-द्दिट्ठा ॥ ३ ॥" तत्र येऽनशनिनमुद्वर्त्तयन्ति परावर्त्तयन्ति च ते चत्वारः 'उव्वत्त' त्ति प्रथमपदेन निर्दिष्टाः, ये

चाभ्यन्तरद्वारमूले तिष्ठन्ति तेऽपि चतुःसङ्ख्याः ' दार ' त्ति द्वितीयपदेन सूचिताः २, एवं ' संथार ' त्ति संस्तारकर्त्तारः ३, ' कहग ' त्ति तस्यैव विदितवस्तुतत्त्वस्यापि धर्मकथकाः ४, ' वाइय ' त्ति वादिनः ५ ' अग्गदारंमि ' त्ति अग्रद्वारमूले ये तिष्ठन्ति ६, ' भत्ते ' ति तदुचितभक्तानयनयोग्याः ७, ' पाण ' त्ति पानानयनयोग्याः ८, ' वियार ' त्ति उच्चारपरिष्ठापकाः ९, प्रश्रवणपरिष्ठापकाश्च १०, ' कहग ' त्ति बहिर्धर्मकथकाः ११, ' दिसा जे समत्था य ' त्ति दिशासु पूर्वाद्यासु चतसृष्वपि ये समर्थाः सहस्रयोधिप्रभृतयः, एकैकसङ्ख्यया क्षुद्रोपद्रवनिवारणाय ध्रियन्ते तेऽनेनैव सूचिताः १२, अत्र चैके सूरय एवमाचक्षते-उच्चारप्रश्रवणयोर्द्वयोरप्येके परिष्ठापका इति चत्वार एवामी, तन्मतेन दिशासु प्रत्येकं द्वौ द्वौ द्रष्टव्याविति न यथोक्तसङ्ख्याबाधेति, अथैतावन्त एते कस्यचिन्न भविष्यन्ति तर्ह्येकैकहान्याऽपि ते कर्त्तव्या यावज्जघन्यपदेनैकोऽनशनिनः समीपमशून्यं करोति, अन्यस्तु भक्तपानाद्यर्थं पर्यटतीति द्वौ, एकेन तु निर्यापकेन न कर्त्तव्यैवानशनप्रतिपत्तिः, यदुक्तम्—" एगो जइ निज्जवओ, अप्पा चत्तो परो पवयणं च। सेसाणमभावेऽविहु ता बीओऽवस्स कायव्वो ॥ १ ॥ " त्ति, य एवंविधसामग्र्या म्रियते तस्य किं स्यात् ? इत्याह—'चतुरङ्गाराधको मरण' इति मानुषत्वश्रुतिश्रद्धासंयमवीर्याख्यानि चत्वारि धर्मप्रतिपत्तेरङ्गानि—कारणानि तेषामाराधको मरणकाले भवेदिति शेष इति गाथार्थः ॥ भेदद्वारमधुना—

मरणं सत्तरसविहं, नाउं तत्थंतिमाइ मरणाइं ।
पायवइंगिणिमरणं, भत्तपरिण्णं च कायव्वं ॥ १३० ॥

मृतिः मरणं दशविधप्राणप्रहाणलक्षणं 'सप्तदशविधं' सप्तदशसङ्ख्यप्रकारमावीच्यादि, तदुक्तम्— "आवीइ १ ओहि २ अंतिय ३ वलायमरणं ४ वसट्टमरणं ५ च। अंतोसल्लं ६ तब्भव ७ बालं ८ तह पंडियं ९ मीसं १० ॥ १ ॥ छउमत्थमरण ११ केवलि १२ वेहाणस १३ गद्धपट्ठमरणं १४ च । मरणं भत्तपरिण्णा १५ इंगिणी १६ पाओवगमणं १७ च ॥ २ ॥ 'आवीइ' त्ति वीचिः-विच्छेदो न विद्यते वीचिः यत्र तदवीचि तच्च तन्मरणं च मरणशब्दस्य प्रत्येकं सम्बन्धादवीचिमरणं, तच्च नारकादिचतुर्गतिवर्त्तिनां जीवानामुत्पत्तिसमयादारभ्यानुक्षणानुभवनेन निजनिजायुःकर्मदलिकपरिशटनरूपं, 'ओहि'त्ति अवधिः—मर्यादा द्रव्यादिरूपा तेन मरणमवधिमरणं, यन्नारकादिभवनिबन्धनायुःकर्मदलिकाद्यनुभवनपूर्वकं मृतस्य भूयोऽपि भवान्तरवर्त्तिनस्तदनुभवपुरस्सरं मरणं तद्द्रव्यावधिमरणं, न चासंभवि गृहीतोज्झितानां कर्मदलिकादीनां पुनर्ग्रहणं, परिणामवैचित्र्यात, 'अंतियं'ति अन्ते भवमन्त्यं तच्च तन्मरणं चान्त्यमरणं, यदुपात्तनारकाद्यायुष्कर्मदलिकाद्यनुभवनेन विवक्षितभवे मरणे सति पुनस्तान्येवायुर्द-

मरणं न भवति तदन्त्यमरणं, ' वलायमरणं ' ति भग्नव्रतपरिणतीनां व्रतिनां शुभाध्य-
लिकद्रव्यादीन्यनुभूय भवान्तरे मरणं न भवति तदन्त्यमरणं, ' वलायमरणं ' ति भग्नव्रतपारिणतीनां व्रतिनां शुभाध्य-
वसायतो वलयतः-व्याघुट्यमानानां मरणं वलन्मरणं, ' वसट्टमरणं च ' त्ति दीपशिखावलोकनाकुलितपतङ्गस्येवेन्द्रिय-
विषयवशार्त्तस्य मरणं वशार्त्तमरणं, ' अंतोसल्लं ' ति मायानिदानमिथ्यादर्शनानि जीवस्य दुःखहेतुत्वाच्छल्यानीव श-
ल्यानि तद्युक्तस्यानालोचिताप्रतिक्रान्तस्य मरणमन्तःशल्यमरणं, तदुक्तम्—" गारवपंकनिबुड्डा अइयारं जे परस्स न
कहंति । दंसणनाणचरित्ते ससल्लमरणं भवे तेसिं ॥ १ ॥ " परस्येत्याचार्यादेः । " एयं ससल्लमरणं मरिऊण महब्भए
तह दुरंते । सुइरं भमंति जीवा दीहे संसारकंतारे ॥ २ ॥ " ' तब्भवं ' ति तद्भव एव मरणं तद्भवमरणं, विव-
क्षितभव एव मुक्तिगामिनां जीवानां यत्तदित्यर्थः, ते च गर्भजमनुष्याः सङ्ख्यातवर्षायुषः कर्मभूमिजा एव
केचिदिति, ' बालं ' ति बालमरणमविरतसम्बन्धि, ' तह पंडियं ' ति तथा पण्डितमरणं यत्सर्वविरतानां, ' मीसं ' ति
मिश्रमरणं देशविरतानां, ' छउमत्थमरणं ' ति छादयति—आवृणोति जीवस्य ज्ञानादिपरिणाममिति छद्म—घातिकर्म
तत्र तिष्ठन्ति ये ते छद्मस्थास्तेषां मरणं छद्मस्थमरणं, मत्यादिज्ञानिमरणमित्यर्थः, ' केवलि ' त्ति केवलं—संपूर्णं ज्ञानं
क्षायिकं तद्विद्यते येषां ते केवलिनस्तेषां मरणं केवलिमरणं, ' वेहाणसं ' ति विहायो—नभस्तत्र भवं वैहायसं, यदुद्व-

न्धनेन नभसि लम्बमानस्य मरणं तद्वैहायसमरणं, 'गद्धपट्ठमरणं च' त्ति यदुत्पतन्निपतद्गृध्रादिपतत्रिसंकुलायां प्रचुरतरकरंकसंकीर्णश्मशानभूमौ निपत्य गृध्रादितुण्डखण्ड्यमानस्य कस्यचिन्मरणं तद्गृध्रपृष्ठमरणं, 'मरणं भत्तपरिण्णत्ति भक्तपरिज्ञा—त्रिचतुर्विधाहारत्यागो, मरणशब्दस्याग्रे पाठात् तया मरणं भक्तपरिज्ञामरणं, एतच्च नियमात्स्वतः परतश्च प्रतिकर्मसमन्वितमार्यिकादीनामपि साधारणं—"सव्वाविय अज्जाओ सव्वेऽवि य पढमसंघयणवज्जा । सव्वेऽवि देसविरया पच्चक्खाणेण उ मरंति ॥ १ ॥" इत्यत्र प्रत्याख्यानशब्देन भक्तपरिज्ञाया एवोक्तत्वात्, 'इङ्गिणि' त्ति इङ्गिनीमरणं यदिङ्गितप्रदेशे चतुर्विधाहारवर्जनेनान्यनिरपेक्षमात्मनैवोद्वर्त्तनादि कुर्वतो विशिष्टतरधृतिसंपन्नस्य मरणं, 'पाओगमणं व' त्ति 'पाओग' त्ति पदैकदेशे पदसमुदायोपचारात् पादपस्य—तरोः उपगमनं—समीपगमनं निश्चेष्टताधर्मेण यत्र तत्पादपोपगमनं तच्च तन्मरणं च पादपोपगमनमरणं, प्रथमसंहननवर्त्तिनो निष्प्रतिकर्मणो विशिष्टतरधृत्यध्यासितस्य निमेषादिचेष्टाविकलतया स्वयं तरोरिव पतितस्य यन्मरणं तत्पादपोपगमनमरणं, इदं च द्वेधा—निस्सार्यनिस्सारिभेदात्, 'ज्ञात्वा' अवबुध्य 'तत्र' तेषु मध्ये 'अन्तिमाति' अन्त्यानि मरणानि 'कर्त्तव्यानि' विधेयानि, कर्त्तव्यशब्दो गाथापर्यन्त-

वर्त्यत्र योज्यते, ननु कर्त्तव्यमित्येकवचनान्तं तत्कथं मरणानीति बहुवचनान्तेन योज्यते ?, सत्यं, प्राकृते लिङ्गविभक्तिवचनव्यत्ययस्येष्टत्वान्न दोषः, तान्येव नामत आह—'पायवइंगिणिमरणं भत्तपरिण्णं च' त्ति तत्र 'पायव 'त्ति पादपोपगमनमिङ्गिनीमरणं भक्तपरिज्ञा चेति, एतानि च प्राग्व्याख्यातान्येवेति गाथार्थः ॥ तृतीयद्वारमधुना—

संलेहणाइ पुव्वं, वियडणमुच्चारणं तह वयाणं ।
तिविहं चउव्विहं वा, आहारं वोसिरे सव्वं ॥ १३१ ॥

संलिख्यते—तनूक्रियते शरीरकषायादि यया सा संलेखना, सा चोत्कर्षतो द्वादशसंवत्सरा विज्ञातमरणस्य भणिता, यदुक्तम्—"चत्तारि विचित्ताइं विगईनिज्जहियाइं चत्तारि । संवच्छरे य दुन्नि य एगंतरियं च आयाम ॥ १ ॥" चत्वारि वर्षाणि यावद्विचित्राणि तपांसि—उपवासषष्ठाष्टमादीनि प्रथमं करोति, अत्र च पारणके सर्वकल्पं पारयतीति सम्प्रदायः, तदग्रे चत्वारि वर्षाणि विकृतिरहितानि विचित्रतपांसि विधत्ते, पारणके विकृतिं न गृह्णातीत्यर्थः, तदुपरि संवत्सरद्वयमेकान्तरिताचाम्लैस्तिष्ठति,

५४

चतुर्थं कृत्वा काञ्जिकाचामाम्लं करोतीत्यर्थः, ' नाइविगिट्ठो य तवो छम्मासे परिमियं च आयामं । अण्णेऽवि य छम्मासा होइ विगिट्ठं तवोकम्मं ॥ २ ॥ " एकादशसंवत्सरस्याद्यान् षण्मासान् यावन्न अतिविकृष्टम्-अष्टमादि तपश्चरति, चतुर्थं षष्ठं वा विधाय परिमितेनाचामाम्लेन पारणकं विधत्ते, न्यूनोदरतां करोतीत्यर्थः, अन्यानपि चाग्रेतनान् षण्मासान् संलेखनाकर्तुर्भवति विकृष्टम्—अष्टमादितपश्चरति, पारणके त्वाचामाम्लमेव । " वासं कोडीसहियं आयामं कट्टु आणुपुव्वीए । गिरिकंदरं च गंतुं पाउवगमणं अह करेइ ॥ ३ ॥ " द्वादशवर्षे तु कोटीसहितं निरन्तरमेकान्तरितं वाऽऽचाम्लं कृत्वा क्रमेण यद्यनिःसारपादपोपगमनं चिकीर्षति तदा गिरिकन्दरं गत्वा पादपोपगमनं करोति, निःसारिणस्तस्य चिकीर्षया तु वाशब्दाद्वसतावपि तत्करोतीति, पादपोपगमनं चोपलक्षणं भक्तपरिज्ञादेरिति, आदिशब्दात्—" पच्छिल्लहायणंमी चउरो धारेतु तेल्लगंडूसे । निसिरेइ खेल्लमल्ले, किं कारण गल्लधरणं तु ? ॥ ४ ॥ " पाश्चात्यहायने द्वादशवर्षे चतुरो मासान् पारणकेपु तैलगण्डूषान् धारयित्वा परित्यजति खेल्लमल्लके, अत्र प्रेरकः प्राह—किं निमित्तं तैलगण्डूषधरणं ?, आचार्य आह—" लुक्खत्ता मुहजंतं मा हु खुहेज्जत्ति तेण धारेइ । मा हु नमोकाररसा अपच्चलो सो हवेज्जाहि ॥ ५ ॥ " पाश्चात्यसंवत्सरे निरन्तराचामाम्लक-

रणेन रूक्षत्वान्मुखयन्त्रं वातादिना मा क्षोभीदिति हेतोर्गण्डूषधारणं, ननु मरणस्याङ्गीकृतत्वान्मुखक्षोभेऽपि को दोषः?, उच्यते, मुखयन्त्रक्षोभे नमस्कारोच्चारणासमर्थोऽसौ भवेदित्यादिविधिर्गृह्यते, तत्पूर्वं-संलेखनादिपूर्वं 'वियडण' त्ति विकटनाम्—आलोचनां, दद्यादिति शेषः, 'उच्चारणं तह वयाणं' ति तथोच्चारणं—संशब्दनं व्रतानां—प्राणातिपात-विरमणादीनां, कुर्यादित्यध्याहारः, ततस्त्रिविधं चतुर्विधं वाऽऽहारं व्युत्सृजेत् सर्वमिति, तत्राशनखाद्यस्वाद्यभेदेन त्रिविधं पानकसमन्वितांशनादिभेदात्तु चतुर्विधं वा 'व्युत्सृजेत्' परित्यजेत् 'सर्वं' निरवशेषं, अत्र चायं विधिः—अपराह्णसमये तावदनशनप्रतिपत्तिः कार्या, यदि च कालसहता न भवति तदा पूर्वाह्णादिकालेऽपि, तच्च जिनायतने साधुसमीपे स्वीकर्त्तव्यं श्रावकेण, संहननसहायाद्यभावे च स्वगृहेऽपि, तस्मिंश्च कृते भावनाराधनापाठनादिनमस्का-रादिपरेण निर्यापकादिसामग्रीसमन्वितेन स्थेयमिति गाथार्थः ॥ दोषद्वारं त्वेवम्—

वालमरणेहि जीवो सनियाणो दुक्खसागरमपारं ।
पावइ जह संभूई, पंडरअज्जा व दिट्ठंतो ॥ १३२ ॥

'वालमरणैः' जलज्वलनप्रवेशादिभिः 'जीवः' प्राणी 'सनिदानः' निदानसम्बन्धसहितः दुःखम्—

असातोदयरूपं तदेवातिदुर्लङ्घत्वात्सागर इव—समुद्र इव दुःखसागरस्तं ' अपारं ' अपर्यवसानं ' प्राप्नोति ' लभते क इवेत्याह—' यथा संभूतिः' संभूतिर्नामा साधुर्ब्रह्मदत्तचक्रवर्त्तिपूर्वभवजीवः पण्डुरार्या वा 'दृष्टान्तः' निदर्शनमत्रार्थे इति गम्यते, गाथासङ्क्षेपार्थः, व्यासार्थस्तु कथानकगम्यः, तच्चेदम्—

दोषे बालमरणे संभूतिपण्डरार्यौ दृष्टान्तौ.

साकेतनगरस्वामिनश्चन्द्रावतंसकस्य महानरपतेर्मुनिचन्द्रनामा पुत्रः कदाचित्सागराचार्यसमीपे समाकर्णितानवद्यानगारधर्मदेशनासमुत्पन्नसर्वविरतिपरिणामः प्रव्रज्यामङ्गीचकार, तीव्रसंवेगभावनाभावितान्तःकरणश्चोपात्तद्विविधशिक्षः समं सूरिणा विहरन्नप्रतिबद्धविहारेणान्यदा कथञ्चिदेकस्यामटव्यां सार्थभ्रष्टो बुभुक्षापिपासापीडित इतस्ततः संचरन्नवलोकितश्चतुर्भिर्गोपालदारकैः, समुत्पन्नशुभभावैः प्रतिलाभितो यतिजनोपयोग्यैस्तद्देशकालोचितद्रव्यैर्दुग्धादिभिः, कियत्याऽपि वेलया प्रापितोऽभीष्टपुरस्य पन्थानं, तन्द्रद्रकभावावर्जितमानसेन मुनिना तु कृता तेषामुचितदेशना, परिणता भावसारं, संजातस्तथाभव्यत्ववशेन तेषां सम्यक्त्वलाभः, केवलं तन्मध्ये द्वयोर्मुनिं प्रति किञ्चिज्जुगुप्सापरिणामो बभूव, अपरित्यक्तसम्यग्दर्शनानां च कालान्तरे समजनि परलोकगमनं, ततः समुत्पेदिरे ते वैमानिकसुरत्वेन, तदायुष्कावसाने च यौ जुगुप्सापरौ बभूवतुस्तौ देवलोकाच्च्युत्वा दशार्णदेशवर्त्तिनि श्रीहृदाभिधानग्रमो

शाण्डिल्यनाम्नो ब्राह्मणस्य यशोमत्यभिधानाया दास्या विनयादिगुणावर्जितेन तेनैव ब्राह्मणेन भार्यात्वेनाङ्गीकृताया गर्भे पुत्रयुगलत्वेनाजनिषातां, उचितसमयेऽतिक्रान्तबालभावौ च कदाचित् क्षेत्ररक्षानिमित्तं गतावटव्यां, तत्र न्यग्रोधपादपाधोवर्त्तिनोरतयोरस्तं गतः सहस्रकिरणः, स्थितौ तौ तत्रैव, क्षणमात्रेण च समागतनिद्रयोरतत एव वटकोटरान्निर्गत्य दन्दशूकेन दष्ट एकस्तयोः, दष्टो दष्ट इति वदन्नुत्थितो वेगेन, द्वितीयोऽपि तद्ध्वनिप्रतिबोधितः काकोदरनिरीक्षणार्थमितस्ततो हस्तक्षेपं कुर्वाणो दष्टस्तेनैवाहिना, विषवेगाकुलितचेतनौ च पतितौ द्वावपि महीपृष्ठे, विनिस्सरद्बहललालाऽऽविलवदनबीभत्सौ च केनचिदविरचितप्रतीकारौ क्षणमात्रेण प्राप्तौ परासुतां, समुत्पन्नौ च स्वकर्मपरिणतिरज्जुसंयुतौ द्वावपि कालिञ्जराभिधाननगवरे कस्याश्चिद्वनमृग्या मृगशावयुगलतया, समुपारूढप्रौढवयसोश्च क्रमेण पूर्वभवसहवाससमुपजातप्रीतिप्रकर्षयोः समं चरतोः समं निषीदतोः समं शयानयोः समाजगाम कदाचिदुष्णकालः, तीव्रतृष्णोपतातापप्यमानौ च जलपिपासया समागतौ वेत्रवतीसरितं, सर्वतस्तरलतारकमवलोकयन्तौ तस्याः सलिलमापीय समुत्तरन्तौ निविडवनगहनान्तरिततनुना लुब्धकेनैकेन पुरातनवैरिणेव कर्णान्ताकृष्टचण्डकोदण्डदण्डोन्मुक्तैकबाणेन विद्धौ मर्मप्रदेशे, प्रहारवेदनाविधुरशरीरौ च परित्यक्तौ

प्राणैः, आर्त्तवशेन भयोऽपि संजातौ मृतगङ्गाऽन्हदोपकण्ठवासिन्यां एकस्यां हंसिकायां हंसयुग्मभावेन, तथैव यौवनमनुप्राप्तौ तस्मिन्नेव महाऽन्हदे क्रीडन्तौ विचित्रक्रीडाभिः अपरस्मिन्नहनि तथाविधभवितव्यताप्रेरितेन केनचित्पापकर्मकारिणा शाकुनिकेन समागत्य झगित्येवैकपाशावपाशितौ गृहीत्वा कराभ्यां चलितकन्धरं व्यापादितौ सन्तौ काशीविषये बाणारसीनगर्यां महाधनसमृद्धस्य भूतदत्ताभिधानमातङ्गनायकस्याणहिकाभिधानभार्यायां बभूवतुर्यमलपुत्रत्वेन, रचितचित्रसंभूतिनामकौ च क्रमेण प्रवर्द्धमानशरीरौ तथैवातिप्रीतिसमन्वितौ संपन्नावष्टवार्षिकौ, तस्यां च नगर्यां तदाऽमितवाहनो राजा, तेन कस्मिंश्चिन्महत्यपराधे संभावितो नमुचिनामा मन्त्री, तीव्ररोषतस्तस्यैव भूतदत्तचाण्डालस्य प्रच्छन्नं वधाय समर्पितः, ततः संजाते सकललोकलोचनबलापहारिणि बहलान्धकारे नीत्वा प्रच्छन्नप्रदेशे एनं बभाण भूतदत्तस्तनयस्नेहेन, यथा—भोः ! भोः ! त्वद्वधायादिष्टोऽहं राज्ञा, केवलं यदि मदीयपुत्रकौ गुप्तभूमीगृहप्रविष्टो गीतादिकला अविकला ग्राहयसि तदा करोमि भवतोऽहं प्राणरक्षाम्, अन्यथा न ते जीवितमस्ति, ततो जीवितार्थिना प्रतिपन्नमनेन तद्वचः, समर्पितौ तनूजौ, प्रवृत्तौ ग्राहयितुं कलाः, अणहिका च मदङ्गजोपाध्यायोऽयमिति बहुमानेन स्नानभोजनादिशरीरस्थितिं नित्यमेव निर्वर्त्तयितुमारेभेऽस्य, गच्छत्सु केषुचिद्दिवसेषु दुर्दमतया हृषीकतुरङ्गमानां दुर्लङ्घ-

तया मकरकेतुराजाज्ञायाः चटुलतया रमणीस्वभावानां समजन्यनुरागपरवशा सा तस्मिन्नेव, समं तेन प्रवृत्ता विषयसुखमुपभोक्तुं, विज्ञातश्चैष व्यतिकरो भूतदत्तेन, केवलं जायेतां सकलकलाकलापपारगौ मत्पुत्रौ तावत्पश्चाद् ज्ञास्याम्यहमेतदुचितमिति बुद्ध्या स्थितमज्ञवृत्त्या, कालान्तरे च कृते स्वपुत्राभ्यां सकलकलासङ्ग्रहे व्यवस्थितो भूतदत्तस्तं हन्तुं, विदितपित्राशयाभ्यां च चित्रसंभूतिभ्यामस्मदुपाध्यायोऽयमिति कृतज्ञतया विधाय रहस्यभेदं त्रासितो गतो हस्तिनागपुरे सनत्कुमारचक्रवर्त्तिसमीपं, भवितव्यतानियोगेन प्राप्तस्तत्रामात्यत्वम् । इतश्च चित्रसंभूती भूताद्भूतरूपयौवनादिगुणकलापौ मधुरगीतध्वनिना सकलमेव नगरीलोकं विशेषतस्तरुणरमणीसमूहमानन्दयन्तौ वाणारसीनगर्यास्त्रिकचतुष्कचत्वरादिप्रदेशेषु यथेच्छं विलसितुमारेभाते, ततश्चतुर्वेदब्राह्मणैर्विज्ञप्तो राजा—देव ! मातङ्गभूतदत्ताङ्गजचित्रसंभूत्यद्भूतरूपयौवनादिगुणकलापगीताक्षिप्त एष सकलोऽपि नगरलोको न गणयति स्पृश्यास्पृश्यविभागं, न लक्षयति स्वपरगुणदोषनिमित्तं, तद्वार्यतामनयोः पुरीमध्ये प्रवेशः, ततः प्रतिपन्ने तद्वचसि भूपालेन निवारितयोरतयोः समाजगामान्यदा कौमुदीमहोत्सवः, तस्मिंश्च प्रच्छन्नस्थानवर्त्तिनौ प्रवृत्तावेतौ लोकमहोत्सवं विलोकयितुं, दृष्ट्वा च गीतनृत्यादिव्यापारं जनस्य ताभ्यामपि वस्त्राच्छादि-

तवदनाभ्यामेकस्मिन् प्रदेशे भूत्वा गातुमारब्धं, श्रुतिसुखदमाकर्ण्य तदीयगीतध्वनिमुत्सृज्येतरप्रेक्षणकं तावेवागत्य परिवारितौ प्रेक्षकलोकैः, अक्षेपाकृष्टचीवरप्रकटीभूतवदनौ च प्रत्यभिज्ञातौ हतहतेति ब्रुवाणैर्निष्काशितौ नगरीतः, ततो यदि कथञ्चिज्ज्ञास्यति तौ राजा तदा मदीयाऽऽज्ञा लङ्घितेति संजातकोपः प्राणेभ्यः पृथक्कारयिष्यत्यावामिति भयेन पलाय्य गतौ योजनमात्रं भूभागं, जातिदूषणोपजातगुरुनिर्वेदौ च कृतमरणाध्यवसायौ समारूढौ तुङ्गगिरिवरं, तस्य चैकस्मिन् विमलशिलातले विकृष्टतपश्चरणशोषितशरीरः शुभध्यानपरायणः कायोत्सर्गव्यवस्थितो दृष्टिपथमवततार तयोर्महामुनिः, दृष्टमात्रेऽपि तस्मिन्नानन्दितौ मनसा, गतौ तत्सकाशं, वन्दितवन्तौ भावसारं, साधुना तु ध्यानसमाप्तौ धर्मलाभाशीर्वादपूर्वं कुतो भवन्तौ समागताविત्याभाषितौ, ततस्ताभ्यां स्ववृत्तान्तकथनपुरस्सरं निवेदिते निजकाभिप्राये महर्षिणोक्तं—भो! भो! विज्ञातहेयोपादेयपदार्थसार्थयोर्भवतोर्न युक्तमेवमध्यवसातुं, यदि च सत्यमेव निर्वेदस्तदा कुरुत युवां सकलशारीरमानसासातावन्ध्यकारणक्लिष्टकर्मवनदहनदावानलं जिनेन्द्रभाषितं साधुधर्मं, ततो महाव्याधिपीडितातुराभ्यां सुवैद्यवचनमिवाङ्गीकृतं ताभ्यां तद्वचः, प्रतिपादितं च—भगवन्! प्रयच्छावयोः सकलदुःखविमोक्षणीमात्मीयदीक्षां, तेनापि तद्योग्यतामाकलय्य तयोर्दत्ता प्रव्रज्या, कालेन गीतार्थतायां

जातायां षष्ठाष्टमदशमद्वादशार्द्धमासमासक्षपणादिविचित्रतपःकर्मादिभिरात्मानं भावयन्तौ ग्रामानुग्रामेण विहरन्तौ कदाचित्प्राप्तौ हस्तिनागपुरं, स्थितौ तद्बहिर्वर्त्तिन्युद्याने, अपरेद्युर्मासक्षपणावसाने पारणकनिमित्तं संभूतिसाधुः प्रविष्टो नगरं, उज्झितधर्मिकां भिक्षामभिलषन्नीर्यासमितो गृहे २ पर्यटितुमारेभे, भवितव्यतानियोगेन दृष्टो निजगृहाद्बहिर्निर्गतेन ग्रामान्तरे गन्तुमिच्छुना तेन मन्त्रिणा, प्रथममेवास्यामङ्गलभूतं मुखमवलोकितमित्युपजातकोपेन ताडितो गाढकशाप्रहारैः, निकटमागतेन प्रत्यभिज्ञातश्च य एष मातङ्गदारको यस्तदा मया पाठितः तद्यावदेष मां न प्रत्यभिजानाति तावद्विनाशयाम्येनं, अन्यथा राज्ञस्तदन्यलोकानां चैष प्रकटीकरिष्यति मच्चरितमिति चिन्तयता यष्टिमुष्ट्यादिघातैर्बहुतरं कदर्थ्यमानो विकृष्टतपश्चरणक्षीणबलतया वेपमान-काययष्टिः पतितो धरणीतले, अहह ! निरपराधस्यास्य मुनेः किमेतदारब्धमेतेनेति ब्रुवाणो मिलितस्तत्रानेको लोकः, तन्मध्ये च केनचिदुक्तं—यद्यस्य साधोस्तपःसामर्थ्यं किञ्चिदभविष्यत्तदैष मन्त्री खिलीकुर्वंस्तत्क्षणादेव किं न विनाशमवाप्स्यत् ?, तदेवंविधशक्तिविकलो निरर्थक एवैतस्य दुष्करस्तपःक्लेश इति, एतदाकर्ण्य स महामुनिः कोपमुपगतस्तद्विनाशनाय मोक्तुमारब्धस्तेजोलेश्यां, ततः कृष्णाभ्रपटलैरिव बहलधूमोद्गारैर्निरुद्धलोकलोचनप्रसरो

विजृम्भितो घनान्धकारः, भयकौतुकाकृष्टमानसाः निकटीभूय नागरकाः परिदृष्टमुनिक्रोधविलसिता अभिवन्द्य प्रवृत्ताः प्रसादयितुं, कुतोऽप्यवगतवृत्तान्तः सनत्कुमारोऽप्याजगाम तत्प्रसादनाय, विरचिताञ्जलिपुटः प्रणम्य बभाण च—क्षम्यतां महामुने ! यदनार्यचेष्टितेन केनाप्यपराद्धं, क्षमाप्रधाना हि साधवो भवन्तीति प्रतिसंह्रियतां तपस्तेजः, क्रियतां जीवितप्रदानेनास्य जनस्य प्रसादः, एवमभ्यर्थ्यमानोऽपि चक्रवर्त्तिना यावदसौ नोपशाम्यति तावच्चित्रमुनिः महामुनिः कोऽपि कुपित इति जनप्रवादमाकर्ण्य बहलधूमान्धकारितं गगनाङ्गणं चावलोक्य समाययौ तं प्रदेशं, जिनभाषितानुसारिवचनैः कथं कथमप्युपशामितः संभूतिसाधुः, समाश्वस्तचेताः संवेगमुपगतो—हा दुष्कृतं कृतमिति प्रजल्प्य समुत्थाय ततः प्रदेशात्सह चित्रमुनिवरेण गतस्तदेवोद्यानं, तन्निमित्तवैराग्येण च जीवित-निर्विण्णाभ्यां ताभ्यां प्रतिपन्नमनशनं, सनत्कुमारचक्रिणाऽपि विज्ञाय पूर्जनात् मन्त्रिव्यतिकरं तदुपरि विहितक्रोधेन बन्धयित्वा दृढरज्जुबन्धनैरयमानायितः साधुसमीपं, प्रत्यभिज्ञातस्ताभ्यां, मोचितोऽनुकम्पया, सनत्कुमारचक्रवर्त्ती चानशनप्रतिपत्तिमवगत्य साधोः सान्तःपुरस्तद्वन्दनार्थमाजगाम तदुद्यानं, अन्तःपुरसमन्वितेन तेन वन्दितौ भावसारं चित्रसंभूतितपस्विनौ, अत्रान्तरे कथञ्चित्स्त्रीरत्नस्य सुनन्दायास्तपस्विपादपतनमाचरन्त्याः

मृकुमारालकरपर्शमनुभूय संभूतिसाधुना समुदीर्णमोहोदयेन कृतो निदानबन्धः-यदि मत्कृतस्यास्य तपसः किञ्चित्फलमस्ति तदा जन्मान्तरेऽहमेवंविधस्य स्त्रीरत्नस्य स्वामी भवेयं, न गणितश्चास्मादुरध्यवसायान्निवर्त्तयंश्चित्रसाधुः, आयुःपर्यवसाने च मृत्वा द्वावप्युत्पन्नौ सौधर्मदेवलोके नलिनीगुल्मविमाने देवत्वेन, तत्र च प्रभूतकालं देवभवानुरूपं सुखमनुभूय कदाचिच्च्युत्वा ततश्चित्रजीवः पुरिमतालनगरवास्तव्यस्य गुणपुञ्जनामधेयस्य श्रेष्ठिनो नन्दायाः पत्न्याः पुत्रो जातः, इतश्च संभूतिजीवः काम्पिल्यपुरे ब्रह्मनरपतेश्चूलिन्या महादेव्याश्चतुर्दशमहास्वप्नसूचितः समजनि तनयः, विहितं च क्रमेण ब्रह्मदत्त इति नाम, ब्रह्मराजस्य चोत्तमराजवंशसंभूताश्चत्वारो राजानः सुहृदोऽभूवन्, एकः काशीविषयाधिपतिः कटकराजो द्वितीयो गजपुरनेता कणेरुदत्तोऽन्यश्च कोशलदेशस्वामी दीर्घनृपतिश्चतुर्थश्चम्पानायकः पुष्पचूलश्चेति, ते चात्यन्तस्नेहेनान्योऽन्यं वियोगमनिच्छन्तः समुदिता एव संवत्सरमेकैकं परिपाट्या विचित्रलीलाविनोदैः स्वस्वराष्ट्रेषु तिष्ठन्तोऽन्यदा मिलिता एव ते ब्रह्मसविधमागताः, तेषां च तत्र तिष्ठतामन्येद्युर्ब्र–[ ग्रं० ९००० ]–ह्मनराधिपस्य समुदपादि मन्त्रमणिमूलिकाद्यसाध्यः शिरोरोगः, ततो व्याहृत्य कटकराजादिमित्राणि तदुत्सङ्गवर्त्तिनं विधाय ब्रह्मदत्तं बभाण ब्रह्मराजो, यथा–भवदुत्सङ्गे मयाऽयं ब्रह्मदत्तः क्षिप्त इति कारयितव्यो राज्यमेष

भवद्भिः, एवं कृतराज्यचिन्तो मरणपर्यवसानतया जीवलोकस्य गतः कदाचित्पञ्चत्वं, कृतं तद्वयस्यैस्तस्य मृतकृत्यं, गतेषु केषुचिद्दिनेषु पर्यालोचितं कटकराजादिभिः—यथैष ब्रह्मदत्तो यावदद्यापि राज्यधूर्धरणधौरेयतां नात्मसात्करोति तावदस्माभिरेतद्राज्यं पालनीयम्, अतः सर्वसंमतेन दीर्घ एवात्रास्तां, वयं तु स्वस्वराज्यान्यधितिष्ठामः, ततो गतेषु तेषु दीर्घराजः परिपालयितुमारेभे तद्राज्यम्, अवलोकयितुमारब्धो भाण्डागारं, राजकार्याणि चिन्तयितुं प्रवृत्तः समं तदीयमात्रा चुलन्या, ततो दुर्वारतयेन्द्रियाणामवगण्य ब्रह्ममित्रत्वमवमन्य वचनीयं चुलन्यैव सह संप्रलग्नो विषयसुखं सेवितुं, गच्छत्सु च दिनेषु केषुचिद् ब्रह्मराजद्वितीयहृदयभूतेन धनुराख्येन मन्त्रिणा विज्ञायैतद्व्यतिकरं य एवमकार्यमाचरति स कथं ब्रह्मदत्तस्योदयमभिलषिष्यतीति चिन्तयता भणितो वरधनुर्निजपुत्रो, यथा—वत्स ! चुलनी तावदियं जाता दुश्चारिणी, तत् ज्ञापय रहसि ब्रह्मदत्तस्यामुमर्थं, ततस्तथाकृतेऽनेन कुमारो दुश्चरितमसहमानो मनसा तस्या अवबोधनिमित्तं काककोकिलासंग्रहणं गृहीत्वाऽन्योऽपि य एवं करिष्यति तमहमित्थं निग्रहीष्यामीति वदन् मध्येऽन्तःपुरं प्रविष्टः, अन्यदिने च भद्रकरेणुकया सह सङ्कीर्णगजमादाय तथैवागतः, ततो दीर्घराजः तच्छ्रुत्वा बभाण चुलनीं-अहं त्वत्पुत्रेण काकः कल्पितस्त्वं तु कोकिलेति,

तयोदितं–यालत्वाद्यद्वा तद्वा ब्रवीति, तेनोक्तं–मैवं वोचः, प्रेक्षापूर्वकारितयैवमभिधत्ते, तत्कोमलोऽप्युच्छेद्यतां व्याधिः,
व्यापाद्यतामेष आवयो रतिसुखव्याघातकारी, मयि स्वाधीने तवान्येऽपि तनूजाः संपत्स्यन्ते, कामसुखगृद्ध्या च तयै-
तद्वचनमचिन्त्यमप्यङ्गीकृतं कर्त्तुं, यतः–"व्यापादयति तनूजं मारयति पतिं विनाशयत्यर्थम् । रागाविष्टा रमणी
किं वा तद् यन्न विदधाति ? ॥१॥" तथाऽन्यैरप्युक्तम्–"आधारो मानसानां कपटशतगृहं पत्तनं साहसानां, तृष्णाग्ने-
र्जन्मभूमिर्मदनजलनिधिः कोपकान्तारपारः । मर्यादाभेदहेतुः कुलमलिनकरी नित्यदुर्ग्राह्यचित्ता, स्त्री नामातीव दुर्गं बहु-
शयगहनं वैरिणा केन सृष्टम् ? ॥ २ ॥ भणितं च तया-यद्येवं तदा तथा विनाश्यतामसौ यथा जनापवादो न जायते,
दीर्घेणोक्तं–स्तोकमिदं, तथा विधास्यामि यथा शोभनं सर्वं भविष्यति, यतः कुमारस्य प्रारब्धो वर्त्तते विवाहोत्सवः,
तदर्थं च कारयिष्याम्यनेकस्तम्भप्रतिष्ठितं गुप्तनिर्गमप्रवेशं जतुगृहं, विवाहानन्तरं च तत्र सुखप्रसुप्तस्याग्निदानेन
जनालक्षितमेव यथाचिन्तितकार्यमस्य भविष्यति, एवं मन्त्रयित्वा प्रारब्धा महाराजदुहितुः कुमारपाणिग्रहणनिमित्तं
५५ समग्रसामग्री। इतश्च धनुर्मन्त्रिणा ब्रह्मदत्तकार्यावहितेन विज्ञप्तो दीर्घराजो, यथा-अयं मत्पुत्रोवरधनुः सम्प्रति राज्य-
कार्यचिन्तनसमर्थो वर्त्तते, तदयमेव चिन्तयिष्यति वः प्रयोजनानि, अहं तु किमपि तीर्थे गत्वा परलोकहितमाच-

रामि तदनुमन्यस्व मां, तेन कैतवेनोक्तम्—अलमन्यत्र प्रवासेन, अत्र स्थित एव दानादिना धर्मं विधेहि, ततोऽसौ तद्वचः प्रतिपद्य गङ्गानदीतीरे महतीं प्रपां कारितवान्, तत्र दीनानाथपथिकपरिव्राजकादीनां दानं प्रवर्त्तयामास, दानमानोपचारगृहीतैश्च प्रत्यायितपुरुषैर्यावज्जतुगृहं प्राप्ता तावत्खानिता द्विगव्यूतप्रमाणा सुरङ्गा, कृतो वरधनुःपुत्राग्रतो रहस्यभेदः, इतश्च-विविधनेपथ्यपरिजनान्विता तत्पुरमनुप्राप्ता सा वधूः, प्रवेशिता महाविभूत्या यावन्निवर्त्तितं पाणिग्रहणं, तदनन्तरं विसृज्य जनसमूहं प्रवेशितः कुमारः सवधूकः कतिपयपूर्जनानुगतो जतुगृहं, तत्र स्थितो वरधनुं मन्त्रिपुत्रं विमुच्य क्षणमात्रप्रहितपरिजनो यावदासाञ्चके तावत्त्रियामायामद्वयातिक्रमसमये कथञ्चित्प्रदीपितं समन्तात्तद्वासभवनम्, उच्छलितो हाहारवः, ततः किं कर्त्तव्यमिति मूढमानसेन पृष्टः कुमारेण वरधनुः-किमेतदिति, तेनोक्तं—यथा सा राजदुहिता लेखप्रेषणेन मत्पित्रा निवारिता, इयं चान्या काचित्, तदस्यां प्रतिबन्धं परिहृत्य झगित्युत्थायात्र जतुगृहे पार्ष्णिप्रहारं प्रयच्छ, येनेतः सुरङ्गद्वारेण निर्गच्छामः, तेन च कृतं तद्वचः, ततो द्वावपि निर्गतौ सुरङ्गया, प्राप्तौ द्वारदेशं, इतश्च धनुर्मन्त्रिणा प्रागेव द्वौ प्रत्यायितपुरुषौ सुरङ्गद्वारे तुरङ्गमाधिरूढौ धृतावभूतां, ताभ्यां च वरधनोः सङ्केतं मीलयित्वा द्वावपि तौ समारोपितौ स्वाश्वयोः, प्रवृत्तौ गन्तुं, क्रमेण तौ (गतौ) पञ्चाशद्योजनमात्रां भुवं, दीर्घाध्वखेद-

क्षीणौ निपतितौ तुरङ्गौ, ततः पादाभ्यामेव गच्छन्तौ प्राप्तौ कोट्टाभिधानं ग्रामं, तद् बहिः कुमारेण भणितो वरधनुः, यथा—बाधते मामतीव क्षुधा, दृढं परिश्रान्तश्चास्मि, तच्छ्रुत्वा वरधनुस्तत्रैव तं संस्थाप्यैकस्य वृक्षस्य बहलच्छायायां स्वयं गत्वा ग्राममध्यमानीय ततोऽपि नापितं मुण्डयित्वा कुमारस्य शिरः परिधापयामास कषायवस्त्राणि चतुरङ्गुलप्रमाणपट्टबन्धेन बबन्ध च श्रीवत्सालङ्कृतमस्य वक्षःस्थलं, आत्मनाऽपि विहितो वेषपरावर्त्तः, ततो द्वावपि प्रविष्टौ ग्रामाभ्यन्तरं, अत्रान्तरे निर्गत्यैकद्विजवरगृहादेकपुरुषेणोक्तौ—स्वागतं युवयोः?, आगम्यतां मन्दिरं भुज्यतां चेति, तद्वचनानन्तरं गतौ तौ तद्गृहं, विहितराजानुरूपप्रातिपत्ती भुक्तौ च, कृताचमनादिव्यापारयोः सुखासनस्थयोश्च तयोस्तत्स्थानवर्त्तिनीं बन्धुमतीनामिकां कन्यामुद्दिश्यैका प्रवरमहेला कुमारमस्तके प्रक्षिप्याक्षतानवादीत्—पुत्र ! त्वमस्याः कन्यायाः प्राप्तो वर इति, तच्छ्रुत्वा वरधनुनाऽवाचि-किमेतस्य मूर्खबटोर्निमित्तमात्मा खेद्यते ?, गृहस्वाम्यवादीत्—मैवं वोचः, प्रथममेव यतोऽस्माकं नैमित्तिकेनादिष्टमास्ते, यथा—पट्टच्छादितवक्षा उपेत्य यस्त्वद्गृहे समं सुहृदा। संभोक्ष्यते स भविता त्वद्दुहितुर्गृहपते ! भर्त्ता ॥ १ ॥ ततस्तद्वचनेन तूष्णींस्थिते वरधनौ तस्यामेव वेलायां ग्राहितो बन्धुमत्याः पाणिं कुमारः, स्थितश्च तं दिवसं तत्रैव, द्वितीयदिने भणितः कुमारो वरधनुना-दूरं गन्तव्यमतो निर्गम्यतामितः, ततो बन्धुमत्याः

सद्भावमावेद्य निर्यातौ, ततः प्राप्तौ च दूरवर्ति ग्रामान्तरं, तत्र सलिलार्थी प्रविश्य वरधनुः शीघ्रमागतोऽब्रवीत् कुमारं-दीर्घराजेन सर्वतो ब्रह्मदत्तस्य मार्गा निरोधिता इति मध्येग्रामं मया जनवादः श्रुतः, तदत्र न चिरमावयो-रवस्थानमुचितमिति नश्यावः, कुमारेणोक्तम्—एवं कुर्वः, अतस्ततः प्रवृत्तौ द्वावप्युन्मार्गेण, प्राप्तौ महाटवीं, तस्यां च तृषाभिभूतं कुमारं स्थापयित्वा वटच्छायायां गतो वरधनुर्जलानयनाय यावत्तावद्ददृशे दिवसावसानसमये यमभटैरिव दीर्घनियुक्तकैः पुरुषैः, आरब्धो हन्तुं, भणितश्च—कथय ब्रह्मदत्तं येन मुञ्चामः, ततोऽसौ कैतवेन नीत्वा कुमारदूरवर्त्तिनं दिशाभागं विधाय कथञ्चित्पलायनसङ्केतं कुमारस्य न जाने गतः क्वाप्यसौ अत्र मया मुक्त आसीदित्यवोचत्, तत्प्रभृति च—कदाचिन्निर्जनारण्ये, कदाचित्तापसाश्रमे । कदाचिन्नगरारामग्रामादौ विहितस्थितिः ॥ १ ॥ क्वचित्सौख्यं क्वचिद्दुःखं, सहमानः क्रमागतम । क्वचिद्विद्याधरादीनां, दिव्यकन्या विवाहयन् ॥ २ ॥ क्वचित्सङ्ग्रामशीर्षेषु, कुर्वन् वैरिकुलक्षयम् । पर्यट्य प्रचुरं कालं, जातः स्वजनसङ्गमः ॥ ३ ॥ कटकादि-नृपैः सार्द्धं, काम्पिल्यं पुरमागतः । दीर्घं विनाशयामास, स्वराज्यं स्वीचकार च ॥ ४ ॥ षट्खण्डभरतक्षेत्रं, वशीकृत्य क्रमेण च । चक्रवर्त्ती भुवि ख्यातो, ब्रह्मदत्तोऽभवत्तदा ॥ ५ ॥ गते च कियत्यपि कालेऽन्यदा विज्ञप्तं नटेन,

यथाऽद्य महाराज ! मधुकरीगीतं नाम नाट्यविधिं दर्शयिष्यामि, एवमस्त्विति प्रतिपन्ने चक्रवर्त्तिनाऽपराह्णसमये प्रारब्धो नर्त्तितुमसौ, अत्र चावसरे दासचेट्या सकलकुसुमसमृद्धं समर्पितं ब्रह्मदत्तस्य कुसुमदामगण्डं, तत्प्रेक्षमाणस्य मधुकरीगीतं च शृण्वतः समजनि विकल्पो–मयैवंविधो नाटकविधिर्दृष्टपूर्वः क्वचिदिति, ततः सौधर्मदेवलोकवर्त्तिनलिनीगुल्मविमानानुभूतः स्मृतोऽसौ, स्मृतपूर्वभवतत्प्रत्ययेन पाश्चात्यभवा अपि चत्वारः स्मृताः, तदनु जगाम मूर्छां, पपात च पृथ्वीतले, पार्श्ववर्त्तिना च सामन्तादिलोकेन सरसचन्दनानुलेपनेन कृतः समाश्वस्तः, ततोऽसौ स्मृतपूर्वभवभ्रातृव्यतिकरस्तदन्वेषणाय रहस्यमभिन्दान एव बभाण निजहृदयनिर्विशेषं महामात्यवरधनुं, यथाऽस्य नगरस्य त्रिकचतुष्कचत्वरादिप्रदेशेषु घोषयैवं–"आस्व दासौ मृगौ हंसौ, मातङ्गावमरौ तथा ।" अस्यार्द्धश्लोकस्य य उत्तरार्द्धं विरचयति तस्य राजा राज्यार्द्धं प्रयच्छति, वरधनुना यथाऽऽज्ञापयति देवस्तथा करोमीति प्रतिपाद्य प्रारेभे प्रतिदिवसमेव तथा कर्त्तुं, लिखित्वा तदर्द्धमनेकपत्रकेष्ववलम्बितमनेकस्थानेषु, अत्रावसरे स पूर्वभविकचित्राभिधानः तत्सहोदरजीवो यः पुरिमतालनगरवास्तव्यस्येभ्यस्य पुत्रत्वेनोत्पन्नः स जातजातिस्मरणो गृहीतव्रतस्तत्रैवागत्य समवसृतो मनोरमाभिधानकानने, तत्र प्राशुके भूभागे निक्षिप्य पात्राद्युपकरणं स्थितो धर्म-

ध्यानगतः कायोत्सर्गेण, इह प्रस्तावे झटित्याकर्ण्य " आस्व दासा " वित्यादि श्लोकार्द्धमारघट्टिकेन पठ्यमानं प्राह मुनिः–" एषा नौ षष्ठिका जातिरन्योन्याभ्यां वियुक्तयोः ॥ १ ॥ " ततोऽसावारघट्टिकस्तत् श्लोकार्द्धं पत्रके विलिख्य प्रमोदोत्फुल्लवदनो गतो राजकुलं, पठितः प्रभोः पुरतः सम्पूर्णः श्लोकः, ततः स्नेहातिरेकेण गतो राजा मूर्छां, तत आरघट्टिकस्योपरि कुपिता सभा, रोषवशगतया च तयैतद्वचनेन राजेदृशीं दशां गत इति चपेटाभिर्हन्तुमारब्धोऽसौ, हन्यमानेनोक्तं–न मयाऽयं पूरित इति विलपन्नसौ मोचितः कदर्थकेभ्यः, पृष्टश्च कोऽस्य–पूरकः ? इति, स प्राह–अरघट्टसमीपवर्त्ती मुनिरिति, ततो राजा चन्दनरससेकादिभिर्लब्धचेतनोऽवगतमुनिवरागमवृत्तान्तस्तद्भक्तिस्नेहाकृष्टचित्तः सपरिकरो निर्ययौ, ददृशे च तेन मुनिरुद्याने, तुष्टचेतसा वन्दितः, सविनयमुपविष्टस्तदन्तिके, मुनिना प्रारब्धा देशना, दर्शिता भवनिर्गुणता, वर्णिताः कर्मबन्धहेतवः, श्लाघितो मोक्षमार्गः, ख्यापितः शिवसौख्यातिशयः, ततः संविग्ना परिषत्, न भावितो ब्रह्मदत्तः, प्राह च–भगवन् ! यथा स्वसङ्गमसुखेनाह्लादिता वयं तथाऽऽह्लादयतु भगवान् राज्यस्वीकरणेन, पश्चात्तपः समभेव करिष्यावः, एतदेव तपसः फलं, मुनिराह–न युक्तमिदमुदारचेतसां भवतामभिधातुं, केवलं दुर्लभोऽयं मनुष्यभवः सततं गत्वरमायुः चञ्चला श्रीः अनवस्थिता धर्मबुद्धिर्विपाककटवो

विषयाः तदासक्तानां ध्रुवो नरकपातो दुर्लभं पुनर्मोक्षबीजं विशेषतो विरतिरत्नं न तत्त्यागाद्दुस्तरनरकपातहेतुकक-
तिपयदिनभाविराज्याश्रयणमाह्लादयति चित्तं विदुषां, तत्परित्यज कदाशयं, स्मर प्राग्भवानुभूतदुःखानि, पिब जिनव-
चनामृतरसं, संचरस्व तदुक्तमार्गे, सफलीकुरु मनुजजन्मेति, स प्राह—भगवन् ! उपनतसुखत्यागेनादृष्ट-
सुखाभिलाषकरणमज्ञतालक्षणं, तन्मैवमादिश, कुरु मत्समीहितं, ततः पुनरुक्तोऽपि यदा न प्रतिबुध्यते तदा
चिन्तितं मुनिना—हुं ज्ञातं यत्पूर्वभवे सनत्कुमारचक्रवर्त्तिस्त्रीरत्नालकसंस्पर्शसुखानुभवजाताभिलाषातिरेकेण मन्नि-
वार्यमाणेनापि कृतं तत्प्रार्थ्य संभूतिना सता निदानं तदिदं विजृम्भते, अतः कालदष्टवदसाध्योऽयं जिनवचनमन्त्रा-
णामिति मत्वा मुनिरन्यत्र विचचार, समयान्तरे च क्षपकश्रेणिक्रमेणोत्पाट्य विमलकेवलं मोक्षमनुप्राप्तः। राज्ञस्तु
चक्रवर्त्तिसुखमनुभवतोऽतीतः कश्चित्कालः, अन्यदैकेन द्विजातिनोक्तोऽसौ—भो नृपेश ! ममेदृशी वाञ्छोत्पन्ना यदि
चक्रवर्त्तिभोजनं भुञ्जे, राज्ञोक्तं—भो द्विज ! न मामकमन्नं त्वं भोक्तुं क्षमः, यतो मां हित्वा एतदन्नमन्यस्य न सम्यक्
परिणमति, ततो द्विजेनोक्तं—धिगस्तु ते राज्यलक्ष्मीमाहात्म्यं, यदन्नमात्रदानेऽप्यालोचयसि, ततो राज्ञाऽसूययाऽनुज्ञातं,
भोजितश्चासौ स्वोचिताहारेण भार्यापुत्रस्नुषादुहितृपौत्रादिबान्धववृन्दान्वितः, गतः स्वगृहम्, आगतायां निशीथिन्या-

मीषत्परिणमत्यन्नेऽत्यन्तजातोन्मादप्रसरोऽनपेक्षितमातृस्नुषाभगिनीव्यतिकरो गुरुमदनवेदनानष्टचित्तः प्रवृत्तोऽन्योऽन्यमकार्यमाचरितुं द्विजपरिजनः, परिणते चान्ने प्रत्यूषसि लज्जितो द्विजः परिजनश्चान्योऽन्यमास्यं दर्शयितुमपारयन्निर्गतो नगरात्, चिन्तितं च द्विजेन—कथमनिमित्तवैरिणा राज्ञेत्थं विडम्बितोऽहं, ततः कुपितेन तेन वने परिभ्रमता दृष्ट एकोऽजापालकः शर्कराभिरश्वत्थपत्राणि काणीकुर्वन्, चिन्तितं च तेन—मद्विवाक्षितकार्यकरणयोग्योऽयमितिकृत्वोपचरितोऽसौ दानसन्मानादिभिः, कथितस्तेन स्वाभिप्रायस्तस्य रहसि, तेनापि प्रतिपन्नं, अन्यदा गृहान्निर्गच्छतो ब्रह्मदत्तस्य कुड्यान्तरिततनुनाऽमोघवेध्यत्वेन गोलिकयैककालमुत्पाटिते लोचने, ततो राज्ञा तद्वृत्तान्तमवेत्योत्पन्नकोपेन सपुत्रबान्धवोऽसौ घातितो ब्राह्मणः, तदनु पुरोहितमादिं कृत्वाऽन्यानपि द्विजान् घातयित्वोक्तो मन्त्री—यथैषामक्षीणि स्थाले निक्षिप्य मम पुरतो निधेहि, येनाहं स्वहस्तमर्दनेन स्वःसुखमुत्पादयामीति, मन्त्रिणाऽपि क्लिष्टकर्मोदयवशितां तस्यावगम्य साखोटकतरुफलानि स्थाले निक्षिप्य ढौकितानि तस्य, सोऽपि रौद्राध्यवसाययोगतस्तान्यक्षिबुद्ध्या मर्दयन् स्वं सुखीकुर्वन् दिनान्यातिवाहयति, एवं च विदधतोऽतीतानि कतिचिद्दिनानि, ततः सप्त वर्षशतानि षोडशोत्तराण्यायुरनुपाल्य तत्क्षये प्रवर्द्धमानरौ-

दोषद्वारे बालमरणे संभूति कथा

द्राध्यवसायो मृत्वोत्पन्नः सप्तमनरकपृथिव्यां त्रयस्त्रिंशत्सागरायुर्नारक इति ॥ समाप्तं संभूतिकथानकं, पाण्डुरार्याकथानकं त्वेवम्—

रायगिहे वरनयरे, आसि पसिद्धो सुदंसणो सेट्ठी । अण्णे सावत्थीए तरंगसेट्ठिं उवइसंति ॥ १ ॥ भूया नामेण सुया, तस्सासि भणंति पोइणिं अन्ने । वड्ढकुमारीव न सा परिणीया कम्मदोसेणं ॥ २ ॥ अह अन्नया जिणिंदो पासो संजायकेवलो तत्थ । संपत्तो विहरंतो गामागरमंडियं वसुहं ॥ ३ ॥ रइयंमि समोसरणे सुरेहिं सीहासणोवविट्ठो सो । धम्मं कहेइ भयवं ससुरासुरमणुयपरिसाए ॥ ४ ॥ एत्थंतरंमि पत्ता वड्ढकुमारीवि सह नियपिऊहिं । पासस्स समोसरणं, सुणिऊण तहिं च धम्मकहं ॥ ५ ॥ उल्लसियजीववीरियवसेण उप्पन्नचरणपरिणामा । आपुच्छिऊण पियरो महया इड्ढीएँ निक्खंता ॥ ६ ॥ चिट्ठइ य पासजिणसीसिणीए पासंमि पुप्फचूलाए । कम्मोदएण कइयवि, जाओ से बउसपरिणामो ॥ ७ ॥ पत्तंमि गिम्हसमए पयट्टसेउल्लजल्लगंधं सा । असहंती पक्खालइ जलेण निययंगुवंगाइं ॥ ८ ॥ अविहीए अकालंमि धोयइ वत्थाइ परिहई य तहा । निच्चं पंडरचीरे तो जाया पंडरज्जा सा ॥ ९ ॥ एयं च तीएँ चेट्ठं दट्ठुं सेसाओं अज्जियाओं तयं । वारंति सा य न गणइ ताओ

तो मयहरी भणइ ॥ १० ॥ अज्जे! तवस्सिणीयणविरुद्धरूवं विभूसबुद्धीए । जं कुणसि तुमं तं तुह अहि-
ययरं दूसणं कुणइ ॥ ११ ॥ जओ–अच्छउ ता अन्नजणो अंगे चिय जाइ पंच भूयाइं । ताणं चिय लज्जिज्जइ
पारद्धं परिहरंतेहिं ॥ १२ ॥ किंच–एक्कारससोत्तेहिं जं निच्चं मुयइ असुइमलमाइं । तं सयखुत्तो धोयंपि
कह सुई होइ तुह देहं? ॥ १३ ॥ एवमणुसासियाविहु न जाव परिहरइ सा तयं भावं । ताहे मंडलि बाहिया विहिया
सा सेसरक्खट्ठा ॥ १४ ॥ तंबोलपत्तनायं निदंसियं जेण समयकेऊहिं । अट्ठाणठवणअणवत्थमाइदोसा य भणिया
जं ॥ १५ ॥ सारणचइया य इमा समवायं अज्जियाण परिहरिउं । एगागिणिच्चिय ठिया सच्छंदा भिन्नवसहीए
॥ १६ ॥ न य गणइ तहा जिणवरमयंमि एगागिणीण अज्जाणं । पडिसिद्धमवत्थाणं तहाहि सिद्धंतवयणंमि ॥१७॥
तिण्हारेणं अज्जा भिक्खवियाराइएसु पडिसिद्धा । संकाइया य दोसा जेणित्थी पक्कबयरिसमा ॥ १८ ॥ कुणइ य
अप्पच्छंदा वसियरणुच्चाडणाइ लोयाणं । विज्जामंताईहिं पणयसिरो तेण य जणो सो ॥ १९ ॥ निच्चं न मुयइ पासं
देइ य आहारवत्थमाईयं । न य पडिकूलइ तीसे वयणं कइयावि विणयपरो ॥ २० ॥ अद्धवयाइक्कंतीएँ तीए एवं
दिणेसु जंतेसु । वेरग्गमुवगयाए विन्नत्तो वंदिऊण गुरू ॥ २१ ॥ भयवं! सरीरउवगरणबउसभावेण भावियमणाए ।

तह मंततंतथावारजणियजणचित्तखोहाए ॥ २२ ॥ जंकिंचि संचियं पावकम्ममिह तस्स घायणट्ठाए । पडियागयसंवेगाएँ मज्झ वियरेसु पच्छित्तं ॥ २३ ॥ पडिवन्नं तं वयणं, गुरुणा आलोइए तओ तीए । ओणयसिराएँ अभिवंदिऊण गुरु जंपियं एवं ॥ २४ ॥ नाह ! न दीहं कालं पव्वज्जं चत्तसयलसावज्जं । पालेउमहं सक्का पयच्छ ता अणसणं मज्झ ॥ २५ ॥ परिकम्मविऊण तओ थोवं कालं तयं तहा सव्वं । मंताइ परिहराविय गुरुणा से अणसणं दिण्णं ॥ २६ ॥ लोगागरिसणहेउं आढत्ता पुणवि सुमरिउं विज्जं । तव्वसओ एइ जणो पुणोऽवि पुप्फाइवग्ग-करो ॥ २७ ॥ सूरीहि तओ पुट्ठो पुव्वुत्तो साहुसाहुणीवग्गो । तुब्भेहि किंपि सिट्ठं किमिमस्स जमेइ एस जणो ? ॥ २८ ॥ तेणुत्तं नो अम्हेहिं किंचि तो पुच्छिया हु सा चेव । भणइ मए गुरु विज्जावलेण आगरिसिओ एइ ॥ २९ ॥ भणियं गुरूहिं अज्जे ! न जुत्तमेयं तओ पडिक्कंता । लोओ ठिओ य इंतो एवं जा तिण्णि वाराओ ॥ ३० ॥ काउं २ सम्मं पडिकमिउं तं पयं चउत्थाए । वेलाएँ पुणो जंपइ पुव्वब्भासेण एसेइ ॥ ३१ ॥ तेण य अवियडिएणं कालगया सा ससल्लया चेव । एरावणग्गमहिसी जाया सोहम्म-कप्पंमि ॥ ३२ ॥ इओ य-रायगिहनगर बहिया गुणसिलए चेइए महावीरो । रइयंमि समोसरणे सुरेहिं सीहा-

सणनिसण्णो ॥ ३३ ॥ धम्मं कहेइ भयवं सदेवमणुयासुराएँ परिसाए । तं ओहीए आभोइऊण सा आगया तत्थ ॥ ३४ ॥ वंदित्तु भावसारं हत्थिणिरूवं विउव्विउं पच्छा । धम्मकहाअवसाणे छेरंती दंसए नट्टं ॥ ३५ ॥ एत्थंतरंमि पुच्छइ जाणंतुवि गोयमो जिणं पयओ । किं सामि ! इमं ? सामीऽवि कहइ तो तीएँ पुव्वभवं ॥ ३६ ॥ भणइ य अन्नो थेवं मा काही साहुसाहुणीमज्झे । मायं तेणेवमियं छेरंता दंसई नट्टं ॥ ३७ ॥ अण्णे भणंति महया सद्देणं वायकम्ममोक्खं सा । कुणमाणा नट्टविहिं पदंसिया तत्थ पसिणाई ॥ ३८ ॥ तो गोयमेण पुणरवि पुट्ठं कइया ण पाविही मोक्खं ? । भणियं जिणेण एत्थं पालिय पलिओवमं आउं ॥ ३९ ॥ एत्तो चुया विदेहे मणुयत्तं पाविऊण बोहिं च । सासयसोक्खं मोक्खं पाविस्सइ गोयमा एसा ॥ ४० ॥ इति पण्डुरार्याकथानकं समाप्तम् ॥

अत्र च संभूतिसाधोर्निदानशल्ययोगेन पण्डरार्यायाश्च शल्यसम्बन्धेन बालमरणात् दुःखपरम्परेति विज्ञाय बालमरणपरिहार एव यतितव्यमित्युपदेशगर्भो दोषद्वारगाथाभावार्थः ॥ सम्प्रति गुणद्वारं; तत्रेयं गाथा—

एक्कं पंडियमरणं छिंदइ जाईसयाइं वहुयाइं ।
दिट्ठंतो महसयगो मंडुक्को नंदजीवो वा ॥ १३२ ॥

'एकं' एकसङ्ख्यं, अत्रापिशब्दस्य गम्यमानत्वात् आसतां बहूनि, एकमपि पण्डितस्य-सर्वविरतस्य मरणम्-आलोचनादिपूर्वकं प्राणप्रहाणं पण्डितमरणं, तत्किं ?-' छिनत्ति ' कृन्तति, कानीत्याह-जातयो-जन्मानि तासां शतानि जातिशतानि, कथम्भूतानि ?-' बहूनि ' प्रचुराणि, उपलक्षणं चैतद्, अतो न केवलं जातिशतानि छिनत्ति, तथा यावन्मोक्षं न प्रापयति तावत्सुगतौ च स्थापयति, अत्रार्थे किं निदर्शनमित्याह-' दृष्टान्तः ' उदाहरणं ' महाशतकः ' महाशतकनामा श्रावको, ' मण्डूकः ' दर्दुरो ' नन्दजीवो वा ' नन्दमणिकारश्रेष्ठिश्रावकप्राणी वेति । ननु महाशतकनन्दजीवयोर्देशविरतत्वाद्बालपण्डितमरणमेव, तत्कथमेतौ पण्डितमरणस्य दृष्टान्ततयोपात्तौ ?, सत्यं, परम्परया पण्डितमरणकार्यसाधकत्वाद् बालपण्डितमरणमपि पण्डितमरणत्वेन विवक्षितमिति न दोष इति गाथाऽक्षरार्थो, भावार्थः कथानकाभ्यामवसेयः, तयोश्चाद्यं तावदिदम्—

अत्थि परचक्कदुब्भिक्खवइरचरडाइभयपरिचत्तो । मगहानामो देसो रम्मो महिमहिलतिलउ व्व ॥ १ ॥ तत्थऽत्थि तुंगपायारपरिगयं गहिरखाइयावलयं । रायगिहं पवरपुरं घरदेउलहट्टसोहिल्लं ॥ २ ॥ तत्थासि सेणियनिवो नरवइसयपणयपायपउमजुओ । जिणवयणविमलसलिलोहधोयमिच्छत्तघणपंको ॥ ३ ॥ तस्स बहुसम्मओ तंमि

पुरवरे आसि नीइसंपण्णो । नामेण महासयगो सेट्ठी सुविसिट्ठरिद्धिजुओ ॥ ४ ॥ तहाहि—तस्स निहाणकलंतरववहारनिउत्तदविणकोडीओ । अट्ठट्ठ अट्ठ दस दससहस्समाणा य गोवग्गा ॥ ५ ॥ तस्स तेरस भज्जाओ नियनियरूवेण निज्जियरईओ । रेवइपमुहाउ तासिं नियनियमह दविणपरिमाणं ॥ ६ ॥ पत्तेयं साहिज्जइ रेवइए तत्थ अट्ठ कोडीओ । दव्वस्स अट्ठ वग्गा गावीणं दसदससहस्सा ॥ ७ ॥ एक्केक्कदम्मकोडी सेसाण दुवालसण्ह महिलाणं । दसदसगोसाहस्सो एक्केक्को तह य गोवग्गो ॥ ८ ॥ एसो य ताण पिइकुललद्धो विहवो वियाणियव्वोत्ति । एवं वच्चंतंमि य काले अह वीरजिणनाहो ॥ ९ ॥ गुणसिलए उज्जाणे समोसढो तस्स देसणं सोउं । संजायधम्मसद्धो महसयगो सावओ जाओ ॥ १० ॥ निच्चलसम्मद्दिट्ठी जहभणियपरिग्गहपरीमाणो । मोत्तुं तेरस भज्जाओ तह य परिहरियथीसंगो ॥ ११ ॥ एवं सेसवयाणंपि उचियभंगेण विहियपरिमाणो । विविहाभिग्गहधारी पियदढधम्माइगुणजुत्तो ॥ १२ ॥ अहिगयजीवाजीवाइनवपयत्थो पसत्थझाणरओ । निग्गंथे पडिलाहइ फासुयएसणियदव्वेहिं ॥ १३ ॥ रेवइभज्जा उण तस्स मज्जमंसप्पियासया चेव । सुहमप्पणोच्चिय परं इच्छंती चिंतए एवं ॥ १४ ॥ सव्वाओ सवत्तीओ माराविय तासि गोउलाइ धणं । सयमंगीकाऊणं भुंजामि निराउला भोए ॥ १५ ॥ एवं विचिंतिऊणं, कयाइ छण्हं विसप्प-

ओगेणं । कारावई विणासं, छण्हं तत्थप्पओगेणं ॥ १६ ॥ एवं हयासु सव्वासु तासु सा नियसमीहियं काउं । उव-
भुंजइ वरभोए सह महसयगेण निस्संका ॥ १७ ॥ अण्णंमि दिणे रण्णा रायगिहे पुरवरे काहिंचि महे । घो-
साविया अमारी तत्थ य सा रेवई पावा ॥ १८ ॥ मज्जं मंसं च विणा मुहुत्तमवि चिट्ठिउं अपारंती । नियगो-
उलिए सद्दाविऊण अह भणइ एगंते ॥ १९ ॥ भो ! कोऽवि जह न याणइ मंसं तह दोण्ह तरुणवच्छाणं । संपा-
उह मह निच्चं मज्झ च्चिय गोउलेहिंतो ॥ २० ॥ किज्जंते तेहि तहेव तीए वयणंमि सा तओ पभिई । कल्होडयमंसे
च्चिय जाया अच्चंतगिद्धिपरा ॥ २१ ॥ महसयगो उण चोद्दसवरिसे सामण्णओ निरइयारं । परिवालिऊण सावगधम्मं
पण्णरसमे वरिसे ॥ २२ ॥ गिहसामियं ठवित्ता जेट्ठं पुत्तं तओ निरारंभो । पोसहसालाएँ ठिओ सावगपडिमासु
उज्जमिउं ॥ २३ ॥ एत्थंतरंमि सा रेवई य मइरामएण घुम्मंता । मयणाइत्ता पभणइ पोसहसालाएँ आगंतुं ॥ २४ ॥
भो सयगसावया ! तं धम्मत्थी किं किलिस्ससी एवं ? । धम्मस्सवि जेण फलं भोगा ते तुज्झ सायत्ता ॥ २५ ॥
ता भुंजसु सेच्छाए अणुरत्ताए तुमं मए सद्धिं । एए मा परिवज्जसु हत्थगएऽणागयासाए ॥ २६ ॥ एवं भणमाणी-
यवि तीए अविमन्निऊण सो वयणं । छव्वरिसे जाव दढं, फासिय पडिमाउ सव्वाओ ॥२७॥ अट्ठितयमेत्तदेहो पडिवन्नो

अणसणं निरासंसो । सुहपरिणामवसेणं उप्पाडइ ओहिनाणं च ॥ २८ ॥ तेण य पेच्छइ सयलं भरहं तस्संगयं च लवणस्स । जोयणसहस्समेगं उवरिं पुण जाव सोहम्मं ॥ २९ ॥ हेट्ठा उण रयणप्पहपुढवीए पढमपत्थडं जाव । एयंमि अवसरंमी मत्ता सा पुणवि आगंतुं ॥ ३० ॥ खोभेउं आढत्ता महसयगं रुट्ठमाणसो सो य । ओहिण्णाणुवउत्तो भणइ इमं निट्ठुरगिराहिं ॥ ३१ ॥ हे रेवइगे ! पावे निच्चमुवद्दवसि जं ममं एवं । तेण तुमं दुस्सीले ! मज्झे सत्तण्ह दिवसाणं ॥ ३२ ॥ उवहयगुरुचेयण्णा महया रोगेण सन्निवाएणं । मरिउं रयणपहाए पुढवीए लोलुए नरए ॥ ३३ ॥ होहिसि नेरइयत्तेण तंऽसि सुणिऊण सावमेयं सा । ओसरियमया सहसा भएण सणिअं अवक्कंता ॥३४॥ नियगेहमणुप्पत्ता, सत्तमदियहे तहेव मरिऊणं । उप्पण्णा चउरासीवाससहस्साउया नरए ॥ ३५ ॥ एत्तो य तत्थ नयरे गुणसिलए चेइए समोसरिओ । सिरिवद्धमाणसामी तित्थयरो समणगणसहिओ ॥ ३६ ॥ धम्मकहाअवसाणे गोयरचरियाएँ गोयमं चलियं । आइसइ जिणो गोयम ! पोसहसालाएँ गंतूणं ॥ ३७ ॥ चोएसु महासयगं मह वयणेणं जहा न ते जुत्तं । सावप्पयाणमेवं काउं जह रेवईएँ कयं ॥ ३८ ॥ जम्हा निट्ठुरभासा विवज्जिया सव्वया सुसड्ढाणं । किं पुण चरिमाराहणकरणंमि समुज्जयमईणं! ॥ ३९ ॥ आलोइऊण ता दुक्कडं इमं भावओ पडिक्कमसु।

मुज्झसि जेण महायस ! सुद्धो सुगइं लहुं लहसि ॥ ४० ॥ तत्तो तहत्ति पडिवज्जिऊण गंतूण गोयमो तत्थ । साहइ से सव्वंपिहु सो तं सुणिऊण आउट्टो ॥ ४१ ॥ आलोएई सम्मं वीसं वरिसाइ एवमकलंकं । चरिउं सावयधम्मं मासं जाव य कयाणसणो ॥ ४२ ॥ मरिऊण पढमकप्पे अरुणवडिंसयविमाणमज्झंमि । उप्पन्नो कयपुन्नो पलियचउक्काउओ देवो ॥ ४३ ॥ सुरभवउचिए भोए भोत्तुं तत्थाउयक्खए चविउं । जाओ महाविदेहे सिज्झिस्सइ खीणकम्मो सो ॥ ४४ ॥ समाप्तं महाशतकाख्यानकम् ॥

नन्दजीवमण्डूककथानकं तु प्राक् सम्यक्त्वाधिकारे—"सम्मत्तपरिब्भट्ठो" इत्यादिगाथायामुक्तमिति नोच्यते, दार्ष्टान्तिकयोजना तु द्वयोरपि कथानकयोरेवं कार्या, यथा महाशतकश्रावकस्यानशनव्यवस्थितस्य रेवत्या स्वभार्यया विषयसुखसेवाप्रार्थनया क्षोभ्यमाणस्यापि न क्षोभो बभूव, किन्तु तीर्थकरादेशेन समागत्य गौतमगणधरेण शापप्रदानविषये प्रेरितस्य तथेत्यभ्युपगम्यालोचनाप्रतिक्रमणाभ्यां निःशल्यीभूतस्य पण्डितमरणं जातिशतानि छित्त्वा सद्गतिसाधकं समजनि, यथा च नन्दजीवस्य मण्डूकभवे वर्त्तमानस्य समुत्पन्नजातिस्मरणस्य श्रीवर्द्धमानस्वामितीर्थकरवन्दनाय प्रचलितस्यान्तराले एव तुरगखरखुराक्रान्तकायस्य मनसैव समुच्चारितव्रतस्य व्युत्सृष्टाष्टादशपापस्थानस्य

समं चतुर्विधाहारेण त्यक्तबाह्याभ्यन्तरवस्तुप्रतिबन्धस्य विधिना समाधिमरणं दुर्गतिप्रविच्छेदेन सुगतिं जनयामास, तथाऽन्यस्यापि विधिवत्प्राणप्रहाणं जन्मपरम्पराच्छेदहेतुर्भवति सुगतिसाधकं चेति, एवं च विज्ञाय विवेकिभिर्निःशेषमरणपरिहारेण पण्डितमरण एव यतितव्यमित्युपदेशगर्भः प्रस्तुतगाथापरमार्थ इति ॥ उक्तं गुणद्वारम्, अधुना यतना कथ्यते—

सुइपाणगाइ अणुसट्ठिभोयणं तह समाहिपाणाई ।
धीरावणसामग्गीपसंसणं सड्ढवड्ढा ॥ १३४ ॥

श्रवणं श्रुतिः, सा च प्रस्तावादागमस्य, पानकं—पेयद्रव्यमादिशब्दाच्चूष्यलेह्यादिग्रहः, श्रुतिरेव पानकादिः श्रुतिपानकादि, प्रतिपन्नानशनस्य हि विविधचित्तविश्रोतसिकापरिहारार्थं यन्निरन्तरं जिनागमसमाकर्णनं तच्छुभपरिणामाह्लादहेतुत्वात्पानकादीवेत्यर्थः, तथा 'अणुसट्ठिभोयणं' ति अनुशासनमनुशिष्टिः—सुभटदृष्टान्तेनोत्साहनं, यथा पुण्यभाक् त्वं येन मोहमल्लं निहत्यैतावत्याराधनाजयपताका स्वीकृता, यथोक्तम्—"सुहडोव्व रंगमज्झे, धीबलसन्नद्धबद्धकच्छाओ । हंतूण मोहमल्लं हराहि आराहणपडागं ॥ १ ॥" तथा—"उव्वेलेऊण बला बावीसपरीसहे कसाए

य । हंतूण रागदोसे, हराहि आराहणपडागं ॥ १ ॥ ” सैव भोजनम्–अशनं परितुष्टिहेतुत्वादनुशिष्टिभोजनं, ‘ तथा ’ तेन प्रकारेण समाधिनिमित्तं पानादि समाधिपानादि, पीयत इति पानं–द्राक्षापानकादि आदिशब्दादाहारादिग्रहः, तत्र येन पानकद्रव्येण दत्तेनानशानिनः शारीरदाहाद्युपशमो भवति विरेकेण च कायशुद्धिः तद् द्रव्यतो देहपीडापगमहेतुत्वाद्भावतश्चार्त्तादिनिर्नाशकारणत्वात् समाधिपानकं, समाध्याहारस्तु यस्तृडाद्युपशमकः प्रत्याख्यातुरिष्टश्च स विज्ञेयो, यदुक्तम्–“ तस्स य चरमाहारो, इट्ठो दायव्वु तण्हछेयट्ठा । सव्वस्स चरमकाले अईव तण्हा समुप्पज्जे ॥ १ ॥ तण्हाछेयंमि कए न तस्स अहियं पवत्तई तण्हा। चरिमं च एस भुंजइ, सद्धाजणणं दुपक्खेऽवि ॥ २ ॥ ” त्ति ‘ दुपक्खेऽवि ’ त्ति अनशानिकप्रातिचारकलक्षणपक्षद्वयेऽपीत्यर्थः । तथा ‘धीरावणसामग्गी पसंसणं’-त्ति, धीरताया आपादनं धीरतापादनं तत्र सामग्री धीरतापादनसामग्री-संविग्नगीतार्थसन्निधानादिरूपा यथा कथञ्चिच्चलितधैर्योऽप्यनशनी पुनस्तत्रैव स्थाप्यते तस्याः प्रशंसनं–श्लाघा धीरतापादनसामग्रीप्रशंसनं, एतच्च सर्वमेव गीतार्थसंविग्न एव करोति, नान्यः, यतः–“ नासेइ अगीयत्थो, चउरंगं सव्वलोयसारंगं । नट्ठंमि चाउरंगे नहु सुलहं होइ चउरंगं ॥ १ ॥ ” ‘ चउरंगं ’ ति मानुषत्वश्रुतिश्रद्धासंयमवीर्यरूपमिति, किमर्थं करोतीत्याह–श्रद्धा–

अनशनिन एव स्वकीयश्चरमाराधनायामभिलाषस्तस्या वृद्धिः—उपचयस्तदर्थं श्रद्धावृद्ध्यर्थं, यच्चेदं श्रुतिपानकादि अनुशास्तिभोजनादि गीतार्थसंविग्नः श्रद्धावृद्ध्यर्थमस्य विदधाति तत्सर्वं सहासहादिपुरुषस्वभावालोचनेनोत्सर्गो-पवादसेवारूपत्वात्संलेखनायतनेति गाथार्थः ॥ इदानीमतिचारद्वारं प्रक्रम्यते—



इहपरलोगासंसप्पओग मरणं च जीवियासंसा ।
कामे भोगे य तहा मरणंते पंच अइयारा ॥ १३५ ॥

'इहपरलोकाशंसाप्रयोगः' इति सूत्रत्वाल्लुप्तविभक्तिको निर्देशः, तत्राशंसनमाशंसा तस्याः प्रयोग आशंसाप्रयोगः, इहपरलोकयोराशंसाप्रयोग इहपरलोकाशंसाप्रयोगः, लोकशब्दस्येहपरशब्दाभ्यां सम्बन्धादिहलोकाशंसाप्रयोगः परलोकाशंसाप्रयोग इत्येतौ द्वावतिचारौ, अनयोश्चेहलोकाशंसाप्रयोगो—यदिह लौकिकीं चक्रवर्त्यादिसमृद्धिं प्रार्थयते, परलोकाशंसाप्रयोगस्तु देवेन्द्रादिश्रियमनशनव्यवस्थितः कामयत इति १—२, 'मरणं च 'त्ति सूचनात्सूत्रमिति न्यायान्मरणाशंसाप्रयोगश्चेति तृतीयोऽतिचारः, तत्र यदा प्रतिपन्नोत्तमार्थस्य सप-र्यावैयावृत्त्यादौ न कश्चिदाद्रियते व्याधिना बाध्यमानोऽनशनी पीडामधिषोढुं न शक्नोति तदा शीघ्रं यदि म्रियेऽहं

तदा शोभनं भवति, एवमाशंसां कुर्वाणस्य मरणाशंसाप्रयोगः ३ तथा जीवितस्याशंसा—वाञ्छा जीविताशंसेति चतुर्थोऽतिचारः, अयं च तदा भवति यदा कश्चिदात्मनो महतीं पूजां लोकेन क्रियमाणामालोक्य वैयावृत्त्यकरादीनामादरं चात्मविषयं दृष्ट्वा चिन्तयत्येवं—यथा सुन्दरं भवति यदि कानिचिद्दिनान्येवमेव जीवामि, प्रतिपन्नानशनस्य गुर्वी मे लोकात्पूजेति ' कामभोगे य तह 'त्ति काम्यत इति कामः—शब्दरूपलक्षणो भुज्यत इति भोगो—रसगन्धस्पर्शस्वभावस्तस्मिन् कामे भोगे च, तेन पूर्वोक्तेन प्रकारेण तथा, आशंसाप्रयोग इति सम्बन्धः, अनेन च कामभोगाशंसाप्रयोगः पञ्चमोऽतिचारः सूचितः, अस्य च तदा विषयो यदाऽनशनीहलोकपरलोकगतान् कामभोगानाकाङ्क्षतीति, न चेहपरलोकाशंसाऽतिचारान्तर्गतत्वादयं पृथग् न वचनीय इति वाच्यं, यतस्तत्र स्वजात्यपेक्षया यदा मनुष्यः सन् मनुष्येषूत्पद्यते तदा परभवोऽपीहलोकशब्देन विवक्षितः, परलोकस्तु विजातीयो देवेन्द्रादिभवः, इह तु सामान्येनैव ये कामभोगा ऐहभविकाः पारभविकाश्च ते विवक्षिता इति पृथगुपादानमस्याऽविरुद्धमेवेति, अयं च पञ्चमोऽतिचारोऽत एव 'मरणंते पंच अइयार' त्ति मरणं—प्राणत्यागस्तस्यान्तहेतुत्वान्मरणान्तः संलेखनोच्यते तस्मिन् मरणान्ते ' पञ्चातिचाराः ' पञ्चसङ्ख्या अतिक्रमविशेषाः, एतांश्च स्वरूपतो ज्ञात्वा मतिमान् विवर्जयेदिति भावार्थः,

यदुक्तं निर्युक्तिकृता—" अपच्छिमा मारणंतिया संलेहणाझूसणाराहणा य, इमीए समणोवासएणं इमे पंच अइयारा जाणियव्वा न समायरियव्वा, तंजहा—इहलोगासंसप्पओगे परलोगासंसप्पओगे जीवियासंसप्पओगे मरणासंसप्पओगे कामभोगासंसप्पओगे य " त्ति गाथार्थः ॥ इदानीं भङ्गद्वारमावेद्यते—

पडिवज्जिऊण अणसण पुणरवि आहारमाइ पत्थेइ ।
आउट्टियाइणा जइ तो भंगो जायए तस्स ॥ १३६ ॥

' प्रतिपद्य ' अङ्गीकृत्य ' अनशनं ' चतुर्विधाहारपरित्यागरूपमन्त्यप्रत्याख्यानं, ' अनशन ' मित्यनुस्वारलोपश्च प्राकृतत्वेन, ' पुनरपि ' भूयोऽपि ' आहारमाइ ' त्ति मकारस्यालाक्षणिकत्वादाहारादि आहारम्—अशनं आदिशब्दात् पानादि ' प्रार्थयते ' अभिलषति कश्चित् अशुभाध्यवसायनिरुपक्रमबद्धायुष्को गुरुकर्मेति शेषः, किमनाभोगादिना प्रार्थयते नेत्याह—' आकुट्ट्यादिना ' उपेत्यकरणादिना, आदिशब्दाद्दर्पेण, ' यदी ' त्यभ्युपगमे ' तो ' त्ति ततो ' भङ्गः ' सर्वनाशः ' जायते ' संपद्यते ' तस्य ' संलेखनारूपनियमस्येति गाथार्थः ॥ भावनाद्वारस्याधुनाऽवसरः, तत्रेयं गाथा—

पणमामि अहं निचं अणसणविहिणा य निरइयारेहिं ।
जेहिं कयं चिय मरणं, दिट्ठंतो खंदएणेत्थ ॥ १३७ ॥

'प्रणमामि' प्रकर्षेण नमस्करोमि 'अह' मित्यात्मनिर्देशे 'नित्यं' सदा, तान् सद्यतीनिति गम्यते, यैः किमकारीत्याह्–'अणसणविहिणा य निरइयारेहिं जेहिं कयं चिय मरणं' ति, 'अनशनविधिना' भक्तपरिज्ञाविधानेन 'चः' पूरणे 'निरतिचारैः' इहलोकाशंसाद्यतिचारविप्रमुक्तैर्यैः 'कृतमेव' विहितमेव 'मरणं' प्राणत्यागरूपं, यैरुपात्तपुण्यप्राग्भारैः शुभाध्यवसायबलनिबद्धसुदेवाद्यायुष्कैर्नमस्कारप्रत्याख्यानादिसामग्रीसमन्वितैर्निरतिचारैः सद्भिर्लोकचमत्कारकारि मरणमाराधितं तानहं प्रणौमीति तात्पर्यं, एवंविधं च त्रिकालमनुस्मरणं गुणवद्बहुमानबुद्धिवासितान्तःकरणस्य शुभभावनास्वभावं, गुणाधिकविषयप्रमोदस्य पुण्यबन्धहेतुतया प्रतीतत्वात्, यस्तु गुरुकर्म्मा परसुकृतानुमोदनं कर्त्तुं न शक्नोति तस्य कुतः शुभा भावनेति, 'दृष्टान्तः' निदर्शनं 'स्कन्दकेन' भगवद्वर्द्धमानस्वामिशिष्येण 'अत्र' निरतिचारानशने, द्रष्टव्य इति शेष इति गाथासमासार्थः॥ व्यासार्थस्तु कथानकादवसेयः, तच्चेदम्––

श्रावस्त्यां नगर्यामतिपरिचितचतुर्दशविद्यास्थानः परिव्राजकसमयरहस्यवेदी त्रिदण्डकुण्डिकाद्युपकरणधारी स्कन्दकाभिधानः परिव्राजकः प्रतिवसति स्म, तस्यां च तदा बभूव पिङ्गलकनामा समुपलब्धजीवाजीवादिपदार्थसार्थ-परमतत्त्वो भगवतो वर्द्धमानस्वामिनः सदुपदेशरहस्यश्रावकः प्रधानः शिष्यः, स च कदाचिदुटजव्यवस्थितस्य स्कन्दकपरिव्राजकस्य समीपमुपगत्यैवमुक्तवान्—भो भोः स्कन्दक ! किं शाश्वता लोकजीवसिद्धासिद्धिपदार्था अशाश्वता वा ?, केन वा मरणेन म्रियमाणो जीवः संसारं वर्द्धयति ? ह्रापयति वा ?, द्वित्रा वाराः पृष्टश्चैवं यावदसौ मौनमालम्ब्य स्थितस्तावत्पिङ्गलको गतः स्वस्थानं, अत्रान्तरे तस्या एव नगर्या बहिर्वर्त्तिनि कोष्ठकाभिधानोद्याने समवसृतो भगवन्महावीरतीर्थकरः, आकर्णितो जनपरम्पराप्रवादतः स्कन्दकपरिव्राजकेन, चिन्तितं च—त्रिकालदर्शी भगवान् श्रूयते, तद्गत्वा पृच्छामि तदहं यत्पृष्टः पिङ्गलकेन, ततो गृहीत्वा त्रिदण्डकुण्डिकाछत्रपादुकादि निजोपकरणं प्रस्थितो भगवतो महावीरतीर्थकरस्याभिमुखं, अत्रान्तरे भणितः परमेश्वरेण गौतमस्वामी, यथा—गौतम ! द्रक्ष्यासि त्वमद्यपूर्वसङ्गतिकं, गौतम उवाच—कं भदन्त ! द्रक्ष्यामि ?, भगवतोदितं—स्कन्दकपरिव्राजकं, गौतमो बभाण—कथं ?, ततः स्वामिना निवेदितं यावत्सविस्तरं तदीयमागमनकारणं तावत्समाययौ तमेव देशं स्कन्दपरिव्राजकः, आभाषितः

मसंभ्रमोत्थानपुरस्सरं गौतमेन, यथा-स्कन्दक ! स्वागतं ते?, स्वामिना तु पिङ्गलकश्रावकपृच्छानिर्णयार्थं त्वमागतोऽ-
सीत्यभिधाय—स्कन्दक ! द्रव्यपदार्थतया शाश्वता लोकादयोऽतीतानागतादिपर्यायापरापरपरिणत्या त्वशाश्वताः,
तथा ज्वलनप्रवेशादिभिर्बालमरणैर्जीवो वर्द्धयति संसारं पण्डितमरणैस्तु भक्तपरिज्ञानादिभिर्हापयती-
त्यभिहिते, ततस्तथेति प्रतिपद्य स्कन्दकः पुनः पप्रच्छ भगवन्तं विशेषतो धर्मं, भगवता च प्ररूपितः
सविस्तरोऽयं, तं चाकर्ण्य प्रतिपद्य भावसारमेनं गत ईशानदिशं स्कन्दकः, परित्यज्य तत्र पारिव्राजकोपकरणमशेष-
मागतो जिनपतिसमीपं, जगाद च—प्रसादं कृत्वा विधेहि मामात्मशिष्यं, तदनु तीर्थकरेण प्रव्राजितः स्वयमेव
स्कन्दको, ग्राहितः सकलां साधुसमाचारीम्, अष्टासु प्रवचनमातृषु परं प्रावीण्यमनुप्राप्तो, जातः क्रमेणैकादशाङ्गधारी,
विविधतपोविशेषोद्यतमतिश्चासौ अन्यदा रजन्याः पश्चिमे यामे चिन्तयामास—यावन्ममास्ति देहस्य पाटवं यावदेति
न जरा मे । यावन्नेन्द्रियहानिर्यावज्जिनसंनिधानं च ॥ १ ॥ तावत्करोमि गुणरत्नवत्सरं दुश्चरं तपःकर्म । परिपूर्णा
सामग्री दुरवापा येन संसारे ॥ २ ॥ युग्मम् । अत्रान्तरे विभाता रजनी समुद्गतः कमलवनोद्घाटनं कुर्वाणः सहस्ररश्मि-
स्ततो गतो भगवदन्तिकं स्कन्दकः, कथितो वन्दनापूर्वं तीर्थनाथस्य स्वकीयोऽभिप्रायः, स्वामिनाऽनुज्ञातः, प्रारब्धो

गुणसंवत्सरं तपः कर्त्तुं, तेन चासौ संजातोऽस्थिचर्मावशेषः, तत्समाप्तौ पुनश्चिन्तितमनेन—क्षीणकायोऽहमनेन तपसा संप्रति तच्छ्रेयो मे भगवन्तमापृच्छ्य तदनुज्ञयाऽऽलोचनाक्षामणादिविधिपुरस्सरं पादपोपगमनं प्रतिपत्तुं, तदनन्तरं गत्वा महावीरस्वामिनः समीपं निवेदितः प्रणामपूर्वमात्मीयोऽभिसन्धिः, तदनुमतौ च दत्त्वा जिनेन्द्रस्यालोचना-मुच्चार्य तत्समक्षं पञ्च महाव्रतानि कृत्वा सकललोकक्षामणमङ्गीकृत्य निराकारमनशनप्रत्याख्यानं संविग्नगीतार्थ-साधुसहितः समारुह्य विपुलगिरिं तदीयशुद्धशिलातलं विधिना प्रत्युपेक्ष्य प्रमृज्य चानवकाङ्क्षन् कालं स्थितः पादपो-पगमनेन,ते च साधवस्तत्समीपे तावत्स्थिता यावदयमायुःपरिसमाप्त्या परित्यज्येदमसारं मानुषकलेवरं समुत्पेदे द्वादशकल्पे देवत्वेन, तदनन्तरं च विहितकायोत्सर्गादिविधानाः समागत्य स्वामिमूलं समर्प्य च स्वामिनस्तदुपकरणं निवेदित-वन्तो भगवतः स्कन्दकसमाधिमरणं, स्कन्दकदेवोऽपि ततश्च्युतो महाविदेहे सेत्स्यतीति ॥ स्कन्दकमुनेर्निवेदितमेतच्चरितं समासतोऽत्र । प्रश्नोत्तरविस्तरस्त्वङ्गवत्यङ्गात्तु विज्ञेयम् ॥ १ ॥ ॥ समाप्तं स्कन्दकाख्यानकम् ॥

व्याख्यातं संलेखनाद्वारस्य नवमं भावनाद्वारं, तद्व्याख्यानसमाप्तौ समर्थितानि सर्वाण्येव " मिच्छं सम्मं वयाइ संलेहा । नवभेयाइं वोच्छं " ति प्रथमगाथोद्दिष्टानि मूलद्वाराणि, एतानि च श्राद्धानुग्रहार्थं प्रतिज्ञातानि, अतोऽन्यदपि किञ्चित्तदनुग्रहार्थं प्रस्तुतोपयोगित्वादेतत्सूत्रानुपात्तमप्युच्यते—

इह हि श्रावकेण यथा मिथ्यात्वपरिहारेण सम्यक्त्वमूलः संलेखनापर्यवसानोऽयं धर्मोऽनुष्ठेयः तथा चतुर्मासकादिकालमर्यादया ग्राह्या विविधा अभिग्रहाः, ते च चतुर्विधाः, तद्यथा—द्रव्यतः १ क्षेत्रतः २ कालतो ३ भावतश्च ४, तत्र द्रव्यतो व्ययनीयं वर्षमध्ये धर्मार्थं निजप्राप्त्यनुसारेण द्रविणादि, वितरणीयं साधुभ्यो मुखवस्त्रिकादि, करणीयं ग्लानादीनामौषधादिदानसारं प्रतिजागरणं, विधापनीयं साधर्मिकजनस्य यथाशक्ति वात्सल्यं, विश्राणनीयं कृतलोचस्य साधोर्विशेषेण गुडघृतादि, पूजनीयान्यष्टमङ्गलकादिपूजया जिनबिम्बपुस्तकादीनीत्यादि, क्षेत्रतः प्रमार्जनीयं चैत्यभवनादि, चिन्तनीयं जिनगृहसमागतैश्चैत्यसदने कृताकृतादिकर्म, विधेया तदीयग्रामक्षेत्रादिचिन्तेत्यादि, कालतो द्रष्टव्यमष्टम्यादितिथिषु चैत्यालये जिनबिम्बारात्रिकस्नात्रादि समाचरणीयमेकभक्तनिर्विकृतिकादि विशेषतपःकर्म, तथा प्रत्यूषसमये निद्रामोक्षसमकालमेव पठनीयोऽर्हदादिनमस्कारोऽनुस्मर्त्तव्य आत्मादिः—कोऽहं ? क्व सुतः ? कौ मम मातापितरौ ? को वा धर्माचार्यः ? इत्यादिरूपेण, विलोकनीया शरीरचिन्तादिद्रव्यावश्यकपुरस्सरं गृहप्रतिमा, पूजनीया यथासंभवं द्रव्योपचारेण भावोपचारेण च, विधिना चैत्यालयगमनादिनियमश्च कार्य इत्यादि, भोजनवेलायां चासन्नजिनभवनाभावेऽपि निश्चयसारं गृहवर्त्तिन्या जिनप्रतिमायाः सम्पादनीया सदा नैवेद्यादि-

पूजा, पुनः कर्त्तव्यं चैत्यवन्दनं, कालाद्युचितं साधूनां संविभज्य भोजनोपविष्टेन स्मरणीयं प्रत्याख्यानमित्यादि, तथा विकालवेलायां भोक्तव्यं घटिकाद्वयावशेषे वासरे, विधातव्यं तदनन्तरमेव चतुर्विधत्रिविधाहारादिप्रत्याख्यानं, गन्तव्यं जिनमन्दिरे वन्दनीयानि चैत्यानि प्रणमनीयाः साधवो विश्रामणीयाश्च स्वशक्त्यनुरूपं विधातव्यो विकथादिपरिहारेण स्वाध्याय इत्यादि, भावतस्तु भावयितव्याऽनित्यादिभावना अभ्यसनीयो दैवसिकपापशुद्ध्यर्थं चतुर्विंशतिस्तवचतुष्टयादिमानः कायोत्सर्गः पठितव्यमपूर्वं जिनमतानुगतप्रकरणगाथादि गुणयितव्यमविस्मरणार्थं पूर्वपठितं श्रयितव्यमर्हत्सिद्धसाधुकेवलिप्रज्ञप्तधर्माख्यं शरणचतुष्कं निन्दनीयमैहभविकं पारभविकं च दुष्कृतम् अनुमोदनीयं स्वगतपरगतं सुकृतं विफलयितव्याः स्वस्योदीर्णकषायाः शमनीयाः परेषां तु सति सामर्थ्ये इत्यादि। द्रव्याद्याभिग्रहाः खल्वेवं सङ्क्षेपतो मया कथिताः। विस्तरतस्तत्तच्छास्त्रसन्ततेः समधिगमनीया ॥ १ ॥ इति। सम्प्रति प्रस्तुतग्रन्थपरिसमाप्तौ ग्रन्थकारः स्वगुरुनामग्रहणपूर्वकमात्मकृतत्वं प्रकरणस्योपदर्शयन्नेतद्विधाने फलोपदर्शनायाह—

इय नवपयं तु एयं रइयं सीसेण कक्कसूरिस्स।
गणिणा जिणचंदेणं सरणइमणुग्गहट्ठं च ॥ १३८ ॥

'इति' अमुना पूर्वोक्तप्रकारेण 'नवपदं' नवपदाभिधानं 'तुः' पूरणे 'एतत' प्रकरणं 'रचितं' कृतं, केनेत्याह–'शिष्येण' अन्तेवासिना, कस्य ?–'कक्कसूरेः' ककुदाचार्यस्य, 'गणिना' भगवत्यङ्गविहितोपधानेन 'जिनचन्द्रेण' जिनचन्द्रनाम्ना, किमर्थमित्याह–स्मरणार्थमात्मन इति गम्यते, अनुग्रहार्थं च श्रोतॄणामिति शेषः, न तु 'सगुणमणुग्गहट्ठाएग्त्यनेनैवानुग्रहार्थमित्युक्तमेव इह पुनः किमर्थं ?, सत्यं, यदादावुक्तं तदेव पर्यन्ते निगमितमिति न दोष इति गाथार्थः ॥ इयं च गाथा पूज्यपादैः स्वटीकायां न व्याख्याता, सूत्रादर्शेषु पुनर्लिखिता दृश्यत इति मया व्याख्यातेति ॥ इति श्रीमदूकेशगच्छीयश्रीकक्काचार्यशिष्येण जिनचन्द्रगणिना श्रीदेवगुप्ताचार्य इत्युत्तरनाम्ना विरचितस्य नवपदप्रकरणस्य विस्तरवती विवृतिः समाप्तेति ॥

उत्सूत्रमत्र रचितं यदनुपयोगान्मया कुबोधाय । तच्छोधयन्तु सुधियः सदाशया मयि विधाय कृपाम् ॥ १॥ विलसद्गुणमणिनिकरः, पाठीनविराजितो नदीनश्च । जलनिधिरिवास्ति गच्छः श्रीमानूकेशपुरनिसृतः ॥ २ ॥ तत्रासीदतिशायिबुद्धिविभवश्चारित्रिणामग्रणीः, सिद्धान्तार्णवपारगः स भगवान् श्रीदेवगुप्ताभिधः । सूरिर्भूरिगुणान्वितो जिनमतादुद्धृत्य येन स्वयं, श्रोतॄणां हितकाम्यया विरचिता भव्याः प्रबन्धा नवाः ॥ ३ ॥ तेनैव स्वपद-

प्रतिष्ठिततनुः श्रीकक्कसूरिप्रभुर्नानाशास्त्रप्रबोधबन्धुरमतिर्जज्ञे स विद्वानिह। मीमांसां जिनचैत्यवन्दनविधिं पञ्चप्रमाणीं तथा, बुध्ध्वा यस्य कृतिं भवन्ति कृतिनः सद्बोधशुद्धाशयाः ॥ ४ ॥ तत्पादपद्मद्वयचञ्चरीकः, शिष्यस्तदीयोऽजनि सिद्धसूरिः। तस्माद्बभूवोज्ज्वलशीलशाली, त्रिगुप्तिगुप्तः खलु देवगुप्तः ॥ ५ ॥ अपिच—यं वीक्ष्य निःसीमगुणैरुपेतं, श्रीसिद्धसूरिः स्वपदे विधातुम्। श्रीमत्युपाध्यायपदे निवेश्य, प्रख्यापयामास जनस्य मध्ये ॥ ६ ॥ तद्वचनेनारब्धा तस्यान्तेवासिना विवृतिरेषा। तत्रैवाचार्यपदं विशदं पालयति सन्नीत्या ॥ ७ ॥ लोकान्तरिते तस्मिंस्तस्य विनेयेन निजगुरुभ्रात्रा। श्रीसिद्धसूरिनाम्ना, भणितेन समर्थिता चेति ॥ ८ ॥ उपाध्यायो यशोदेवो, धनदेवाद्यनामकः। जडोऽपि धाष्टर्यतश्चक्रे, वृत्तिमेनां सविस्तराम् ॥ ९ ॥ एकादशशतसंख्येष्वब्देष्वधिकेषु पञ्चषष्ट्येयम्। अणहिल्लपाटकपुरे सिद्धोकेशीयवीरजिनभवने ॥ १० ॥ श्रीचक्रेश्वरसूरिमुख्यविबुधैः सङ्घप्रधानैस्तदा, साहित्यागमतर्कलक्षणधरैः संशोधिताऽत्यादरात्। वृत्तिस्तावदियं भवत्वविरतं पापठ्यमाना बुधैर्यावन्मेरुशिखेह पण्डकवने भ्राजिष्णुराभासते ॥ ११ ॥ प्रत्यक्षरं निरूप्यास्या, ग्रन्थमानं सुनिश्चितम्। अनुष्टुभां सहस्राणि, नव पञ्च शतानि च ॥ १२ ॥

॥ ग्रन्थाग्रम् ९५०० ॥ ॥ इति यशोदेवोपाध्यायरचितबृहद्वृत्तियुतं नवपदप्रकरणम् समाप्तम् ॥

इति श्रेष्ठिदेवचंदलालभाइ–जैनपुस्तकोद्धारे–ग्रन्थांकः ७३.

॥ इति श्रीयशोदेवोपाध्यायरचितबृहद्वृत्तियुतं नवपदप्रकरणं समाप्तम् ॥

इति श्रेष्ठि देवचन्द लालभाई जैन पुस्तकोद्धारे ग्रन्थांकः-७२.

# शेठ देवचंद लालभाई जैन पुस्तकोध्दार फंड

तथा

# श्री आगमोदय समिति.



जव्हेरी बजार–मुंबई.

१००००–१–७–१९२३.

गोपीपुरा–सुरत.

बायंडरः–श्रीकृष्ण रूलींग प्रेस.
मुस्तफा मारकेट मुंबई नं. ३.